॥ श्रीः ॥

# अनुभूतिप्रकाशः ।

विद्यारण्यमुनिविरचितः

श्रीकाशीनाथशर्म्मविरचितमितविवृतिटीकया समलङ्कृतः ।
प० रघुनाथ-नारायणदत्तापरपर्य्यायनृसिंहदत्त-
शर्म्मभ्यां शोधितः, प० मिश्रोपनामक
वेणीमाधवशर्म्मणा संस्कृतः ।

तथा

# वाक्यसुधा ।

श्रीमच्छङ्कराचार्य्यप्रणीता
श्रीमद्ब्रह्मानन्दभारतीप्रकल्पितया टीकया सहिता
ब्रह्मचारिचेतनस्वरूपेण संशोध्य संस्कृता ।

काशीस्थविद्याविलासयन्त्रालये
बहुसहकृतपोद्दारोपनामकभगवद्दास(भगवान् दास)गुप्तेन वितरितुं
मुमुद्य प्रकाशितौ ।

प्रथमं संस्करणम् १०००



❀श्रीः❀

# धन्यवाद !

पदवाक्यप्रमाणपारावारीण विद्वद्वरपण्डित श्रीकाशीनाथशास्त्रि कृत-व्याख्यासहित, श्रीमद्विद्यारण्यमुनिप्रणीत द्वादशोपनिषद्व्याख्यानभूत "अनुभूति-प्रकाश" नामक ग्रन्थ के मुद्रण में जिन महानुभाव सज्जनों ने मुझे सहायता दी है, धन्यवादपूर्वक उनके शुभनाम नीचे दिये जाते हैं।

२५०) श्रीमान् सर सेठ राय हरीरामजी गोइनका बहादुर कलकत्ता।

५००) श्रीमान् सेठ फूलचन्द जी टीकमाणी कलकत्ता।

२०१) श्रीमान् सेठ रामकुमार शिवचन्द्रराय पोद्दार कलकत्ता।

२००) श्रीमान् सेठ जयदयालजी कसेरा कलकत्ता।

१००) श्रीमान् सेठ गौरीशंकरजी गोईनका शहर खुर्जा।

६७१) श्रीमान् सेठ ज्वालाप्रसादजी जालान द्वारा प्राप्त कलकत्ता।

२००) श्रीमान् सेठ हजारीमलजी पिलाणीवाले द्वारा प्राप्त कलकत्ता।

विनीत निवेदक

भगवान् दास पोद्दार काशी।

ग्रन्थप्राप्ति-स्थान। } टीकमणी संस्कृतकालेज<br>शकरकन्द गली<br>काशी।

*Vidya Vilas Press Benares.*

॥ श्रीः ॥

# अनुभूतिप्रकाशः ।

विद्यारण्यमुनिविरचितः

काशीनाथशर्म्मविरचितमितविवृतिटीकयासमलङ्कृतः ।
प० रघुनाथ नारायणदत्तापरपर्य्यायनृसिंह-
दत्तशर्म्मभ्यां शोधितः, प० मिश्रोपनामक
वेणीमाधवशर्म्मणासंस्कृतः ।

तथा

## वाक्यसुधा ।

श्रीमच्छङ्कराचार्य्यप्रणीता
श्रीमद्ब्रह्मानन्दभारतीप्रक्लृप्तया टीकया सहिता
ब्रह्मचारिचेतनस्वरूपेण संशोध्य संस्कृता ।

काशीस्थविद्याविलासयन्त्रालये
बहुसहकृतपोद्दारोपनामकभगवद्दास (भवगवान् दास) गुप्तेन वितरितुं
सुमुद्य प्रकाशितौ ।

प्रथमं संस्करणम् १०००

॥ श्रीः ॥

# अथेदमुपक्रम्यते ।

—:०:—

आसीदस्मिन्महीमण्डले विद्वच्चक्रचूडामणिचञ्चरीकचुम्बितचरणकञ्जोगीर्वाणगीरर्णवावारपारीणस्तमायिताज्ञानकदम्बककदर्थनानुकृतादिनच्छदविद्याप्रवाहनिमज्जन्मानसतरणिकल्पोऽकल्पनीयकल्पोविद्याधवोमाधवः, स किल शास्त्रलक्षणलक्षितं सद्गुरुं विद्यातीर्थमहेश्वरमुपसीदन् सन्न्यस्य विद्यारण्यमुनीश्वरोतिसुगृहीतनामधेयं सन्धाय निशितप्रज्ञैः शास्त्रैकतत्त्वज्ञैः श्रीमच्छङ्कराचार्य्यप्रभृतिभिराचार्य्यैर्निर्माणदक्षैर्निर्मितभाष्यादिदुरवगाहग्रन्थैः कुशाग्रीयबुद्धिनिर्ग्राह्यै रुपनिषदर्थग्रहणानाधिकारिणामपिसुकुमारमतीनां सुलभावबोधायोपकारदशासुधावधीरित्रह्माऽऽनन्दकणवर्षिणं साक्षान्मोक्षैकसाधनमुपनिषत्तत्त्वभूतमनुभूतिप्रकाशेतियथार्थसंज्ञमेतं ग्रन्थं, भगवत्पादैः सुरेश्वराचार्य्यैरचितं शाङ्करभाष्यभूषणं वार्तिकन्दुरवधारमालोच्य वार्तिकसारञ्च सङ्कलयाञ्चकार—अनेनैवारब्धं पञ्चदशी* तिप्रसिद्धं ग्रन्थं सप्तमं चित्रदीपमारभ्याऽस्य सतीर्थ्योभारतीतीर्थः पूरितवानितितद्ग्रन्थटीकातोऽवगम्यते—यद्यप्यनुभूतिप्रकाशे प्रत्यध्यायावसाने विद्यातीर्थमहेश्वरगुरुसन्तोषप्रकटनं पञ्चदश्यां च गुरोः शङ्करानन्दस्यादौ प्रणतिस्तत्कर्तृकत्वे तु तत्रापि तस्यैव वन्दनं युक्तमिति नैष ग्रन्थस्तेनारम्भीतिप्रतिभाति। तथाप्यन्यतरस्य विद्यागुरुत्वेनोपपत्तौ प्रसिद्धित्यागानौचित्यान्नदोषः। अनेनान्येऽपि बहुशोवेदान्तग्रन्था निर्मिता व्याख्याता अप्यमुना कृपालुनाऽष्टाविंशति रुपनिषदोऽक्षरश इति जनप्रसिद्धिः।

अयञ्चाग्रजन्मा माधवस्त्रैलिङ्गः ( तैलङ्ग ) इति "अस्माकमान्ध्रकाणा"मिति वेदभाष्यादवगम्यते—एभिरेव स्मरणीयगुणैर्महात्मभिः पुराणसमुच्चयसारम्पाराशरं, व्याख्याय जैमिनीयन्यायमाला निरमायि, ततः कालमाधवेति प्रथितः स्मार्त्तधर्म्मनिबन्धः, मन्त्रब्राह्मणभाष्याणि च निरमायिषत। तत्रतत्र जैमिनीयन्यायमालीयश्लोकानां

* अत्र पञ्चदशीतिपदं नारदकंसीयन्यायेन पञ्चदशप्रकरणात्मकग्रन्थपरम् अतएवान्त्यं वर्णचतुर्दशमित्यादि सङ्गच्छते—

धृतत्वात्–माधवनाम्नातिरोहितेन व्यासेनैवानेन सर्वार्थदर्शनसङ्ग्रहदिग्विजयमाधवीयधातुवृत्तिप्रभृतयोनेकग्रन्था उपकारकतमाः कृताः । भट्टोजिदीक्षिताश्चैनं शब्दकौस्तुभेनवमाह्निके द्विर्वचनेऽचीतियोगे "वोपदेवमहाग्राहग्रस्तोवामनदिग्गजः । कीर्त्तेरेवप्रसङ्गेनमाधवेनविमोचित" इतिस्मरन्त आद्दतवन्तः । कौमुद्यादौ 'ष्टभिस्कभिप्रतिबन्धे" इत्युपक्रम्यस्तम्भधातौ विस्तम्भते इतिलक्ष्येस्तन्भेरितिषत्वमाशङ्क्य "स्तन्भेरितिषत्वन्तुनभवति श्नुविधौनिर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् तद्बीजन्तु उदः स्थास्तम्भोरिति पवर्गीयोपधपाठः स्तन्भेरिति तवर्गीयोपधपाठश्चेतिमाधवः" "एवं नामधातौ माधवश्चक इति रूपमाह" इत्यादिवदन्तः प्रमाणिकृतवन्तः । यत्तुवेदभाष्यस्यकर्त्तामाधवसोदरः सायणो न माधव इति केचित्तदविचारितरमणीयम् । माधवस्यैवसायणोपनामकत्वादिनोपपत्तौमाधवोवेदभाष्यकृदितिप्रसिद्धेस्त्यागानौचित्यात्–अत एव क्षुब्धस्वान्तेति सूत्रे "माधवस्तुनवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह" इति भट्टोजिदीक्षिता अवोचन् । शुक्लयजुर्वेदं व्याचिख्यासुर्महीधरोऽपि "भाष्यं विलोक्यौवटमाधवीयमित्यवोचत्–यच्च यत्र कुत्रचिद्दीक्षितैस्तन्मत मवमानि–तत् "नाशङ्कनीयं पूर्वेषां मतमेतेन दूष्यते । किन्तु चक्षुर्मृगाक्षीणां कज्जलेनैव भूष्यते" इति न्यायेन सममान्येव ।

एतस्मिन् जिज्ञासाक्षोदक्षममधिकं विस्तरतः पुण्यपत्तननगरमुद्रितजैमिनीयन्यायमालाभूमिकादावस्तीति ।

नचात्रातीवकर्त्तव्यं दोषदृष्टिपरं मनः ।
दोषोह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ १ ॥

इत्युपक्रम्य ।

कुतोवागृह्यते दोषं सूरयो मद्विधोक्तिषु ।
नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम् ॥ २ ॥

इति भट्टपादवर्णितस्वभावान् सज्जनान् प्रार्थयमानौ उपरमतो रघुनाथ–नृसिंहापरपर्य्यायनारायणदत्तशर्म्माणौ ।

# अध्यायानुक्रमणिका ।



श्रीगणेशायनमः ।

श्रीविद्यारण्यविरचितः

# अनुभूतिप्रकाशः

मितप्रकाशविवृतिसंवलितः ।

## प्रथमोऽध्यायः

ऐतरेयेण सम्प्रोक्ता द्वितीयारण्यकान्तगा ।
ब्रह्मविद्या सुविस्पष्टं बालबोधाय तन्यते ॥ १ ॥

मातरं पितरं नत्वा श्रद्धया गुरुमण्डलीम् ।
वेदान्तसंप्रदायज्ञानाचार्यांश्च मुहुर्मुहुः ॥ १ ॥
अधीष्टो भगवद्दासश्रेष्ठिना काशिपत्तने ।
दशाश्वमेधे कुर्वेऽहं प्रकाशविवृतिं मिताम् ॥ २ ॥

अथ विद्यारण्यस्वामी अनुभूतिप्रकाशं चिकीर्षुस्तावदृग्वेदीयैतरेयोपनिषदं व्याख्यातुं प्रतिजानीते । ऐतरेयेणेत्यादिपद्येन । ऐतरेयेण ऋषिणा शिष्येभ्यः सम्यक् प्रोक्ता प्रतिपादिता । न तु तेन कृतेतिभावः । द्वितीयस्यारण्येऽधीयमानस्य वेदभागस्यावसानगामिनी ब्रह्मविद्या सुविस्पष्टं यथा भवति तथा व्याख्यायते । ननु भाष्यादिरूपव्याख्यानसत्त्वे निष्प्रयोजनोऽयं त्वदीयः प्रयास इत्यत आह बालेति । भाष्यतस्तदर्थबोधेऽसमर्थानां बोधो मदीयप्रयासस्य फलमित्यर्थः ॥१॥

आत्मैव सृष्टेः प्रागासीन्नामरूपविवर्जितः ।
सोऽप्येक एव नान्योऽस्ति जडं चान्यन्न विद्यते ॥ २ ॥

इदानीम् 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्' इति श्रुतिं व्याचष्टे आत्मैवेत्यादिपद्यचतुष्केण । सृष्टेः प्रागात्मैवासीत् इति योजना । 'आत्मा वा' इत्यत्रत्यैवकारार्थवैशब्दस्यार्थं विशेषणव्याजेनाह नामरूपविव-

र्जित इति । अत्रैवकारेण नामरूपे अवयवत्वेनाशङ्क्यमाने प्रतिक्षिप्ते ते नास्तामि-त्यर्थः । अनेन स्वगतभेदो निरस्तः । एक एव नान्योऽस्ति, चिदन्तर नास्ती-त्यर्थः । अनेन सजातीयभेदः प्रतिक्षिप्तः । नान्यत्किञ्चनमिषदित्यस्यार्थमाह—ज-डमित्यादि । जडं प्रकृत्यादिकमात्मनो भिन्नं न विद्यते । अनेन विजातीयभेदः खण्डितः । एवं स्वगतसजातीयविजातीयभेदनिरासेन केवलात्मनः सृष्टेः प्रा-गवस्थितिर्दर्शिता ॥ २ ॥

मायां तु प्रकृतिं विद्या न्मायिनं तु महेश्वरम् ।
इति श्रुत्यन्तरे प्रोक्ता माया नान्यत्र तत्त्वतः ॥ ३ ॥

मायाप्रतियोगिकं विजातीयभेदमाशङ्क्य प्रतिषेधति मायामिति । प्रकृतिं जगत्कारणं मायां विद्यात महेश्वरं परमात्मानं मायिनं मायाध्यक्षं विद्यादितिश्रुत्यर्थः । अन्यत्र शाखान्तरे श्रुत्यन्तरे श्रुतिविशेषे प्रोक्ता माया तत्त्वतो न, मिथ्यैवेत्यर्थः । अयम्भावः । मायाया मिथ्यात्वात्तत्प्रतियोगिकभेदो ऽपि मिथ्यैवेति । नान्यत्रे-त्यस्य स्थाने नास्त्यत्रेतिपाठो भाति ॥ ३ ॥

निस्तत्त्वं व्यवहारार्हं मनृतं बालयक्षवत् ।
बालो यक्षं प्रकल्प्यास्माद्विभेति व्याघ्रतो यथा ॥ ४ ॥

ननु मायाया निस्तत्त्वत्वे कथं व्यवहारः स्यादित्याशङ्क्य निस्तत्त्वस्या-व्यवहारार्हत्वं सदृष्टान्तमाह निस्तत्त्वमिति । स्वरूपतो मिथ्याभूतमपि अनृतम-व्यक्तमनाद्यनिर्वचनीयभावरूपमज्ञानमिति यावत् । 'अनृतेन प्रत्यूढा' इति श्रुता-वनृतशब्दस्य मायायां प्रयोगात् । बालयक्षवद् व्यवहारार्हं व्यवहारयोग्यम् । बा-लयक्षवदित्यत्रप्रथमान्तादैच्छिको वतिः । यथा वसूनि तोयं घनवद् व्यकारीदि-त्यत्र । दृष्टान्तं विवृणोति बाल इत्यादिना । अतिरोहितार्थमेतत् ॥ ४ ॥

वस्तुतत्त्वं जडं किञ्चिन्नान्यदस्त्यात्मवस्तुनः ।
अद्वयानन्दरूपात्मा तदा सुप्ताविव स्थितः ॥ ५ ॥

तदानीं शुद्धात्मनो ऽवस्थान मुपसंहरति वस्तुतत्त्वमिति । आत्मवस्तु-परमार्थसत्याद् अन्याद्भिन्नं किञ्चिज्जडं मायातत्कार्यादिकं वस्तुतत्त्वं परमार्थसन्नासी-अद्वितीयानन्दैकरस आत्मा सुषुप्तिकाले इव तदासीदित्यर्थः । अस्तीति वर्तमान-त्वमविवक्षितम् ॥ ५ ॥

निस्तत्त्वाऽपि जगद्भ्रान्तिं माया निद्रेव कल्पयेत् ।
निर्विकारो ऽप्यसावात्मा मायावृत्त्या व्यचारयत् ॥ ६ ॥

आत्मा वा इत्यादिना मिषदित्यन्तेन सूत्ररूपेण वाक्येनात्मनो ऽखण्डैकरसत्वमुक्तम् । तेन च तदतिरिक्तस्य सर्वस्य मिथ्यात्वं सूचितम् । तदेवाध्यारोपापवादन्यायेन द्रढयितुं शिष्टाध्यायारम्भः । तत्रापि 'स ईक्षत लोकान्नु सृजाइतीत्यादिः 'अयमावसथ' इतीत्यन्तो ग्रन्थो ऽध्यारोपपरः, तदुत्तरस्त्वाऽऽध्यायसमाप्ति अपवादपर इत्येतन्मनसि निधायाध्यारोपमादावाह—निस्तत्त्वापीत्यादिना पञ्चद्वादशकेन । निस्तत्त्वापीति । स्वरूपेणासत्यपि माया निद्रेव जगद्भ्रान्तिं कल्पयेदित्यन्वयः । निर्विकारो ऽप्यसावात्मा मायापरिणामात्मकं भूतसृष्टिपूर्वकलोकसृष्टिविषयकसङ्कल्पं कृतवानित्यर्थः । मायावृत्त्येतितृतीया ऽभेदार्था ॥ ६ ॥

स विचार्याखिलान् लोकान् सृष्ट्वा पालकसृष्टये ।
कृत्वा विराट्तनुं छिद्रेष्वथ तद्देवता व्यधात् ॥ ७ ॥

स परमात्मा विचार्य अखिलान् लोकान् भूरादीन् सृष्ट्वा ऽग्न्यादिलोकपालसृष्टये विराट्तनुं कृत्वाऽथ तस्याः छिद्रेषु अग्न्यादिदेवता विहितवानित्यर्थः॥७॥

समुद्रतुल्ये देहेऽस्मिन् देवताः पतितास्तथा ।
तं देहं क्षुत्पिपासाभ्यां योजयामास स प्रभुः ॥ ८ ॥

समुद्रेत्यादि । तथा, विहिता अग्न्यादिदेवताः समुद्रसदृशेऽस्मिन् वैराजे देहे पतिता आसन् । अथ स परमात्मा क्षुत्पिपासाभ्यां वैराजं देहं योजितवानित्यर्थः ॥ ८ ॥

अन्नभोगायात्मदेहान् गवाश्वपुरुषादिकान् ।
सृष्ट्वा प्रावेशयत्तत्र देवतास्ता यथायथम् ॥ ९ ॥

अन्नेत्यादि । अथान्नभोगायासाधारणदेहान् गवाश्वपुरुषादिकान् सृष्ट्वा तेषु देहेषु यथायतनमग्न्यादिदेवताः प्रवेशितवानित्यर्थः ॥ ९ ॥

ईशोऽसाधारणं स्थानमपश्यन् क्षुत्पिपासयोः ।
प्रावेशयद्देवतासु तद्भोगात्ते च तृप्यतः ॥ १० ॥

ईश इत्यादि । परमात्मा क्षुत्पिपासयोरसाधारणं स्थानमपश्यन्नग्न्यादिदे-

वतासु ते प्रावेशयत् । अतोऽग्न्यादिदेवताभोगात् क्षुत्पिपासे तृप्तिं प्राप्नु इत्यर्थः ॥ १० ॥

अन्ने सृष्टे भोक्तृवर्गो ह्यजिघृक्षत्तदिन्द्रियैः ।
तत्र वागादयोऽशक्ता स्तदपानो गृहीतवान् ॥ ११ ॥

अन्नेत्यादि । अन्ने सृष्टे सति भोक्तृवर्गोऽग्न्यादिदेवता वागादीन्द्रियैस्त दन्नं ग्रहीतुमिष्टवान् । तत्र, अन्नग्रहणे वागादयोऽशक्ता आसन् । तद्, अन्नमपा नः प्राणविशेषो गृहीतवानित्यर्थः ॥ ११ ॥

जीवाभावे वृथा सर्वमित्यालोच्य परेश्वरः ।
शिरोमध्यं विदार्यात्र प्राविशज्जीवरूपतः ॥ १२ ॥

जीवेत्यादि । परमात्मा जीवाभावे इदं लोकलोकपालादिकं वृथेति विचा शिरोमध्यदेशं विदार्यात्रदेहे जीवरूपेण प्रविष्टवानित्यर्थः ॥ १२ ॥

प्राणानां धारकः कर्ता चेतनो जीव उच्यते ।
आनखाग्रमहंकार श्चिद्व्याप्तश्चेतनोऽभवत् ॥ १३ ॥

इदानीं जीवपदार्थमाह । प्राणानामिति । प्राणानां धारयिता कृत्याश्रय ज्ञानादिमान् जीव उच्यते, जीवपदेन श्रुतिस्मृतीतिहासादौ शक्त्या बोध्यते आनखाग्रं स्थितो योऽहंकारश्चिद्व्याप्तः स चेतनोऽभवदित्यर्थः ॥ १३ ॥

अन्तः करणभागौ द्वावहंकारो मनस्तथा ।
वृक्षस्य मूलमग्रञ्च यथा भागौ तथेक्ष्यताम् ॥ १४ ॥

अहंकारपदार्थं वर्णयितुमन्तः करणस्य भागौ ससंज्ञं सदृष्टान्तञ्चाह । अ न्तरिति । स्पष्टमिदम् ॥ १४ ॥

चिद्बिम्बप्रतिबिम्बाभ्यां युक्तोऽहंकार एव तु ।
चेतना प्राणभृत्तस्य हृन्निष्ठं करणं मनः ॥ १५ ॥

चिद्बिम्बेत्यादि । चिद्रूपबिम्बाचित्प्रतिबिम्बाभ्यां युक्तोऽन्तः करणभागो ऽहंकारः स एव तु चेतना, उक्तचिद्विशिष्टा बुद्धिः स एव प्राणभृत् निरुक्त जीवस्तस्य जीवस्य करणं ज्ञानादिसाधनं हृदयगोलकनिष्ठं निरुक्तचिद्रहितमन्त

करणभागरूपं मनो मनःपदवाच्यमित्यर्थः । वस्तुतः चेतनः प्राणभृदिति पाठो भाति ॥ १५ ॥

तस्य हृत्कण्ठनेत्रेषु प्रचारवशतो भवेत् ।
सुप्तिः स्वप्नो जागरश्च सोऽयं संसार ईरितः ॥ १६ ॥

तस्येत्यादि तस्य जीवाख्यसाभासहृदयस्य मनसो वा तत्करणस्य यथाक्रमं हृदयकण्ठनेत्रदेशेषु प्रचार वशतः सुषुप्तिः स्वप्नो जागरश्च भवेत् सोऽयमवस्थाविशेषो जीवस्य संसारः कथित इत्यर्थः ॥ १६ ॥

स्वप्नः स्वकाल एवास्ति नान्यदा स्वप्नजागरौ ।
तथैवेति स्वप्नसाम्यात्त्रयः स्वप्ना उदीरिताः ॥ १७ ॥

इदानीं तस्य "त्रय आवसथास्त्रयः स्वप्ना" इत्यस्याः श्रुतेस्तात्पर्य्यमाह । स्वप्न इति । अस्यार्थः । स्वप्नकाले एव स्वप्नोऽस्ति । न तु सुषुप्तिजागरयोः समये, तथैव जागरः स्वकाल एवास्ति न तुस्वेतरसमये इति स्वप्नसादृश्यात्त्रयो जागरादयोऽवस्थाविशेषाः श्रुत्या स्वप्नत्वेन बोधिताः ॥ १७ ॥

अध्यारोपो मायिकोऽयमुक्तोऽथासावपोह्यते ।
अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥ १८ ॥

वृत्तमनुवदन् सहेतुकं वर्तिष्यमाणमाह । अध्यारोपं इति । निष्प्रपञ्चं निर्विशेषं ब्रह्म प्रपञ्च्यते प्रतिपाद्यते ॥ १८ ॥

स संसारीश्वरो जात ईश्वरानुग्रहात्पुनः ।
पृथिव्यादीनि भूतानि यथाशास्त्रं व्यचारयत् ॥ १९ ॥

स जातो भूतान्यभि व्यैख्यदित्यस्याः श्रुतेस्तात्पर्यमाह । स इति । स ईश्वरः संसारी जातः सन् ईश्वरानुग्रहादेव पृथिव्यादीनि भूतानि शास्त्रमनतिक्रम्य विचारितवानित्यर्थः ॥ १९ ॥

परमात्मन उत्पन्नं जगदात्मैव नेतरत् ।
मृदो जातो घटो यद्वन्मृद्वस्त्वेव तथेक्ष्यताम् ॥ २० ॥

विचारमेवाह । श्लोकषोडशकेन परमात्मेत्यादिना । अयमत्रानुमानप्रयो-

गः। जगद् आत्ममात्रं तदुत्पन्नत्वाद् यद् यदुत्पन्नंतत्तन्मात्रमेव यथा मृदुत्पन्नो घटो मृन्मात्रस्तथाचेदं तस्मात्तथेति ॥ २० ॥

घटः शराव इत्यादिविकाराणां मृदः पृथक्।
तत्त्वं नास्ति प्रतीते तु नामरूपे प्रकल्पिते ॥ २१ ॥

दृष्टान्तं विवृण्वन् जगतः स्वकारणे प्रकल्पितत्वमाह। घट इति। अयमर्थः। यथामृद्विकाराघटशरावादयो मृदो वस्तुतो भिन्ना न सन्ति प्रतीयमाने तु घट इत्यादिनाम कम्बुग्रीवाद्याकाररूपञ्च कल्पनाविषयीभूते इति ॥ २१ ॥

प्रतिबिम्बभ्रमो नीराद्युपाधिवशतो यथा।
सन्निवेशोपाधितोऽयं तथा कुम्भादिविभ्रमः ॥ २२ ॥

कल्पनामेवाह। प्रतिबिम्बेत्यादि। यथा जलाद्युपाधितस्तडागादौ मुखप्रतिबिम्बविभ्रमः तथाऽवयवसंयोगविशेषरूपोपाधिवलान्मृदि कुम्भादिविभ्रमः इत्यर्थः ॥ २२ ॥

भ्रान्तिः सोपाधिकोपाधिनिवृत्त्यैव निवर्तते।
न बोधात्तेन भासन्ते जानतोपि घटादयः ॥ २३ ॥

नन्वियं मृदिति ज्ञानेन घटविभ्रमो निवर्तताम् इयं शुक्तिरिति ज्ञानेन रजतज्ञानमिवेत्याशङ्क्य तद्विभ्रमस्य सोपाधिकत्वादाकारविशेषरूपोपाधिनिवृत्त्यैव तन्निवृत्तिरिति मृद्ज्ञानवतोऽपि घटादयो भासन्ते इत्याह भ्रान्तिरिति ॥ २३ ॥

पृथग् द्रव्यस्वरूपः सन् समवेतो घटो मृदि।
इत्याहुस्तार्किकास्तत्तु न द्वैगुण्यप्रसङ्गतः ॥ २४ ॥

इदानीं कार्यकारणयोर्भेदं वैशेषिकाभ्युपगतं निराचष्टे। पृथगित्यादिना॥२४

मृद्भाराद् घटभाराच्च गुरुत्वं द्विगुणं भवेत्।
तथालंकारकर्ता स्यात्कृती हेमादिवृद्धितः ॥ २५ ॥

कार्यकारणयोर्भेदे द्वैगुण्यप्रसङ्गो बाधक उक्तस्तमेव स्पष्टयति। मृद्भारादित्यादिना ॥ २५ ॥

न संनिवेशमात्रेण पृथग् द्रव्यत्वसम्भवः ।
शयनोत्थानगमनै र्न पुत्रे बहुपुत्रता ॥ २६ ॥

ननु घटो मृदो भिन्नः सन्निवेशविशेषवत्त्वात् यो यस्माद् विलक्षणसंन्निवेशः स तस्माद् भिन्नो यथा गोर्विलक्षणसंस्थानोऽश्वो गो र्भिन्नः तथाचायं तस्मात्तथेत्याशङ्क्य शयनोत्थानादिकालिकसन्निवेशविशेषविशिष्टे पुत्रे व्यभिचारेण दूषयति नेत्यादिना ॥ २६ ॥

तस्मात्कार्यं न वस्तुस्यात,कारणव्यतिरेकतः ।
किंतु कारण एवैतदनृतं भासते मृषा ॥ २७ ॥

उपसंहरति । तस्मादित्यादिना । तस्माद्धेतो मृदादिकारणव्यतिरिक्तं घटादिकार्यं न वस्तु सत् किन्तु मृत्पिण्ड एव घटादिकमनृतं भासते । अनृतपदार्थमाह । मृषेति ॥ २७ ॥

अर्थक्रियाऽनृतेऽप्यस्ति स्थाणौ चोरभयेक्षणात् ।
ततोऽनृता घटाद्याः स्यु र्मान्तु कुर्वन्तु वा क्रियाम् ॥२८॥

ननु घटादिः सन् जलाहरणादिक्रियाकारित्वादित्यनुमानेन घटादेः परमार्थसत्ता स्यादित्याशङ्क्य भयादिजनके स्थाणुचोरादौ व्यभिचारेण दूषयति अर्थक्रियेत्यादिना । स्थाणाविति । स्थाणौ यश्चौरस्तस्मिन् भयक्रियाकारित्वदर्शनादित्यर्थः ॥ २८ ॥

सन्निवेशोपाधिहाने गच्छत्येव घटादिधीः ।
विवेकिनां तु वस्तुत्वं घटादीनां निवर्तते ॥ २९ ॥

भ्रान्तिः सोपाधिकोपाधिनिवृत्त्यैव निवर्तते इति यदुक्तं तद् घटादिभ्रान्तौ सङ्गमयति । सन्निवेशेत्यादिना । सन्निवेशोऽनुगतसंस्थानं तद्रूपोपाधिनाशेऽविवेकिनामपि घटादिधी र्निवर्तते, विवेकिनान्तु सन्निवेशसद्भावे घटादिभानेऽपि तत्र वस्तुत्वबुद्धिर्निवर्तते इत्यर्थः ॥ २९ ॥

घटः शराव इत्येवं वाचैवारभ्यते वृथा ।
मृत्तिकेत्येव सत्यं स्यान्न तु सत्यं घटादिकम् ॥ ३० ॥

अत्र "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचार-

म्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतिमर्थतः पठति पा इत्यादि ॥ ३० ॥

एवमात्मन उत्पन्नं पृथिव्याद्यपि नात्मनः ।
पृथग् वस्त्वस्ति किन्त्वात्मन्यारोपात्प्रतिभासते ॥ ३१ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति एवमित्यादिना । एवमुक्तप्रकारेणात्मन उत्पन्नं पृथिव्यादि जगदपि आत्मनः पृथक् वस्तुतो नास्ति किन्तु आत्मनि कल्पनया भातीत्यर्थः ॥ ३१ ॥

सद् वस्तु ह्यात्मनस्तत्त्वं तस्मिन् भूम्यादिकल्पनात् ।
पृथिव्यादीनि सन्तीति भासते तत्तदिन्द्रियैः ॥ ३२ ॥

आरोपान्मिथ्यावस्तुनो भानं विशदयति । सदित्यादिना । आत्मनस्तत्त्वस्यपृथिव्यादेस्तत्त्वं सद्वस्तु यतोऽतस्तस्मिन् भूम्यादिकल्पनात् चक्षुरादीन्द्रियैः पृथिव्यादीनि सन्तीत्याकारकं भानं भवतीत्यर्थः ॥ ३२ ॥

इन्द्रियोपाधिका भ्रान्तिरक्षरोधान्न भासते ।
इत्येतद् विशदीकर्तुं योगो वेदेषु वर्ण्यते ॥ ३३ ॥

चक्षुरादीन्द्रियोपाधिका भ्रान्ति स्तान्निरोधे निरुध्यतेऽस्यार्थस्य विशदीकरणाय वेदेषुयोगो वर्ण्यते इत्यर्थकं वाक्यं पठतीन्द्रियेत्यादि ॥ ३३ ॥

सदात्मनः पृथग्भूतमसद् भूम्यादि तेन तत् ।
भात्वक्षैः कार्यकृद् वस्तु मिथ्यैव स्याद् घटादिवत् ॥ ३४ ॥

सदित्यादि । त्रिकालाबाध्यरूपादात्मनः पृथग्भूतं भूम्यादिजगदसत् तेन तद् भूम्यादि इन्द्रियै र्भातु नाम कार्यकृद् वस्तु किन्तु घटादिवन्मिथ्यैव सम्भवतीत्यर्थः ॥ ३४ ॥

ईदृग्विवेकदृष्ट्येदं जगदात्मैव नेतरत् ।
एवं सत्यात्मनोऽन्यत्किं वस्तुतोऽस्तीति शङ्क्यते ॥ ३५ ॥

किमिहान्यं वावदिषदितिश्रुतितात्पर्यमाहेदृगित्यादि । ईदृग्विचारबुद्ध्येदं जगदात्मैव न तद्भिन्नम् एवं सत्यात्मनो भिन्नं वस्तुतोऽस्ति इति किं शङ्क्यते इत्यर्थः ॥

आत्मनोऽन्यस्य कस्यापि वस्तुतोऽभावादीदृक् शङ्का न सम्भवति इति भावः ॥ ३५ ॥

अद्वयानन्दरूपात्मा सृष्टेः पूर्वमभूद् यथा ।
तथैवाद्यापि संपन्नो बुद्ध्या सम्यग् विवेचितः ॥ ३६ ॥

इदानीमधुनाऽपि अद्वयात्मत्वं तन्न्यायेन दर्शयत्यद्वयेत्यादिना । बुद्ध्या सम्यग् विवेचितोऽद्यापि सृष्टिदशायामपि तथैव अद्वयानन्दरूपात्मैव संपन्नः सिद्ध इति योजना ॥ ३६ ॥

इत्थं सर्वात्मकं ब्रह्म विविच्य पुनरप्यसौ ।
एतमेव स्वमात्मानं ब्रह्मत्वेन व्यलोकयत् ॥ ३७ ॥

इदानीं "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" इत्यस्याः श्रुतेरर्थमाह । इत्थमित्यादिना । उक्तप्रकारेण सर्वात्मकं ब्रह्म इति निर्णीय पुनरपि असौ जीव एतमेव स्वमात्मानं ब्रह्मत्वेनापश्यदित्यर्थः ॥ ३७ ॥

अहंकारश्च चिच्छाया मिथ्या भूम्यादिवत्ततः ।
चिदात्मकोऽवशिष्टोऽयं जीवो ब्रह्मैव नेतरः ॥ ३८ ॥

ननु निरुक्ताहंकारात्मकजीवस्य मिथ्यात्वेन ब्रह्मत्वेन तज्ज्ञानं भ्रम एवेत्याशङ्क्य साधिष्ठानाभासात्मकान्तःकरणस्य मिथ्यात्वेऽपि अधिष्ठानस्य सत्यत्वाद् ब्रह्मत्वेन तज्ज्ञानस्य न भ्रमत्वमित्याह । अहंकारश्चेति ॥ ३८ ॥

यथाशास्त्रं विविच्येत्थं प्रत्यग्दृष्ट्या चिदात्मनः ।
साक्षाच्चकार ब्रह्मत्वं जीवः शान्त्यादिसंयुतः ॥ ३९ ॥

यथाशास्त्रमित्यादि । शमदमादिसाधनसंपन्नो जीवो यथाशास्त्रं, पूर्वोक्तप्रकारेण विविच्य प्रत्यग्दृष्ट्या प्रत्यगात्मविषयकसाक्षात्काराख्यमानसवृत्तिविशेषेण चित्स्वरूपस्यात्मनो ब्रह्मत्वं प्रत्यक्षयामासेत्यर्थः ॥ ३९ ॥

इदमित्यपरोक्षेण ददर्शेति विवक्षया ।
इदन्द्रनामाऽभूज्ज्ञानी वैयाकरणदृष्टितः ॥ ४० ॥

२

इदानीम् "इदमदर्शमिति तस्मादिदन्द्रो नामेदन्द्रो हवै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवा" इति श्रुत्यर्थमाह। इदमित्यादिना। इदमित्याकारकापरोक्षेण ब्रह्मतत्त्वं ददर्श इति वक्तुमिच्छया वैयाकरणदृष्ट्या ज्ञानी इदन्द्रनामाऽभूदित्यर्थः ॥ ४० ॥

तमिन्द्र इत्याहुरन्ये नाम्नः पारोक्ष्यसिद्धये।
पूज्यस्य देवपित्रादेः परोक्षं नाम हि प्रियम् ॥ ४१ ॥

तमिति। तमन्ये नाम्नः परोक्षत्वसिद्धये इन्द्र इत्याहुर्यतः परोक्षं नाम पूज्यस्य देवपित्रादेः प्रियं भवति इत्यर्थः ॥ ४१ ॥

परमेश्वररूपत्वादपीन्द्रत्वमिहोचितम्।
समाप्ता ब्रह्मविद्येयमुत्तमस्याधिकारिणः ॥ ४२ ॥

परमेश्वरेति। ब्रह्माभिन्नत्वादपि जीवस्येन्द्रत्वमिहोचितम्। उत्तमाधिकारिण इयमखण्डानन्दैकरसब्रह्मविद्या समाप्तेत्यर्थः ॥ ४२ ॥

विरक्तस्योक्तबोधः स्याद् वैराग्यं दोषदर्शनात्।
जन्मैव प्रथमो दोषस्तद्बीभत्सा निरूच्यते ॥ ४३ ॥

इदानीमुक्तबोधो विरक्तस्य भवति वैराग्यं च दोषदर्शनाद् भवति दोषाणाञ्च जन्मादीनां प्रथमो जन्मैवातो जन्मविषया ग्लानिर्निरूप्यते इत्याह। विरक्तस्येत्यादिना ॥ ४३ ॥

स्वर्गाद्वा नरकाद्वाऽयं वृष्टिद्वाराऽन्नसंस्थितः।
प्रविश्य पितरं तत्र गर्भो भवति रेतसि ॥ ४४ ॥

"पुरुषे हवा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतमात्मन्येवात्मानं बिभर्ति तद् यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्मे"ति श्रुतिं विवृणोति। स्वर्गाद् वेत्यादिना पद्यत्रिकेण। अयं जीवः स्वर्गाद् वा नरकाद्वा वृष्टिद्वारा व्रीहियवादौ संस्थितः ततो भुज्यमानान्नद्वारा पितरं प्रविश्य रेतसि गर्भो भवति ॥ ४४ ॥

तद्रेतः पितृदेहस्थं सर्वाङ्गेभ्यः समुत्थितम् ।
पितुः स्वदेहो गर्भाख्यदेहश्चेति वपुर्द्वयम् ॥ ४५ ॥

तद्रेत इति । तद्रेतोऽन्नमयस्य पिण्डस्य सर्वेभ्योऽवयवेभ्यः सम्भूतं पितृदेहस्थितं पितरि गर्भो भवति इति पूर्वेणान्वयः । वक्ष्यमाणस्य पुत्रात्मना पितृजन्मन उपपत्तये पितुर्देहद्वयं भवति इत्याह पितुरित्युत्तरार्धेन ॥ ४५ ॥

स्त्रियां सिञ्चति तद्रेतस्तत्पुत्रोत्पादनं पितुः ।
पुत्ररूपेण तज्जन्म पितुराद्यं स्वयं कृतम् ॥ ४६ ॥

इदानीं जन्मत्रयमध्ये प्रथमं जन्माह । स्त्रियामिति तद् रेतः स्त्रियां सिञ्चति यत् तत्सेचनं पुत्रात्मना पितुराद्या स्वकृतोत्पत्तिरेतदेवाहोत्तरार्धेन ॥ ४६ ॥

योषिद्योनिं प्रविश्यायं योषिद्गर्भे स्फुटीभवेत् ।
योषिद्वीर्येण पुष्टोऽसौ तद्देहेनैकतां व्रजेत् ॥ ४७ ॥

इदानीं "तत्स्त्रिया आत्मभूयं गच्छतीत्यादेस्तदस्य द्वितीयं जन्म" इत्यन्तायाः श्रुतेरर्थमाह । योषिद्योनिमित्यादिपञ्चकेन । अयं पिता योषिद्योनिं प्रविश्य योषिद्गर्भे स्पष्टो भवति योषिद्भुक्तान्नपानरसेन पुष्टः सन् तस्या देहेनैकतामेति ॥ ४७ ॥

अन्यथैनां स्त्रियं हन्याद् गुल्मव्याधिवदान्तरः ।
स्वाङ्गवन्न हिनस्त्येनां गर्भं रक्षति सा ततः ॥ ४८ ॥

अन्यथेति । एकत्वप्राप्त्यभावे आन्तरो गर्भो गुल्मादिव्याधिविशेषवद् एनां हन्याद् यतः स गर्भः स्वाङ्गवदेनां न हिनस्ति ततः सैनं गर्भं रक्षति ॥ ४८ ॥

गर्भरूपं भर्तृदेहं यतः सा पालयत्यतः ।
साऽपि भर्त्रा पालनीया तदिष्टान्नादिवस्तुभिः ॥ ४९ ॥

गर्भरूपमिति । यतो गर्भरूपं भर्तृदेहं सा रक्षति अतः साऽपि भर्त्रा तदाकाङ्क्षितान्नादिवस्तुदानेन पालनीया भवतीति योजना ॥ ४९ ॥

गर्भो विण्मूत्रयोः स्थित्वा दशमे मासि जायते ।
पिता स्वात्मधिया पुत्रं संस्करोति यथाविधि ॥ ५० ॥

गर्भेति । गर्भो नवसु मासेषु विण्मूत्रयोः स्थित्वा दशमे मासि जायते आ
पुत्रं पिता स्वात्माऽभिन्नं मन्यमानो यथाशास्त्रं जातेष्ट्यादिकर्मणा संस्करोति ॥५०॥

पितुर्द्वितीयं तज्जन्म पुत्ररूपेण संस्थितम् ।
स्वोदराद् दारजठरादपि जन्मद्वयं क्रमात् ॥ ५१ ॥

इदानीं द्वितीयं जन्मोपसंहरन् जन्मद्वयमभिनीय दर्शयति पितुरित्यादिना॥५१॥

पतिर्जायां विशत्यादौ गर्भो भूत्वा स्वमातरम् ।
जायैवमातासंपन्नेत्यहो संसारकष्टता ॥ ५२ ॥

जन्मनो वैराग्यहेतुतामाह पतिरित्यादिना । पतिर्गर्भो भूत्वा स्वमातरं जा
यामादौ विशति एवं जायैव माता संपन्ना भवतीत्यादि योजना ॥ ५२ ॥

लौकिकं वैदिकं सर्वं पुत्रेऽवस्थाप्य तत्पिता ।
मृतो देहान्तरे पित्रोरन्ययोर्विशति स्वयम् ॥ ५३ ॥

इदानीं "सोऽस्यायमात्मापुण्येभ्य" इत्यादे"स्तदस्य तृतीयं जन्मे"त्यन्ता
याः श्रुतेरर्थमाह । लौकिकमित्यादिना । लौकिकं कृषिवाणिज्यादिरूपं स्वकर्तव्यं
वैदिकमग्निहोत्रादिकं सर्वं कर्म पुत्रेऽवस्थाप्य मृतोऽन्ययोः पित्रोर्देहमध्ये वसती
त्यर्थः ॥ ५३ ॥

पुत्ररूपेण यज्जन्मद्वयं पूर्वमुदीरितम् ।
तदपेक्षं तृतीयं तज्जन्म स्याद् देहधारिणः ॥ ५४ ॥

जन्मद्वयमनुवदन् तृतीयं जन्मोपसंहरति । पुत्ररूपेणेत्यादिना ॥ ५४ ॥

स्वोदरं दारजठरं तथा पित्रन्तरोदरम् ।
त्रय आवसथा इत्थं जन्तोः सर्वस्य जन्मने ॥ ५५ ॥

इदानीं "त्रय आवसथा" इतिश्रुतिस्थावसथपदस्यार्थान्तरं सप्रयोजनमाह । स्वोदरमित्यादिना ॥ ५५ ॥

जन्मानि योनिलक्षाणां जन्तुश्चतुरशीतिषु ।
उत्तमाधमरूपाणि प्राप्नोत्येवं पुनः पुनः ॥ ५६ ॥
दुष्टत्वं जन्मनः प्रोक्तं स्पष्टं रोगादिदुष्टता ।
विरक्तो बुद्धतत्त्वस्तु मुच्यते वामदेववत् ॥ ५७ ॥

इदानीं चतुरशीतिलक्षयोनिषु उत्तमाधमरूपजन्मप्राप्तिमुपसंहरन् प्रोक्तस्य जन्मनो दुष्टत्वस्य स्पष्टस्य च रोगादिदुष्टत्वस्य वैराग्यहेतुत्वं तस्य च तत्त्वसाक्षात्कारद्वारा मोक्षहेतुत्वञ्चाह । जन्मानीति द्वाभ्याम् । योनिलक्षाणां चतुरशीतिष्विति संबंधः ॥ ५६ ॥ ५७ ॥

पूर्वजन्मनि बोधेन स्वमुक्तिं चाब्रवीदृचा ।
गर्भस्थो वामदेवोऽयं प्रतिबन्धविवर्जितः ॥ ५८ ॥

इदानीं "गर्भेनु सन्नन्वेषामवेद"मित्यादेः "वामदेव एवमुवाचे"त्यन्तायाः श्रुतेरर्थमाह । पूर्वजन्मनीत्यादिपद्यैः सार्धचतुर्भिः । वामदेवः पूर्वजन्मनि जातेन श्रवणेन प्रतिबन्धकापाये गर्भावस्थायां जातात्साक्षात्कारान्निजमुक्तिमृचाऽब्रवीदित्यर्थः ॥ ५८ ॥

जन्मन्यतीते वेदान्तं श्रुत्वाऽप्येष न बुद्धवान् ।
बलिना प्रतिबद्धत्वात् कर्मणा जन्महेतुना ॥ ५९ ॥
गर्भे प्रविश्य तत्कर्म विनष्टं प्रतिबन्धकम् ।
नवमे मासि संस्मृत्य श्रवणं प्रतिबुद्धवान् ॥ ६० ॥

एतदेवस्पष्टयति । जन्मन्यतीते इत्यादि पद्यद्वयेन ॥ ५९ ॥ ६० ॥

विद्वान् भूत्वा समुत्पन्नो जीवन्मुक्तोऽभवत्तदा ।
शरीरमात्मनो भिन्नं मिथ्यैवेत्यवगच्छति ॥ ६१ ॥

"स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वा
कामानाप्त्वाऽमृतः समभवत्" इति श्रुतितात्पर्यविषयीभूतां वामदेवस्य जीवन्मु
तामाह । विद्वानिति । स वामदेव आत्मानं गर्भे साक्षात्कृत्य समुत्पन्नो जीवन्मुक्
जातः तदा जीवन्मुक्तिदशायामात्मनो भिन्नं शरीरं मिथ्यैवेति अवगच्छति विवे
लडर्थोऽविवक्षितः ॥ ६१ ॥

इयन्तं कालमेतस्मिन् भ्रान्त्या देहे निमग्नवान् ।
बोधेन देहादुत्क्रम्योत्कृष्टोऽभूज्जीवतां त्यजन् ॥ ६२ ॥

इयन्तमिति । इयन्तं कालं साक्षात्कारात्प्राग् भ्रान्त्याऽविद्यया एतस्मि
देहे निमग्न इवाभवत । अविद्याविनाशहेतुभूतेन साक्षात्कारेण च देहादुद्गत्य दे
हात्मताऽभिमानं त्यक्त्वा जीवतां त्यजन् उत्कृष्टः परमात्मस्वरूपोऽभवदित्यर्थः ॥६

जीवत्वेऽपगते तस्य शिष्यते परमात्मता ।
स एव स्वर्गतुल्योऽभूदिन्द्रियाविषयत्वतः ॥ ६३ ॥
परोक्षोऽपि विमूढानां विद्वद्भिरवलोक्यते ।
सर्वेऽपि विषयानन्दाः प्राप्ता दृष्टे निजात्मनि ॥ ६४ ॥

पूर्वोक्तमेवाह । जीवत्वेऽपगत इत्यादिना पूर्वार्धेन । स एव शिष्टपरमात्मै
स्वर्गसदृशो बभूवेत्यर्थः । आकाशवत्सर्वगतश्च नित्य इत्यत्रेव स्वर्गस्यापकृष्टत्वेऽप्युप
मानत्वम् । इन्द्रियाविषयत्वत इत्युत्तरान्वयि ॥ ६३ ॥ इन्द्रियाविषयत्वेनानन्दरू
पस्य परमात्मनः परोक्षत्वमाशङ्क्य परिहरति । परोक्षोऽपीति । इन्द्रियाविषयत्वे
विमूढानां परोक्षोऽपि आनन्दस्वरूपात्मा विद्वद्भिः प्रत्यक्षी क्रियते । स्वर्गतुल्यत्वमे
वोपपादयति सर्वेऽपीति । निजात्मनि साक्षात्कृते सति सर्वे विषयानन्दाः प्राप्ता एव
भवन्तीत्यर्थः ॥ ६४ ॥

आत्मानन्दसमुद्रस्य विप्रुषो विषयोत्थिताः ।
आत्मन्यन्तर्भवन्त्यन्ते समुद्रे विन्दवो यथा ॥ ६५ ॥

एतदेवोपपादयति आत्मेति । आत्मैवानन्दरूपः समुद्रस्तस्यविप्रुषो विन्दवः
स्रगादिविषयसंपर्कादिनाऽऽविर्भूता आनन्दास्तेचाविर्भूय भोगदपुण्यकर्मोपरमे सति
आत्मन्यन्तर्भवन्ति समुद्रे जलविन्दव इवेत्यर्थः ॥ ६५ ॥

आत्मन्यानन्दमज्ञात्वा विषयेषु स्वविभ्रमात्।
वाह्यमिच्छति तल्लाभाद् धीरात्मन्युपशाम्यति ॥ ६६ ॥

ननु यद्यात्माऽऽनन्दात्मकस्तर्हि स्रगादिविषयेच्छा न स्यात् इत्याशङ्क्यां समाधत्ते—आत्मनीतिसार्धपद्येन । आत्मन्यानन्दमानन्दैकरसात्मानमपरिज्ञाय स्रगादिविषयेषु सुखभ्रान्त्या स्रगादिविषयमिच्छति । स्रगादिलाभेन च आत्मन्येव बुद्धिरवतिष्ठते । आत्मस्वरूपमेवानन्दमनुभवतीत्यर्थः ॥ ६६ ॥

आत्मानन्दं क्षणं भुक्त्वा पुनर्भ्रान्त्या बहिर्व्रजेत् ।
विवेकिधीर्निजानन्दं भुङ्क्ते तत्स्थैव सर्वदा ॥ ६७ ॥

तत्रावस्थाय क्षणमात्मानन्दं भुक्त्वा पुनर्विषयेषु सुखभ्रान्त्याऽविवेकिबुद्धिः स्रगादि कामयत इत्यर्थः । नन्वविवेकिबुद्धेरात्मानन्दानुभवे विवेकिबुद्धावस्थाः को विशेष इत्याशङ्क्य ततो विशेषमाह । विवेकिधीरिति । तत्स्थैव आत्मनि स्थितैवेत्यर्थः ॥ ६७ ॥

विषये दुःखजातं यत्तद्वीक्ष्यापक्षपाततः ।
शक्यो वोद्धुं निजानन्दो बुध्यन्ते हि विवेकिनः ॥ ६८ ॥

निजानन्दबोधप्रकारमाह विषय इति । विषये विषयसम्पादनादौ दुःखराशिं पक्षपातं विहाय समीक्ष्य स्वरूपभूतानन्दो ज्ञातुं शक्यते । विषयस्य दुःखहेतुत्वेन दुःखरूपत्वनिर्णये स्वरूपभूत एवानन्द इति निश्चेतुं शक्यमितिभावः । आत्मन आनन्दरूपत्वे विवेक्यनुभवं प्रमाणयति । बुद्ध्यन्ते हीति । यतो विवेकिनस्तं बुद्ध्यन्ते इत्यर्थः ॥ ६८ ॥

वामदेवोऽखिलानन्दानाप्त्वात्मन्यमृतोऽभवत् ।
देहप्राणवियोगाख्यामृतिश्चिद्वस्तुनो नहि ॥ ६९ ॥

ननु आत्मन्यानन्दं प्राप्य आनन्दात्मकमात्मानं विज्ञाय वामदेवोऽमृतोऽभवदित्युक्तमयुक्तं, तस्यापि मरणश्रवणादित्याशङ्क्य देहादिवियोगो मरणं नत्वात्मनो विनाश इति समाधत्ते । वामदेवोऽखिलानिति ॥ ६९ ॥

इत्थं संसारदुष्टत्वं पुरुषार्थं च बोधतः ।
श्रुत्वा विरक्ता बोधार्थं मीमांसन्ते मुमुक्षवः ॥ ७० ॥

इदानीं तृतीयाध्यायं व्याख्यातुकामो वैराग्यमुमुक्षासम्पन्नस्यात्मबोधफलकं पूजितविचारमवतारयति । इत्थमिति । इत्थं संसारदुष्टत्वं श्रुत्वा बोधस्वरूपसाक्षात्कारात्पुरुषार्थं मोक्षं च श्रुत्वा विरक्ता मुमुक्षवो बोधार्थं मीमांसन्ते इति योजना ॥ ७० ॥

अहं पश्याम्यहं वच्मीत्यात्मानं सर्वदा वयम् ।
उपास्महे योगिवन्द्यं कोऽसौ मूर्ध्नि प्रविष्टवान् ॥ ७१ ॥

'कोऽयमात्मेति वयमुपास्महे' इति वाक्यं व्याचष्टे । अहमिति । यं योगिवन्द्यमात्मानं सर्वसमये वयम् अहं पश्याम्यहं वच्मि इत्युपास्महे यश्च मूर्धानं विदार्याऽस्मिन् कार्यकरणसंघाते प्रवेशं कृतवान् स को जिज्ञासित इत्यर्थः ॥ ७१ ॥

मायावी शुद्धचिद्वात्माकतरः सृष्टितः पुरा ।
बुभुत्सन्ते द्वयोस्तत्त्वं जीवात्मपरमात्मनोः ॥ ७२ ॥

इदानी "कतरः स आत्मे" तिवाक्यस्य तात्पर्यमाह । मायावीति । शुद्धचिन्मायाशबलचितोर्मध्ये सृष्टेः प्राक् आसीदिति जीवपरयोः स्वरूपं जिज्ञासाञ्चक्रुरित्यर्थः ॥ ७२ ॥

जीवस्य चेतनत्वेन चैतन्यं चिन्त्यतामिदम् ।
चक्षुरादिविशिष्टं तच्छुद्धं वा तत्त्वमस्य किम् ॥ ७३ ॥

इदानी "येन वा पश्यति येन वा शृणोती" त्यादेः "प्रज्ञानस्य नामधेयानि भवन्ती" त्यन्तायाः श्रुतेस्तात्पर्यमाह । जीवस्येत्यादिभिश्चतुर्विंशत्या पद्यैः । जीवस्येति । चक्षुरादिविशिष्टं चैतन्यं जीवस्य स्वरूपमुत तद्रहितं शुद्धमित्युत्तरार्धार्थः ॥ ७३ ॥

चक्षुः श्रोत्रं घ्राणजिह्वे त्वक्च धीन्द्रियपञ्चकम् ।
रूपशब्दौ गन्धरसौ स्पर्शश्च विषयाः क्रमात् ॥ ७४ ॥
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् ।
भाषणादानगमनविसर्गानन्दकाः क्रियाः ॥ ७५ ॥

चक्षुरादिविशिष्टमित्यत्रोक्तस्य चक्षुरादेः साधिष्ठानसविषयज्ञानेन्द्रियाणि पञ्च, सव्यापारसाधिष्ठानकर्मेन्द्रियपञ्चकं साधिष्ठानसव्यापाराः पञ्चप्राणाः तथाविधेबुद्धिमनसी अर्थ इत्याह—चक्षुःश्रोत्रे इत्यादिभिः षड्भिः । यद्वा चक्षुरादिविशिष्टमित्यत्रोक्तस्य चक्षुरादिशब्दस्य ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियपञ्चकं पञ्चप्राणा बुद्धिमनसी द्वे इति सप्तदशकमर्थस्तत्तदधिष्ठानव्यापारविषयाणामुपवर्णनंतु चक्षुरादिसप्तदशके प्रमाणं दर्शयितुमितिध्येयम् ॥ ७४ ॥ ७५ ॥

गोलकानि दशैतेषा मक्ष्यादीनि स्फुटानि हि ।
ज्ञानाक्रियाशक्तिरूप मिन्द्रियं गोलकस्थितम् ॥ ७६ ॥

गोलकानीति । ज्ञानक्रियाशक्तिरूपाणां ज्ञानेन्द्रियकर्मेन्द्रियाणां गोलकशब्दितानि नेत्रादीनिदशस्थानानिस्फुटानीत्यर्थः ॥ ७६ ॥

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
हृद्गुदे नाभिकण्ठौ च देहश्चैषु वसन्तिते ॥ ७७ ॥

प्राणान् स्वनामभिर्निर्दिशति—प्राण इति । तत्स्थानान्याह—हृद्गुदे इति ॥७७॥

श्वासाधोगतिवृत्ती द्वे वपुष्यन्नसमीकृतिः ।
उद्गारादि र्देहवलं पञ्च वायुक्रिया इमाः ॥ ७८ ॥

प्राणव्यापारानाह—श्वासेति । यथाक्रमं प्राणादीनामूर्ध्वगमनमधोगमनमशितपीतस्य शरीरे समीकरणमुद्गारादि देहवलं व्यापारा इत्यर्थः ॥ ७८ ॥

अहंकर्ता वपुर्व्याप्य जडं चेतनतां नयेत् ।
मनोऽन्तर्हृद्यवस्थाय वृत्तीः कामादिकाः सृजेत् ॥७९॥

साधिष्ठानव्यापारे बुद्धिमनसी आह—अहंकर्तेति । अहंकारः कृत्स्नवपुषि स्थितः सन् शरीरं चेतनत्वं गमयति । मनोऽन्तर्हृदिस्थितंसद्धृदयगोलकमध्यगतंसत्कामसंकल्पादिकान्व्यापारान्जनयति ॥ ७९ ॥

ज्ञानेन्द्रियाणि पञ्चात्र तथाकर्मेन्द्रियाण्यपि ।
वायवः पञ्च कर्ता च मनः सप्तदशं स्मृतम् ॥ ८० ॥

सोऽयं सप्तदश स्तोमो लिङ्गदेहःस्वयोनिषु ।
सर्वासु संसरत्यस्य विनाशोमोक्ष उच्यते ॥ ८१ ॥

अधुनालिङ्गदेहशब्दार्थंब्रुवन्तस्यतत्तद्योनिषुगमनंसंसारस्तन्नाशो मोक्ष इत्याह—ज्ञानेन्द्रियाणीत्यादिनाद्वाभ्याम् । कर्ता अहंकर्त्ता अहंकार इति यावत् ॥ ८० ॥ ८१ ॥

अज्ञानकल्पितोदेहस्तत्त्वज्ञानेन नश्यति ।
ज्ञानोत्पत्तिर्विचारेण तस्मादात्मा विचार्यते ॥ ८२ ॥

चक्षुरादिविशिष्टंतच्छुद्धंवातत्त्वमस्यकिमित्यादिनाऽऽरब्धस्यविचारस्य फलं सफलमाह—अज्ञानेति । विचारस्य फलं तत्त्वज्ञानं तस्य फलमज्ञानादिनिवृत्तिरित्यर्थः । विचार्यते श्रुत्येति शेषः ॥ ८२ ॥

येन पश्यत्यसावात्मा यः पश्यति स वा भवेत् ।
द्रष्टा पश्यति बोधेन चाक्षुषेण तयोस्तु कः ॥ ८३ ॥

येनवापश्यतीतिश्रुत्यर्थमाह—येनेति । येन चक्षुषाऽसौ पश्यत्यसावात्मा । यद्वा यः पश्यति स आत्मा भवेदिति पूर्वार्द्धार्थः । पश्यतिपदमनूद्य तदर्थमाह—द्रष्टेति । द्रष्टृपदार्थमाह—चाक्षुषेणबोधेनेति । वैशिष्ट्यं तृतीयार्थः एवंच चाक्षुषवृत्त्यात्मकबोधविशिष्टोद्रष्टा नतुनित्यालुप्तचिद्रूपः प्रष्टुरभिप्रेतः सच साभासाहंकारादिपदबोध्योजीवस्तथाच चाक्षुषवृत्त्यात्मकबोधविशिष्टद्रष्टुरात्मत्वेन जिज्ञासायां चाक्षुषवृत्तिरप्यात्मत्वेन जिज्ञासितेति ध्येयम् । तयोर्निरुक्तकर्तृकरणयोर्मध्ये कआत्मेत्यर्थः । परेतु येनपश्यति इत्यत्रोक्तयोः कर्तृकरणयोः स्वरूपमाह—द्रष्टेत्यादि । तत्र कर्तृपदार्थोद्रष्टा पूर्वोक्तसाभासाहंकारादिरूपः । करणपदार्थमाह—पश्यतिबोधेनचाक्षुषेणेति । चक्षुर्जन्यमनो वृत्त्या पश्यति घटादि विषयीकरोतीत्यर्थः । चाक्षुषबोधपदं चक्षुषोऽपिकरणस्योपलक्षणम्—यद्यपिचक्षुर्जन्यमनोवृत्तिर्मनसःकरणस्यव्यापार इत्यग्रे वक्ष्यते तथापियदव्यवधानेनकार्यस्यचिस्तत्करणमित्यभिप्रेत्य वृत्तिरपिकरणंतयोःकर्तृकरणयोः क आत्मेत्यर्थ इत्याहुः ॥ ८३ ॥

शृणोति येन यः श्रोता तयोरित्यादि योज्यताम् ।
चैतन्यमस्ति करणे कर्तरीत्यत्र चिन्त्यते ॥ ८४ ॥

उक्तार्थमेव येनवाशृणोतीत्यादिपर्यायेषु अतिदिशति—शृणोतीतिपूर्वार्द्धेन। उत्तरार्द्धेन सर्वपर्यायार्थं निष्कृष्यदर्शयति—चैतन्यमिति। कर्तरि साभासाहंकारादिरूपे। करणेचक्षुरादौवा चाक्षुषवृत्त्यादौवा चैतन्यमस्तीत्यत्र येन वा पश्यतीत्यादिपर्यायेषु चिन्त्यते इत्यर्थः॥ ८४॥

बहूनि करणान्येषु बोधा दृष्ट्यादिनामकाः।
बहवः कर्तृबाहुल्य मपि द्रष्ट्रादिभेदतः॥ ८५॥

चक्षुरादीनि बहूनि करणानि एषु चक्षुरादिषु निमित्तेसति तन्निमित्तका इत्यर्थः। दृष्ट्यादिनामकबोधा अपिबहवः। दृष्ट्यादीत्यादिना श्रुतिघ्रातिप्रभृतयो ग्राह्याः। द्रष्टृश्रोत्रादिभेदतः कर्तारोऽपि-बहवइत्यर्थकेनपद्येनकरणेकर्तरीत्यत्रोक्तकर्तृकरणपदार्थानां बाहुल्यमाह—बहूनीति॥ ८५॥

करणानां च कर्तॄणां भेदः स्याच्चक्षुरादिके।
बाह्ये यथा तथैवान्तः शरीरेऽप्यवगम्यताम्॥ ८६॥

ननु चक्षुरादिगोलकेषु स्थितानां करणानां दृष्ट्यादिधर्मविशेषजनकत्वाद्भेदो भवतु, शरीरान्तःस्थितान्तः करणपदार्थभेदे किम्मानमित्याशङ्क्याऽऽभासलक्षणकर्तृस्वरूपप्रयोजकत्वं संज्ञानसंकल्पादिविशेषधर्मजनकत्वंचतद्भेदकंश्रुवन्यदेतद्धृदयम्मनश्चैतदित्यादेःकामोवशइत्यन्तायाः श्रुतेस्तात्पर्यमाह—करणानामित्यादिना श्लोकद्वयेन॥ ८६॥

कर्त्रुपाधिरहंकारो वाच्यो हृदयशब्दतः।
करणं स्यान्मनस्तस्य संज्ञानाद्यास्तु वृत्तयः॥ ८७॥

यदेतद्धृदयमितिश्रुतिस्थहृदयशब्दार्थमाह—कर्त्रुपाधिरिति—कर्तुराभासस्य स्वरूपप्रयोजकोऽहङ्कारो हृदयशब्दशक्यो—नतु साभासान्तः करणादिस्वरूप इति पूर्वार्द्धार्थः। तस्योक्तकर्तुः मनः करणं संज्ञानाद्यास्तु तस्यान्तःस्थस्य करणस्य वृत्तयो व्यापारा इत्युत्तरार्द्धार्थः। वस्तुतस्तुकरणानांच कर्तॄणामित्यादेःपद्यद्वयस्यायंभावः, यदेतद्धृदयं मनश्चैतदितिश्रुतौयेनवापश्यतीत्यादिश्रुतिप्रतिपादिते कर्तृकरणे हृदयमनःशब्दाभ्यामुपसंहृते किं कर्तृरूपं साभासहृदयमात्मा उत करणरूपम्मन आत्मेति। हृदयमनसोः कर्तृत्वकरणत्वे च तयोर्भेदंविनाऽनुपपन्ने अतो बाह्यकर्तृकरणदृष्टान्तेन तयो र्भेदमुपदर्शयति—करणानाञ्चकर्तॄणामिति। यथा च-

क्षुरादिके बाह्ये करणानां कर्तृणाञ्च परस्परंभेदःसिद्धस्तथान्तः शरीरेऽपि अवगम्यतामितियोजना । भेदप्रकारमाह—कर्तुपाधिरिति । कर्तुरुपाधिभूतोऽहंकारो हृदयशब्दार्थःकरणंचकर्तुर्मनः, एवंचोपाधिनासहकरणस्यभेदे सिद्धे कर्त्रापि सममेदोऽयत्नलभ्य एवेति । यद्यपि भाष्ये हृदयमनसोरेकत्वपरतयैतच्छ्रुति व्याख्यानमुपलभ्यते तथापि शिष्यबुद्धिवैशद्यार्थमन्यथा व्याख्यानमितिबोध्यम् ॥ ८७ ॥

तत्र सर्वत्र चैतन्यं लक्ष्यते हि पृथक् पृथक् ।
एवं सति बहुष्वेषु कः स्यादात्मेति संशयः ॥ ८८ ॥

तत्रेति । तेषु सर्वेषु कर्तृकरणेषु पृथक् पृथक् चैतन्यं लक्ष्यते, एवं सति एषुबहुषुकआत्मा स्यादित्युक्तः संशयउपपन्न इत्यर्थः ॥ ८८ ॥

प्रज्ञानमेकं सर्वेषु यत्स आत्मेति निर्णयः ।
प्रकृष्टं निरुपाधित्वा च्चैतन्यं यत्तदीक्ष्यताम् ॥ ८९ ॥

इदानीं सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि इति निर्णयजनकवाक्यं व्याचष्टे—प्रज्ञानमित्यादिनापद्याष्टकेन—प्रज्ञानंस्फुरणरूपंयदेकंसर्वेषुपदार्थेषु स्थितं स आत्मेति निर्णय इत्यन्वयः । उत्तरार्द्धेनावयवार्थकथनपूर्वकं प्रज्ञानपदार्थमाह—प्रकृष्टमिति ॥ ८९ ॥

अहङ्कारोमनोवाह्यं करणञ्चाप्युपाधयः ।
तेषुसर्वेषुचिच्छाया संक्रान्ता चेतनाऽन्यतः ॥ ९० ॥

निरुपाधिकचैतन्यमात्माऽहङ्कारादयस्तु आत्मोपाधयःसंक्रान्तचेतना आत्मानो नभवन्तीतिसोपपत्तिकमाह—अहङ्कारइत्यादिनाश्लोकत्रयेण । अहंकारादय आत्मोपाधयोऽतस्तेषु चित्प्रतिबिम्बं संक्रामतितेनैषुअन्यतश्चितश्चेतना चैतन्यंभवतीत्यर्थः । यद्वा—चेतनानीतिच्छेदः । अस्मिश्छेदेऽतश्चित्प्रतिबिम्बग्राहित्वाच्चेतनानिभवन्तीति योजना ॥ ९० ॥

नमुख्यं तेषु चैतन्यमात्मत्वस्याप्यमुख्यता ।
सुषुप्तौ तानि लुप्यन्ते नत्वात्मा तत्र लुप्यते ॥ ९१ ॥
प्रज्ञानं निरुपाधित्वान्नित्यं तल्लोपभासकम् ।
प्रज्ञानस्यात्मता तस्मान्मुख्या नान्यस्य कस्यचित् ॥ ९२ ॥

नमुख्यमिति । तेषु चैतन्यस्य मुख्यत्वाभावादात्मत्वमप्यमुख्यमिति पूर्वार्द्धार्थः । ननु तेषु चैतन्यं सोपाधिकमस्तु—आत्मत्वंमुख्यंकुतोनेत्याशङ्क्य सुषुप्तौ तेषामभावेन तत्रमुख्यात्मत्वं निषेधन्नात्मनस्तु तत्रापि सद्भावात्तत्र तेषामभावावभासकत्वेनच निरुपाधिकनित्यचैतन्यरूपत्वात्स एवमुख्यआत्मानान्यइत्याह—सुषुप्तावित्यादिसार्धश्लोकेन ॥ ९१ ॥ ९२ ॥

द्रष्ट्राद्या अपि दृष्ट्याद्याःशब्दामुख्यात्मवस्तुनः ।
नामान्युपाधिमालम्ब्य तस्मादात्मोपलक्षकाः ॥ ९३ ॥

द्रष्ट्राद्या इति । द्रष्टृश्रोतृप्रभृतयोदृष्टिश्रुत्यादयश्च शब्दा मुख्यस्यात्मनो नामानि, उपाधिमन्तः करणतद्वृत्तिसम्बन्धविशेषरूपं प्राप्य यतो वाचकाः तस्माल्लक्षणयोक्तात्मबोधका इत्यर्थः ॥ ९३ ॥

यथैकस्यैव सम्बन्धविशेषोपाधिनाऽखिलाः ।
पुत्रभ्रात्रादयः शब्दा नामत्वेनोपलक्षकाः ॥ ९४ ॥
उपलक्ष्यन्तु हस्तादियुक्तमेकं वपुस्तथा ।
चेतनैः कर्तृकरणैः प्रज्ञानमुपलक्ष्यते ॥ ९५ ॥

ननुसम्बन्धविशेषेणोपाधिनोक्ताःशब्दाःलक्षणयात्मनोबोधका इत्युक्तमयुक्तं लोकेतथाऽदृष्टचरत्वादित्याशङ्क्यतत्रसम्बन्धविशेषेणशब्दानांतथात्वमाह—यथेत्यादिनासार्धश्लोकेन । दृष्टान्तसिद्धमर्थंदार्ष्टान्तिकेयोजयति—तथेत्यादिना ॥ ९४ ॥ ९५ ॥

प्रज्ञानं कर्तृदेहादि साक्षिभूतं यदस्ति तत् ।
जीवस्य वास्तवं रूपमित्येवं निर्णयो भवेत् ॥ ९६ ॥

कर्तृदेहादिभासकतयातत्साक्षिभूतंप्रज्ञानंजीवस्यवास्तवंरूपमित्येवं निर्णयो भवेदित्यन्वयः । कर्तृशब्देन सामासावुद्धिः ॥ ९६ ॥

प्रज्ञानं स्वशरीरेऽस्ति तथा देहान्तरेष्वपि ।
ब्रह्मादिस्थावरान्तेषु तस्य स्यात्परमात्मता ॥ ९७ ॥

(श्रु०) एषब्रह्मैषइन्द्रइत्यादेःप्रज्ञाप्रतिष्ठेत्यन्तायाः श्रुतेस्तात्पर्यमाह—प्रज्ञा-

नमित्यादिनाश्लोकनवकेन । जीववास्तवरूपस्य प्रज्ञानस्यब्रह्मात्मतांसाधयितुंब्रह्मादि स्थावरान्तेषु शरीरेषु प्रज्ञानसद्भावं साधयति–प्रज्ञानमिति । यथा स्वशरीरेप्रज्ञा नमस्ति तथा ब्रह्मादिस्थावरान्तेष्वन्यदेहेष्वपीत्यन्वयः । अत्रायंप्रयोगोब्रह्मादिश रीरं प्रज्ञानवच्छरीरत्वादस्मच्छरीरवत् इति । एवं च तस्य जीववास्तवरूपप्रज्ञानस्य परमात्मता संभवतीत्यर्थः । अयंभावः, ब्रह्मादिशरीरस्थप्रज्ञानमस्मच्छरीरस्थप्रज्ञाना दभिन्नं प्रज्ञानत्वादस्मद्देहस्थप्रज्ञानवदित्यनुमानैर्निखिलदेहेषुतदैक्यसिद्ध्यातस्यपरमात्म ता सिद्धेति ॥ ९७ ॥

प्रज्ञानस्यास्य जीवत्वं प्राणधारणतो यथा ।
जगत्सृष्ट्यादि हेतुत्वाद् ब्रह्मत्वंचतथेष्यताम् ॥ ९८ ॥

ननु जीवब्रह्मणोर्यद्यैक्यंतदाजीवोनब्रह्मेतिभेदव्यवहारःकथमित्याशङ्क्यतस्य सोपाधित्वेनवास्तवाभेदाविरोधित्वादितिपरिहरन्जीवत्वब्रह्मत्वप्रयोजकोपाधिद्वयमाह– प्रज्ञानस्येति ॥ ९८ ॥

स्थावरं जङ्गमं सर्वं जगदित्यभिधीयते ।
तस्य प्रज्ञैवनेत्रं स्यात्सृष्ट्यादिनयनादसौ ॥ ९९ ॥

अधुना प्रज्ञानस्य ब्रह्मत्वप्रयोजके सृष्ट्यादिहेतुत्वेऽपि "एषब्रह्मैषइन्द्र इत्यादेःप्रज्ञाप्रतिष्ठे"त्यन्तसन्दर्भस्यतात्पर्यमित्यभिप्रेत्यवेदलोकयोःप्रयुक्तस्यजगत्पदस्या र्थंकथयन्प्रज्ञानेत्रमित्यस्यार्थमाह । स्थावरमित्यादिना । तस्येत्यादि । तस्य निरुक्तस्य जगतः प्रज्ञैव निरुक्तप्रज्ञानमेव नतुसांख्यप्रधानादिकं नेत्रंनिर्माण कर्तृ स्यात् संभवतीत्यर्थः । नेत्रपदप्रवृत्तिनिमित्तं निर्मातृत्वमित्याह । सृष्ट्यादिनय नादिति । असाविति । अविवेकिपरोक्षाप्रज्ञाप्रज्ञानं नेत्रमित्यर्थः ॥ ९९ ॥

प्रज्ञानं शुद्धचिद्रूपमासीद् यत्सृष्टितः पुरा ।
तस्मिन्प्रतिष्ठितं सर्वं माययोत्पादितत्वतः ॥ १०० ॥

प्रज्ञानेत्रत्वोपपादकस्यप्रज्ञानेप्रतिष्ठितमित्यस्यवाक्यस्यार्थमाह—प्रज्ञानमित्या दिना । सदेवसोम्येदमितिश्रुतिबोधितसृष्टिप्राक्सत्ताकं यत्प्रज्ञानं तस्मिन् सर्वं प्रतिष्ठितमितियोजना । अस्यां प्रतिज्ञायां हेतुमाह । माययोत्पादितत्वत इति । निरुक्तप्रज्ञानाश्रिताविद्याकार्यत्वादित्यर्थः । यद्यदाश्रिताविद्याकार्यं तत्तस्मिन्प्रतिष्ठितं यथा रज्ज्वच्छिन्नचैतन्यनिष्ठाऽविद्याकार्यसर्पादितदवच्छिन्नचैतन्येप्रतिष्ठितं तथा चेद

तस्मात्तथेति उदाहरणोपनयनिगमनानि स्फुटत्वान्नोक्तानि इति बोध्यम् ॥१००॥

उत्पत्तिस्थितिकालेऽसौ लोकः प्रज्ञाननेत्रकः ।
नेत्रत्वं व्यवहारस्य सुखादेर्नयनाद्भवेत् ॥ १०१ ॥

पूर्वं सृष्ट्यादिनयनात्प्रज्ञाया नेत्रत्वमुक्तम् । इदानीं प्रज्ञानेत्रोलोक इति वाक्यं व्याचक्षाणः प्रकारान्तरेण तस्यास्तदाह—उत्पत्तीति । उत्पत्तिकाले लोकस्य प्रज्ञानेत्रत्वमुक्तम्तदेवस्थितिकालेदृष्टान्तार्थमत्रोपात्तम् । यथोत्पत्तिकाले लोकः प्रज्ञाननेत्रकस्तथास्थितिकालेऽपीत्यर्थः । स्थितिकालेतदुपपादयति—नेत्रत्वं व्यवहारस्येति—प्रज्ञानस्य व्यवहारनेत्रत्वात् प्रज्ञाननेत्रकोलोकःस्थितिकाल इत्यर्थः । व्यवहारनेत्रत्वमेवोपपादयति—सुखादेर्नयनाद्भवेदिति । सुखादिरूपव्यवहारहेतुत्वात्तदाकारवृत्तिरूपव्यवहारहेतुत्वाद्वा इत्यर्थः ॥ १०१ ॥

लये प्रज्ञा प्रतिष्ठा स्यात्तत्र सर्वस्य संहृतेः ।
सृष्टिस्थितिलया इत्थं श्रुताः प्रज्ञानहेतुकाः ॥ १०२ ॥

प्रज्ञाप्रतिष्ठेत्यस्यार्थमाह—लयइति । लयेसर्वस्यजगतःप्रज्ञाप्रतिष्ठास्यात्तदधिष्ठानंस्यात्तत्र हेतुमाह—तत्रेत्यादि । तत्र प्रज्ञायाम् । तल्लयाधिष्ठानस्य तदधिष्ठानत्वनियमादिति भावः । ननु अचेतनप्रधानकर्तृकाएवसृष्ट्यादयःसन्तु किन्तत्कर्तृचेतनकल्पनयेत्यादिवदन्तंसांख्यप्रत्याह—सृष्टीत्यादि । इत्थं पूर्वोक्तप्रकारेणश्रुताः प्रज्ञानेत्रमित्यादिश्रुतिबोधिताः ॥ १०२ ॥

स्वप्नसृष्टिस्थितिलया जीवचैतन्यसाक्षिकाः ।
निर्जीवस्तम्भकुड्यादौ स्वप्नसृष्ट्यादयो नहि ॥१०३॥

प्रज्ञानहेतुकाःसृष्टिस्थितिलयाइत्युक्तंतत्रसाक्ष्याकांक्षायांस्वप्नसृष्ट्यादौ जीवचैतन्यंसाक्षीत्याह—स्वप्नेति । स्वप्नसृष्टिस्थितिलयायतोजीवचैतन्यसाक्षिका अतोजीवप्रज्ञानहेतुका इति भावः । अत्रायंप्रयोगः । जीवः स्वप्नसृष्ट्यादिकर्ता तत्साक्षित्वात् । यन्नैवं तन्नैवं यथास्तम्भादि नचायंतथातस्मान्नतथेति । नचासर्वसिद्धिः । स्वप्ने रथमहमद्राक्षमिति स्वप्नाद्युत्थितस्य स्मृतेः ॥ १०३ ॥

जगत्सृष्टिस्थितिलया ब्रह्मचैतन्यसाक्षिकाः ।
ब्रह्मचैतन्यरहिते बन्ध्यापुत्रेनसन्तिते ॥ १०४ ॥

एवं जगत्सृष्ट्यादीनांब्रह्मसाक्षिकत्वमाह—जगत्सृष्टीत्यादि । यतोज त्सृष्टिस्थितिलया ब्रह्मचैतन्यसाक्षिका अतोब्रह्मप्रज्ञानहेतुकाइतिभावः । अत्रा प्रयोगः ब्रह्म सर्वसृष्ट्यादिकर्तृ तत्साक्षित्वाद् व्यतिरेकेबन्ध्यापुत्रवत् इति । नच सिद्धिः । ब्रह्म साक्षि चेतनत्वाद् । जीवसाक्षिवादित्यनुमानेन तत्साधनात् ॥१०४

**जगत्सृष्ट्याद्यधिष्ठानं शुद्धचैतन्यमद्वयम् ।**
**परमात्मस्वरूपंस्यादितितस्यात्रनिर्णयः ॥ १०५ ॥**

साधनचतुष्टयसम्पन्नस्य "येनवापश्यती"त्यादिसंदिहानस्य प्रकृतवाक्यज तंविचारयतोयादृग्निर्णयोभवतितमाह जगदित्यादिना । तस्योक्ताधिकारिणः। १०

**यत्प्रज्ञानंस्वात्मरूपं तद्ब्रह्मेतिविबुध्यताम् ।**
**प्रज्ञानंब्रह्मविज्ञाय तिष्ठेत्प्रज्ञात्मनासदा ॥ १०६ ॥**

एतावता प्रबन्धेन ब्रह्मप्रज्ञानपदार्थौसंशोध्येदानींप्रज्ञानंब्रह्मेतिमहावाक्यस र्थमाह—यत्प्रज्ञानमिति । महावाक्यार्थबोधफलमाह—तिष्ठेत्प्रज्ञात्मनासदेति । १०

**जीवन्नेवस्थितप्रज्ञो मुक्तः स्याद् वामदेववत् ।**
**म्रियतांयत्र तत्रास्यवपुः सोऽयं न जायते ॥ १०७ ॥**

ज्ञानफलंप्रपञ्चयति—जीवन्निति । स्थितप्रज्ञलक्षणञ्चगीतायांप्रपञ्चि म् । जीवन्नेवेतिमुक्तइत्यनेनान्वेति । ननु स्थितप्रज्ञस्य मरणदर्शनाद् "अमृ समभवदितिश्रुतातस्यामृतिःकथमित्याशङ्क्याह—म्रियतामित्यादि । अस्यवपुर् तत्रकाश्यादौमगधादौवाम्रियतांसोऽयंपूर्वोक्तलक्षणोजीवन्मुक्तोनजायते नोत्पद्यते इ योजना ॥ १०७ ॥

**ऐतरेय ब्रह्मविद्यां व्याख्यातां संग्रहादिमाम् ।**
**सुस्थिरामनुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १०८ ॥**

**इति श्रीविद्यारण्यमुनिकृतेऽनुभूतिप्रकाशे ऐतरेयोप-**
**निषद्विवरणंनाम प्रथमोऽध्यायः ॥ १ ॥**

विद्यातीर्थमहेश्वरस्य गुरोरनुग्रहमर्थयमानः ऐतरेयोपनिषद्व्याख्यानमु संहरति—ऐतरेयेति । संग्रहात् संक्षेपात् । सुस्थिरामनुगृह्णातु । सुस्थिरां करो

व्याख्यातब्रह्मविद्या तत्प्रसादात् मयि एतद्व्याख्यानाध्येतृषुचदृढाभवतुइति भावः ॥ १०८ ॥

इति मितप्रकाशविवृतौ ऐतरेयोपनिषद्विवरणं
नाम प्रथमोऽध्यायः ॥ १०८ ॥

ब्रह्मवल्ल्यां ब्रह्मविद्यां तित्तिरिः प्राहयामिमाम् ।
वक्ष्ये सुखावबोधाय क्रीडन्त्वत्र मुमुक्षवः ॥ १ ॥

अधुना तैत्तिरीयोपनिषद्गतां ब्रह्मवल्लीं व्याख्यातुमारभते—ब्रह्मेति । व्याख्यानस्यफलमाह—सुखेत्यादि । अत्र व्याख्याने व्याख्यातब्रह्मविद्यायां वा ॥ १ ॥

दर्शादिपितृमेधान्तैः कर्मभि र्बहुजन्मसु ।
अनुष्ठितैर्विविदिषा जायतेऽन्तिमजन्मनि ॥ २ ॥

दर्शपूर्णमासाद्यन्त्येष्टिपर्यन्तैः श्रुतफलकामनारहितेन बहुषु जन्मसु कृतैः कर्मभिरन्तेजन्मन्यात्मजिज्ञासा भवति । "तमेतमात्मानंब्राह्मणाविविदिषन्तियज्ञेन दानेनतपसाऽनाशकेने"ति श्रुतेः । अतः कर्मकाण्डानन्तरमुपनिषदारम्भः इत्याह—दर्शादीति ॥ ३ ॥

ततोयोगंसमभ्यस्य संहितोपासनादिभिः ।
ऐकाग्र्ये साधितेऽथास्य विद्यां सूत्रयतिश्रुतिः ॥ ३ ॥

तृतीयषष्ठसप्तमाऽष्टमानुवाकोक्तानामुपासनानां चित्तैकाग्र्यरूपफलमाह—तत इति । विविदिषानन्तरामित्यर्थः । संहितोपासनदिभिर्योगंसमभ्यस्यैकाग्र्ये साधिते इति योजना । संहितोपासनादिभिरिति अभेदे तृतीया । तदभिन्नं योगमित्यर्थः । अस्य अवहितचेतसःसम्बन्धिनींविद्यांब्रह्मज्ञानं सूत्रयति—सूत्ररूपेणवाक्येन बोधयति । श्रुतिरिति । ब्रह्मविदाप्नोतिपरमितिश्रुतिरित्यर्थः ॥ ३ ॥

सूत्रात्पूर्वंशान्तिमन्त्रो जपायात्रोपवर्णितः ।
जपेन विघ्ना द्वेषाद्याः शाम्यन्ति मनसिस्थिताः ॥ ४ ॥

सूत्रात्पूर्वं शान्तिमन्त्रपाठस्य प्रयोजनमाह—सूत्रादिति । अत्र ब्रह्मवल्ल्याम् । विघ्ना इति । मनसिस्थिताद्वेषाद्याविघ्नाःशाम्यन्तीतियोजना ॥ ४ ॥

ब्रह्मवित्परमेतीति सूत्रं सर्वार्थसूचनात् ।
ज्ञेयंज्ञानंफलंचेति सर्वेऽर्थाः सूचिता इह ॥ ५ ॥

ब्रह्मविदाप्नोतिपरमितिश्रुतौसूत्रशब्दप्रयोगमुपपादयति–ब्रह्मविदिति सर्वशब्दार्थमाह—ज्ञेयमित्यादिना ॥ ५ ॥

ज्ञेयंब्रह्मतदीया धी र्ज्ञानं स्याद्ब्रह्मताफलम् ।
सूत्रव्याख्यानरूपायामृच्येतद्विशदीकृतम् ॥ ६ ॥

उक्तानांज्ञेयज्ञानफलानांयथोद्देशंस्वरूपमाह—ज्ञेयमिति । ब्रह्मज्ञेयं तत्सा क्षात्कारो मानसवृत्तिविशेषो ज्ञानं—साक्षात्कर्तुर्जीवस्य ब्रह्मात्मताप्राप्तिः फलमि त्यर्थः । ननूक्तसूत्रस्यायमर्थइतिकुतोऽवगम्यतेइत्याशङ्क्याह—सूत्रेति । ऋची ति । "तदेषाभ्युक्तेत्युक्त्वा पठितायां सत्यंज्ञानमनन्तं ब्रह्म योवेदनिहितं गुहायां प व्योमन् सोऽश्नुतेसर्वान् कामान् ब्रह्मणा विपश्चिता"—इत्यस्यामित्यर्थः ॥ ६ ॥

ज्ञातव्यंब्रह्मयत्तत्किमिति चेत्तस्य लक्षणम् ।
सत्यं ज्ञानमनन्तं यत्तद्ब्रह्मेत्यवगम्यताम् ॥ ७ ॥

उक्तर्चिसत्यंज्ञानमनन्तंब्रह्मेति ब्रह्मणोलक्षणपरमित्याह—ज्ञातव्यमिति किमिति । किंलक्षणकमित्यर्थः ॥ ७ ॥

आकाशादि जगत्सर्वमनृतं मायिकत्वतः ।
नानृतंब्रह्म तेनैतत्सत्यमित्यभिधीयते ॥ ८ ॥

ननु त्रिकालाबाध्यत्वादिरूपसत्यत्वं ब्रह्मणोलक्षणमुक्तमयुक्तमाकाशादा तिव्याप्तेर्ब्रह्मण्यसंभावनातश्चेत्याशङ्क्यसमाधत्ते—आकाशादीति । आकाशादिकं मि थ्या–मायाकल्पितत्वात्–ऐन्द्रजालिकवत् । व्यतिरेके ब्रह्मवद्वा । ब्रह्म–नासत्यं– त्कल्पितत्वाभावात् । व्यतिरेके ऐन्द्रजालिकवदित्यर्थः ॥ ८ ॥

जगज्जडं स्वतः स्फूर्तिराहित्याद्ब्रह्मतुस्वयम् ।
स्फुरतीत्यजडं तेन ज्ञानमित्यभिधीयते ॥ ९ ॥

इदानीं ब्रह्मणोज्ञानरूपलक्षणेऽव्याप्त्यादिकमाशङ्क्यनिषेधति—जगदिति जगज्जडं स्वप्रकाशत्वाभावाद्व्यतिरेके ब्रह्मवत् । ब्रह्म नजडं स्वप्रकाशत्वाद्व्यतिरे

घटवत् । ब्रह्मणः स्वप्रकाशत्वमुपपादितंसूरिभिरित्युपरम्यते ॥ ९ ॥

जडं घटाद्यन्तवत्स्याद्देशकालादिवस्तुभिः ।
नदेशादिकृतोऽन्तोऽस्य ब्रह्मानन्तं ततः स्मृतम् ॥१०॥

इदानीं देशकालघटादिवस्तुपरिच्छेदराहित्यलक्षणमृगुक्तंब्रह्मणोलक्षणमाह— जडमिति । जडं घटादि देशकालादिवस्तुभिरन्तवत् परिच्छिन्नं स्यात्, अस्यब्रह्मणो-नदेशादिकृतः परिच्छेदस्ततोब्रह्मानन्तंस्मृतमिति योजना ॥ १० ॥

देशकालाद्यन्यवस्तु त्रयं मायाविजृम्भितम् ।
ब्रह्मसत्यंमायिकैस्तैः परिच्छिन्नं कथं भवेत् ॥ ११ ॥

ननु देशादिभिःकुतोनब्रह्मपरिच्छिद्यतेइत्याशङ्क्यतेषांमायिकत्वेन सत्यस्य ब्रह्मणः परिच्छेदकत्वासम्भवादित्याह—देशेति । देशकालादिरूपं यद्न्य वस्तुत्रयं ब्रह्मभिन्नवस्तुत्रयम् । देशकालौ तदतिरिक्तघटादिवस्तुजातश्चैतन्त्रयमित्यर्थः ॥ ११ ॥

जडानृतपरिच्छिन्नव्यावृत्त्यैव पदत्रयम् ।
लक्षकं स्यादखण्डस्य यत्तद्ब्रह्मेतिबुध्यताम् ॥ १२ ॥

इदानीं सत्यादिपदत्रयं जडानृतपरिच्छिन्नेभ्यो लक्षणावृत्त्या ब्रह्मणो व्यावर्तकमतोलक्षणमित्याह—जडेति । सत्यादिपदत्रयस्य जडानृतपरिच्छिन्नभिन्ने लक्षणयाऽखण्डब्रह्मबोधकत्वेन जडादिव्यावृत्तिरिति भावः । एवं लक्षणलक्षितं यत्तद्ब्रह्मेतिविबुध्यतामित्यन्वयः ॥ १२ ॥

तादृग् ब्रह्म कथं विद्यादिति चेदभिधीयते ।
गुहायां परमे व्योम्नि स्थितं ब्रह्म तुवेदयः ॥ १३ ॥

अधुनाऽऽकाङ्क्षाप्रदर्शनपूर्वकं "योवेदनिहितंगुहायांपरमेव्योमनि"त्यृगंशं व्याख्यातुमारभते—तादृगिति । अभिधीयते श्रुत्येति शेषः । तमंशमेवार्थतः पठति—गुहायामित्यादिनोत्तरार्द्धेन ॥ १३ ॥

देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरंमनः ।
ततः कर्ता ततो भोक्ता गुहा सेयं परम्परा ॥ १४ ॥

इदानीमृक्स्थगुहापदार्थत्वेन पञ्चकोशानाह—देहादिति । अत्र दे
हप्राणमनःकर्तृभोक्तृशब्दैर्यथाक्रममन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयकोशा
ह्याः ॥ १४ ॥

पञ्च कोश गुहाया यदज्ञानं कारणं स्थितम् ।
तद्व्योम परमं तस्मिन्निगूढं ब्रह्म तिष्ठति ॥ १५ ॥

परमे व्योमन्निहितमित्यंशं व्याचक्षाणोगुहायांस्थितमज्ञानमेवव्योमेत्याह
पञ्चेति । कारणं जगत्कारणम्—अनेनतत्र परमत्वं दर्शितम् । निगूढमावृतम् ॥१५

जीवचैतन्यमेवात्र निगूढमिति चेत्तदा ।
तस्यैव ब्रह्मतां विद्याज्जीवत्वभ्रान्तिहानये ॥ १६ ॥

ननुनतत्रब्रह्मचैतन्यंनिगूढमपितुजीवचैतन्यमित्याशङ्क्य तदाजीवत्वभ्र
निवृत्तयेतस्यैवनिरुक्ताज्ञाननिगूढजीवचैतन्यस्यैवब्रह्मत्वंजानीयादिति परिहरति–
वेति ॥ १६ ॥

स्वतो ब्रह्मैव चैतन्यं जीवत्वं प्राणधारणात् ।
कोशतादात्म्यविभ्रान्त्या भात्यस्य प्राणधारणम् ॥१

ननुतयोर्भेदादुक्तज्ञानंसंपदादिरूपोपासनमेवस्यात् नतुयथार्थमित्याश
तयोरौपाधिकभेदसत्वेऽपि स्वरूपेणाभेद इतिपरिहारमाह—स्वतइति । कोश
प्राणधारकत्वं तत्तादात्म्यभ्रमेण तत्र प्रतिभातीत्यर्थः ॥ १७ ॥

वक्ष्यमाणविवेकेन तत्तादात्म्यमपोह्यते ।
ब्रह्मसाक्षात्कृतिस्त्वीदृग्बोधेनैव नचान्यथा ॥ १८ ॥

पञ्चकोशजीवयोर्भेदसाक्षात्कारेणयदातत्तादात्म्यभ्रमोनिवर्ततेतदाऽस्य ब्रह्म
साक्षात्कारोभवत्यन्यथानभवतीत्याह—वक्ष्यमाणेति । ईदृग्बोधेनैव पञ्चकोशजीवयो
र्भेदसाक्षात्कारेणैव ॥ १८ ॥

बाह्यं जगत्पञ्च कोशाँश्चापो ह्यान्तर्मुखास्यधीः ।
ब्रह्म साक्षात्करोत्येव सर्वोपाधिविवर्जितम् ॥ १९ ॥

स्रक्चन्दनादिकपञ्चकोशातिरिक्तं बाह्यं जगत्पञ्चकोशाँश्चत्यक्त्वा यदा

धीरन्तर्मुखा भवति तदैव सर्वोपाधिविवर्जितंब्रह्म साक्षात्करोतीत्याह—बाह्यंजगदिति । यद्वा यथास्थानमेवकारोऽस्तु सच धियोऽन्तर्मुखत्वे ब्रह्मसाक्षात्कारावश्यंभावद्योतकः ॥ १९ ॥

सोपाध्येव बहि र्दृष्ट्या भाति ब्रह्म न तावता ।
अपैति जीवता तस्मादन्त र्दृष्ट्यैव बुध्यताम् ॥ २० ॥

वहिर्मुखदृष्टयाऽनात्मवर्गविषयया धीवृत्त्या सविशेषमेव ब्रह्मभाति तेन ब्रह्मणोजीवतानापैति संसारोननिवर्तते इतियावत् । अतोऽन्तर्दृष्टयैव निर्विशेषब्रह्मभानात् जीवत्वनिवर्तकःसाक्षात्कारस्तयैवसम्पादनीय इत्याह—सोपाधीति । तावता—सविशेषब्रह्मभानेन ॥ २० ॥

बहिर्दृष्टिर्जगद्भानं तस्य सत्यत्वधीरपि ।
विवेकात्सत्यताऽपैति जगद्भानं तु योगतः ॥ २१ ॥

ननु जगद्भानात्मिकाया जगत्सत्यत्वभानात्मिकायाश्चबहिर्दृष्टेरपायेऽन्तर्दृष्ट्या ब्रह्मसाक्षात्कारोभवेत् तदपाये हेतुमेवतुनपश्यामइत्याशङ्कय तयोरपायेहेतूक्रमेणविवेकयोगावित्याह —बहिर्दृष्टिरिति । जगद्भानंतुयोगतोऽपैतीतियोजना । अत्र विवेकोविचारः । योगः समाधिः ॥ २१ ॥

बहिर्दृष्टावपेतायामन्तर्दृष्ट्या यदीक्ष्यते ।
निगूढं जीवचैतन्यं तद्ब्रह्मेति प्रपश्यति ॥ २२ ॥

उक्तविधदृष्ट्यपायेऽन्तर्दृष्ट्यायन्निगूढंजीवचैतन्यमीक्ष्यतेतद्ब्रह्मेतिसाक्षात्कारोभवतीत्याह—वहिरिति ॥ २२ ॥

दृष्टे तस्मिन्परप्राप्त्या विदुषोऽतिशयोऽत्रकः ।
इति चेद्युगपत्सर्वकामाप्तिरधिकाभवेत् ॥ २३ ॥

इदानींब्रह्मसाक्षात्कारेतत्प्राप्तिःप्रयोजनंवक्तव्यंतच्चायुक्तंप्रत्यगभिन्नस्य ब्रह्मणोऽविदुषोऽपि नित्यप्राप्तत्वाद्विद्वदविदुषोर्विशेषोनस्यादित्याशङ्कय युगपत्सर्वकामावाप्तिस्तस्यतस्माद्विशेषइतिपरिहारव्याजेनसूत्रव्याख्यानभूतायाऋचः सोऽश्नुतेसर्वान्कामानित्याद्यंशंव्याचष्टे—दृष्ट इति ॥ २३ ॥

काम्यन्ते विषयानन्दाः निखिलैः प्राणिभिः सदा।
ब्रह्मानन्दस्य ते सर्वे लेशा इत्यपरा श्रुतिः ॥ २४॥

ननु विषयानन्दस्य ब्रह्मानन्दरूपत्वात्तस्य चैकत्वेन कथं सर्वान् कामाप्तिरित्युक्तमित्याशङ्क्य "तस्यैवानन्दस्य सर्वाणिभूतानि मात्रामुपजीवन्ती" तिश्रुतेः। काम्यमानानन्दे औपाधिकसर्वत्वमितिपरिहरति—काम्यन्त इति । यद्वा, ननु सर्वकामाप्तिरित्युक्तं तन्नोपपद्यते ब्रह्मानन्दस्य विषयानन्देभ्योऽत्यन्तभिन्नत्वादित्याशङ्क्य विषयानन्दानां तल्लेशत्वोपपादनव्याजेनसमाधत्ते—काम्यन्त इति ॥ २४ ॥

आनन्दहेतवो बाह्या विषया इति विभ्रमात् ।
कामयन्ते बहिर्दृष्ट्या विषयान् प्राणिनोऽखिलाः ॥२५॥

ननु ब्रह्मानन्दस्यैवविषयानन्दत्वेब्रह्मणोनित्यसंनिहितत्वात् स्रगादिविषयेच्छानस्यादित्याशङ्क्यस्रगादिबाह्यविषयेषु सुखहेतुत्वभ्रमेणतद्विषयेच्छासम्भवतीति परिहरति—आनन्दहेतव इति । विषयेषु दुःखहेतुत्वमेवनानन्दहेतुत्वमित्युपपादितं "विषयेदुःखजातं यत्तद्वीक्ष्यापक्षपाततः, इत्यनेनपूर्वत्र ॥ २५ ॥

अभीष्टविषयेलब्धे धीः प्रत्यावृत्यहृद्गतम् ।
ब्रह्मानन्दंक्षणं भुक्त्वा वाह्यं कामयते पुनः ॥ २६॥

ननु विषयलाभे आनन्दाविर्भावात्पुनस्तद्धेतुत्वभ्रान्त्यास्रगादिकामनस्याद् इत्याशङ्क्यभोगप्रदकर्मोपरमेसतिपुनस्तद्भ्रान्त्यातदिच्छासम्भवतीति परिहरति—अभीष्टविषय इति । प्रत्यावृत्य विषयेभ्योनिवृत्य ॥ २६ ॥

क्षणिकत्वाल्लेशताऽस्य पूर्णस्याऽप्युपचर्यते ।
विषयानन्दताभ्रान्त्या ब्रह्मानन्दोहि वस्तुतः ॥ २७॥

इदानीं पूर्णस्यैवानन्दस्य विषयानन्दत्वभ्रमेण श्रुतिस्थमात्रापदार्थात्मकलेशतायाउपचारोनतुविषयानन्दोऽपिवस्तुतोब्रह्मानन्दाद्भिन्नोभवतीत्याह—क्षणिकत्वादिति । भ्रान्त्या विषयानन्दतातस्येतियोजना ॥ २७ ॥

अन्तर्दृष्ट्या विवेकी तु ब्रह्मानन्दं सदेक्षते ।
अन्तर्भवन्ति क्षणिकाः सर्वे तस्मिन्निरन्तरे ॥ २८ ॥

तत्वविद्ब्रह्मरूपेण सर्वान् कामान् सहाश्नुते ।
इत्येषोऽतिशयो ब्रह्मप्राप्तिरूपं फलं श्रुतम् ॥ २९ ॥

विदुषि अविदुषो विशेषं "सोऽश्नुते सर्वान् कामानिति" श्रुत्युक्तं ब्रह्मप्राप्तिरूपमुपसंहरति—अन्तर्दृष्ट्येत्यादिपद्यद्वयेन—विवेकी ब्रह्मानन्दं सदेक्षते—इत्युक्तं तदुपपत्तिं ब्रह्मानन्दस्य निरन्तरत्वकथनपूर्वकमाहोत्तरार्द्धेन, अन्तर्भवन्तीति—निरन्तरेसदातने सैन्धवघनवदानन्दैकरसे ॥ २८ ॥ २९ ॥

सूत्रव्याख्यानरूपायामृच्यनन्तमितीरितम् ।
तदानन्त्यप्रसिद्ध्यर्थं जगत्कारणतोच्यते ॥ ३० ॥

इदानीं सूत्रव्याख्यानर्चानन्तरगतस्य "तस्माद्वाएतस्मादात्मनआकाशः सम्भूतः, इत्यादिग्रन्थस्य तयोपपाद्योपपादकभावरूपसङ्गतिंदर्शयति—सूत्रेति । अयम्भावः, कल्पितानन्त्यवतोजगतःकारणमनन्तमेवभवितुमर्हतीति ॥ ३० ॥

यत्सत्यं ब्रह्मकोशाख्यगुहायां व्योमनामके ।
अज्ञाने कारणे गूढं तस्मादाकाश उद्गतः ॥ ३१ ॥

तस्माद्वाएतस्मादितिश्रुतिं व्याख्यास्यन् तस्मादित्यादिं सम्भूतइत्यन्तं तद्भागं व्याचष्टे—यदिति । तत्पदार्थमाह—यत्सत्यं ब्रह्मकोशाख्यगुहायां व्योमनामके । अज्ञाने कारणे गूढमिति । गुहायामित्यस्याऽनन्तरं स्थिते इत्यध्याहर्तव्यम् ॥ ३१ ॥

खं वाय्वग्निजलोर्व्योषध्यन्नदेहेषुकारणम् ।
पूर्वं पूर्वं भवेत्कार्यं परं परमितीक्ष्यताम् ॥ ३२ ॥

आकाशादिपुरुषपदार्थदेहान्तानांपूर्वंपूर्वंकारणं परंपरंकार्यमिति, अन्नात्पुरुष-इत्यन्तग्रन्थस्यार्थमाह—खमिति ॥ ३२ ॥

इन्द्रोमायाभिरभवद्बहुरूप इति श्रुतेः ।
आसन् मायिकरूपाणि खादीनि ब्रह्मगानि हि ॥ ३३ ॥

ननु सृष्टिश्रुतेः खादीनां ब्रह्मणिसत्वावगमेन निर्विशेष ब्रह्मासिद्धिरित्याशङ्क्य तेषांमायिकत्वेनतत्सिद्धिमभिप्रेत्यब्रह्मगतमायाप्रतिपादिकां "इन्द्रोमायाभिः पुरुरूपईयते" इति श्रुतिमर्थतः पठति—इन्द्र इति ॥ ३३ ॥

परास्यशक्ति र्विविधेत्येवं श्रुत्यन्तरेरणात् ।
विविधा ब्रह्मणः शक्तिः साचमायानृतत्वतः ॥ ३४ ॥

ननु श्रुत्यन्तरेब्रह्मणःशक्तिःश्रुतानमायेत्याशङ्क्य तत्रशक्तिपदार्थोमायैवा-नृतत्वादितिपरिहरति–परेति ॥ ३४ ॥

सत्यस्य ब्रह्मरूपत्वाच्छक्तेरनृततोचिता ।
निस्तत्वाभासतेयाऽसौ मायास्यादिन्द्रजालवत् ॥ ३५ ॥

शक्तावनृतत्वहेतुत्वंसाधयति–सत्यस्येति । ब्रह्मणः सत्यत्वेनतद्भिन्नाया-स्या असत्वेनानृतत्वमुचितम् । निस्तत्वत्वेसति विशिष्टभानविषयत्वलिङ्गेनमाया-तस्यां साधयति–निस्तत्वे ति । अयमत्रप्रयोगः, ब्रह्मशक्ति र्मायाभवितुमर्हति नि-स्तत्वत्वेसति प्रतीयमानत्वात्–इन्द्रजालवदिति–निस्तत्वत्वं चासत्वम् ॥ ३५ ॥

मायायाविविधत्वेन तस्याः कार्येषु खादिषु ।
नामरूपेष्वनेकत्वं भात्यन्योन्यविलक्षणम् ॥ ३६ ॥

मायाशक्तिषु श्रुतं विविधत्वं तत्कार्यखादिनामरूपेषु अन्योऽन्यवैजात्य-प्रयोजकमित्याह–मायाया इति । अनेकत्वं वैलक्षण्यं, तद्वैलक्षण्यमनुभवसिद्धमि-त्याह–भात्यन्योऽन्यविलक्षणमिति । नामरूपात्मकं जगदिति शेषः ३६ ॥

भातिसर्वेषु सत्यत्वमेकं यद्ब्रह्मगं हि तत् ।
सर्वाधिष्ठानधर्मत्वात् तत्सर्वत्रानुगच्छति ॥ ३७ ॥

ब्रह्मणःसर्वाधिष्ठानत्वेनाधिष्ठानधर्माणामारोप्येषुसंक्रमसम्भवात्, तद्धर्म-सत्यत्वस्याकाशादिष्वनुगतेस्तत्रतद्भानंनविरुद्धमित्याह––भातिसर्वेष्विति ॥ ३७ ॥

सर्पधारादण्डमालारज्ज्वां याः परिकल्पिताः ।
एतासु रज्जुगंदैर्घ्यं सर्वास्वनुगतं यथा ॥ ३८ ॥

कल्पितेष्वधिष्ठानधर्मानुगतौ दृष्टान्तमाह–सर्पेति ॥ ३८ ॥

व्योमाद्यादेहपर्यन्ताः सत्येब्रह्मणिकल्पिताः ।
सर्वेष्वनुगतं ब्रह्म सत्यत्वं तस्य सुस्थितम् ॥ ३९ ॥

व्योमादीनां ब्रह्मणिकल्पितत्वाद्ब्रह्मधर्मस्यैवतत्रानुगतेःश्रुत्युक्तं तस्य

स्यत्वरूपं लक्षणं सुस्थितमित्याह—व्योमेति । अत्रानुमानप्रयोगः, ब्रह्म सत्यं सर्वानुगतत्वात्, यत्सर्वानुगतं तत्सत्यं यथा सर्पधारादण्डादिष्विदन्त्वेनानुगता रज्जुरित्यादिः ॥ ३९ ॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।
इतिन्यायेन देहान्त आरोपः खादिरीरितः ॥ ४० ॥

खादिदेहान्तस्त्वारोपित एवेत्याह—अध्येति । अयंभावः, यदि ब्रह्मणि खादिसृष्टिमनुपन्यस्य श्रुत्या तत्र तन्निषिध्येत तदा वायौ निषिद्धस्य रूपस्येव खादेरन्यत्र सत्त्वसंभावनयाऽद्वितीयब्रह्मणो निर्विचिकित्सप्रतिपत्तिर्नस्यात् । अतस्तत्र तदध्यारोपः प्रकृतया श्रुत्या प्रतिपाद्यते इति ॥ ४० ॥

अथापवादो जगतः कथ्यते ब्रह्मबुद्धये ।
तत्रादौ पुत्रमित्रादिनुत्त्यै देहात्मतोच्यते ॥ ४१ ॥

अधुना "सवाएषपुरुषोऽन्नरसमय" इत्यादिश्रुतेरपवादपरत्वमाह—अथेति । ब्रह्मबुद्धयेऽद्वितीयब्रह्मज्ञानाय पुत्रेति पुत्रादिष्वात्मताव्यावृत्तये, सवाएष पुरुषोऽन्नरसमय इतिश्रुत्याऽऽत्मता देहे उच्यते नतु देह एवात्मेत्यत्र श्रुतेस्तात्पर्यमित्यर्थः ॥ ४१ ॥

आत्मा वै पुत्रनामासीत्येवमात्मत्वविभ्रमः ।
लौकिकोऽनूद्यते पुत्रे श्रुत्या युक्तिश्च विद्यते ॥ ४२ ॥

ननु पुत्रादिषु कथमात्मता प्रसक्ता यन्निवृत्त्यर्थाश्रुतिरित्याशङ्क्य पुत्रविशेष्यकात्मत्वप्रकारकलौकिकविभ्रमानुवादिन्या "आत्मावै पुत्रनामासीति श्रुत्या युक्त्याचेतिपरिहरति—आत्मेति । युक्तिश्चेति । अत्रायं प्रयोगः । पुत्रभार्यादिः आत्मा भवितुमर्हति अहं प्रतीतिविषयत्वात् व्यतिरेके घटादिवत् ॥ ४२ ॥

साकल्यं पुत्रभार्यादेर्वैकल्यं चात्मनीक्ष्यते ।
इत्याह भाष्यकृत्तेन पुत्रेऽस्ति स्वात्मताभ्रमः ॥ ४३ ॥

ननु अहं प्रतीतिविषयत्वमेवासिद्धमित्याशङ्क्य पुत्रे पुष्टेऽहं पुष्ट इत्यादिप्रतीतिविषयत्वस्य लोकसिद्धत्वेऽपि भाष्यकारसम्मत्या तद्दर्शयति—साकल्यमित्यादि ॥४३॥

५

सोऽस्यायमात्मा पुण्येभ्यः प्रतिधीयत इत्यदः ।
वचो वक्त्यैतरेयोऽतः स्वात्मताभ्रम एव हि ॥ ४४ ॥

पुत्रस्याध्यस्तात्मत्वे ऐतरेयवचनमप्याह—सोऽस्येति । ऐतरेयवाक्या
स्तु अस्य पितुः सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यस्तत्कर्मनिष्पा
नार्थं प्रतिधीयते पित्रायत्कर्त्तव्यं तत्करणाय प्रतिनिधीयत इति ॥ ४४ ॥

एवं व्युदसितुं देहस्यैवात्मत्वमिहोच्यते ।
यो देहोऽन्नमयः सोऽयमेवात्माऽन्यो न कश्चन ॥ ४५ ॥

प्रकृतश्रुत्युक्तदेहात्मतामुपसंहरति—एवं व्युदसितुमिति । एवंपुत्रादा
त्मत्वविभ्रमेसिद्धे सति तं व्युदसितुं तन्निरासार्थमत्र श्रुतौ देहस्यैवात्मत्वमुच्यते ।
पूर्वार्द्धार्थः । निरासमेवाहोत्तरार्द्धेन ॥ ४५ ॥

मदीयः पुत्रभार्यादिरितिभेदावभासनात् ।
गौणीस्यादात्मतापुत्रेभृत्यादौ सिंहता यथा ॥ ४६ ॥

ममपुत्रो मदीयाभार्येति भेदभानेन पुत्रादावात्मता गौणीनमुख्याभृत्या
गौणीसिंहतेवेत्याह— मदीय इति ॥ ४६ ॥

पूर्ववासनया पुत्रे स्वात्मताभाति चेत्पुनः ।
तद्वासनापनुत्त्यर्थं देहात्मत्वमुपास्यताम् ॥ ४७ ॥

ननु पूर्वसंस्कारेणपुत्रादौस्वात्मताभाति—सच संस्कारः कथं निवर्त्त
तीत्यपेक्षायांदेहात्मताध्यानं तन्निवर्तकमित्याह—पूर्ववासनयेति ॥ ४७ ॥

शिरः पक्षौ मध्यपुच्छे इति देहस्य पक्षिताम् ।
ध्यात्वातन्निष्ठतां प्राप्यत्यजेत्पुत्रात्मताश्रुतिम् ॥ ४८ ॥

"तस्येदमेवशिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा
इदं पुच्छं प्रतिष्ठे"ति श्रुत्युक्तारोपितपाक्षित्वाविशिष्टदेहात्मत्वध्यानं दृढतां गतं पूर्वोक्तै
तरेयादिश्रुत्यनूदितपुत्रात्मतासंस्कारंनिवर्तयितुंशक्नोतीत्याह— शिरइति । श्लो
कार्थस्तु—इदं प्रसिद्धंशिरः शिरस्त्वेन पूर्वाभिमुखस्यदक्षिणोत्तरवाहूच दक्षिणोत्त
रपक्षत्वेनदेहस्यमध्यभागञ्चात्मत्वेन नाभेरधस्ताद्भागंचपुच्छत्वेनभावयन् देहस्य

पक्षिरूपतांध्यात्वाध्याननिष्ठतां प्राप्य पूर्वोक्तां पुत्रात्मताश्रुतिन्त्यजेत् इति । अयं भावः, ध्यानेन पुत्रात्मतासंस्कारनिवृत्तौ पुत्रात्मताबोधकश्रुतित्यागः फलतीति॥४८॥

धीर्मनुष्योऽहमित्यस्तिपुत्रोऽहमितिनास्तिधीः ।
विकारोऽस्तिपरिव्राजो न पुत्रसुखदुःखयोः ॥ ४९ ॥

उक्तध्याननिष्ठां गतवतः साधकसन्न्यासिनोऽहं मनुष्यइति बुद्धिर्भवति, अहं पुत्र इति बुद्धिर्नभवति, तेन पुत्रसुखदुःखसद्भावेऽपि तत्प्रयुक्तसुखादि तस्य न भवतीत्याह—धीरिति ॥ ४९ ॥

अन्नजोदेह एवात्मातदन्नं ब्रह्मबुद्धितः ।
उपास्यसर्वमप्यन्नं स्वाभीष्टं लभतेपुमान् ॥ ५० ॥

इदानीं "अन्नाद्वैप्रजाःप्रजायन्ते, इत्यादेः तस्मादन्नन्तदुच्यते" इतीत्यन्तायाः श्रुते र्व्याख्यानमाह—अन्नजइति । यस्मादन्नाद्देहोजातस्तदन्नविशेष्यकं ब्रह्मप्रकारकं ध्यानं सम्पाद्य हितमिष्टंच सर्वमन्नं प्राप्नोतीत्यर्थः । अन्नेब्रह्मबुद्धिप्रयोजकानिचेह—"अन्नाद्भूतानिजायन्ते" "तस्मादन्नन्तदुच्यते" इत्यन्तेनश्रुतावुक्तानि ॥ ५० ॥

विवेकाद्वाध्यानतो वा पुत्राद्यात्मत्वनिह्नुतौ ।
तथा देहात्मतांत्यक्तुं प्राणात्मत्वं विचिन्त्यताम् ॥ ५१ ॥

इदानीं "तस्माद्वाएतस्मादन्नरसमयादन्योऽन्तरआत्माप्राणमयइत्यादिं पृथिवीपुच्छंप्रतिष्ठेत्यन्तां" श्रुतिं व्याख्यातुमवतारयति—विवेकादिति । विवेकादिना पुत्राद्यात्मत्वबुद्धिनिवृत्तौ देहात्मतांत्यक्तुं प्राणात्मत्वं विचारयेदित्यर्थः । ध्यानतः निरुक्तदेहात्मताध्यानात् ॥ ५१ ॥

न देहस्यात्मता युक्ता पूर्वजन्मन्यभावतः ।
पुरात्मादेहदं कर्म कृत्वाप्राप्नोत्यदोवपुः ॥ ५२ ॥

देहात्मत्वबुद्ध्यभावफलकं विचारमाह—नदेहस्येत्यादिश्लोकद्वयेनेति स्पष्टम् ॥ ५२ ॥

आयुर्मरणयोर्हेतौ प्राणेजीवात्मतोचिता ।
स्थिते प्राणेभवत्यायुः प्राणापायेतुहीयते ॥ ५३ ॥

प्राणआत्माभवितुमर्हतिआयुर्मरणहेतुत्वात्, व्यतिरेकेघटादिवत्, इत्य-

नुमानेनप्राणेजीवात्मत्वमाह—आयुर्मरणयोरिति । स्थितइति । अत्रायं प्रयो
आयुर्मरणेप्राणकारणकेतदन्वयव्यतिरेकानुविधायित्वाद्, योयदन्वयव्यतिरेकानुवि
यीसतत्कारणकः यथा दण्डान्वयव्यतिरेकानुविधायीघटोदण्डकारणकस्तथाचे
स्माच्चथा ॥ ५३ ॥

देहात्मवासनानुत्त्यैप्राणात्मत्वमुपास्यताम् ।
प्राणोब्रह्मेत्युपासीनः सर्वमायुः समश्नुते ॥ ५४ ॥

प्राणात्मतोपासनायाः फलान्तरमाह—देहेति । देहात्मबुद्धिजनकसंस्
निवृत्तये प्राण आत्मेतिध्येयमिति पूर्वार्द्धार्थः । सर्वमेवतआयुर्यन्तियेप्राणंब्रह्मोपास
इत्यर्थंव्याचष्टेप्राण इति ॥ ५४ ॥

प्राणोऽपानः समानश्चोदानव्यानौ च वृत्तयः ।
एतासुपूर्ववत्पक्षमूर्धादीन् परिकल्पयेत् ॥ ५५ ॥

उत्तरार्द्धेन प्राणोपासनायां पूर्वोक्तोपासनाप्रकारमतिदेक्ष्यन् "अन्योऽन्
आत्माप्राणमय"इत्यत्रवृत्तिससुदायः प्राणमयशब्दार्थःइतिबोधयितुं वृत्तिपदवाच
क्रियाः स्वस्वनामभिर्निर्दिशति—प्राण इति । तस्य प्राण एवशिर इत्यादेस्ताल
माह—एतास्विति ॥ ५५ ॥

श्वासोऽधोगमनं कृत्स्नेदेहेऽन्नस्यसमीकृतिः ।
उद्गारादिर्वलं देहे क्रियास्तासां क्रमादिमाः ॥ ५६ ॥

वृत्तीनां फलान्याह— श्वासइति । देहेवलमितियोजना तासां वायुवृत्ती
वायुव्यापाराणांश्वासादयः पञ्च क्रियन्ते इति क्रियाः फलानीत्यर्थः ॥ ५६ ॥

वृत्तिसंघं प्राणमयं ध्यात्वादेहात्मवासनाम् ।
सन्त्यज्याथप्राणमयेत्यजेद्देहवदात्मताम् ॥ ५७ ॥

प्राणापानादिरूपक्रियासमुदायात्मकं वृत्तिसंघं नतु प्राणादिपञ्चवायु
श्रुतिरथप्राणमयपदार्थमात्मत्वेनध्यात्वाताद‍ृशध्यानेनदेहात्मतासंस्कारनिवृत्तौ देह
प्राणमये आत्मतां विचारपूर्वकं मनस्यात्मत्वध्यानेनत्यजेदित्याह—वृत्तीति ॥ ५७

प्राणो नात्माजडत्वेन चेतनस्यात्मतोचिता ।
मनस्तुचेतनत्वेन सर्वस्यप्रतिभासनात ॥ ५८ ॥

विचारन्दर्शयन् "तस्माद्वाएतस्मात्प्राणमयादन्योऽन्तरआत्मामनोमय इत्यादिमथर्वाङ्गिरसः पुच्छम्प्रतिष्ठे"त्यन्तां श्रुतिंव्याचष्टेप्राणइति । प्राणोनात्माजडत्वात् घटादिवत् । मन इति–चेतनत्वेनात्मेति सन्बध्यते । चेतनत्वरूपं हेतुमुपपादयति—सर्वस्येति ।

चक्षुराद्यक्षसापेक्षं मनोवाह्यार्थभासकम् ।
निरपेक्षणमनसासुखाद्यान्तरभासनम् ॥ ५९ ॥

मनसोवाह्याभ्यन्तरसर्वार्थावभासकत्वरूपश्चैतन्यसाधकं हेतुमाह—चक्षुरिति । निरपेक्षेणेति । अस्य चक्षुरादीन्द्रियेत्यादिः ॥ ५९ ॥

आत्मत्वं मनसोबुद्ध्वात्यक्त्तुं प्राणात्मवासनाम् ।
उपासीतमनस्तच्च वृत्त्याख्यावयवै र्युतम् ॥ ६० ॥

मनस आत्मत्वं बुद्ध्वा प्राणात्मतासंस्कारनिवृत्तये वृत्तिनामकैः शिर आदिभिः पञ्चभिरवयवैर्विशिष्टं पक्षित्वेनकल्पितं मन आत्मत्वेन ध्यायेदित्याह-आत्मत्वमिति॥६०॥

यजुराद्याश्चतुर्वेदा आदेशस्तद्गतोविधिः ।
तद्भासकेमनोवृत्तिपञ्चकेपक्षिकल्पना ॥ ६१ ॥

तस्य यजुरेवशिरइत्यादिना श्रुतान्भाष्येवृत्तिपदार्थत्वेनोक्तान् पञ्चावयवानाह—यजुरिति । आद्यशब्देन ऋक्सामाथर्ववेदा ग्राह्याः । विधिरिति । चतुर्वेदगतयजेतेत्यादिवाक्यमित्यर्थः । तद्भासकेयजुरादिविषयक इत्यर्थः ॥ ६१ ॥

अवाङ्मनस्गम्यस्य ब्रह्मणोऽप्यवबोधने ।
शक्तं भवेन्मनस्तच्चमनो ब्रह्मेतिकल्पना ॥ ६२ ॥

अवाङ्मनसगम्यस्य ब्रह्मणोऽप्यवबोधने यस्मान्मनः शक्तंतस्मान्मनो विशेष्यकं ब्रह्मप्रकारकन्ध्यानं सम्पादयेदित्याह—अवागिति ॥ ६२ ॥

न ब्रह्मणिमनो जन्यस्फूर्तिस्तस्मादगम्यता ।
मनस्यन्तर्मुखे नश्येदविद्यातेनशक्तता ॥ ६३ ॥

ननु तस्य मनोऽगम्यत्वेतदवबोधे उक्तामनसःशक्तता व्याहन्येतेत्या-शङ्क्य मनोजन्यवृत्त्युपारूढचिदविषयत्वेऽपि ब्रह्मणस्तज्जन्यवृत्तेरज्ञाननाशफलिकाया विषयत्वेनाविरोधादिति परिहरति—नेति। शक्तेति। तदवबोधने मनसः शक्ति-रित्यर्थः॥ ६३॥

प्राणात्मवासनानाशेमनसोऽप्यात्मतां त्यजेत्।
कर्तुरात्मत्वमुचितं मनोऽन्तः करणङ्खलु॥ ६४॥

इदानीं "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरआत्माविज्ञानमय" इत्या-"महः पुच्छं प्रतिष्ठे"त्यन्तां श्रुतिं व्याख्यातुमवतारयति—प्राणेति। उक्तध्या-प्राणात्मसंस्कारनाशे सति विचारेणमनसोऽप्यात्मतां त्यजेदित्यर्थः। विचारमेवा-कर्त्तुरिति। अत्रेमौप्रयोगौ, बुद्ध्यपरपर्यायविज्ञानमात्मा कर्तृत्वाद् व्यतिरेके घ-दिवत्। मनो नात्मा करणत्वात् कुठारादिवत् इति॥ ६४॥

अहं कर्तेत्यदो ज्ञानं विशिष्टं यस्यभासकम्।
तत्कर्तृरूपं विज्ञानमात्मत्वेनावगम्यताम्॥ ६५॥

अथ पूर्वानुमाने पक्षीकृतविज्ञानस्य स्वरूपमाह—अहमिति। विशि-सविकल्पकं यद्विषयकं अहं कर्तेत्येतज्ज्ञानं तत्कर्तृरूपं विज्ञानमात्मानं जानी-दित्यर्थः॥ ६५॥

अहंक्रियत इत्येषोऽहंकाराख्यः स विग्रहे।
आनखाग्रमभिव्याप्य स्थितो जागरणे स्फुटः॥ ६६॥
तेन चेतनवद्देहो भाति सुप्तौ तु तल्लयात्।
भवेत्काष्ठसमो देहस्तेनाहंकार आत्मता॥ ६७॥

इदानीं बुद्धौ प्रयुक्तस्याहंकारशब्दस्याहं क्रियते—अहमितिसाक्षात्क्रियते अहमिति प्रत्ययविषयोभवतीति व्युत्पत्त्याऽहमित्याकारकसाक्षात्कारविषयत्वं प्रवृ-त्तिनिमित्तमिति दर्शयन् तस्य जागरणदशायां देहे आनखाग्रं व्याप्य स्पष्टं स्थि-त्वाद्देहश्चेतनवद्भवति सुषुप्तौ अहंकारलयात्स काष्ठ समो भवति, तेन विज्ञाना-ऽहंकार आत्मेत्याह—अहमित्यादिपद्यद्वयेन॥ ६६॥ ६७॥

मदीयं मन इत्युक्ते रात्मनः करणं मनः।
इत्यात्मानं विविच्याथ तमुपासीत पक्षिवत् ॥ ६८ ॥

मदीयमिति। मनोनात्मामदीयत्वेन प्रमीयमाणत्वात् कुठारादिवदित्यनुमानेनमनोभिन्नत्वेनात्मानं निश्चित्यपक्षित्वेनकल्पितं विज्ञानपदार्थमात्मत्वेन ध्यायेदित्यर्थः ॥ ६८ ॥

श्रद्धाद्याः पञ्चतन्त्रस्थाः कल्प्यामूर्धादिरूपतः।
श्रद्धास्तिक्यमृतं बुद्धौ यथावस्त्वनुचिन्तनम् ॥ ६९ ॥
यथार्थभाषणं सत्यं योगएकाग्रताधियः।
महस्तुयोगजं ज्ञानं चिन्त्याः श्रद्धादयोऽखिलाः ॥७०॥

इदानीं तस्य श्रद्धैवशिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठेतिश्रुतिभागं व्याचष्टे श्रद्धेति। विज्ञानमयस्य मूर्धत्वादिनाकल्प्याः श्रद्धादयः पञ्चेत्यर्थः। पञ्चानां स्वरूपाण्याह–श्रद्धास्तिक्यमित्यादिसार्धश्लोकेन। यथार्थभाषणं यथार्थभाषणानुकूलसङ्कल्पात्मिकाविज्ञानवृत्तिः। चिन्त्या इति। मूर्धत्वादिनेत्यादिः ॥ ६९ ॥ ७० ॥

लौकिकेवैदिके कर्तृ विज्ञानं ब्रह्मवेत्तिचेत्।
त्यजेदामरणं नोचे द्ब्रह्मलोके सुखं व्रजेत् ॥ ७१ ॥

लौकिकेवैदिके च कर्मणि कर्तृभूतं विज्ञानं मरणावधि प्रमादाभावपुरस्सरं ब्रह्मदृष्ट्योपासीतचेत्तदाब्रह्मलोके सुखंलभेतेत्याह–लौकिक इति ॥ ७१ ॥

विज्ञानध्यानतोनश्येन्मनस्यात्मत्ववासना।
विज्ञानात्मत्वमप्येष त्यजेच्छोकयुतत्वतः ॥ ७२ ॥

इदानीं "तस्माद्वा एतस्मादन्योऽन्तरआत्मानन्दमय" इत्यादिं "ब्रह्मपुच्छंप्रतिष्ठे"त्यन्तां श्रुतिमवतारयति–विज्ञानेति। विज्ञाने आत्मत्वध्यानेन मनस्यात्मत्वसंस्कारनाशे सति विज्ञानात्मत्वं त्यजेदित्यर्थः। तत्र हेतुमाह–शोकेति। विज्ञानमयो नात्मा शोकवत्वात्, व्यतिरेके आनन्दमयवदित्यत्र प्रयोगः ॥ ७२ ॥

शोकं तरत्यात्मबोधादिति श्रुत्यन्तरं जगौ।
शोकसागरमग्नोऽयं कर्ता तस्यात्मता नहि ॥ ७३ ॥

"तरतिशोकमात्मविदिति"श्रुतिमवष्टभ्य, तत्र हेतुंसाधयति शोकमित्यादि श्रुत्यंतरमिति पाठो युक्तः नतुसप्तम्यन्तः । अयं कर्ताविज्ञानमयरूपः । निगमयति तस्येति ॥ ७३ ॥

आनन्दस्यात्मता युक्ता सोऽत्रास्ति प्रीतिदर्शनात् ।
सदाभूयासमेवेति नित्यं प्रेमात्मनीक्ष्यते ॥ ७४ ॥

निरुपाधिप्रेमविषयत्वेनात्मन्यानन्दात्मकत्वं साधयति—आनन्दस्येति सोऽत्रास्तीति । स आनन्दः अत्रानन्दमयकोशेऽस्ति, आधाराधेयकल्पनया वर्त तत्रहेतुमाह—प्रीतीति । प्रीति दर्शनमेवाभिनयति—सदेति ॥ ७४ ॥

आनन्दैकस्वभावोऽपि कर्तृविज्ञानसंगमात् ।
निजानन्दं तिरस्कृत्य कदाचिच्छोकमाप्नुयात् ॥ ७५

नन्वहं शोचामीत्यनुभवः शोकस्यात्मधर्मत्वमवगाहते, तत्कथमात्मा रूप इत्याशङ्क्य बुद्धिगतशोकस्यात्मन्यवगाहनेन तस्यानुभवस्योपपत्तिरिति ति—आनन्दैकेति । कर्तृविज्ञानसंगमात् कर्तृविज्ञानतादात्म्याध्यासात् ॥ ७५

समाधिसुप्तिमुर्च्छासु विज्ञानस्य लये सति ।
नित्यानन्दस्वरूपेऽस्मिञ्च्छोकोऽल्पोऽपिन वीक्ष्यते ॥७

बुद्धिगतत्वं शोकस्यान्वयव्यतिरेकाभ्यां साधयति—समाधीति ॥ ७

मूर्च्छासुप्त्यो र्यदज्ञानं भाति तत्कारणं धियः ।
कारणे बुद्धिवृत्तौ च स्वानन्दः प्रतिबिम्बति ॥ ७७ ॥

ननु मूर्च्छादावानन्दसद्भावे किं मानम् बुद्धेस्तदानीं लयादिसा तत्र यदज्ञानं भाति तदानन्दाकारवृत्तौ कारणमित्याह—मूर्च्छेति । धियः आन कारवृत्तेः कारणम् । मूर्च्छासुप्त्योः कारणे जगत्कारणेऽज्ञाने तज्जन्यानन्दाका च जाग्रदादि दशायान्तु बुद्धिवृत्तौ चानन्दः प्रतिबिम्बति इत्यर्थः ॥ ७७ ॥

दुःखं राजसधीवृत्तौ सात्विक्यां तत्सुखं भवेत् ।
प्रियं मोदः प्रमोदश्चेत्युच्यते धीसुखं त्रिधा ॥ ७८ ॥

राजसधीवृत्तौ प्रतिबिम्बितो निजानन्दो दुःखं भवति । तदेव सात्वि

सुखंभवति । इदमेवंधी सुखं "तस्य प्रियमेवशिर" इत्यादिश्रुतौ प्रियमोदप्रमोदशब्दै-रुच्यते इत्याह—दुःखमिति ॥ ७८ ॥

इष्टस्य दर्शनाल्लाभाद्भोगाच्चस्युः प्रियादयः ।
तेत्रयः कारणानन्द आत्मानन्दश्च पञ्चते ॥ ७९ ॥

प्रकृतप्रियमोदप्रमोदपदबोध्यतावच्छेदकं यथाक्रममिष्टदर्शनलाभभोगजन्य-त्वघटितमित्याह—इष्टेति । उक्तास्त्रय अज्ञानानन्दोनिजानन्दश्चेति ते पञ्चेत्यर्थः ॥७९॥

पक्षिणोऽवयवाः पञ्च मूर्धाद्यास्तेषु कल्पिताः ।
आनन्दमयकोशोऽयमुपास्यः पूर्वकोशवत् ॥ ८० ॥

पक्षित्वेन कल्पितस्यानन्दमयस्य ये प्रियादयोऽवयवास्तेषु मूर्धत्वादयो ध-र्माः कल्प्या इत्याह—पक्षीति । आनन्दमयः कोशो ब्रह्मदृष्ट्योपास्य इत्याह—आनन्देति । पूर्वेति । विज्ञानमयेत्यर्थः ॥ ८० ॥

अन्नप्राणमनो विज्ञानानन्दै र्जनिता इमे ।
कोशास्तेषु क्रमेण स्युरुत्तरोत्तरमान्तराः ॥ ८१ ॥

अन्नप्राणमनोविज्ञानानन्दै र्यथाक्रमंजनिताअन्नमयप्राणमयमनोमयविज्ञान-मयानन्दमयाः पञ्चकोशास्तेषूत्तरोत्तरमान्तराआत्मनःसन्निहिता इत्याह—अन्नेत्या-दि ॥ ८१ ॥

विज्ञानकोशन्यायेन फलमुन्नीयतामिह ।
तदुपास्ति फलं चार्थात्तत्त्वबोधफलं भवेत् ॥ ८२ ॥

इहानन्दमयोपासनफलस्याश्रुतत्वाद्विज्ञानकोशन्यायेनतत्फलं कल्प्यतामि-त्याह—पूर्वार्द्धेन-विज्ञानेति । विज्ञानकोशन्यायेनोन्नीतफलान्यथानुपपत्त्या कल्प्य-मानं तदुपास्तिफलं तत्त्वबोधरूपमाहोत्तरार्द्धेन-तदुपास्तीति ॥ ८२ ॥

आनन्दं ब्रह्म विज्ञाय त्यजेदामरणं न चेत् ।
शरीरे पाप्मनो हित्वा सर्वान् कामानवाप्नुयात् ॥ ८३ ॥

सर्वपापत्यागपुरस्सरसर्वकामावाप्तिरूपमुन्नीतं तदुपास्तिफलमाह—आन-न्दमिति ॥ ८३ ॥

६

आनन्दमयकोशेऽस्मिन्न पञ्चमावयवः श्रुतः ।
ब्रह्मशब्देन तद्ब्रह्म स्वात्मानन्द इतीक्ष्यताम् ॥ ८४ ॥

आनन्दमयकोशे "ब्रह्मपुच्छंप्रतिष्ठे"ति श्रुत्या ब्रह्मशब्देन बोधितः प मावयवः स्वात्मानन्द इति बोध्यमित्याह—आनन्देत्यादिना ॥ ८४ ॥

उपासनाच्चित्तशुद्धौ ब्रह्मतत्त्वमवेक्षते ।
गुहाहितब्रह्मबोधा त्सर्वकामाप्तिरीरिता ॥ ८५ ॥

उपासनया सर्वपापक्षयरूपचित्तशुद्धौ ब्रह्मतत्त्वं पश्यति, गुहाहितब्रह्मबो त्सर्वकामावाप्तिः फलं नत्वानन्दमयबोधात्तस्यप्रियाद्यवयवादिमत्त्वेन ब्रह्मत्वाभा तद्बोधस्य तत्फलकत्वानौचित्यादित्याशयेनाह—उपेति ॥ ८५ ॥

गुहाहितं ब्रह्म यत्तत्सत्यं ज्ञानमिति श्रुतम् ।
तस्य ज्ञानस्य दृश्यास्ते कोशाः सर्वं जगत्तथा ॥ ८६

"असन्नेव सभवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेतिचेद्वेद सन्तं ततो विदुः" इति श्रुतिं व्याख्यातुमवतारयति—गुहेति । यो वेद निहितं गुहा मित्यनेन गुहाहितत्वेन प्रतिपादितं यद्ब्रह्म त"त्सत्यंज्ञानमनन्तमि"तिश्रुत्या नत्वेन बोधितं तस्य कोशा विषयास्तद्भिन्नं विश्वञ्चेत्यर्थः ॥ ८६ ॥

जगत्कोशाश्च दृश्यत्वात्सन्ति ब्रह्म न दृश्यते ।
अतो नास्तीत्याह मूढस्तत्सत्तां वक्ति बुद्धिमान् ॥ ८७

दृश्यत्वात्कोशास्तद्भिन्नं च सन्ति तदभावाद्ब्रह्म नास्तीत्याह मूढो, वेकी तु ब्रह्मसत्तामाहेत्याह—जगदिति ॥ ८७ ॥

ब्रह्म नास्तीति चेद्वेद स्वयमेव भवेदसन् ।
कोशात्मता दूषिता चेन्नान्य आत्मास्ति तन्मते ॥ ८८

ब्रह्मनास्तिकंप्रतिबाधमाह—ब्रह्मेति । ननु ब्रह्मनास्तिकस्यादूषित आत्मा स्यादित्याशङ्क्य खण्डयति—कोशात्मेति । ब्रह्मनास्तिकमते कोशोऽपि त्मानस्यात्तस्य दूषयिष्यमाणत्वादित्यर्थः ॥ ८८ ॥

आनन्दमयकोशेऽपि प्रियाद्या नश्वरास्त्रयः ।
अज्ञानं च ज्ञाननाश्यं न ब्रह्माङ्गीकरोत्यसौ ॥ ८९ ॥

कोशात्मखण्डनमेवाह—आनन्देति । प्रियाद्यास्त्रयो नश्वरा अज्ञानंच ज्ञाननाश्यं अज्ञानानन्दोऽपि नश्वर इति भावः । आनन्दमयकोशाधिष्ठानभूतं ब्रह्म च सनस्वीकरोत्यतोऽसावसन् भवेदित्यर्थः ॥ ८९ ॥

अस्ति ब्रह्मेति चेद्वेद स्वयमेवात्र सन्भवेत् ।
अदृश्यस्यापि सत्ता स्यात्स्वप्रकाशत्वसम्भवात् ॥ ९० ॥

अस्तीति । सद्ब्रह्मेतिज्ञानी अत्र जगति स्वयं स्वरूपेण सन् भवेत्, सत्त्वेन व्यवह्रियमाणोभवेत् । ननु अदृश्यस्य ब्रह्मणः कथं सत्तासम्भव इत्याशङ्क्य तस्य तामुपपादयति । अदृश्यस्यापीत्युत्तरार्द्धेन ॥ ९० ॥

गौणात्मा पुत्रभार्यादि र्मिथ्यात्मान्नमयादिकः ।
ब्रह्मानन्दो मुख्य आत्मा क्रमेणैते विवेचिताः ॥ ९१ ॥

पुत्रादिर्गौणआत्मा—देहादिर्मिथ्याआत्माब्रह्मानन्दोमुख्यात्मे"ति त्रय आत्मानः क्रमेण श्रुत्या वर्णिता इत्याह गौणेति ॥ ९१ ॥

उत्तरात्मविवेकेऽस्य पूर्वात्मा देहतां व्रजेत् ।
तेनोत्तरेण पूर्वस्य पूर्णत्वाद्देहिदेहता ॥ ९२ ॥

पञ्चमपर्यायगतं "तस्यैष एव शारीर आत्मा यःपूर्वस्ये"ति वाक्यं व्याचक्षाण एतदानुपूर्वीकं पर्यायचतुष्टयगतमपि वाक्यं व्याचष्टे—उत्तरेति । श्लोकार्थस्तु उत्तरकोशरूपात्मविचारे सति अस्योत्तरकोशरूपात्मनः पूर्वकोशरूपात्मा देहतां व्रजेत् । तेन पूर्वकोशस्यात्मभूतेनोत्तरकोशेन पूर्वस्य पूर्णत्वात्तयोः क्रमाद्देहिदेहभाव उपपन्न इति ॥ ९२ ॥

सत्येवं निखिलं पूर्वशरीरं ह्यन्तिमात्मनः ।
ब्रह्मानन्दस्तु शारीरः-पूर्वस्यात्मेति निर्णयः ॥ ९३ ॥

पूर्वश्लोकेन सामान्यतो व्याख्यातं देहिदेहभावं प्रकृते योजयति--सत्येवमिति । एवंसति पूर्वपूर्वकोशस्यशरीरत्वेउत्तरोत्तरकोशस्यात्मत्वेसिद्धेसति । नि-

खिलं पूर्वमन्नमयादिविज्ञानमयान्तमन्तिमात्मन आनन्दमयस्य शरीरं हि यद्यपि भाष्ये विज्ञानमयस्य शरीरत्वमानन्दमयस्यात्मत्वमत्रोक्तं तथापि पूर्व विशेषान्निखिलं पूर्वमानन्दमयस्य शरीरमत्रोक्तम् । यद्यपि निखिलं पूर्वमन्तिमा नः शरीरमित्युक्ते आनन्दमयस्यैव मुख्यात्मत्वं समायाति, तथापि प्रियमोदप्रमो ज्ञानानन्दरूपतदवयवानां नश्वरत्वेनात्मत्वासिद्धया तदधिष्ठानभूतब्रह्मानन्दस्यैवात्म परिशेषाल्लभ्यते । अतस्तस्यैवात्मत्वमाहोत्तरार्द्धेन—ब्रह्मानन्दस्त्विति । पूर्वस्येति अन्नमयादिविज्ञानमयान्तस्येत्यर्थः ॥ ९३ ॥

श्रवणं मननं चोभे तत्त्वज्ञानस्य साधने ।
उक्तनिर्णयपर्यन्तं विज्ञानं श्रवणाद्भवेत् ॥ ९४ ॥

"अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छती३ । विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता३इ" इति श्रुतिं व्याख्यातुमवतारयति श्रवणमिति । श्रुतौ लोकपदार्थो ब्रह्म । श्रवणफलमाह—उक्तेति । उक्तनिर्णय न्तं ब्रह्मानन्दस्यात्मत्वनिर्णयावधि ॥ ९४ ॥

अथ स्वबुद्धिदोषेण यतःसन्देहसम्भवः ।
अतोऽसौ मननं कुर्यात्सन्देहाः स्युस्त्रयोऽस्य हि ॥९५॥

धीदोषजसंदेहत्रयनिवृत्तिं मननफलमाह—अथेति । अस्येति । अधि रिविशेषस्येत्यर्थः ॥ ९५ ॥

ब्रह्मास्ति नोवेत्येकः स्यादज्ञानी मुच्यते नवा ।
तत्त्वविन्मुच्यते नो वेत्यपरौ संशयावुभौ ॥ ९६ ॥

सन्देहत्रयस्य स्वरूपमाह—ब्रह्मेति ॥ ९६ ॥

यदस्ति नामरूपाभ्यां व्याप्तं तद्वियदादिकम् ।
ब्रह्मानिर्नामरूपत्वान्नास्तीत्याह विमूढधीः ॥ ९७ ॥

तत्र नास्तिपक्षं मूढो गृह्णातीत्याह—यदिति । यदस्ति तद्वियदादि कं नामरूपाभ्यां व्याप्तं ब्रह्मानिर्नामरूपत्वान्नास्तीति विमूढधीराहेति योजना ॥ ९७

विवेकी ब्रह्मणः सत्तां मृत्तिकामादिहेतुभिः ।
साधयन् बहुधा मूढं बोधयेन्मोहनुत्तये ॥ ९८ ॥

विवेकी सृष्टिकामादिभि र्हेतुभि र्बहुधा ब्रह्मसत्तां साधयन् अस्तिपक्षं गृह्णातीत्याह—विवेकीति ॥ ९८ ॥

अकामयत सृष्ट्यादौ परमात्मा स्वमायया ।
बहुस्यामहमेवातः प्रजायेयेति कामना ॥ ९९ ॥

विवेकी सृष्टिकामादिहेतुभिर्ब्रह्मणः सत्तां साधयन्नित्यादिपूर्वत्रोक्तं, तत्र "सोऽकामयत बहुस्यां प्रजायेये"ति विवृण्वन् कामपूर्वकसृष्ट्या ब्रह्मसिद्धिमाह—अकामयतेति । ईश्वरस्य कामना मायापरिणामरूपा इत्याह—स्वमाययेति । कामनाकारं दर्शयति—बहुस्यामिति । एतत्कामनाप्रयोज्यं कामनान्तरमाह—प्रजायेयेति । एतेन सांख्याभिमतं प्रधानस्य कर्तृत्वमश्रौतमिति बोधितम् ॥ ९९ ॥

स्वस्यैव बहुधा चोक्तेरुपादानं मृदादिवत् ।
तथा कामयितृत्वेन निमित्तत्वं कुलालवत् ॥ १०० ॥

सृष्टावुपादानत्वं निमित्तत्वं च ब्रह्मण इत्याह— स्वस्येति । एतेन वैशेषिकाद्यभिमतं विभिन्ननिमित्तोपादानकत्वं जगत इत्यवैदिकमिति सूचितम् ॥१००॥

निर्धर्मकेऽप्यात्मतत्त्वे निमित्तत्वं स्वमायया ।
उपादानत्वसहितं माया दुर्घटकारिणी ॥ १०१ ॥

ननु निर्विशेषे ब्रह्मणि निमित्तत्वोपादानत्वेधर्मौनयुज्येते इत्याशङ्क्य दुर्घटैकविधायिन्या मायया तत्र ते घटेते इत्याह—निर्धर्मक इति ॥ १०१ ॥

असंभाव्यं न मायायामुपालम्भं न साऽर्हति ।
ततो वेदो यथाब्रूते सृष्टिरेषा तथेष्यताम् ॥ १०२ ॥

ननु दुर्घटकारिण्या स्वमायया निर्धर्मके आत्मतत्त्वे उपादानत्वनिमित्तत्वे अभ्युपगम्येते, दुर्घटकारित्वमेवतु तत्रासिद्धमित्याशङ्क्याह—असंभाव्यमिति—अयंभावः, यथा लौकिकेन्द्रजाले न किञ्चिदप्यसंभाव्यं तथा महामायायामपीत्यतः सा उपालम्भं मायाया न सामर्थ्यं ब्रह्मणो जगदुपादानत्वनिमितत्त्वेसंविधातुमित्याद्यधिक्षेपं नार्हतीति । यथाब्रूते इति । अभिन्नोपादाननिमित्तिकां सृष्टिमित्यर्थः । तथेति । अस्य पक्षपातंविहायेत्यादिः ॥ १०२ ॥

सृज्यमालोचयन्सर्वमसृजत्परमेश्वरः ।
सृष्ट्वाऽथ जीवरूपेण प्रविवेश वपुष्ययम् ॥ १०३ ॥

इदानीं "सतपोऽतप्यतेत्यादिं यदिदं किञ्च"त्यन्तां श्रुतिं व्याचक्षाण स्तत्सृष्ट्वा तदेवानु प्राविशदि"ति विवृणोति–सृज्यमिति । जीवरूपेणेति। यद्यपि ष्ट्वेति क्त्वाप्रत्ययदर्शनेन सृष्टिकर्तुर्ब्रह्मणः स्वरूपेणैवानुप्रवेशो लभ्यते, त हन्ताहमिमास्तिस्रो देवता "अनेन जीवेनाऽऽत्मनानुप्रविश्य नामरूपे व्याकरवा ति, श्रुत्यन्तरसंवादादत्र जीवरूपेणैवानुप्रवेशोऽभिप्रेतः ॥ १०३ ॥

यो विज्ञानमयस्तस्मिंश्चैतन्यं प्रतिबिम्बितम् ।
तच्च धारयति प्राणान् जीवाख्यां लभते ततः ॥१०

वपुषि जीवरुपेण प्रविवेशेत्युक्तं तत्र बुद्धौ प्रतिबिम्बितं चैतन्यं प्राण कर्तृत्वाज्जीवपदार्थत्वेनाह —य इति ॥ १०४ ॥

भोक्ता भूत्वेश्वरस्तद्वद् भोग्यरूपोऽपि सोऽभवत् ।
भोग्यं च बहुधा सच्च त्यच्चेत्यादिविभेदतः ॥ १०

इदानीं–"तदनु प्रविश्य सच्च त्यच्चाभवादित्यादि"श्रुतिं व्याचष्टे–भोक्तेश् ईश्वरोभोक्ताजीवोभूत्वा, तद्वत्स ईश्वरो भोग्यरूपोऽप्यभववत् भोग्यं च सच्च च्चेत्यादिभेदतो बहुधेति योजना ॥ १०५ ॥

सत्प्रत्यक्षं परोक्षं त्यत्तदभावावुभौ तथा ।
वक्तुं शक्यमशक्यं चेत्यादिद्वन्द्वेऽस्ति भोग्यता ॥१०

सत्त्यत्पदार्थावाह–सत्प्रत्यक्षं परोक्षं त्यदिति । तथा तदभावौ प्रत्यक्षप भावावित्यर्थः । निरुक्तंचानिरुक्तं चेत्यस्य व्याख्या वक्तुं शक्यमशक्यं चेति ॥१

कामित्वमालोचकत्वं स्रष्टृत्वं च प्रवेष्टृता ।
भोग्याकारश्च पञ्चैते ब्रह्मसद्भावहेतवः ॥ १०७ ॥

विवेकी ब्रह्मणः सत्तां सृष्टिकामादिहेतुभिरित्युक्तं तत्र ब्रह्मसाधकान् पञ्च नाह—कामित्वमिति ॥ १०७ ॥

सद्रूपः परमात्मास्यात्कामित्वात्स्वर्गकामिवत् ।
आलोचनान्मन्त्रिवत्सन् स्रष्टृत्वाच्च कुलालवत् ॥१०८॥

इदानीं प्रयोगानाह—सद्रूपइत्यादिसार्धश्लोकेन । कामित्वादिकं चानुपदव्याख्यातश्रुतिलभ्यम् ॥ १०८ ॥

प्रवेष्टृत्वात्सर्पवत्सन् भोग्यत्वाच्चौदनादिवत् ।
नानुमानैरेवकिन्तु विद्वत्प्रत्यक्षतोऽपि सन् ॥ १०९ ॥

विद्वत्प्रत्यक्षतोऽपि सद्ब्रह्मेत्याह— नानुमानैरिति ॥ १०९ ॥

यत्सत्यं ब्रह्म पूर्वोक्तं तदेव जगदात्मना ।
भाति भ्रान्त्या ततः सर्वं ब्रह्मेत्याचक्षते बुधाः ॥ ११० ॥

"तत्सत्यमित्याचक्षते,, इति श्रुतिं विद्वत्परतया व्याचष्टे—यदिति ॥११०॥

सर्पधारादिका भ्रान्त्या कल्पिता तत्त्वदर्शने ।
रज्जुरेव यथा तद्वद्ब्रह्मैव सकलं जगत् ॥ १११ ॥

भ्रान्त्या ब्रह्मणि जगत्कल्पितमिति सदृष्टान्तमाह-सर्पेति । तत्त्वदर्शन इति-शेषः । यथा सर्पधारादयो रज्जुरेवेति योजनीयम् ॥ १११ ॥

नामरूपयुतत्वेन जगत्सद्ब्रह्म नेति यत् ।
पूर्वपक्षिगतं तन्न ब्रह्मसत्त्वं तदीक्ष्यताम् ॥ ११२ ॥

नामरूपवत्त्वाज्जगत् सत् तदभावान्न ब्रह्म सदिति पूर्वपक्षिमतं सम्यङ् न भवति, जगति ब्रह्मसत्त्वानुगतेरित्याह—नामेति । तदिति । जगति विद्यमानमित्यर्थः ॥ ११२ ॥

रज्जुदैर्घ्यं यथा सर्पधारादिष्वनुगच्छति ।
ब्रह्मसत्त्वं तथा व्योमवाय्वादिष्वनुगच्छति ॥ ११३ ॥

व्योमादिजगतिब्रह्मसत्त्वानुगति सदृष्टान्तामाह—रज्ज्वति ॥ ११३ ॥

असदेवेदमग्रेऽभून्नामरूपात्मकं जगत् ।
पश्चात्तु ब्रह्मणा सृष्टं सदभूद्ब्रह्मसत्त्वतः ॥ ११४ ॥

इदानीं ब्रह्मण उपादानकारणतां प्रमाणयितुं, "असद्वाइदमग्रआसीत् सदजायत, तदात्मानं स्वयमकुरुते"तिश्रुतिं व्याचष्टे—असदिति । श्रुतौ सति सच्छब्दो गौणः । अनभिव्यक्तनामरूपत्वं गुणः । अग्रे सृष्टेःप्राक् ॥ ११४ ॥

तद्ब्रह्मात्मानमेवेमं सच्चिदानन्दलक्षणम् ।
अकार्षीज्जगदाकारं स्वयमेव स्वमायया ॥ ११५ ॥

ननु ब्रह्मणो जगदाकारत्वेऽविकृतत्वं श्रौतं न स्यात् इत्याशङ्क्य मायिकत्वेन मिथ्यात्वात्तदुपपादयति—तदिति । "ततो वै सदजायततदात्मानं स्वयमकुरूते"तिश्रुतिव्याख्यानमेतत् ॥ ११५ ॥

अस्ति भाति प्रियं चेति प्रतिवस्त्वभासते ।
त एते सच्चिदानन्दा ब्रह्मगा भान्ति वस्तुषु ॥ ११६ ॥

सच्चिदानन्दा ब्रह्मगास्तत्र कल्पितेषु मिथ्याभूतेषु वस्तुषु भान्तीत्याहास्तीति ॥ ११६ ॥

नामरूपे घटादीनां प्रागभाव युते ततः ।
अभावत्वं च भावत्वं पर्यायेणेक्ष्यते तयोः ॥ ११७ ॥

घटादीनां नामरूपयोः सत्त्वमसत्त्वञ्च पर्यायेण यद्भासते तत्प्रयोजकं तयोः प्रागभावप्रतियोगित्वमित्याह—नामेति । ईक्ष्यत इत्यनेन तत्र सत्त्वासत्त्वभानमेव, नतु सद्भाव इति सूचितमेतदग्रे स्फुटीभविष्यति ॥ ११७ ॥

आगमापायि धर्मौ यौ नतयो र्धर्मिरूपता ।
शयनोत्थानयो र्नास्ति देहवस्तुस्वरूपता ॥ ११८ ॥

ननु नामरूपयोस्तौ धर्मौ स्तः, इत्याशङ्क्य निषेधति । आगमेति । आगमापायिनावुत्पादविनाशशालिनौ यौ धर्मौ तयो र्धर्मिरूपता नयुक्तेत्यर्थः । धर्मिणोस्तादात्म्यमभिप्रेत्य धर्मिरूपतेत्युक्तम् । अत्र दृष्टान्तमाह—शयनेति । सत्त्वासत्त्वयोः कादाचित्कत्वान्न नामरूपधर्म्मत्वं युक्तमित्याशयः ॥ ११८ ॥

सत्त्वासत्त्वे अन्यदीये भासेते नामरूपयोः ।
मायारूपमसत्त्वं स्यात्सत्त्वाया ब्रह्मरूपता ॥ ११९ ॥

तयोर्नामरूपधर्मत्वनिषेधे फलितमन्यधर्मत्वमाह—सत्त्वेति । अन्यदीये इत्यत्र ब्रह्ममाये अन्यपदार्थावित्याह—मायेत्याद्युत्तरार्द्धेन ॥ ११९ ॥

**जाड्यदुःखे मायिके स्तो भानानन्दौ परात्मगौ ।**
**लौकिकाः सच्चिदानन्दा ब्रह्मगाश्चेदसत्कथम् ॥ १२० ॥**

नामरूपयो र्जाड्यदुःखे मायागते, तत्र भानानन्दौ ब्रह्मगावित्याह—जाड्येति । एवं घटादौ प्रतीयमानाः सच्चिदानन्दा ब्रह्मगा इत्युपसंहरति—लौकिका इति । यदि सत्त्वेन प्रतीयते घटादिस्तर्हि कथमसदित्याशङ्कते—चेदसत्कथमिति ।१२०॥

**भवेत्तु ब्रह्मसत्ताऽस्मिन्नानन्दोऽस्ति कथं शृणु ।**
**आनन्दोऽत्राभ्युपेतव्यो रसवान्मधुरादिवत् ॥ १२१ ॥**

परिहरति—भवेत्तु ब्रह्मसत्तेति । अयंभावः, न सत्त्वेन प्रतीयमानत्वात्सत्त्वमभ्युपेयं शुक्तिरूप्यादिसद्भावप्रसङ्गात् । कथं तर्हि तत्र सत्ता भासते इतिचेच्छृणु अधिष्ठानब्रह्मसत्तया तत्र तद्भानोपपत्तौ न तदतिरिक्तसत्ताऽङ्गी कार्य्येति । अत्र तु शब्दो निषेधार्थकः यद्वा लौकिका इत्यादेरन्यथापि व्याख्यानम् । ननु भानानन्दौ परमात्मगावित्युक्तं तदसाम्प्रतं तयो र्नामरूपवास्तवधर्मत्वे बाधकाभावादित्याशङ्क्य समाधत्ते—लौकिका इति । यदि लौकिका नामरूपनिष्ठाः सच्चिदानन्दा ब्रह्मगा इति वैपरीत्यं, तर्हि असत्कथं नामरूपात्मकं जगदिति शेषः । यदि तत्र सत्त्वं तद्धर्मोऽभ्युपेयते, तर्हि असत्त्वप्रतीतिर्न तत्र स्यात् । उपसंहरति—भवेत्तु ब्रह्मसत्तेति । तस्माद्ब्रह्मसत्तैव संभवतीति तु शब्द एवकारार्थ इति । इदानीं "यद्वैतत्सुकृतं रसो वै स"इत्यादिं "मृत्यु र्धावति पञ्चम"इत्यन्तं भागं विवृण्वन्नादौ ब्रह्मण्यानन्दं साधयति—अस्मिन्निति । ब्रह्मणीत्यर्थः । ननु "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुतब्रह्मसत्ताया घटादौ भानमस्तु, तत्रानन्दे मानाभावात् कथं तदानन्दस्य तत्र भानमिति शङ्काग्रन्थार्थः । चित्तं समाधातुमाह—शृण्विति—अत्र ब्रह्मण्यानन्दोऽभ्युपेतव्यो यतः स गुडादिलक्षणमधुरादिवत् रसवानित्युत्तरार्द्धार्थः । रसो वै इत्यत्र रसशब्दो रसवत्परः ॥१२१॥

**मूढस्य मधुरादिः स्याद्रसो ब्रह्म विवेकिनः ।**
**मधुरादिभुगानन्दी ब्रह्मविच्च तथा सुखी ॥ १२२ ॥**

"रसं ह्येवायं लब्ध्वानन्दी भवती"ति श्रुतिं व्याचष्टे—मूढस्येति । रस इति

७

पदं मधुरादीरित्यत्र ब्रह्मेत्यत्र च तन्त्रादिना योज्यम् । रसो रसवान् । मधु
भुगानन्दीत्यस्य यथेत्यादिः ॥ १२२ ॥

ब्रह्मानन्दो नचेदत्र देहं कोनाम चेष्टयेत् ।
प्राणाक्षाणां चेष्टकत्वं न तत्र करणत्वतः ॥ १२३ ॥

"को ह्येवान्यात्कः प्राण्यादि"त्यादिं श्रुतिंव्याचष्टे—ब्रह्मेति । अत्र कार्य
संघाते । नन्वस्तु प्राणाक्षाणां चेष्टाकर्तृत्वमित्याशंक्य तेषां तत्र करणत्वेन तत्त्
चात् इति परिहरति प्राणेति ॥ १२३ ॥

न केवलं चेष्टकत्वं विषयानन्दहेतुता ।
अप्यल्पविषयाल्ँल्लब्ध्वा स्वानन्देमज्जातिक्षणम् ॥१२४॥

"एष ह्येवानन्दयाति", इत्यादिश्रुतिं व्याचष्टे—नेति । विषयानन्द
तामुपपादयति—अपीति ॥ १२४ ॥

विषयानन्दपर्यन्तैः कामतृष्ण्याऽऽदिहेतुभिः ।
ब्रह्मसत्त्वे स्थिते मुक्ति श्चिन्त्यते विद्वदज्ञयोः ॥ १२५ ॥

इदानीं ब्रह्मास्ति नोवेति संदिह्य कामतृष्ण्यादिविषयानन्दपर्यन्तैः
र्व्यवस्थापितं ब्रह्मसत्त्वमुपसंहरन्—अज्ञानी मुच्यते न वा तत्त्वविन्मुच्यते न
इति संशयद्वयप्रतिक्षेपाय "यदाह्येवैष एतस्मिन्नदृश्ये, इत्यादिश्रुतिं व्याख्या
द्वदविदुषो र्मुक्तिचिन्तां प्रतीजानीते—विषयेति ॥ १२५ ॥

विद्वान् ब्रह्मेति मुक्तश्चेन्मुच्येताऽज्ञोऽप्यभिज्ञवत् ।
ब्रह्मरूपोऽपि बद्धश्चेदज्ञोऽभिज्ञोऽपिबध्यते ॥ १२६ ॥

मुक्तिश्चिन्त्यते इत्युक्तं तां चिन्तामाह—विद्वानिति । विद्वान् ब्रह्म
इति हेतो र्मुक्तश्चेत्तदा तदात्मकत्वादज्ञोऽप्यभिज्ञवन्मुच्येत । ब्रह्मरूपो
द्धश्चेत्तदाऽविशेषादभिज्ञोऽपि बध्यते इति योजना ॥ १२६ ॥

मैवं ब्रह्मात्मैक्यबोध एवैको मोक्षकारणम् ।
ऐक्यदर्शी मुच्यतेऽतो भेददर्शी न मुच्यते ॥१२७॥

वस्तुस्थितं ब्रह्मरूपत्वं न मोक्षहेतुरपितु ज्ञायमानं तत् तज्ज्ञानं

समाधानम्—यदाहीत्यादिश्रुतिं व्याचक्षाण आह—नैवमिति । ब्रह्मात्मैक्यबोधो ब्रह्मप्रतियोगिकस्वानुयोगिकाभेदबुद्धिः । ऐक्यदर्शीत्यस्य ब्रह्मात्मेत्यादिः । भेददर्शीति । अस्यापि स एवादिः ॥ १२७ ॥

ऊद्ध्वाकारे समेऽप्यस्मिंश्चोरदर्शी बिभेति हि ।
स्थाणुदर्शी निर्भयोऽतस्तत्त्वबोधप्रयोजकः ॥ १२८ ॥

ब्रह्मात्मैक्यबोधरूपतत्त्वबोधस्याभयात्मकमोक्षकारणत्वे दृष्टान्तमाह—ऊद्ध्वेति । ऊद्ध्वमुन्नतत्वमाकार आकृतिर्यस्मिन् तस्मिन् । अस्मिन् पुरोवर्तिनि, समे एकस्मिन्नपि । प्रयोजकइत्यस्याभयस्येत्यादिः ॥ १२८ ॥

ज्ञातेऽपि कर्मकाण्डार्थे वेदान्तार्थमजानतः ।
जन्मादिभीर्भवत्येव वाय्वादीनां यथा तथा ॥ १२९ ॥

इदानीं "भीषास्माद्वातः पवते" इत्यादिमन्त्रं व्याख्यातुमवतारयति—ज्ञातइति । यथा वाय्वादीनां भीर्भवति तथा पूर्वार्धोक्ताधिकारिणो जन्मादिभीर्भवत्येवेति योजना ॥ १२९ ॥

वायुः सूर्यो वह्निरिन्द्रो मृत्युश्चातीतजन्मनि ।
धर्मज्ञा अप्यतत्त्वज्ञा इदानीं बिभ्यतीश्वरात् ॥ १३० ॥

यथाऽऽत्माज्ञानाद् वाय्वादीनां भयं भवति तथान्येषामपि तदज्ञानाद्भयं भवतीत्युक्तम् । तत्र दृष्टान्तपरं भीषेत्यादिमन्त्रं व्याचष्टे—वायुरिति । इदानीं तत्तदधिकारसमयेऽपि ॥ १३० ॥

ज्ञानी कामानेति सर्वान् "रसो वै स" इति श्रुतम् ।
ब्रह्मानन्दं स्फुटीकर्त्तुं मीमांसाऽऽनन्दगोच्यते ॥ १३१ ॥

इदानीं "सैषाऽऽनन्दस्य मीमांसा भवति" इत्यादिं न बिभेति कुतश्चने"त्यन्तं ग्रन्थं व्याख्यातुमवतारयति–ज्ञानीति । "सोऽश्नुते सर्वान् कामानिति" "रसो वै स "इति च श्रुतं ब्रह्मानन्दमित्याद्यर्थः ॥ १३१ ॥

सम्पूर्णो मानुषानन्दः सार्वभौमे गुणैर्युते ।
हिरण्यगर्भे सम्पूर्णो देवानन्दोऽवधीहितौ ॥ १३२ ॥

गुणैर्युते सार्वभौमे सम्पूर्णो मानुषानन्दो हिरण्यगर्भे देवानन्दः स यतस्तावुक्तानन्दाववधी इत्याह—सम्पूर्ण इति ॥ १३२ ॥

मध्यस्थे पूर्वपुण्यानामुत्कर्षाद्वर्धते सुखम् ।
सर्वेषां यत्सुखं तत्तु निष्कामे ज्ञानिनीष्यते ॥ १३३ ॥

आत्मज्ञानिनः सर्वकामाप्तिं फलमुपपादयति । मध्यस्थइति । नि निरुक्तसार्वभौमहिरण्यगर्भयोरन्तराले ये मनुष्यगन्धर्वादयस्तेषु प्राक्तनपुण्याना र्षात्सुखं बर्द्धते । यत्सुखं सर्वेषां तत्सुखं निष्कामे ज्ञानिनीष्यते—इत्येष एव ऽश्नुते सर्वान्कामानित्यत्र सर्वकामाप्तिरित्युत्तरेणान्वयः ॥ १३३ ॥

सर्वकामाप्तिरेषाथ रसाख्यानन्द उच्यते ।
अध्यात्ममधिभूतञ्चाधिदैवं चैक एव सः ॥ १३४ ॥

"स यश्चायं पुरुषे यश्चासावादित्ये स एक" इति श्रुतितात्पर्यविषयी त्ममधिभूतमधिदैवञ्चैक एवरसानन्द इत्याह—अथेत्यादिना । अध्यात्मम् बुभुत्सुपुरुषे । अधिभूतम् तद्भिन्नेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु । अधिदैवम् आदित्यादौ ॥ १३४ ॥

सर्वे स्वस्वपदे तृप्ताः कामयन्ते न तत्पदम् ।
ज्ञानी तु दोषदृष्ट्याऽत्र निष्कामस्तैः समस्ततः ॥ १३५ ॥

इदानीं सर्वपर्यायगतस्य श्रोत्रियस्य चाकामहतस्येतिवाक्यस्य तात्प षयीभूतं ज्ञानिनः सार्वभौमादिहिरण्यगर्भान्तसाम्यमुपपादयति । सर्वे इति । सा र्वभौमादिहिरण्यगर्भान्ताः स्वस्वपदे तृप्ताः तत्प्राप्येतिभावः । तत्पदं स्वस्व कामयन्ते । ज्ञानीतु—अत्र तेषांपदे दोषदृष्ट्या क्षयित्वादिबुद्ध्या निष्का निष्कामत्वाच्चैः सार्वभौमादिभिः सम इति योजना ॥ १३५ ॥

बुभुत्सौ पुरुषेऽन्येषु मनुष्येषु च योऽस्ति यः ।
आदित्ये चान्यदेवेषु सआनन्दो न भिद्यते ॥ १३६ ॥

"स यश्चायं पुरुषे" इत्यादिं "न बिभेति कुतश्चने" त्यन्तमन्थं व्याच श्लोकपञ्चकेन—बुभुत्सावित्यादिना । अस्तिपदोत्तरं यच्छब्दः; आदित्ये देवेष्वित्युत्तरान्वयी ॥ १३६ ॥

परप्रेमास्पदत्वस्य लक्षणस्यैकरूपतः ।
लक्ष्यानन्दो नभिन्नः स्यादखण्डैकरसो ह्यतः ॥ १३७ ॥

स आनन्दो न भिद्यते इतिप्रतिज्ञायां परप्रेमास्पदत्वं हेतुमाह—परेत्यादि । हियतोऽभिन्नोऽतोऽभिन्नत्वादखण्डैकरसः स्वगतसंजातीयभेदशून्यः ॥ १३७ ॥

एवं विद्वान् स्वपुत्रादेः कोशषट्कात्प्रकल्पितात् ।
व्युत्थायाखण्डैकरसे स्वानन्दे प्रतितिष्ठति ॥ १३८ ॥

अखण्डैकरसानन्दात्मकज्ञानस्यानन्देप्रतिष्ठारूपंफलमाह—एवमिति ॥१३८॥

सार्वभौमादिकानन्दाः पूर्वेभ्यः शतसंख्यया ।
परेऽधिकास्तेतु लेशा ब्रह्मानन्दस्य विन्दुवत् ॥ १३९ ॥

सार्वभौमादिकानन्दा आत्मानन्दस्य लेशा इति स्वानन्दे प्रतिष्ठारूपं फलमुत्कृष्टमित्याशयेनाह—सार्वेति । परे सार्वभौमादिका आनन्दाः पूर्वेभ्यः शतसंख्ययाऽधिकेत्यादियोजना ॥ १३९ ॥

तस्मादियत्ता नैवास्य वक्तुं ध्यातुं च शक्यते ।
न विभेत्येव तं विद्वान् जन्महेतोः कुतश्चन ॥ १४० ॥

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति श्रुतिं व्याचष्टे—तस्मादिति । तमात्मानम् । श्रुतिस्थकुतश्चनेत्यस्य व्याख्या, जन्महेतोरिति । जन्मरूपहेतोः । जन्मेति- मरणादेरप्युपलक्षणम् ॥ १४० ॥

पुण्यं नाकरवं कस्मात्पापं तु कृतवान् कुतः ।
इति चिन्ता तपत्यज्ञं ज्ञानिनं न तपत्यसौ ॥ १४१ ॥

इदानीं "मेतꣳहवावनतपती"त्यादिं "किमहं पापमकरव"मितीत्यन्तं ग्रन्थं व्याचष्टे—पुण्यमिति ॥ १४१ ॥

तापकत्वं तयोर्विद्वानुपेक्ष्यानुष्ठितं तयोः ।
आत्मानं प्रीणयन् बोधात्सुदृढीकुरुते धियम् ॥ १४२ ॥

निरुक्तचिन्ता ज्ञानिनं न तपतीत्युक्तमर्थमुपपादयितुं 'स य एवं विद्वानि-

त्यादिं य एवं वेदे"त्यन्तं ग्रन्थ"महमन्नमहमन्नाद" इत्यादिश्रुत्यन्तरैकवाक्य
सविस्तरं व्याख्यातुमारभते—तापकत्वमित्यादिना। तापकत्वमिति। पुण्यापुण्य
तापकत्वं तापहेतुत्वं विद्वान् जानन् तयोरनुष्ठितमनुष्ठानमुपेक्ष्यात्मानं बोधात्
न् तर्पयन् धियमात्मविषयां बुद्धिं सुदृढीकुरुते इति योजना ॥ १४२ ॥

देहेन्द्रियकृते पुण्यपापे चात्मतया सदा।
पश्यन् सर्वात्मतां स्वस्य गायन् साम्नावतिष्ठते ॥ १४३

किञ्च पुण्यपापे देहेन्द्रियकृते पश्यन् ते सदा आत्मतया च पश्यन्
स्य सर्वात्मतां साम्ना गायन् जीवन् मुक्तो भवतीत्याह—देहेन्द्रियेति ॥ १४

अहमन्नं तथान्नादः श्लोककृच्चेतरोऽप्यहम्।
इति सर्वात्मतां गायन् जीवन्मुक्त इतीर्यते ॥ १४४

साम्ना गायन्नित्युक्तसामार्थतः पठति–अहमिति–इतरः श्लोकः ॥१

जीवन्मुक्त्यवसानाया विद्याया मुख्यसाधनम्।
विचारो ब्रह्मणस्तेन भृगुर्ब्रह्मावबुद्धवान् ॥ १४५ ॥

जीवन्मुक्त्यवसानाया विद्याया मुख्यं साधनं ब्रह्मविचारो भवति तेन
ह्मविचारेण भृगु ब्रह्म साक्षात्कृतवान् इत्यर्थकेन पद्येन व्याख्यातुं भृगुवल्लीमव
यति—जीवन्निति। तेनेति। "स तपस्तप्त्वा आनन्दो ब्रह्मेति व्यजाना"
श्रुतौ तपः पदार्थो विचार इति भावः ॥ १४६ ॥

सत्यं तपो दमः शान्ति र्दानं धर्मः प्रजाग्नयः।
अग्निहोत्रं यागयोगो न्यासश्चैतैर्बुभुत्सताम् ॥ १४६ ॥
न्यासोऽधिकं तपो न्यासी युञ्जीतात्मानमोमिति।
योगिनस्तस्य देहांशा यागाङ्गैरखिलैः समाः ॥ १४
अहोरात्रादिकालास्तु समा दर्शादियागकैः।
जीवनं सत्रतुल्यं स्यान्मुच्यते योगिसेवकः ॥ १४८

स तपोऽतप्यतेत्युपक्रमस्थतपः पदार्थमाह—सत्यमित्यादिनान्या
न्तेन। एतैरिति। सत्यादिभिर्ब्रह्मज्ञातुमिच्छतामधिकमुत्कृष्टं तपो न्यास इत्य

न्यासी सन्न्यासी आत्मानमोमिति ब्रह्मेति युञ्जीत ध्यायेत् नतु नित्यनैमित्तिककर्माणि कुर्वीत, नचतदकरणे प्रत्यवायो युञ्जानस्य तस्य देहावयववादीनां तदात्मकत्वादित्याह—न्यासीत्यादिनासत्रतुल्यंस्यादित्यन्तेन । तस्येति पदं देहांशा इत्यनेनाहोरात्रादिकालाइत्यनेन जीवनमित्यनेन च सम्बध्यते । योगिसेवाफलमाह—मुच्यतेयोगिसेवक इति ॥ ४६ ॥ ४७ ॥ ४८ ॥

सचोत्तरायणे प्रेत आदित्यं प्राप्य मुच्यते ।
अयने दक्षिणे प्रेतश्चन्द्रं प्राप्य न मुच्यते ॥ १४९ ॥

सयोगीविरक्तोऽकृतसाक्षात्कार उत्तरायणे मृतः सन् आदित्यद्वारा हिरण्यगर्भलोकं प्राप्य मुच्यते । अयने दक्षिणे मृतश्चेच्चन्द्रलोकं प्राप्य पुनरावर्तते इत्याह—सचेति ॥ १४९ ॥

तैत्तिरीयकविद्यायाः प्रकाशेनोपसेविनः ।
बुभुत्सूननुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १५० ॥

इतिविद्यारण्यमुनिकृतेऽनुभूतिप्रकाशे तैत्तिरीयविद्याप्रकाशोनामद्वितीयोऽध्यायः

तैत्तिरीयकव्याख्यानमुपसंहरति—तैत्तिरीयकेति । प्रकाशेनेति । अनेन ग्रन्थेनेत्यर्थः ॥ १५० ॥

इतिमितप्रकाशविवृत्तौ तैत्तिरीयविद्याप्रकाशोनाम द्वितीयोऽध्यायः ॥

छान्दोग्ये श्वेतकेतुर्या मारुणेर्लब्धवानिमाम् ।
ब्रह्मविद्यां संग्रहेण वक्ष्येऽहं सुखबुद्धये ॥ १ ॥

इदानीं छान्दोग्योपनिषदं व्याख्यातुं प्रतिजानीते—छान्दोग्य इति । संग्रहेण संक्षेपेण । सुखबुद्धयेऽनायासेनबोधाय ॥ १ ॥

वेदानधीत्य गर्वेण श्वेतकेतुः पराङ्मुखः ।
आसीत्प्रत्यङ्मुखीकर्तुंगुरुराहातिविस्मयम् ॥ २ ॥

इदानीं "सर्वान्वेदानधीत्य महामना" इत्यादिं "कथन्नु भगवः सआदेशो

भवती''त्यन्तं ग्रन्थं व्याचष्टे—वेदानधीत्येत्यादिना श्लोकत्रयेण । गर्वेण पाण्डि-
भिमानेन । पराङ्मुखः अनात्मनिष्ठ आसीदितिसम्बन्धः । प्रत्यङ्मुखो
आत्मनिष्ठं कर्त्तुम् । गुरुरिति । ''श्वेतकेतो यन्नु सोम्येदं महामना'' इत्या
अविज्ञातं विज्ञातमित्यन्तं वाक्यमतिविस्मयं यथा भवति तथा गुरुराह—॥ २

एकतत्त्वे श्रुते सर्वमश्रुतं च श्रुतं भवेत् ।
अमतं च मतं तद्वदविज्ञातं च बुध्यते ॥ ३ ॥

''येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातंविज्ञात''मिति वाक्यं व्या
एकेत्यादि ॥ ३ ॥

नर्ग्वेदज्ञानमात्रेण यजुर्वेदादि बुध्यते ।
तस्मादेकधिया सर्वज्ञानं स्यादित्यलौकिकम् ॥ ४ ॥

''कथं नु भगवः स आदेशो भवती''ति ग्रन्थं व्याचष्टे—नर्ग्वेदज्ञा-
त्रेणेति । अलौकिकमदृष्टचरम् ॥ ४ ॥

मैवं मृद्धेमलोहेषु लौकिकेष्वस्य दर्शनात् ।
मृदादिज्ञानतः सर्वं मृन्मयं ज्ञायते स्फुटम् ॥ ५ ॥

''यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि''त्यादिना
सोम्यसआदेशोभवती''त्यन्तेन ग्रन्थेन समाधातुमाह—मैवमित्यादिश्लोकैरेकविज्ञा
अस्येति । एकविज्ञानस्य सर्वाविज्ञातज्ञानहेतुत्वदर्शनादित्यर्थः एत देवाह—मृ
त्यादिना ॥ ५ ॥

मृदो घटशरावाद्या विकारास्तत्तदाकृतिः ।
मृद्बोधाद् बुध्यते नेति यदुच्येत न बुध्यताम् ॥ ६ ॥

मृद इति । मृदो घटशरावाद्या विकारा भवन्तीति शेषः । तत्तदा
घटाद्याकृतिर्मृद्बोधान्न बुध्यते इति यदुच्येत तन्न श्रद्धेयमित्यर्थः ॥ ६ ॥

आकृत्याधारभागो यो घटस्यासौतुबुध्यते ।
आधारो मृत्तिकाऽऽधेय आकारश्चोभयं घटः ॥ ७ ॥

आधारभागमात्रेऽपि ज्ञाते ज्ञातो घटो भवेत् ।
गोपुच्छमात्रसंस्पर्शाद्गोस्पर्शव्रतपूर्त्तिवत् ॥ ८ ॥

घटस्याकृत्याधाररूपो यो भागः स तु बुध्यते तद्बोधात् घटो बुध्यते इति सदृष्टान्तमाह–आकृत्येत्यादिपद्यद्वयेन ॥ ७ ॥ ८ ॥

आकृते र्यद्वदज्ञाने घटाज्ञानं त्वयोच्यते ।
तद्वदाधारबोधेन घटो बुद्धः कुतो नहि ॥ ९ ॥

आकृतेरिति पूर्वार्द्धस्याकृतिज्ञाने घटज्ञानमिति फलितोऽर्थः ॥ ९ ॥

आकृत्याधारयोस्तुल्यं भागत्वं न मृदं विना ।
केवलाकृतिमात्रः सन् घटः क्वापि समीक्ष्यते ॥ १० ॥

घटावयवत्ताऽऽकृत्याधारयोः समेत्याह–आकृत्येति । न मृदं विनेत्युत्तरार्द्धेन सम्बध्यते ॥ १० ॥

मृद्रूपात्कारणद्रव्यात्कार्यद्रव्यं घटादिकम् ।
अन्यत्तत्समवेतं हि मृदीति प्राह तार्किकः ॥ ११ ॥

मृद्रूपकारणद्रव्याद् घटादिकार्यं भिन्नं यतस्तद्घटादि कार्यं मृदि समवेतमिति तार्किकमतमाह–मृदिति ॥ ११ ॥

स्वयुक्त्याऽसौ तथा ब्रूते नत्वेतल्लोकसम्मतम् ।
घटे मृदः पृथग्भूते कीदृक् तत्त्वमुदीर्यताम् ॥ १२ ॥

घटो मृदो भिन्नो न तद्भिन्नत्वेनाऽप्रतीयमानत्वात् । यथा स्वस्माद्भिन्नत्वेऽप्रतीयमानो घटः स्वस्माद्भिन्नो न भवति । तथाचायं तस्मात्तथेत्याह–पूर्वार्द्धे स्वेति । स्वयुक्त्येति । मृदि घट इत्यादिप्रतीत्यन्यथानुपपत्तिरूपया । तथा पूर्वोक्तम् ॥ १२ ॥

वाचैवारभ्यते किं वा पृथगानीयते वद ।
वाचैवारभ्यते तत्त्वं किञ्चिन्न स्यात् खपुष्पवत् ॥ १३ ॥

मृदः पृथग्भूतस्य घटस्य किं तत्त्वमित्युक्ते तत्र घटे मृदः पृथग्भूतत्वं किं

वागुपादानकत्वमुत मृदं विनाऽऽनीयमानत्वम् इति विकल्पयति-वाचा इति ।
मृदः पृथक् निस्तत्त्वो वागुपादानत्वात्खपुष्पवदित्युत्तरार्द्धेनाह-वाचा इति ॥ १

मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ।
बन्ध्यापुत्र इति प्रोक्तो निस्तत्त्वमखिलं खलु ॥ १४ ॥

खपुष्पवदिति दृष्टान्तं प्रपञ्चयति- मृगेति इति प्रोक्त इति । इतिशब्द
तीयमानो बन्ध्यापुत्र इत्यर्थः । निस्तत्त्वमिति । अत्राखिलं बन्ध्यापुत्र तद्धि
निस्तत्वे इत्यर्थः ॥ १४ ॥

पृथगानयनं कर्तुं धीमताऽपि न शक्यते ।
अतोऽनृतो घटो नैव सत्य इत्यभ्युपेयताम् ॥ १५ ॥

मृदं विना देशान्तरं प्राप्यते इत्यर्थकं पृथगानीयत इति कल्पं दूष
पृथगिति । अयम्भावः, घटो मृदः पृथक् सत्यो न भवति, ततः पृथगानेतुमश
त्वात् । यो यतः पृथक् सत्यो भवति सततः पृथगानेतुं शक्यो भवति यथा
पृथक् सत्योऽश्वस्ततः पृथगानेतुं शक्यते नचायं तथा तस्मान्न तथेति । नैव
त्य इत्यन्वयः । अतो वाचारम्भणं विकारो नामधेयमिति श्रुत्यभिप्रेतं वागुपा
सिद्धमिति भावः ॥ १५ ॥

समवायस्त्वया प्रोक्त आरोपं ब्रूमहे वयम् ।
स्थाणावारोपितश्चौरो यथा मृदि घटस्तथा ॥ १६ ॥
आरोपात्पूर्वमूर्ध्वं च तदभावादसत्यता ।
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ १७

मृदि घटसमवाय इति तार्किकाः, तत्रारोपितो घट इति वेदान्तिन
विप्रतिपत्तिं प्रदर्श्य घटः स्वप्रतीतिसमयेऽपि मृन्निष्ठात्यन्ताभावप्रतियोगी प्रती
मयात्पूर्वोत्तरकालावच्छेदेन मृन्निष्ठात्यन्ताभावप्रतियोगित्वात् स्थाणावारोपितं
दित्याह—द्वाभ्यां समवाय इति ॥ १६ ॥ १७ ॥

कालत्रयानुगः स्थाणुः सत्यो मृच्च तथेक्ष्यताम् ।
सत्यानृते च मिथुनी कृत्यकुम्भ इतीर्यते ॥ १८ ॥

मृत्तिकेत्येव सत्यमित्येतद्व्याचष्टे—कालेति अत्रायं प्रयोगः, मृत

कालत्रयानुगतत्वात्, चोरारोपाधिष्ठानस्थाणुवदिति । घट इति ज्ञानविषयतापन्ने मृदाकृती सत्यानृते कुम्भपदार्थे इत्याह—सत्येति ॥ १८ ॥

शब्दप्रत्ययकार्याणि सन्ति मृद्घटयोः पृथक् ।
स्थाणौ चौरे च दृष्टानि पृथक्तानि तथात्र च ॥ १९ ॥

यद्यपि यथा भिन्नाः शब्दज्ञानक्रियात्मका व्यवहाराः स्थाणुपुरुषयोः सन्ति तथा ते भिन्ना मृद्घटयोस्तथापि विवेकीसत्यत्वान्मृदमाद्रियते मिथ्यात्वान्न घटादिकं यथा रसर्जीषसमुदायरूपेक्षौ धीमान् रसं गृह्णाति नर्जीषमित्याह—त्रिभिः । शब्देति ॥ १९ ॥

द्विविधव्यवहारस्य सद्भावेऽपि विवेकिनः ।
सत्यायां मृदि तात्पर्यं नानृतेऽस्ति घटादिके ॥ २० ॥

द्विविधेति । विविधेति पाठो युक्तः ॥ २० ॥

इक्षौ रसोऽस्त्यृजीषं च रसं गृह्णाति बुद्धिमान् ।
नर्जीषमेवं कुम्भेऽपि मृद्भागे युक्तआदरः ॥ २१ ॥

निस्सारितरसभाग इक्षुदण्डः, ऋजीषम् ॥ २१ ॥

ये घटादिषु मृद्भागा ज्ञातव्या आदरेणते ।
सर्वेऽपि राशिविज्ञानादेव ज्ञाता भवन्ति हि ॥ २२ ॥

अधाराधेयोभयात्मकघटादिषु ये मृद्भागाः सत्यात्मकास्ते आदरेण द्रष्टव्या नतु तत्रानुगतत्वापराधेन तेऽनादरणीयाः । मृद्भागस्यादरणीयत्वे हेतुमाह—सर्वेऽपीति । यतः सर्वेऽपि विकाराघटादयो मृद्ज्ञानाज्ज्ञाता भवन्तीत्यर्थः ॥ २२ ॥

मृद ऐक्येऽपिसर्वत्वमाकारैस्तदुपाधिभिः ।
निरुपाधिकविज्ञानात्सर्वोपहितधीर्भवेत् ॥ २३ ॥

ननु मृद एकत्वात्तदात्मकसत्यभागस्य सर्वं मृन्मयमिति श्रुत्युक्तं सर्वत्वमयुक्तमित्याशङ्क्यपृथुबुध्नोदराकृतिरुपैरुपाधिभिस्तत्र तत्त्वमारोपितमिति परिहरति—मृद इति । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति श्रुतिभागं तात्पर्यतो व्याचष्टे—निरिति । उपाधिरहितमृज्ज्ञानाद्घटाद्यात्मकसर्वोपहि-

तस्य ज्ञानं भवतीत्यर्थः ॥ २३ ॥

कटकादौ सत्यभागा बुद्धाहेमधिया तथा ।
कुठारादौ सत्यभागा बुध्यन्ते लोहबुद्धितः ॥ २४ ॥

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादित्यादौ कृ
समित्येव सत्यमित्यन्ते मृद्दृष्टान्तग्रन्थव्याख्यामातिदिशति—कटकेति । तथे
अस्य यथा घटादौ मृद्भाग इति शेषः । तथेत्युत्तरार्द्धेनाप्यन्वेति ॥ २४ ॥

यद्यत्कार्यं तस्य तस्य धीःस्वोपादान बुद्धितः ।
इति व्याप्तिं विवक्षित्वा दृष्टान्ता वहवःश्रुताः ॥ २५ ॥

बहुदृष्टान्तदाने श्रुतेरभिप्रायमाह—यद्यदिति । दृष्टान्ता इति । मृदे
य इत्यर्थः । श्रुताः श्रुत्या बोधिताः ॥ २५ ॥

सर्वं जगदुपादाने श्रुते सति भवेच्छ्रुतम् ।
मते ज्ञाते मतं ज्ञातमित्यलौकिकता कुतः ॥ २६ ॥

नर्ग्वेदज्ञानमात्रेण यजुर्वेदादि बुध्यते तस्मादेकधिया सर्वं ज्ञातं स्या
त्यलौकिकमित्युक्तामलौकिकतां दूषयति । सर्वमिति । मते मतं ज्ञाते ज्ञातमिति
जना ॥ २६ ॥

श्रवणं गुरुशास्त्राभ्यां मननं तु स्वयुक्तिभिः ।
विज्ञानं स्वानुभूत्येति श्रवणादेरसंकरः ॥ २७ ॥

सदेव सोम्येदमग्र आसीदित्यादिग्रन्थेन गुरुवाक्यभूतेन श्वेतकेतोः श्र
वर्णयिष्यन् प्रसङ्गादात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य इति श्रुत्यन्तरो
श्रवणमननविज्ञानानामसाङ्कर्यं तल्लक्षणप्रदर्शनपूर्वकमुपपादयति—श्रवणमिति ।
रुशास्त्राभ्यामिति । गुरुशास्त्रप्रयोज्योऽद्वितीयब्रह्मविषयकतात्पर्यावधारणानुकूले
नसव्यापारः श्रवणमित्यर्थः । स्वयुक्तिभिरिति । युक्तिप्रयोज्यो मानान्तरविरो
ङ्कानिराकरणानुकूलतर्कजनको मानसव्यापारो मननमित्यर्थः । स्वानुभूत्येति ।
भेदे तृतीया ॥ २७ ॥

श्वेतकेतुः सर्वबोधमेकबोधेन विश्वसन् ।
प्रत्यङ्मुखोऽभवत्तस्मै सर्वोपादानमीरितम् ॥ २८ ॥

श्वेतकेतोः श्रवणाधिकारित्वप्रयोजकं प्रत्यङ्मुखत्वं दर्शयन् सदेव सोम्येदमग्र असीदित्यादि व्याख्यातुमवतारयति—श्वेतकेतुरिति । श्वेतकेतुरेकबोधेन सर्वबोधे, विश्वसन् प्रत्यङ्मुखोऽन्तर्मुखवृत्तिरभवत् । पूर्वोपदेशेन तदनन्तरं पिता सदेव सोम्येदमग्रआसीदित्यादिना सर्वोपादानं सदुक्तवानित्यर्थः ॥ २८ ॥

इदं जगन्नामरूपयुक्तमद्यसदीक्ष्यते ।
सृष्टेः पुरा सदेवासीन्नामरूपविवर्जितम् ॥ २९ ॥
मृद्धेमलोहवस्तूनि विकारोत्पत्तितः पुरा ।
निर्विकाराण्युपादानमात्राण्यासन्यथा तथा ॥ ३० ॥

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्येतद्व्याचष्टेपद्यषट्केन, इदमित्यादिना । अधुना सत्यत्वेन प्रतीयमानं नामरूपविशिष्टं सृष्टेः प्राङ्नामरूपरहितं सदेव,उपादेयत्वात्, यद्यदुपादेयं तत्स्वोत्पत्तेः प्राक् निर्विकारोपादानमात्रं यथा मृदुपादानकघटादिकं तथा चेदं तस्मात्तथेत्याह—इदमित्यादिपद्यद्वयेन । विकारोत्पत्तितः । कार्योत्पत्तितः । उपादानमात्राणीत्यस्य व्याख्या निर्विकाराणीति ॥ २९ ॥ ३० ॥

स्वसजातिविजात्युत्थभेदत्रय विवर्जनात् ।
एकमेवाद्वितीयं तत्सद्वस्त्वित्यवगम्यताम् ॥ ३१ ॥

क्रमेणैकमेवाद्वितीयमितिपदत्रयेण स्वगतसजातीयविजातीयभेदनिरासान्निरुक्तभेदत्रयशून्यं सद्वोद्धव्यमित्याह—स्वेति ॥ ३१ ॥

वृक्षस्य स्वगतो भेदः शाखाद्यवयवैस्तथा ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥ ३२ ॥

वृक्षादौ भेदत्रयं सिद्धमित्याह—वृक्षस्येति । तथेत्युत्तरान्वयि ॥ ३२ ॥

न सत्यवयवाः सन्ति तेनैकं स्यादखण्डकम् ।
जात्यभावात्सजातीयं विजातीयं च दुर्भणम् ॥ ३३ ॥

वृक्षादिवत् वस्तुत्वात्सति प्रसक्त भेदत्रयस्यैकमेवाद्वितीयमिति पदत्रये-
स्या निरासः कृतस्तमुपपादयति—न सतीति । सन्न सावयवं तत्त्वेन निरूपयितु-
मशक्यत्वात्, यत्तत्त्वेन निरूपयितुं न शक्यते नतत्सावयवं यथा तार्किकाभिमतो
काशं तथा चेदं तस्मात्तथा व्यतिरेके घटादिर्दृष्टान्त इत्यनुमानप्रयोगः । तेन
यवभिन्नत्वेन । श्रौतमेकपदं व्याचष्टे—अखण्डकमिति । अवयवशून्यमित्य
तथा च न तत्र स्वगतभेद इति भावः । सत्तात्मत्वादिजात्यभावात्सतः स
दुर्भणं दुर्वचमित्यर्थः । अयं भावः, अनुगतप्रतीत्या गोत्वादि सामान्यं सिद्ध
नत्वात्मत्वे सास्ति, येन सामान्यनामकमात्मत्वं स्यात् । नचैवमपि सत्सदित्य
बुद्धया सत्तासामान्यं सिद्धयेत् इति चेन्न । लाघवेन सद्रूपस्यैकस्य तादृशानु
द्धौ भानाङ्गीकारेणोपपत्तौ तदतिरिक्तसत्ताधर्मकल्पनानौचित्यादिति । जात्यभा
जातीयस्य दुर्वचत्वे तत्प्रतियोगिकभेदोऽपि दुर्वच इतिभावः । एवं स्वगतसजाती
दनिरासमुपपाद्य विजातीयभेदनिरासमुपपादयति—विजातीयमिति । अस्य स
त्यादिः । जात्यभावादित्यनुषज्यते । सतो विजातीयमसत्—तस्य मिथ्यात्वेन
स्तवभेदो न घटते । कल्पितस्तुभेदो वियदादिवदस्तीति भावः ॥ ३३ ॥

एकादिभिः पदैर्भेदत्रयमत्र निवार्यते ।
सर्वभेदविहीनं यदखण्डं तत्सदीक्ष्यताम् ॥ ३४ ॥

एकादिपदत्रयार्थं दर्शयन् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्य-
स्य वाक्यस्यार्थमुपसंहरति—एकादिभिरिति ॥ ३४ ॥

अस्तीति शब्दबुद्धी द्वे दृश्येते नामरूपयोः ।
तदभावात्पुरा सृष्टेः शून्यमाहुर्वैदिकाः ॥ ३५ ॥

तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः स
स्येतद्वयाचष्टे—अस्तीत्यादिना सार्धेन पद्येन । तदिति नामरूपयोरस्तीति शब्द
बुद्धीत्यर्थः । सृष्टेः पुरा शून्यमित्यन्वयः ॥ ३५ ॥

नामरूपात्मकं शून्यात्किलैतदुपपद्यते ।
तदयुक्तं न बन्ध्यायाः पुत्रात्पुत्रान्तरोद्भवः ॥ ३६ ॥
शून्यजत्वे नामशून्यं रूपं शून्यमितीदृशः ।
शून्यानुवेधो भासेत सद्वेधस्त्ववभासते ॥ ३७ ॥

एतन्नामरूपात्मकं शून्यात्किलोपपद्यते इति पूर्वार्द्धे योजना । कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेत्येतच्छून्यवादिमतखण्डनं विवृणोति—तदयुक्तमित्यादिना सार्धपद्येन ॥ ३६ ॥ ३७ ॥

**ततः सत्कारणं सत्तु सर्वसृष्ट्यर्थमैक्षत ।**
**बहु स्यामहमेवातः प्रजायेयेति मायया ॥ ३८ ॥**

सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्येतद्विवृणोति—तत इति । सदनुवेधादित्यर्थः । तदैक्षत बहु स्यां प्रजायेयेत्येतद्व्याचष्टे—सत्त्वित्यादिना—पादोनसार्धश्लोकषट्केन । निरुक्तं सत् सर्वसृष्टिफलकमीक्षणं कृतवदिति द्वितीयपादार्थः । ईक्षणाकारमादर्शयति—बह्विति । अहमेव ननु स्वातिरिक्तं बहु स्यामतः स्वमेव बहु भावयितुं मायया प्रजायेयेति योजना ॥ ३८ ॥

**वस्तुतो बहु भावश्चेदद्वैतं सद्विनश्यति ।**
**माभून्नाश इति श्रुत्या प्रकर्षेण जनिः श्रुता ॥ ३९ ॥**

प्रजायेयेति प्रपदार्थत्वेनोक्तस्य माययेति पदार्थस्य श्रुतिबोधितत्वमादर्शयति— वस्तुत इति । बहुभाव इति । अस्य सत इत्यादिः । विनश्यति न सिद्ध्यति ! नाशइति । अस्य सत इत्यादिः । नाशोऽसिद्धिरित्यभिप्रायेण श्रुत्या श्रुता बोधितेत्यन्वयः ॥ ३९ ॥

**प्रकर्षो नाम पूर्वस्मादाधिक्यंमाधिका तु या ।**
**सा माया न सती नापि शून्या स्याद्दूषितत्वतः ॥ ४० ॥**

प्रपदार्थः प्रकर्षः पूर्वस्मादाधिक्यं तद्विशिष्टा माया सदसद्भ्यां विलक्षणेत्याह—प्रकर्ष इति ॥ ४० ॥

**मायया बहुरूपत्वे सदद्वैतं न नश्यति ।**
**मायिकानां हि रूपाणां द्वितीयत्वमसम्भवि ॥ ४१ ॥**

वस्तुतो बहुभावश्चेदित्यादिनोपपादितमर्थमुपसंहरन् सदसद्विलक्षणमाययेव तत्कार्यैरपि सतः साद्वितीयत्वं न सम्भवतीत्याह—माययेति ॥ ४१ ॥

अचिन्त्यशक्तिर्मायाऽतो दुर्घटं घटयत्यसौ ।
उपादाननिमित्तत्वे कल्पेते सति मायया ॥ ४२ ॥

ननूपादाननिमित्तत्वे एकत्र दुर्घटे कथं माया घटयिष्यतीत्याशङ्क्या-न्त्यशक्तिकत्वान्मैवमित्याह—अचिन्त्येति । अतोऽचिन्त्यशक्तिकत्वात् । सति ब्रह्मणि ॥ ४२ ॥

बहुस्यामित्युपादानभावः प्रोक्तोमृदादिवत् ।
ऐक्षतेतिनिमित्तत्वमिति प्रोक्तं कुलालवत् ॥ ४३ ॥

उपादाननिमित्तत्वे सति श्रुत्याबोधिते नतुस्वकपोलकल्पिते इत्याह-बहुस्यामिति ॥ ४३ ॥

माया वृत्तिविशेषेया चिच्छायासौ सदीक्षणम् ।
ईच्छित्वा ससृजे तेजस्तादृक्संकल्पलीलया ॥ ४४ ॥

ईक्षधात्वर्थमाह—मायेति । सदीक्षणं सत्कर्तृकमीक्षणमित्यर्थः । त-ऽसृजतेत्येतद्विवृणोति—ईच्छित्वेत्यादि सार्धपद्यद्वयेन ॥ ४४ ॥

आकाशवायू प्राक्सृष्टाविति प्रोवाचतित्तिरिः ।
दिङ्मात्रमारुणिः सृष्टे र्वक्तुं तेज उदैरयत ॥ ४५ ॥

तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादे र्वायुवियतोस्तेजसः-न्त सृष्टिप्रतिपादनपरायास्तैत्तिरीयश्रुतेः प्रकृतश्रुत्या विरोधमाशङ्क्य अस्याः दिङ्मात्रप्रदर्शनपरत्वान्मैवमित्याह—आकाशेति । आरुणिः श्वेतकेतुपिता सृष्टे र्दिङ्मात्रं वक्तुं वियद्वायू विहाय तेज उदैरयदुक्तवानितियोजना ॥ ४५ ॥

ब्रह्मोपलक्षणायैव सृष्टिः सर्वत्र कथ्यते ।
जगता कियताप्येतच्छक्यं लक्षयितुं खलु ॥ ४६ ॥

प्रकारान्तरेण विरोधं परिहरति—ब्रह्मोपेति । कियता कतिपयेनापि तत्सत् । सृष्टिवाक्यानां ब्रह्मोपलक्षकत्वेनैवार्थवत्वे सृष्टौ तात्पर्याभावेन तदुपलक्षणस्य च तेज आदिना कतिपयेनापि जगता सम्भवान्न विरोध इतिभावः ॥ ४६ ॥

तैजसोऽचेतनत्वेऽपि तेजःकञ्चुकसंयुतम् ।
सद्ब्रह्म पूर्ववद्वीक्ष्य संकल्पादसृजे ह्यपः ॥ ४७ ॥

"तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत" इत्येतद्विवृण्वँस्तेजःपदार्थे-स्तेजउपहितं ब्रह्मेत्याह—तैजस इति । तेजोरूपकञ्चुकोपहितं सदपः ससृजे इत्यन्वयः । ब्रह्मेति । ननु सांख्यकल्पितप्रधानं तत्रेक्षणासम्भवादिति भावः । वीक्ष्येत्यस्य व्याख्या संकल्पादिति ॥ ४७ ॥

अप्कञ्चुकं ब्रह्म पृथ्वीमन्नहेतुमकल्पयत् ।
तेजोऽबन्नेभ्य एतेभ्यो देहबीजानि जज्ञिरे ॥ ४८ ॥
जरायुजाण्डजोद्भिज्जानीति बीजत्रयं खलु ।
जीवरूपप्रवेशार्थमैक्षत ब्रह्मदेवता ॥ ४९ ॥
दृष्ट्वा भूय इहोत्पन्नास्तेजोऽबन्नाख्यदेवताः ।
एकैकां त्रिवृतं तासु कुर्वे देहादिसृष्टये ॥ ५० ॥

"ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त" इत्येतद्वा-क्यार्थं वर्णयन् श्रुतावन्नहेतुत्वादन्नं पृथिवीत्याह—अप्कञ्चुकमिति । "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम्" इत्येतद्व्याचष्टे—तेज इत्या-दिनार्धद्वयेन । एतेभ्यो जीवाविष्टेभ्यस्त्रिवृत्कृतेभ्यः पक्ष्यादिरूपेभ्यस्तेजोऽब-न्नभूतेभ्य इत्यर्थः । देहबीजान्येव दर्शयति—जरायुजेत्यादिना "सेयं देवतैक्षत ह-न्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्येत-द्विवृणोति—जीवरूपप्रवेशार्थमिति । जीवरूपेण यः प्रवेशस्तदर्थमित्यर्थः । अत्र प्र-काशकृत् "स एष इह प्रविष्ट" इत्यादिश्रुत्येकवाक्यत्वाय दृष्ट्वेतिपदमध्याहृत्य सेयं सल्लक्षणा देवता इमाः सृष्टास्तिस्रस्त्रिसंख्याका देवतास्तेजोऽबन्नलक्षणा दृष्ट्वा हन्तेदा-नीमहं नामरूपे व्याकृत्यानेन जीवेनात्मनाऽनुप्रविशानीत्यैक्षतेति योजनां मुखंव्या-दायस्वपितीत्यादिवदाभिप्रैत्युचरत्रच । भाष्यकृत्तु यथाश्रुतमेव व्याख्यातवान्, तस्यायंभावः । स एष इह प्रविष्ट इत्यादिश्रुतिसिद्धो देहानुप्रवेशो नैतच्छ्रु-तिसिद्धः किन्तु अत्रिवृत्कृतदेवतानुप्रवेश इति । अत्राप्युत्तरपद्यगतं दृष्ट्वेतिपदमनुष-ञ्जनीयम् । ब्रह्मरूपा देवता उत्पन्नास्तेजोऽबन्नाख्यदेवता कर्मभूता दृष्ट्वा जीवाभावे इमा व्यर्था इति जीवरूपप्रवेशार्थमैक्षत इति पूर्वश्लोकार्द्धयोजना । उत्तरश्लोकस्य तु

उत्पन्नास्तेजोऽबन्नाख्यदेवता दृष्ट्वा देह एतासु देवतासु मध्ये एकैकां त्रिवृतं कुर्वे देहादिसृष्ट्ये भूयः पुनस्तासु ऐक्षत तद्विषयकमीक्षणं कृतवतीति । अयं श्लोकः "तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"त्यस्य व्याख्याभूतः । अत्रिवृत्कृतेभ्यो देहसृष्ट्यभावाद्देहादिसृष्टिस्त्रिवृत्करणप्रयोजनम् ॥ ४८ ॥ ४९ ॥ ५० ॥

तेजस्यबन्नयोरंशावल्पौ प्रक्षिप्य मिश्रणात् ।
तेजस्त्रिवृत्कृतं तद्वदन्ययोरपि योज्यताम् ॥ ५१ ॥

त्रिवृत्करणप्रकारं दर्शयति—तेजस्येति ॥ ५१ ॥

तेजोऽबन्नैस्त्रिवृद्भूतैरण्डजादिवपूंष्ययम् ।
निर्माय जीवरूपेण प्राविशत्तेषु सर्वतः ॥ ५२ ॥

"सेयं देव । तैक्षतहन्ताहमिवामास्तिस्रोदेवताअनेनजेविनात्मनानुप्रवि नामरूपे व्याकरवाणीति श्रुतेः पूर्वोक्तरीत्या सेयं सल्लक्षणा देवता नामरूपे व्याकर्तुं नेनैव जीवेन पूर्वसृष्ट्यनुभूतेन प्राणधारयित्राऽऽत्मना स्वरूपेणेमास्तिस्रो देवता अनुप्राविशदितियोजनामभिप्रयन् व्याचष्टे—तेजोऽबन्नैरिति । इमास्तिस्र इ नाण्डजादिवपूंषि ग्राह्याणि । सर्वत आनखाग्रम् ॥ ५२ ॥

अहंकारस्तु चैतन्यसंयुक्तः प्राणधारणात् ।
जीवः स्यात्सर्वदेहेषु व्याप्नोत्यापादमस्तकम् ॥ ५३ ॥

जीवपदार्थमाह—अहमिति । जीवप्राणधारणे इत्येतद्धात्वर्थमनुगमयति प्राणधारणादिति । सर्वदेहेष्वापादमस्तकं व्याप्नोतीति योजना ॥ ५३ ॥

सद्वस्तुन्येवमारोप्य संसारो मायया कृतः ।
अविचारकृतारोपनिवृत्त्यर्थं विचार्यताम् ॥ ५४ ॥

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इतिन्यायमनुसृत्य मायया संसार एवमुक्तप्रकारेण सद्वस्तुन्यारोप्यस्तदनन्तरमविद्याकृतारोपनिवृत्तिप्रयो विचारः कर्तव्य इति श्रुतितात्पर्यमाह—सदिति । अत्रारोप्येतिल्यबन्तः पाठो द एष तु दुर्योजो यदन्तस्तु सुयोजः ॥ ५४ ॥

त्रिवृत्करणमग्न्यादौ स्पष्टं तावद्विचारिणः ।
प्रसिद्धे तैजसेऽप्यग्नावबन्नांशाववस्थितौ ॥ ५५ ॥

"यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि" त्युपक्रम्य "पाठितस्य यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमि"ति श्रुतिं व्याचक्षाणो विचारमेवाह—त्रिवृदित्यादिनापद्यत्रयेण । अग्न्यादावित्यस्याप्रसिद्धेऽत्रिवृत्कृते इत्यादिः । विचारिणस्तावन्निरुक्तेऽग्न्यादौ त्रिवृत्करणं स्पष्टम् । प्रसिद्धे तैजसेऽप्यग्नावबन्नांशाववस्थिताविति योजना ॥ ५५ ॥

ज्वालायां रोहितं रूपं बहुलं तत्तु तेजसः ।
किञ्चिच्छुक्लमपामेतत् किञ्चित्कृष्णं तु भूमिगम् ॥ ५६ ॥

एतदिति । रूपमित्यर्थः । किञ्चित्कृष्णं रूपमित्यन्वयः ॥ ५६ ॥

रूपत्रये भूतगते विविक्ते भौतिकोऽनलः ।
कारणव्यतिरेकेण वाचैवारभ्यते वृथा ॥ ५७ ॥

रूपत्रये इति । तेजआदिभूतगते रूपत्रये विविक्ते विचारेण पृथक्कृते सति भौतिकोऽनलो वाचैवारभ्यतेऽतो वागुपादानत्वात्कारणव्यतिरेकेण वृथेत्यन्वयः ॥ ५७ ॥

जगतश्चाक्षुषस्येत्थं मिथ्यात्वं वक्तुमादितः ।
तेजोऽबन्नत्रयस्यात्र चाक्षुषस्योदिता जनिः ॥ ५८ ॥

प्रसिद्धां वाय्वाकाशयोः सृष्टिं विहाय तेजोऽबन्नत्रयस्य सृष्टिः पूर्वं प्रतिपादिता तत्र परिहारान्तरमाह—जगत इति—अत्र छान्दोग्ये—आदितः—आदौ ॥ ५८ ॥

आदित्यचन्द्रविद्युत्सु मिथ्यात्वं वह्निवन्नयेत् ।
गृहीत्वैतावता व्याप्तिं कार्यमिथ्यात्वमूह्यताम् ॥ ५९ ॥

"यदादित्यस्य रोहितं रूपमित्यादेर्विद्युत्पर्यायगतत्रीणि रूपाणीत्येव सत्यमि"त्यन्तस्य तात्पर्यमाह—आदित्येति । व्याप्तिं गृहीत्वेति । व्याप्तिग्रहश्च यत्कार्यं तत्कारणव्यतिरेकेण मिथ्यैवंरूपः ॥ ५९ ॥

तेजोऽबन्नाख्यकार्याणां मिथ्यात्वे स्यात्सदद्वयम् ।
कारणं सत्यमेषां तु पूर्वेषां ज्ञानिनां मतिः ॥ ६० ॥

"एतद्ध स्म वै तद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रिया" इ
"यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समास इति तद् विदाञ्चक्रु"रित्य
न्दर्भस्यतात्पर्यमाह—तेजोऽबन्नेति । एषां तेजोऽबन्नारव्यकार्याणाम् ॥ ६० ॥

दृश्ये बाह्ये भौतिकत्वमस्तु देहे तु नो तथा ।
इति मूढमतेर्नुत्त्यै देहे भौतिकतोच्यते ॥ ६१ ॥
यदन्नं पार्थिवं भुक्तं तद्धीमांसपुरीषकैः ।
सूक्ष्ममध्यस्थूलभागैर्देहेऽस्मिन्परिणम्यते ॥ ६२ ॥
प्राणलोहितमूत्रांशैरपां परिणतिस्त्रिधा ।
वाङ्मज्जास्थिविभेदः स्यात् घृततैलादितेजसः ॥ ६३ ॥

"यथा खलु नु सोम्येमा" इत्याद्युपक्रम्य पठित"मन्नमशितम्
योऽणिष्ठः सावाग्नि"त्यन्तं वाक्यजातं व्याचष्टे—दृश्यइत्यादिनापद्यत्रयेण । वाङ्म
स्थिविभेद इति-परिणतिरित्यनुषज्यते ॥ ६१ ॥ ६२ ॥ ६३ ॥

स्थूले च मध्यमे भागे कारणानुगतिः स्फुटा ।
धीप्राणवाक्षु संदेहं दधिदृष्टान्ततोऽनुदत् ॥ ६४ ॥
घृते विलीनो दध्यंशोऽनुगतो भाति नस्फुटः ।
तथापि दधिकार्यत्वं विद्यते सर्वसम्मतम् ॥ ६५ ॥
तथा मनः प्राणवाचां भवत्वन्नादिकार्यता ।
अतीन्द्रियत्वात्प्रत्यक्षा कारणानुगतिर्न हि ॥ ६६ ॥

"दध्नः सोम्य सम्मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्स
ति एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति त
भवति । अपां सोम्यपीयमानानां योऽणिमा स उर्ध्वः समुदीषति स प्राणो
तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति" ।
द्वाक्यजातं व्याचष्टे स्थूलइत्यादिनाश्लोकत्रयेण । धीप्राणवाक्षु इति । अस्य
स्विति शेषः । उत्तरत्र न स्फुटो भातीति योजना । कारणानुगतिरतीन्द्रिय
प्रत्यक्षेति योजना ॥ ६४ ॥ ६५ ॥ ६६ ॥

नित्यद्रव्यं मनो नान्नकार्यमित्याह तार्किकः ।
स एषोऽङ्गारदृष्टान्तद्वारेण प्रतिबोध्यते ॥ ६७ ॥

"षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यत" इत्युपक्रम्य पठितस्य "सह पञ्चदशाहानिनाशाऽथ इत्यादेरासमाप्तिसप्तमखण्डस्य तात्पर्यमाह—नित्यद्रव्यमित्यादिनाश्लोकचतुष्टयेन । स इति । तार्किक इत्यर्थः ॥ ६७ ॥

यथा खद्योतमात्रः स्यादङ्गारः काष्ठसंक्षये ।
काष्ठवृत्तौ ज्वलत्यग्निस्तथा विद्यात्मनोऽन्नयोः ॥ ६८ ॥

अङ्गारदृष्टान्तं विवृण्वन् तात्सिद्धमर्थं दार्ष्टन्तिके योजयति—यथेति । यथाऽङ्गारः काष्ठनाशे खद्योतमात्रो भवति काष्ठसत्त्वेऽग्निः सन् ज्वलति तथाऽन्नाभावे मनोऽपचीयते तत्सत्त्वे उपचीयते इत्यर्थः ॥ ६८ ॥

त्यक्तेऽन्ने पञ्चदशसु दिनेषु क्षीयते मनः ।
तेन स्मर्तुं न शक्तोऽभूत् श्वेतकेतुस्स किञ्चन ॥ ६९ ॥
अन्नेन पुष्टे मनसि वेदान् सस्मार तत्क्षणात् ।
अन्वयव्यतिरेकाभ्यां मनोऽन्नमयमिष्यताम् ॥ ७० ॥

तदेव विशदयति–त्यक्तइत्यादिनापद्यद्वयेन । स इति । पञ्चदशसु अहस्सु त्यक्तभोजन इत्यर्थः ॥ ६९ ॥ ७० ॥

भौतिकत्वेऽखिलस्यैवं स्थिते भूतातिरेकतः ।
तन्नास्ति तद्वद्भूतानि नैव सद्व्यतिरेकतः ॥ ७१ ॥

व्याख्यातवाक्यजातस्य पिण्डितार्थमाह— भौतिकत्व इति । भूतातिरेकतः भूतातिरेकाद्भूतारिक्तं तद्भौतिकं नास्ति तद्वत्सद्व्यतिरेकाद्भूतानि नैव सन्तीति वचनविपरिणामेन योजना ॥ ७१ ॥

जगतः कारणं यत्सदद्वैतं तद्विजज्ञिवान् ।
श्वेतकेतुस्तावतास्य जीवत्वं न निवर्तते ॥ ७२ ॥

स्वस्य ब्रह्मत्वबोधेन जीवत्वमपगच्छति ।
इत्यभिप्रेत्य तं शिष्यं पुनः प्रोत्साहयत्यसौ ॥ ७३
स्वप्नावसानं जानीहि मम व्याकुर्वतो मुखात् ।
स्वस्य स्वरूपं सत्तत्वमिति सुप्तौ स्फुटं खलु ॥ ७४

तद्धास्य विजज्ञाविति श्रुतिं व्याचष्टे—जगतइत्यादिनाश्वेतकेतुं न । उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच, स्वप्नान्तं मे सोम्य विजा श्रुतितात्पर्यमाह—तावतास्येत्यादिनेतिसुप्तौस्फुटंखल्वित्यन्तेन । तावता कारणंसदद्वैतमितिज्ञानमात्रेण । स्वस्येति । अस्य यत इत्यादिः । स्वप्न सुषुप्तिः । ननु स्वप्नावसानज्ञानविषयकमेव कुतः प्रोत्साहनमित्याशङ्क्य ति—स्वस्यस्वरूपमिति ॥ ७२ ॥ ७३ ॥ ७४ ॥

यदा सुषुप्तिमाप्नोति पुमानेतं तदा जनाः ।
स्वपितीत्याहुरेतस्य तात्पर्यं प्रविचिन्त्यताम् ॥ ७५
तिङन्तं पदमज्ञानां सुबन्तं तु विवेकिनाम् ।
स्यान्निद्राणस्य नामैतद्वस्तुतत्त्वावभासकम् ॥ ७६

यत्रैतत्पुरुषःस्वपितिनामेत्यंशंव्याचष्टे—यदासुषुप्तिमित्यादिनापद्य एतं सुषुप्तिमन्तम् । एतस्येति । स्वपितिपदस्य किं शयनकर्तरि मुत स्वस्वरूपे इति विचिन्त्यतामित्यर्थः । तिङन्तमिति । लोके प्रयुक्तं स्व तदज्ञानां तिङन्तं शयनकर्तृबोधकम् । विवेकिनान्तु एतत्स्वपितिपदं वस्तुतत्त्व सकं स्वस्वरूपबोधकम् । निद्राणस्य नाम तिङन्तप्रतिरूपकमव्ययमित नामेत्यस्य व्याख्या सुबन्तमिति ॥ ७५ ॥ ७६ ॥

स्वप्नजागरयोर्जीवः सत्तत्त्वाद्भिन्नवद्भवेत् ।
सुषुप्तौ सम्यगेकत्वं याति सद्वस्तुना सह ॥ ७७ ॥

"सता सोम्य तदा सम्पन्नो भवती"त्येतद्विवृणोति—स्वप्नेति ॥ ७

जीवत्वमात्मनः प्राणधारणान्न स्वभावतः ।
सद्रूपत्वं स्वतस्तत्तु स्फुटं स्वपितिनामतः ॥ ७८ ॥

स्वमपीतोति नाम्नोऽस्य निरुक्तिरत्रगम्यताम् ।
स्वरूपं वास्तवं सुप्तौ प्राप्यमित्युदितं भवेत् ॥ ७९ ॥

"स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवती"-ग्रंशं व्याचष्टे—जीवमित्यादिनापद्यद्वयेन । स्वभावतः स्वरूपतः तत्तु सद्रूपत्वं । उदितमिति । अस्य स्वपितिपदेनेत्यादिः ॥ ७८ ॥ ७९ ॥

उपाधेर्मनसो जाग्रत्सुप्त्यवस्थे हि नात्मनः ।
इत्यभिप्रेत्यशकुनिदृष्टान्तःप्रोच्यते धियः ॥ ८० ॥

"स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते । एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मन इत्येतद्व्याख्यातुमवतारयति—उपाधेरिति । अत्र जाग्रच्छब्देन जाग्रत्स्वप्नौ ग्राह्यौ तयोर्भोगाविशेषात् । सुप्तिपदेन सुषुप्तिः । धिय इति । मनस इत्यर्थः । अत्रायंभावः, स्वपितीत्यस्य स्वमपीतो भवतीतिव्याख्यानाज्जीवस्य सुप्तौ स्वरूपप्राप्तिरित्युदितं भवति । तत्र चित्प्रतिबिम्बविशिष्टं मनो जीव इत्युच्यते । तत्र विशेष्यस्य साभासमनस एव सति लयरूपा प्राप्तिर्नतु विशेषणस्य चित इत्याभिप्रेत्य शकुनिदृष्टान्तवर्णनमिति ॥ ८० ॥

शकुनिः सूत्रबद्धो यः स गच्छन् विविधा दिशः ।
अलब्ध्वाधारमाकाशे बन्धनस्थानमाव्रजेत् ॥ ८१ ॥

दृष्टान्तं विभजते—शकुनिरिति ॥ ८१ ॥

सत्तत्त्वे मायया बद्धं मनो जागरणं व्रजेत् ।
अलब्ध्वा तत्र विश्रान्तिं सत्तत्त्वे लीयते पुनः ॥ ८२ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—सत्तत्त्वे इति । सत्स्वरूप इत्यर्थः । तत्रेति । स्वप्नजागरयोरित्यर्थः ॥ ८२ ॥

आत्मच्छायापि मनसा सदागच्छति गच्छति ।
गत्यागती तु संसारः स च स्वात्मनि कल्पितः ॥ ८३ ॥

आभासस्यापि मनोवद्गत्यागतिरूपौ सुप्तिजागरावित्याह—आत्मच्छायेति ।

सदागच्छति—सुप्तौ सत्स्वरूपमागच्छति सदित्यस्य गच्छतीत्यनेन सम्बन्धे पञ्चम्यन्ततया विपरिणामः । स इति । गत्यागतिरूपः संसार इत्यर्थः । स्वा बिम्बे । सहागच्छतीतिपाठेऽप्ययमेवार्थः ॥ ८३ ॥

मनोलयेऽनुपाधिः सन्नात्मा संसारवर्जितः ।
स्वेन वास्तवरूपेण सुषुप्तावत्रतिष्ठते ॥ ८४ ॥

सुषुप्तौ मनोलये चितः स्वरूपेणावस्थितिमाह—मन इति ॥ ८४ ॥

चिच्छाया च वपुः स्थूलमिन्द्रियाण्यात्मबोधने ।
द्वाराणीत्याह मन्त्रोऽयं रूपं रूपमिति स्फुटम् ॥ ८५ ॥

चिच्छाया स्थूलं शरीरमिन्द्रियाणि च स्वात्मानुमितौ परम्परया द्वा नीत्यत्र रूपं रूपं प्रतिरूपो बभूवेति मन्त्रस्य तात्पर्यमाह—चिच्छायेति ॥ ८५ ॥

देहे देहे प्रतिच्छायारूपोऽभूत्स्वात्मबुद्धये ।
मायाभिरिन्द्रो बहुधा देहोऽभूत्स्वात्मबुद्धये ॥ ८६ ॥

उक्तं मन्त्रं व्याचष्टे–देह इति । रूपं रूपमित्यस्य व्याख्या, देहे देहे प्रतिरूप इत्यस्य प्रतिच्छायारूप इति । प्रतिरूपभवनप्रयोजनमाह—स्वात्म इति । "इन्द्रो मायाभिः पुरुरूप ईयते" इति मन्त्रस्य स्थूलं वपुः स्वात्मबोधने रया कारणमित्यत्रापि तात्पर्यमाह—मायाभिरिति । पुरुरूप इत्यस्य व्याख्या धा देह इति ॥ ८६ ॥

इन्द्रियाश्वास्तेन युक्तास्तच्च स्वात्मावबुद्धये ।
छायामाश्रित्य तत्रात्मा बोधितः श्रुतिवर्णनात् ॥ ८७

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्र च" इत्युपक्रम्य पठितस्य "इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आ यमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"—इत्यादिकाठकवाक्यस्येन्द्रियाणिस्वात्मबो म्परया कारणानीत्यत्र तात्पर्यमित्याहेन्द्रियेति । तेन मनसा । तच्च मनश्च स्वात्मावबुद्धये इति । स्वात्मावबोधसहकारीणि भवन्तीति वाक्यशेषः । यदर्थं श्रुत्ये यार्थो वर्णितस्तदधुनाऽऽह—छायामिति । तत्र छायास्थूलशरीरेन्द्रियमध्ये ।

माश्रित्यात्रात्मा बोधितश्छायाया मनसा सह तदानीं स्वात्मनि लयप्रदर्शनेनेतिभा-वः । सुप्तिवर्णनादिति । अस्य व्याख्यातवाक्य इत्यादिः ॥ ८७ ॥

अशनायापिपासोक्त्या देहमाश्रित्य बोध्यते ।
अशनायापिपासाख्याद्वयं स्वपितिनामवत् ॥ ८८ ॥

"अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाऽप एव तदशितं नयन्ते । तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षते—अशनायेति । तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति । तस्य क्व मूलं स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्येतद्वाक्यजातं विवृण्वन् स्थूलदेहद्वारा स्वात्मावबोधमाह—अशनायेत्यादिना पद्यदशकेन ॥ ८८ ॥

अशनाया जनैः प्रोक्ता क्षुधा वस्तुविवेकिभिः ।
नयन्त्यशितमित्येवमप्सु निर्वचनं भवेत् ॥ ८९ ॥

स्वपितिनामवदित्युक्तमर्थं विशदयति—अशनायेति । जनैःसाधारणजनैरशनाया क्षुधा प्रोक्ता । वस्तुविवेकिभिरशनाया शब्दोऽप्सु प्रयुज्यते । नयन्ति—अशितमित्येवं श्रुतिकृतं निर्वचनं तत्रास्तीत्यन्वयः ॥ ८९ ॥

पीता आपोऽशनं भुक्तं द्रवीकृत्य नयन्त्यतः ।
अशनायेतिशब्दोक्ता विण्मांसोत्पत्तिरन्नतः ॥ ९० ॥
विण्मांसहेतुरन्नं यदेतस्योत्पादकं जलम् ।
जलस्योत्पादकं तेजस्तस्य चोत्पादकं च सत् ॥ ९१ ॥
अनुमायात्र कार्येण ज्ञेयं तत्कारणं परम् ।
सन्मूलकारणं ज्ञेयं स्याद्विश्वासोऽनुमानतः ॥ ९२ ॥

श्रुतिकृतनिर्वचनमुपपादयति—पीता इत्यादिपादत्रयेण । तस्य क्व मूलमित्याव्याचष्टे-विण्मांसोत्पत्तिरन्नत इत्यादिना स्याद् विश्वासोऽनुमानत इत्यन्तेन । शुङ्गेनेत्यस्य व्याख्याकार्येणेति ॥ ९० ॥ ९१ ॥ ९२ ॥

पुरीषाद्यन्नकार्यं स्यात्सत्येवान्नेऽस्य सत्त्वतः ।
सत्यामेव यथाकुम्भो मृदि दृष्टो नचान्यथा ॥ ९३ ॥
व्रीह्याद्यन्नं सतीष्वेव दृष्टमप्सु नचान्यथा ।
आपश्च स्वेदरूपाः स्युः सत्येवोष्णे हि तेजसि ॥ ९४ ॥

विण्मांसोत्पत्तिरन्नत इत्यादिनोक्तकार्यकारणभावेऽन्वयव्यतिरेकावाह-पाद्यन्नकार्यमित्यादिना सार्धपद्यद्वयेन । सत्यामित्याद्युत्तरार्द्धस्य व्रीह्याद्यन्नमित्य-र्द्धेनान्वयः ॥ ९३ ॥ ९४ ॥

तेजश्च भावरूपत्वात्संभवेन्न सता विना ।
सतस्तूत्पत्तिराहित्यान्नान्वेष्यं कारणान्तरम् ॥ ९५ ॥
सन्मूलाः सकला देहा इदानीं च सति स्थिताः ।
अन्ते सत्येव लीयन्ते विद्यात्सत्तत्त्वमद्वयम् ॥ ९६ ॥

अनवस्थाभिया सतो मूलान्तरं न कल्प्यमित्याह—सतस्त्विति "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इत्यंशं व्याचष्टे—सन्मूला इति ॥९५॥

यथा भूतातिरेकेण भौतिकं नैव विद्यते ।
भूतानि च सतोऽन्यानि तथा नेत्युपपादितम् ॥ ९७ ॥

नन्वद्वयत्वमुपपाद्यतामित्याशङ्क्योपपादितोऽयमर्थः पुरस्तादिति परिह-यथेति । तथानेति सदतिरेकेणनेत्यर्थः ॥ ९७ ॥

अशनायामुखेनेत्थं सत्तत्त्वे धीः प्रवेशिता ।
पिपासामुखतोऽप्यस्मिन् सति धीरवतार्यते ॥ ९८ ॥

"अथ यत्रैतत्पुरुषः पिपासतिनाम, तेज एव तत्पीतं नयते-तद्यथा-नायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्टे—उदन्येति । तत्रैतदेव शुङ्गमु-सोम्य विजानीहि नेदममूलं भविष्यतीति । तस्य क मूलं स्यादन्यत्राद्भ्योऽद्भिः सो-शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ, सन्मूलाः सो-सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इत्येतद्वाक्यजातं व्याख्यातुं वृत्तं का-वतारयति- अशनायेति । अस्मिन्नद्वये ॥ ९८ ॥

उदन्येति पिपासाया: पर्यायस्तं विवेकिनः ।
उदकं नयतीत्येवं तेजस्येव प्रयुञ्जते ॥ ९९ ॥
पीतं जलं शरीरस्थं तेजसा जीर्यते ततः ।
मूत्रं रक्तं च निष्पन्नं द्रवत्वाज्जलजे उभे ॥ १०० ॥

इत्थं तदवतार्य व्याचष्टे—उदन्येतीत्यादिपद्यचतुष्टयेन ॥ ९९ ॥ १०० ॥

ताभ्यामपोऽनुमीयन्ते ताभिस्तेजस्ततस्तु सत् ।
व्याप्तिं गृहीत्वा सर्वत्र योजनायोदितं पुनः ॥ १०१ ॥

ताभ्यामिति । रक्तमूत्राभ्यामित्यर्थः । ताभिरद्भिः । ततस्तेजसः । पौनरुक्त्यं परिहरति—व्याप्तिमिति । व्याप्तिं गृहीत्वा सर्वत्र योजनाय पुनरुदितमित्यन्वयः ॥ १०१ ॥

देहे येऽवयवाः सन्ति पदार्थाः सन्ति ते वहिः ।
तेषु सर्वेषु सन्मात्ररूपत्वमवधार्यताम् ॥ १०२ ॥

योजनां दर्शयति—देह इति ॥ १०२ ॥

भौतिकत्वं पुरा प्रोक्तं सद्वक्तुं देहबाह्ययोः ।
इन्द्रियद्वारतो बोद्धुं प्रोच्यते मरणक्रमः ॥ १०३ ॥

"यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति, तदुक्तं पुरस्तादेव भवती"त्युपक्रम्य पठित"मस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते । मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि"त्येतद्व्याख्यातुमवतारयति—भौतिकत्वमिति । सद्वक्तुमिति सद्बोधयितुमित्यर्थः । अत्र तदुक्तमित्यपपाठः । बोद्धुमिति । अत्रापि सदिति सम्बध्यते ॥ १०३ ॥

म्रियमाणस्य वागादि वृत्तिर्मनसि लीयते ।
मनोवृत्तेर्लयः प्राणे प्राणवृत्तेस्तु तेजसि ॥ १०४ ॥

"पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते" इत्यादिश्रुतौ वागादिशब्दा वागादिवृत्तिपरा इत्यभिप्रेत्य तां व्याचष्टे—म्रियमाणस्येत्यादि ॥ १०४ ॥

श्वासस्योपरतावुष्णं स्पृष्ट्वा जीवननिश्चयम् ।
कुर्वन्त्युष्णं तु तत्तेजः सद्वस्तुनि विलीयते ॥ १०५

प्राणवृत्तेस्तु तेजसीत्युक्तमर्थमुपपादयति—श्वासस्येत्यादिना कुर्वन्तीत्य प्राणोपरतौ मृतो नवेति विचिकित्सन्तो देहमालभमाना उष्णं चोपलभमाना देह उष्णोजीवतीति जीवनं निश्चिन्वन्ति । तदुष्णं तेज इत्यादियोजना ॥ १

छायादेहेन्द्रियद्वारैः पदार्थो योऽत्र बोधितः ।
स एष सर्वजगतोऽणिमा वस्त्वन्तरं नतु ॥ १०६ ॥
स्थूलत्वाणुत्वरूपाभ्यां वस्त्वेकं भासते द्विधा ।
स्थूलमिन्द्रियगम्यत्वान्नामरूपात्मकं जगत ॥ १०७ ॥
सदद्वैतं भवेत्सूक्ष्ममिन्द्रियाविषयत्वतः ।
एतदात्मकतैवास्य स्थूलस्येतीह युज्यते ॥ १०८ ॥

"स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेत इत्येतद्व्याचष्टे—छायेत्यादिना श्लोकषट्केन । सर्वजगत इति । अस्य मू शेषः । वस्त्वन्तरं परमाण्वादि । "ऐतदात्म्यमिदं सर्वं"मित्यंशं व्याचष्टे-एत एतदात्मकतैव सदद्वैतात्मकतैव ॥ १०६ ॥ १०७ ॥ १०८ ॥

अणुत्वं वस्तुनः प्रोक्तं यत्तत्सत्यमबाधनात् ।
स्थूलत्वं मायया क्लृप्तं ज्ञानेनैतस्य बाधनम् ॥ १०

"तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यंशंव्याचष्टे-अणुत्वा दिना पद्यत्रयेण । एतस्य स्थूलत्वस्य ॥ १०९ ॥

अबाध्यो यः स एवात्मा सर्वस्य नतु कल्पितः ।
श्वेतकेतो यदद्वैतं तदसि त्वं न मानवः ॥ ११० ॥

न मानव इति स्थूलो देहो नासीत्यर्थः ॥ ११० ॥

चिच्छायावानहङ्कारोऽधीते वेदचतुष्टयम् ।
त्वं तु साक्ष्येव तस्यातः सदसि त्वं न चेतरः ॥ १

बुद्ध्यादिरपि त्वं नासीत्याह चिच्छायेति । तस्येति वेदचतुष्टयमधीयानस्याहङ्कारस्येत्यर्थः ॥ १११ ॥

भिन्नोऽभूद्धृदयग्रन्थिः श्वेतकेतोर्विवेकतः ।
धीदोषं संशयं मार्ष्टुं भूयोब्रूहीत्यवोचत ॥ ११२ ॥

"भूय एव माभगवान् विज्ञापय त्वित्ये" तद्विवृणोति भिन्न इति ॥११२॥

सतासम्पद्यतेजीवः सुषुप्तावित्युदीरितम् ।
तथाचेत् सतिसम्पद्येऽहमित्यस्यकुतोनधीः ॥ ११३ ॥

संशयमाह सतेति । अस्यजीवस्य ॥ ११३ ॥

नानावृक्षरसैक्येन सम्पन्नेमधुनिस्थितः ।
नबुध्यतेरसोऽस्येति तथा सर्वलयान्नधीः ॥ ११४ ॥

"तथा सोम्येतिहोवाचे"त्युपक्रम्य पठितं "यथा सोम्यमधुमधुकृतोनिस्तिष्ठन्तिनानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसङ्गमयन्ति । ते यथा तत्र विवेकं न लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्यरसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्यनविदुः सति सम्पद्यामह इत्येतद्व्याचक्षाण उक्तां शङ्कां निरस्यति—नानेति । स्थितो रस इत्यन्वयः । नबुध्यतइति । अस्यवृक्षस्यायं रस इति न ज्ञायतइत्यर्थः ॥ ११४ ॥

जीवोपाधिलयेऽप्यत्रतद्बीजस्यावशेषतः ।
तदुपाधिकएवास्मिन् देहेऽन्येद्युः प्रवर्तते ॥ ११५ ॥

त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्येतद्विवृणोति–जीवोपाधीति पद्यद्वयेन । अत्र सुषुप्तौ जीवोपाधेः कार्यकारणसंघातस्य लयेऽपि तद्बीजस्योपाधिबीजस्य धर्माधर्मसंस्कारलक्षणस्यावशेषतः कारणात्मनावस्थानात् । तदुपाधिक एव धर्माधर्मसंस्कारोपहित एवास्मिन्देहे व्याघ्रादिदेहे एवान्येद्युः प्रबुध्यते इत्यन्वयः । अतो न कृतहानाकृताभ्यागमप्रसङ्गः स्मरणादेरनुपपत्तिश्चेति भावः । केचित्तु तदुपाधिक एवेत्यस्य सुषुप्तिप्राक्कालिककार्यकारणसंघातरूपोपाधिसजातीयोपाधिक एवेत्यर्थमाहुः ॥११५॥

चित्तैकाग्र्याय तच्छङ्का परिहार्या तु वस्तुषु ।
पूर्वोक्तमेव तद्बोद्धुं तदेवाह पुनर्गुरुः ॥ ११६ ॥

वस्तुषु तच्छंका शिष्यसन्देह इत्यन्वयः । पौनरुक्त्यं परिहरति- क्तमिति । तद्बोद्धुं तदेवाहेति । सद्बोधफलकमुक्तवाक्यमेव । ननु वा कथयतीत्यर्थः । अत्र सद्बोद्धुमिति पाठोभाति ॥ ११६ ॥

प्राज्ञंमन्यतया तत्त्वमविश्वस्य स्वशङ्कया ।
पुनः पुनरपृच्छत्तं प्रत्याहासौ पुनः पुनः ॥ ११७ ॥

उत्तरत्र सप्तकृत्वः कृतस्य प्रश्नस्य बीजं पण्डितंमन्यत्वमित्याह- मन्यतयेति । तं गुरुम् । असौ गुरुः ॥ ११७ ॥

सुषुप्तौ बुद्ध्यभावेऽपि पुनर्जागरणेऽस्ति धीः ।
आगच्छं सत इत्येवं तदा कस्मान्न वेत्त्यसौ ॥ ११

"भूय एव माभगवान् विज्ञापयत्वि"ति प्रश्नस्य तात्पर्यमाह-सुषुप्तौ जागरणे पुनर्बुद्धिसद्भवात्—असौ जीवोऽहं सत आगच्छमित्येवं तदा कस्मान्न वेत्तीति योजना ॥ ११८ ॥

सुप्तौ सद्रूपमज्ञात्वा सदैक्यं प्राप्तवांस्ततः ।
सतो नागमनं स्मार्यमपामस्मरणं यथा ॥ ११९ ॥

"तथा सोम्येति होवाचे"त्युपक्रम्य तदुत्तरत्वेन प्रवृत्त"स्येमाः सो पुरस्तात्प्राच्यः स्यन्दन्ते । पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवाऽपियन्ति । स भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति, एवमेव खलु सो सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे इती"ति वाक्यस्य माह— सुप्तावित्यादिपद्यद्विकेन । ततः । सद्विषयकाज्ञानवत्त्वात् । इद न्वेति ॥ ११९ ॥

गङ्गाजलं प्रविश्याब्धौ मेघेनाकृष्य सिच्यते ।
नाज्ञातत्वात्स्मृतिस्तत्र तद्वदत्र स्मृतिर्नहि ॥ १२० ॥

दृष्टान्तं विभज्य तत्सिद्धमर्थं दार्ष्टान्तिके योजयति—गङ्गेति ।

विश्य स्थितं गङ्गाजलमित्यन्वयः। तत्रेति। अब्धितो मेघेनाकृष्य सिक्ते गङ्गाज- ऽज्ञातत्वात्तदेवेदं गङ्गाजलमित्येवंरूपा स्मृतिर्यथा न, तथात्र सत आगते जीवे त आगच्छामहे इति नहि स्मृतिरित्यर्थः ॥ १२० ॥

व्याघ्रादिः सुप्त एवात्र बुध्यते वासनावशात्।
न नष्टा वासनेत्येवं विवक्षित्वोच्यते पुनः ॥ १२१ ॥

त इह व्याघ्रो वेत्यादेः पौनरुक्त्यं वादकथात्वान्न दोषावहमित्याह–व्याघ्रादेरिति। एवं विवक्षैव पुनः कथने प्रयोजिकेति तात्पर्यम् ॥ १२१ ॥

जीवस्य नश्वरस्यैक्यं न नित्येन सतेति चेत्।
जीवो न नश्यति क्वापीत्येवं वृक्षवदीक्ष्यताम् ॥ १२२ ॥
शाखां वृक्षे जीवपूर्णे जीवस्त्यजति यामसौ।
शुष्येन्नान्या तथा जीवेऽपगते म्रियते वपुः ॥ १२३ ॥

"भूय एवमाभगवान्विज्ञापय"त्वित्यस्य तात्पर्यमाह–जीवस्येति पूर्वार्द्धेन। तथा सोम्येति होवाच"त्युपक्रम्य पठितस्य अस्य सोम्य महतो वृक्षस्येत्यादेः वापेतं वाव किलेदं म्रियते न जीवो म्रियते इत्यन्तसन्दर्भस्य समाधानरूस्य त्पर्यमाह—जीव इत्यादिसार्धपद्येन। असाविति शाखाशुष्येदित्यनेनान्वेति १२२ ॥ १२३ ॥

नामरूपयुतं स्थूलं तद्बीनात्सदणोः कथम्।
उत्पन्नमिति चेद्बीजाद्वटवृक्षवदीक्ष्यताम् ॥ १२४ ॥
न्यायागमाभ्यां सिद्धं च श्रद्धाहीनः पराङ्मुखः।
न बुध्यते श्वेतकेतो श्रद्धत्स्वान्तर्मुखो भव ॥ १२५ ॥

"भूय एव माभगवान् विज्ञापय"त्विति प्रश्नस्य तात्पर्यंदर्शयति–नामेति। द्बीनान्नामरूपराहितादणुरूपात्सतःकथमुत्पन्नमित्यन्वयः। "तथा सोम्येति होवाचे"- पक्रम्याम्नातस्य न्यग्रोधस्य फलमत इत्यादेः श्रद्धत्स्वसोम्येत्यन्तस्याभिप्रायमाह— जादित्यादिना किञ्चिदधिकपद्येन ॥ १२४ ॥ १२५ ॥

तत्सर्वत्र स्थितं कस्मान्न सर्वे विदुरीदृशम्।
मुमुक्षुस्तु कथं वेत्तीत्यत्र दृष्टान्त उच्यते ॥ १२६ ॥

लवणस्य घने नीरे विलीनं वेत्ति न त्वचा ।
जिह्वया वेत्ति तद्वत्सदुपायेनैव बुध्यते ॥ १२७ ॥

"भूयएव मा भगवान् विज्ञापयत्वि"ति प्रश्नस्य तात्पर्यमाह–तत्सर्वे कथं वेत्तीत्यन्तेन । "तथा सोम्येति हो वाचे"त्युपक्रम्य पठितस्य "लवणमेतदुदकेऽवधाये"त्यादेः "अत्र वावकिल तत्सोम्य न निभालयसेऽत्रैव किले"तीत्यन्तस्य सन्दर्भस्य समाधानरूपस्य तात्पर्यमाह–अत्र दृष्टान्त इत्यादिना उपायेनैव इत्यन्तेन । सदिति । उपायेनैव सद्बुध्यते इत्यन्वयः ॥ १२६ ॥ १२७ ॥

सति सर्वेन्द्रियागम्ये क उपाय स उच्यते ।
उपाय उपदेशोऽत्र भवेद्गन्धारमार्गवत् ॥ १२८ ॥

"भूय एव माभगवान् विज्ञापयत्वि"ति प्रश्नस्य तात्पर्यमाह–सतीत्युपाय इत्यन्तेन । "तथा सोम्येति होवाचे"त्युपक्रम्य पठितस्य यथा सोम्य गन्धारेभ्य" इत्यादेः "एवमेवेहाचार्यवान् पुरुषोवेदे"त्यन्तस्य समाधानरूपस्य तात्पर्यमाह–स उच्यते इत्यादिना वेत्त्येवमुपदेशत इत्यन्तेन ॥ १२८ ॥

गन्धाराद्योवने नीतस्तस्करैर्बद्धनेत्रकः ।
तस्य बन्धं विमुच्यात्र कृपालुर्मार्गमादिशत् ॥ १२९ ॥

दृष्टान्तं विभजते–गन्धारादिति । अत्र पुरुषे कृपालुः । यद्वा मार्गं गन्धारगामिनं मार्गमित्यर्थः ॥ १२९ ॥

तेनादिष्टमविस्मृत्य श्रीमान् गन्धारमाप्तवान् ।
अविद्यया वृतं तत्त्वं वेत्त्येवमुपदेशतः ॥ १३० ॥

दृष्टान्तासिद्धमर्थं दार्ष्टान्तिके योजयति-अविद्येति ॥ १३० ॥

अश्लेषनाशौ विदुषः सञ्चितागामिकर्मणोः ।
प्रारब्धे भोगसंक्षीणे मुच्यते नतु जायते ॥ १३१ ॥

"तस्य तावदेवचिरं यावन्नविमोक्ष्य" इत्युपक्रम्य पठित"अथ सम्पत्स्य" इत्येतद्वाक्यं विवृणोति–अश्लेषेति । विदुषःसञ्चितकर्मणामेव ज्ञानेन नाशः । आगामिकर्मभिर्नसम्पर्कः । प्रारब्धस्य च भोगेनैव संक्षयस्ततो मुक्तिरित्यर्थः ॥ १३१ ॥

कीदृशी मृतिरस्येति चेद्वागादिलयाद्यथा ।
मूढस्य तद्वदेवास्य वैलक्षण्यं न किञ्चन ॥ १३२ ॥

"भूय एवमा भगवान् विज्ञापयात्वि"ति प्रश्नस्य तात्पर्यमाह—कीदृशीति । मृतिरिति । यावन्न विमोक्ष्य इत्येतत्प्रतिपादितेत्यर्थः । अस्य विवेकिनः । "तथा सोम्येति होवाचे"त्युपक्रम्यपठितस्य "पुरुषं सोम्योतोपतापिनं ज्ञातयः पर्युपासत" इत्यादे "रथ नजानाती"त्यन्तस्य तात्पर्यमाह—वागादीति । वागादिलयाद्यथा मूढस्य मृतिरिति सम्वन्धः । अस्य ज्ञानिनः ॥ १३२ ॥

समानायां मृतावेको मुक्तोनान्यः कुतो वद ।
सत्यानृताभिसन्धत्वं वैषम्यं ज्ञानिमूढयोः ॥ १३३ ॥

"भूय एवमाभगवानि"त्यादेः प्रश्नस्य तात्पर्यं दर्शयति—समानायामिति । "तथा सोम्येति होवाचे"त्युपक्रम्यपठितस्य "पुरुषं सोम्योतहस्तगृहीतमि"त्यादेः "स यथा तत्र नादाह्येते"त्यन्तस्य तात्पर्यं वर्णयति—सत्येत्यादिना सार्धपद्यचतुष्टयेन ॥ १३३ ॥

तस्करातस्करौ चौर्यशङ्कया तलरक्षकैः ।
गृहीतौ न कृतं चौर्यमित्याहतुरुभावपि ॥ १३४ ॥
गृहीतः परशुं तप्तं तौ तयोस्तस्करोऽनृतम् ।
अभिसंधाय दग्धः सन् हन्यते तलरक्षकैः ॥ १३५ ॥

दृष्टान्तं विभजते—तस्करेत्यादि । तलरक्षकैरिति । प्रजारक्षणनियुक्तपुरुषैरित्यर्थः । अभिसन्धायेत्यस्य उक्त्वेत्यर्थः ॥ १३४ ॥ १३५ ॥

अतस्करः सत्यसन्धो न दग्धो मुच्यते च तैः ॥
अज्ञान्यनृतसन्धोऽत्र सत्यसन्धस्तु तत्त्ववित् ॥ १३६ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—अज्ञान्यनृतेत्यादिसार्धपद्येन ॥ १३६ ॥

मर्त्योऽहमिति सन्धाय म्रियते जायते च सः ।
ब्रह्माहमिति सन्धाय मुच्यते नच जायते ॥ १३७ ॥

सन्धाय विज्ञाय । सोऽज्ञानी । मुच्यते नच जायत इति । अस्य तत्त्वविदिति शेषः ॥ १३७ ॥

बुद्धिदोषं समाधातुं दृष्टान्तास्तैस्तवात्र किम् ।
त्वं सदेवेत्यभिप्रेत्य नवकृत्व उपादिशत् ॥ १३८ ॥

बहुदृष्टान्तसहिते ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति नवकृत्व उपदेशे आरुणेस्तात्पर्यं दर्शयति—बुद्धिदोषमित्यादि । बुद्धिदोषनिराकरणफलका दृष्टान्ताः सन्तु नाम तव दृष्टान्तयितुस्तैर्दृष्टान्तैर्नवकृत्व उपदेशे किं कोऽभिप्राय इति प्रश्ने उत्तरस्त्वमित्यादितृतीयपाद इति ... म् । यद्वा सन्तु नामेत्यन्तं पूर्ववत् । हे श्वेतकेतो ! तव तैर्दृष्टान्तैः पूर्वोक्तैः प्रयोजनं न किमपीत्यर्थः । दृष्टान्तपदार्था न ग्राह्या इति यावत् । किन्तु ... देवेत्येव ग्राह्यमित्यभिप्रेत्याऽऽरुणिर्नवकृत्व उपादिशदिति ॥ १३८ ॥

भिन्नग्रन्थिः श्वेतकेतुर्मननाच्छिन्नसंशयः ।
सदद्वैतं स्वमात्मानं विशेषेणावबुद्धवान् ॥ १३९ ॥

तद्धास्य विजज्ञावित्येतद्विवृणोति—भिन्नग्रन्थिरिति । निरस्त... तादात्म्याध्यास इत्यर्थः ॥ १३९ ॥

श्वेतकेतोर्ब्रह्मविद्या व्याख्याता स्फुटमेतया ।
तुष्टोऽस्माननुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १४० ॥

इति श्रीविद्यारण्यमुनिकृतेऽनुभूतिप्रकाशे छान्दोग्योपनि...
श्वेतकेतुविद्याप्रकाशो नाम तृतीयोऽध्यायः ॥

एतद्व्याख्यानेन विद्यातीर्थमहेश्वरानुग्रहं प्रार्थयते—श्वेतेति ॥

इति श्रीविद्वद्वरसररामटहलपण्डिततनूजोबिठीदेवीगर्भजः
श्रीकाशीनाथकृतौ मितप्रकाशविवृतौ छान्दोग्यो-
पनिषदि श्वेतकेतुविद्याप्रकाशो नाम
तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ।

सनत्कुमारश्छान्दोग्ये नारदायोपदिष्टवान् ।
विद्यामेतां प्रवक्ष्येऽत्र सर्वशोकनिवृत्तये ॥ १ ॥

श्रीगणेशाय नमः । परमार्थतत्त्वोपदेशप्रधानपरः षष्ठाध्यायः सदात्मैक-
त्वनिर्णयपरतयैवोपयुक्तः न सतोऽर्वाग्विकारलक्षणानि तत्त्वानि निर्दिष्टानि अत
एतानि नामादीनि प्राणान्तानि क्रमेण निर्दिश्य तद्द्वारेणाऽपि भूमाख्यं निरतिशयं
किन्तत्त्वं निर्देक्ष्यामि शाखाचन्द्रदर्शनवदिति प्रवृत्तं छान्दोग्यसप्तमाध्यायं व्याख्यातुं
प्रतिजानीते—सनदिति । विद्यामिति । अस्य यामित्यादिः । अत्र चतुर्थाध्याये॥१॥

पुराणपञ्चमान् वेदान् शास्त्राणि विविधानि च ।
ज्ञात्वाऽप्यनात्मवित्त्वेन नारदः शोकमाप्तवान् ॥ २ ॥

"अधीहि भगव इति होपससादे"त्याद्युपक्रम्य पठितस्य "स होवाचर्ग्वेदं भ-
गवोऽध्येमि यजुर्वेदमि"त्यादेः, "तं मा भगवाञ्छोकस्य पारन्तारयत्वि"त्यन्तस्य
नारदवाक्यस्य तात्पर्यमाह—पुराणेत्यादिपद्यत्रयेण ॥ २ ॥

वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ।
पश्चात्त्वभ्यासविस्मारभङ्गगर्वैश्च शोकिता ॥ ३ ॥

शोकनिमित्तमाह—वेदेति । त्रयेति । आध्यात्मिकादिभेदेन तापानां त्रै-
विध्यम् । विस्मारो विस्मृतिः । भङ्गः पराजयः ॥ ३ ॥

शोकं तरत्यात्मवेदीत्यभिज्ञेभ्यः श्रुतं वचः ।
शोकपारं नयेत्युक्त्वा नारदो गुरुमाप्तवान् ॥ ४ ॥

"श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित् तं मा भगवाञ्छोकस्य
पारं तारयत्वि"त्येतद्व्याचष्टे—शोकमिति । मुखं व्यादाय स्वपितीत्यत्रेव उक्त्वेति-
क्त्वाबोध्यः । गुरुमाप्त्वा इत्युक्तवानित्यर्थः ॥ ४ ॥

बहुग्रन्थाभ्यासतस्ते महती शब्दवासना ।
नामब्रह्मेत्युपास्वात इति प्रोवाच तं गुरुः ॥ ५ ॥

"नामैवैतन्नामोपास्वे"ति कृतस्य नारदं प्रति ब्रह्मदृष्ट्या नामोपा-शस्य तात्पर्यमाह—बह्विति ॥ ५ ॥

स्वशब्दवासनां त्यक्त्वा प्राप्स्यसि ब्रह्मवासनाम् ।
पश्चाद्ब्रह्मण आत्मत्वं वक्ष्यामीति गुरोर्मतिः ॥ ६ ॥

उक्तमेवार्थं भङ्ग्यन्तरेण विशदयति—स्वेति । स्वस्य नारदस्य या वासना तामित्यर्थः ॥ ६ ॥

ब्रह्मदृष्ट्या नाममात्रध्यानान्नापैति शोकिता ।
इत्यभिप्रेत्य नाम्नोऽस्मादधिकं पृष्टवानसौ ॥ ७ ॥

"अस्ति भगवो नाम्नोभूय" इत्यस्य तात्पर्यमाह —ब्रह्मेति ॥ ७ ॥

वाङ्नाम्नः कारणत्वेनाधिकेति ब्रह्मदर्शनम् ॥
वाचि प्राह गुरुः शिष्यः पूर्ववत्पृष्टवान् पुनः ॥ ८ ॥

"वाग्वाव नाम्नो भूयसी"त्यादेस्तात्पर्यमाह—वागिति । नाम्नः का-वागिन्द्रियं ततोऽधिकमित्यभिप्रेत्य ब्रह्मदृष्ट्या वागुपासनं गुरुणोपदिष्टम् दिति । ब्रह्मदृष्ट्या वाङ्मात्रध्यानाच्छोकिता नापैतीत्यभिप्रायः शिष्यस्य "भगवो वाचोभूय" इति प्रश्न इत्यर्थः ॥ ८ ॥

आप्राणमित आरभ्य पूर्वस्मादुत्तराधिके ।
प्रवर्तते शिष्यगुर्वोः प्रश्नोत्तरपरम्परा ॥ ९ ॥

"अस्ति भगवो वाचो भूय इति वाचा वाव भूयोऽस्तीति तन्मे ब्रवीत्विति । मनो वाव वाचो भूय"इत्यादेः "प्राणो वा आशाया भूयानि"ति प्रश्नोत्तरपुञ्जस्य तात्पर्यमाह—आप्राणमिति ॥ ९ ॥

इच्छात्मकं मनो वाचोऽधिकं तत्कारणत्वतः ।
सत्यामेव विवक्षायां वक्तुमारभते पुमान् ॥ १० ॥

मनसो वागधिकत्वं सोपपत्तिकमाह—इच्छेति ॥ १० ॥

संकल्प्येदं सम्यगिति तदिच्छति पुमाँस्ततः ।
सङ्कल्पो हेतुरिच्छायाश्चित्तं सङ्कल्पकारणम् ॥ ११ ॥

"संकल्पोवाव मनसो भूयानि" त्येतद्व्याचष्टे—सङ्कल्प्येति। तत इति। इच्छानियतपूर्ववृत्तित्वादित्यर्थः। इदमुत्तरान्वयि। "चित्तं वाव संकल्पाद्भूय" इत्यस्य व्याख्या चित्तमिति ॥ ११ ॥

विक्षिप्तचित्तादैकाग्र्यं ध्यानमभ्यधिकं ततः।
ध्येयविज्ञानमधिकं ज्ञानादभ्यधिकं बलम् ॥ १२ ॥

इदानीं "ध्यानं वाव चित्ताद्भूयः विज्ञानं वाव ध्यानाद्भूयः बलं वाव ज्ञानाद्भूय" इत्येतानि क्रमेण व्याचष्टे—विक्षिप्तेति। ऐकाग्र्यमिति ध्यानेऽभेदान्वयि। ततः ध्यानात्। ध्येयमुपास्यं तस्य विज्ञानं ध्येयविज्ञानम् ॥ १२ ॥

ज्ञानहेतुर्देहबलं बलं स्यादन्नकारणम्।
आपोऽन्नहेतवोऽपां तु तेजः कारणमीरितम् ॥ १३ ॥

बलस्य ज्ञानादधिकत्वे तज्जनकत्वं हेतुमाह—ज्ञानेति। "अन्नं वाव बलाद्भूय" इत्येतत्सोपपत्ति व्याचष्टे—बलमिति। अन्नंकारणं यस्येति बहुव्रीहिः। "आपोवावान्नाद्भूयस्यः तेजो वावाद्भ्यो भूय" इत्येते वाक्ये कारणकथनपुरस्सरं व्याचष्टे—आपइत्याद्युत्तरार्द्धेन॥ १३ ॥

हेतुः स वायुराकाशस्तेजसो वियतः पुनः।
स्रष्टव्यस्मृतिरीशस्य सृष्टयाशा स्मृतिकारणम् ॥ १४ ॥

इदानी"माकाशो वाव तेजसो भूयान् स्मरो वावाकाशात्भूय आशावाव स्मराद्भूयसी" इत्येतानि व्याचष्टे—हेतुरिति। वायुनासहित आकाशस्तेजसो हेतुरित्यन्वयः। ईशस्य स्रष्टव्यविषया स्मृतिर्वियतोहेतुरित्यर्थः। ईशस्य सृष्टिविषया कामनोक्तस्मृतेर्हेतुः ॥ १४ ॥

नामाद्याशान्ततत्त्वेषु ब्रह्मदृष्टिं करोति यः।
स पुमाँल्लभते सर्वं तत्र तत्रोचितं फलम् ॥ १५ ॥

नामाद्याशान्ततत्त्वेषु ब्रह्मदृष्टिं कुर्वतस्तत्र तत्रोक्तं फलं भवतीत्याह—नामेति। तत्रोचितमित्यत्र तत्रोदितमिति पाठो भाति ॥ १५ ॥

प्रतीकोपासनैरेतैर्बह्वायासैः प्रशोचति।
न शोकं तरतीत्युक्त्वा ह्यपृच्छत्सोऽधिकं पुनः ॥ १६ ॥

"अस्ति भगव आशाया भूय" इति प्रश्नवाक्यं साभिप्रायं व्याचष्टे प्रतीति । अहंग्रहोपासनाभिन्नमुपासनामात्रं प्रतीकोपासनं ॥ १६ ॥

पराक्पदार्थध्यानेषु फलेषु च विरक्तितः ।
दृढां प्रत्यग्विविदिषां दृष्ट्वा प्राणमुपादिशत् ॥ १७ ॥

इदानीं "प्राणो वा आशाया भूयानि"त्येतद्धुर्वभिप्रायवर्णनपुरस्सरं व्याचष्टे पराग़िति अनात्मनामाद्याशान्तेत्यर्थः । फलेषु ध्यानफलेषु प्राणं लिङ्गसंघातो तं जीवम् ॥ १७ ॥

न मुख्यं प्रत्यगात्मत्वं यद्यपि प्राणवस्तुनः ।
तथाप्यात्मप्रतिनिधिः सम्भवेदात्मलक्षकः ॥ १८ ॥

ननु प्रत्यगात्मानं विविदिषोः प्राणोपदेशो न युक्त इत्याशङ्क्य प्राणस्य प्रतिनिधित्वात्परमात्मलक्षकत्वेन तथोपदेश इत्याह नेत्यादिपद्यद्वयेन ॥ १८ ॥

कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि स्थिते स्थितः ।
इति वीक्ष्यासृजत्प्राणं परमात्मेति हि श्रुतिः ॥ १९

"कस्मिन्नुत्क्रान्त" इत्यादिश्रुतिमाश्रित्य प्रतिनिधित्वमाह—कस्मिन्निति ॥

चक्रस्यारा यथा नाभावाश्रिताश्चक्षुरादिकम् ।
आश्रितं निखिलं प्राणे ततस्तस्यात्मता भवेत् ॥ २०

"यथा वा आरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितमि" श्रुतिं व्याचक्षाण आत्मसादृश्यमाह—चक्रस्येति । चक्षुरादिकमिति । एवं चक्षुरा निखिलं प्राणे आश्रितमिति योजना । तस्येति प्राणस्येत्यर्थः ॥ २० ॥

अश्वेन याति पुरुषोदत्ते विप्राय गां पुमान् ।
प्राण एवाश्वादिशब्दैरुक्तो न तु शवः क्वचित् ॥ २१ ॥

पितृमात्रादिशब्दैश्च प्राणः प्रोक्तः शवो नतु ।
तस्मात्सर्वात्मकः प्राणः परमात्मेति निश्चयः ॥ २२ ॥

इदानीं "प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणोह पिता मातें"त्यादि "न ब्राह्मणहासी"त्यन्तवाक्यजातस्य सर्वात्मकः प्राणः परमात्मा तात्पर्यमाह- अश्वेनेत्यादिपद्यद्वयेन ॥ २१ ॥ २२ ॥

योऽबुभुत्सुरसौ प्राणमेवं पश्यन् गुरूक्तितः।
युक्त्या धिया च वै चिन्वन्नतिवादीति कथ्यते ॥ २३ ॥

इदानीं "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तञ्चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीतेत्ये"तद्व्याचष्टे- यइत्यादिपद्यत्रिकेण। चिन्वन् विचारयन् ॥ २३ ॥

नामाद्याशान्ततत्त्वानि यः प्राणोऽतीत्य वर्तते।
तमात्मानं वक्ति यस्मादतिवादी भवेत्ततः ॥ २४ ॥

अतिवादिपदार्थमाह—नामेति ॥ २४ ॥

तर्काद्विप्लावकेभ्योऽयं निर्भीः सन् स्वातिवादिताम्।
अङ्गीकुर्यादेव यस्मात्सन्देहो नात्र विद्यते ॥ २५ ॥

नापह्नुवीतेत्यस्य व्याख्यानमाह—तर्कादिति तर्काद्विप्लावकेभ्यः प्राणात्मत्वं निरस्यद्भ्योऽयमतिवादी निर्भीः सन् स्वातिवादितामङ्गीकुर्यादेव नत्वपह्नुवीत यतोऽत्र प्राणात्मत्वे सन्देहो न विद्यत इति योजना ॥ २५ ॥

नामादीनामनात्मत्वं स्पष्टमित्यत्र नारदः।
असन्तुष्टोऽधिकन्तत्त्वं पप्रच्छैत्र पुनः पुनः ॥ २६ ॥
प्राणात्मत्वं तु सम्भाव्यं सम्यक्तस्योपपादनात्।
शोकश्च सुप्तौ प्राणस्य न दृष्टोऽतस्तुतोष सः ॥ २७ ॥

नामाद्याशान्ततत्त्वेषु आत्मत्वेनोपदिष्टेष्वसन्तोषपुरस्सरं पुनः पुनः प्रश्ने प्राण आत्मत्वेनोपदिष्टे सन्तोषपुरस्सरमुपरामे च हेतुमाह—नामेत्यादिश्लोकद्वयेन। अत्र नामाद्याशान्तात्मत्वेऽसन्तुष्टइति सम्बन्धः। शोक इति। सुप्तौ प्राणस्य शोकश्च न दृष्ट इत्यन्वयः ॥ २६ ॥ २७ ॥

श्रद्धालुं योग्यशिष्यन्तमुद्धरामीत्यसौ गुरुः।
अपृष्टोऽप्यधिकं तत्त्वं स्वयमेवोपदिष्टवान् ॥ २८ ॥

"एष तु वा अतिवदति यः सत्येनातिवदती"त्येतद्व्याख्यातुं भूमिकामारचयति—श्रद्धालुमिति ॥ २८ ॥

आत्मोपलक्षकः प्राणो नत्वात्मैषोऽनृतत्वतः ।
नामरूपात्मकः प्राणो माययोत्पादितो ह्यसौ ॥ २९ ॥

आत्मत्वं प्राणे निरस्यति—आत्मेति । अनृतत्वहेतुं साधयति—त्यादिना ॥ २९ ॥

अनृतोऽप्येष सत्यस्य लक्षकः प्रतिबिम्बवत् ।
मुखस्य प्रतिबिम्बेन मुखं स्वस्योपलक्ष्यते ॥ ३० ॥

आत्मोपलक्षकः प्राण इत्युक्तमर्थमुपपादयत्यनृत इत्यादिपद्यद्वयेन ॥ ३० ॥

आत्मेदं बुद्धिगम्यैस्तैराशान्तैर्नोपलक्ष्यते ।
प्राणोहं बुद्धिगम्येषु स्थितत्वादात्मलक्षकः ॥ ३१ ॥

इदानीमिदं बुद्धिगम्यत्वादाशान्तैर्नात्मोपलक्ष्योऽहं बुद्धिगम्यबुद्ध्या संघातरूपलिङ्गशरीरस्थितत्वात्प्राणेनोपलक्ष्य इत्याह—आत्मेति ॥ ३१ ॥

अत एवातिवादित्वमस्ति प्राणात्मवेदनात् ।
अमुख्यं तच्च मुख्यं तु भवेत्सत्यात्मवेदनात् ॥ ३२ ॥

प्राणात्मज्ञानादमुख्यमतिवादित्वं सत्यात्मज्ञानान्मुख्यं तदित्यवगा श्रुतेरर्थमाह–अत इति ॥ ३२ ॥

कारुण्यातिशयं दृष्ट्वा सन्तुष्टो नारदोऽब्रवीत् ।
सत्येनैवातिवादीस्यामनृतस्यात्मतां त्यजन् ॥ ३३ ॥

"सोऽहं भगवः सत्येनातिवदानीत्ये"तद्व्याचष्टे–कारुण्येति ॥ ३३ ॥

विचारणीयन्तत्सत्यं विज्ञानमननादिभिः ।
ध्यानवान्नोक्तिमात्रेण बुध्येतेत्यब्रवीद्गुरुः ॥ ३४ ॥

"सत्यं त्वेव विजिज्ञासितव्यमि"त्येतद्व्याचष्टे—वीति । ध्यानेति उक्तिमात्रेण विचाररहितोपदेशेन ध्यानवान्न बुध्येतेति योजना ॥ ३४ ॥

संशयं च विपर्यासं निराकृत्य विशेषतः ।
यदा जानाति विज्ञानात्सत्यवादी भवेत्तदा ॥ ३५ ॥

विज्ञानहेतुर्मननमन्वयव्यतिरेकभाक् ।
श्रद्धामननहेतुः स्यादागमाचार्यवाक्ययोः ॥ ३६ ॥
श्रद्धायाः कारणं निष्ठा सदा शुश्रूषणं हि सा ।
चित्तैकाग्र्यगतिर्याऽसौ निष्ठायाः कारणं भवेत् ॥ ३७ ॥
सुखमस्तीति धीर्मुक्तौ कृतेस्तस्याः प्रयोजिका ।
तद्विहीनोयमाद्यैर्नो चित्तैकाग्र्यं करोति हि ॥ ३८ ॥

विज्ञानमननादिभिः सत्यं विचारणीयमित्युक्तं तत्र विज्ञानादिस्वरूपं तद्धेतुञ्च दर्शयति—"यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदती"त्यादिं सुखमेव लब्ध्वा करोतीत्यन्तं व्याचक्षाणः संशयमित्यादिपद्यचतुष्केण । सत्यवदनस्य हेतुर्विज्ञानं विज्ञानस्य हेतुर्मननं मननस्य हेतुः श्रद्धा श्रद्धाया हेतुर्निष्ठा निष्ठाया हेतुरिन्द्रियसंयमचित्तैकाग्रताकरणोभयरूपा कृतिः कृतेर्हेतुः सुखज्ञानामितिपद्यचतुष्कार्थः । सुखमस्तीति मुक्तौ सुखमस्तीतिधीस्तस्या निरुक्तायाः कृतेः प्रयोजिका । तद्विहीनस्तादृशधीविहीनो यमाद्यैर्विज्ञानादिभिश्चित्तैकाग्र्यं यतो न करोतीति योजना ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

सुखं किमितिचेद्भूमा सुखमल्पे तु तन्नहि ।
क्लिश्यत्यल्पधनोऽन्यस्मिन् धनबाहुल्यदर्शनात् ॥ ३९ ॥

"सुखं भगवो विजिज्ञासे" इत्युपक्रम्य पठितं यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति भूमैव सुखमित्येतद्व्याचष्टे—सुखमिति । तत्सुखम् ॥ ३९ ॥

भूम्नः सुखत्वे भूमा कः किमल्पमिति चेच्छृणु ।
ज्ञातृज्ञेयज्ञानहीनो भूमाऽविच्छेददर्शनात् ॥ ४० ॥

"भूमानं भगवो विजिज्ञासे यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यमि"त्येतद्व्याख्यातुमारभते—भूम्न इति । अविच्छेदेति । दिगाद्यनवच्छेदेत्यर्थः ॥ ४० ॥

ज्ञातृज्ञानज्ञेयरूपं मायाकार्यमिदं जगत् ।
बहुविच्छेद युक्तत्वादल्पमित्यभिधीयते ॥ ४१ ॥

भूमपदार्थमुक्त्वाऽल्पपदार्थमाह—ज्ञात्रिति ॥ ४१ ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
भूमा तस्मादमर्त्योऽयमल्पं मर्त्यमतद्विधम् ॥ ४२ ॥
संसारकाल एवास्ति न मुक्तावल्पता ततः ।
मुक्तौ ज्ञाननिवर्त्यत्वान्मर्त्यं जगदितीर्यते ॥ ४३ ॥
संसारमोक्षयोर्भूमा विद्यते सोऽमृतत्वतः ।
अखण्डैकरसानन्दः सोऽयमात्मा स्वयंप्रभः ॥ ४४ ॥

भूम्नोऽमृतत्वं दर्शयन्नल्पस्य मर्त्यत्वमाह—अच्छेद्य इत्यादिभि-
ण ॥ ४२ ॥ ४३ ॥ ४४ ॥

मूर्च्छासुप्त्योस्तादृशोऽयमज्ञानेन तिरोहितः ।
समाधिसुप्तिमूर्च्छासु भासते साधनं विना ॥ ४५ ॥

अखण्डैकरसानन्दस्य भूम्नो यत्स्वप्रकाशत्वमुक्तं तद्द्रढयति—मूर्च्छा-
सुप्तिमूर्च्छयोरयमखण्डैकरसानन्द आत्माऽज्ञानेनावृतः सँस्तादृशः स्वयंप्रभः स-
धौ तु तदावरणशून्यः सन् स्वप्रकाश इति पूर्वार्धोऽर्थः । प्रमाणव्यापारमन्तरा-
रोक्षत्वरूपं स्वप्रकाशत्वं समाध्यादौ दर्शयति—समाधीति ॥ ४५ ॥

मेघेनाच्छादितः सूर्यो यथा तद्वत्स्वयंप्रभः ।
अज्ञानेनावृतो भूमा प्राणिभिर्न विभाव्यते ॥ ४६ ॥

स्वप्रकाशोऽपि भूमाऽज्ञानावरणाद्विस्पष्टं न भातीति सदृष्टान्तमाह—
घेनेति ॥ ४६ ॥

स्वप्रकाशात्मचैतन्यमज्ञानस्य न बाधकम् ।
भासकं प्रत्युतैतस्य स्वानन्दस्य यथा तथा ॥ ४७ ॥

स्वप्रकाशात्मचैतन्यं नाज्ञानविरोधि प्रत्युतस्वानन्दस्येव तस्य साधक-
त्याह—स्वेति ॥ ४७ ॥

आनन्दाज्ञानयोः सुप्तौ चैतन्येनावभासनात् ।
उत्थितः सुखमस्वाप्सं न जानेऽन्यदिति स्मरेत् ॥ ४८ ॥

आनन्दाज्ञानयोः सुप्तौ भानं सुखमस्वाप्सं नान्यत्किञ्चनाज्ञासिषमिति संभवन्त्या स्मृत्या साधयति—आनन्देति ॥ ४८

अरणिस्थो यथावह्निर्न दहेदरणिं तथा ।
पश्चान्मथनजातोऽसौ साकल्येनारणिं दहेत् ॥ ४९ ॥
तथा वेदान्तवाक्योत्थधीवृत्तौ प्रतिबिम्बितम् ।
स्वप्रकाशात्मचैतन्यं कृत्स्नाज्ञानस्य बाधकम् ॥ ५० ॥

केवलस्वप्रकाशात्मचैतन्यस्याज्ञानाबाधकत्वेऽपि वाक्योत्थवृत्त्युपारूढस्य तस्य तन्नाशकत्वमिति सदृष्टान्तमाह—द्वाभ्यामरणीति । तथेति । तथा केवलस्वप्रकाशात्मचैतन्यमज्ञानस्य न बाधकमित्यर्थः । पश्चादिति । अस्य यथेत्यादिः ॥ ४९ ॥५०॥

तस्माद्विज्ञानसहितः समाधावनुभूय हि ।
भूमानन्दं यथाशास्त्रं स्मृत्वा व्युत्थाय वक्ति च ॥ ५१ ॥

यस्मादुक्तवृत्तिप्रतिबिम्बितं चैतन्यमज्ञानबाधकं तस्माद्भूमानन्दं यथाशास्त्रं समाधावनुभूय व्युत्थितः एतावन्तं कालं सुखं समाहितोऽभूवमिति स्मरति । स्मृत्वाभिलपति चेत्याह तस्मादिति । विज्ञानसहित इति । भूमानन्दात्मैकाकारसूक्ष्मवृत्तिसहित इत्यर्थः । अनेन तादृशवृत्त्युपारुढचैतन्यस्याज्ञानबाधकत्वं सूचितम् ॥ ५१ ॥

ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी स्वप्नजाग्रतोः ।
भूमानन्दं तिरोधत्ते विद्वाँस्त्वभिभवत्यमूम् ॥ ५२ ॥

स्वप्नजाग्रतोरविवेकिनो भूमानन्दस्त्रिपुट्या तिरोहितो भवति । विवेकी तु स्वप्नजाग्रतोरमूं त्रिपुटीमभिभवतीत्याह ज्ञात्रिति ॥ ५२ ॥

चिच्छायावानहंकारो ज्ञाता स्याच्चक्षुरादिजा ।
बुद्धिवृत्तिर्भवेज्ज्ञानं ज्ञेया रूपरसादयः ॥ ५३ ॥

ज्ञातृज्ञानज्ञेयरुपां तामभिनीयदर्शयति—चिदिति ॥ ५३ ॥

त्रिपुटी मायिके मिथ्येत्येवं विज्ञाय तत्त्ववित् ।
तामुपेक्ष्य करोत्येव भूमानन्दे भरं सदा ॥ ५४ ॥

तत्त्वविन्मिथ्यात्वेन त्रिपुट्यां सदानादरं भूमानन्दे आदरं करोती-ह—त्रिपुटीति ॥ ५४ ॥

अखण्डैकरसं भूमानन्दं श्रुत्वा स नारदः ।
भूम्न्यसंभावनां मत्वा पप्रच्छाधारमस्य हि ॥ ५५ ॥

"स भगवः कस्मिन्प्रतिष्ठित" इत्येतद्व्याख्यातुमुत्थापयति अख-ति ॥ ५५ ॥

सत्याधारे परिच्छेदो निराधारो न बुध्यते ।
यद्यद्घटादिकं लोके तत्सर्वं क्वचिदाश्रितम् ॥ ५६ ॥

भूम्न्युक्तामसम्भावनामुपपादयति—सतीति आधारे सति परिच्छेद-च भूमत्वहानिरित्यर्थः । नन्वस्तु भूमानिराधार इत्याशङ्क्य निषेधति निराधा-तदेवोपपादयति यद्यदिति ॥ ५६ ॥

व्यवहारदशायां किमाधारः पृच्छ्यतेऽथवा ।
वस्तुतो व्यवहारे तु महिम्न्येवायमाश्रितः ॥ ५७ ॥

किं व्यवहारदशायामाधारः पृच्छ्यतेऽथवा वस्तुत इति विकल्पपु-"स्वे महिम्नी"त्युत्तरं व्याचष्टे— व्यवहारेति ॥ ५७ ॥

परास्य शक्तिर्विविधेत्येवं श्रुत्यन्तरेरिता ।
भूम्नः शक्तिर्भवेन्माया तदर्थो महिमाऽखिलः ॥ ५८ ॥

महिमपदार्थमाह—परेति । तदर्थो मायाकार्यम् ॥ ५८ ॥

महिमाख्ये जगत्यस्मिन् य आनन्दोऽवभासते ।
स भूमास्य परिच्छेदो व्यवहारे न दुष्यति ॥ ५९ ॥

वाक्यार्थं कथयन् सत्याधारे परिच्छेद इत्याशङ्कितं परिहरति-मेति ॥ ५९ ॥

वस्तुतत्त्वविचारे तु न महिम्नि प्रतिष्ठितः ।
महिमा स्याद्गवाश्वादिर्भूम्नो नाधार एव हि ॥ ६० ॥
अन्यस्मिन्हि महिम्न्यन्यो राजादिः प्रतितिष्ठति ।
भूम्नो नान्यद्वस्तु तस्मात्कुत्रासौ प्रतितिष्ठति ॥ ६१ ॥

"यदि वा न महिम्नी"ति वाक्यं व्याचष्टे—वस्त्विति । महिम्नि प्रतिष्ठितत्वाभावे हेतुपरं "गो अश्वमिहमहिमे"त्यादि "अन्यो ह्यन्यस्मिन्प्रतिष्ठित" इत्यन्तं व्याचष्टे—महिमेति सार्धेन ॥ ६० ॥ ६१ ॥

यथा लोके निराधार आकाशोऽस्ति तथा कुतः ।
भूमा न स्यादतो युक्त्या निराधारोऽपि बुध्यताम् ॥६२॥

निराधारो न बुध्यते इत्युक्तं दूषयति—यथेति । तथा कुत इत्युत्तरान्वयि॥६२॥

व्यावहारिक आनन्दे व्युत्पत्तेः शून्यता नहि ।
व्युत्पन्नो यौक्तिकश्चैष ऐकाग्र्ये भासते स्वयम् ॥ ६३ ॥

ननु वियद्वद्बोधो न तस्य संभवति तत्र व्युत्पत्त्यभावादित्याशङ्क्य व्यावहारिकानन्दे भूमपदशक्तिग्रहमुपपादयन् श्रवणमनननिदिध्यासनैर्भूम्नः शाब्दानुमित्यपरोक्षविषयतामाह—व्यावहारिक इति । व्युत्पन्नो गृहीतशक्तिकपदबोध्यो यौक्तिकोऽनुमितिविषयः । ऐकाग्र्ये निदिध्यासने ॥ ६३ ॥

बोधक्रमो बुभुत्सूनां विस्पष्टमभिधीयते ।
चतुर्दिक्ष्वध ऊर्ध्वं च भूमाबोद्धव्य आदितः ॥ ६४ ॥
सत्ताभानप्रीतयोऽत्र वीक्ष्यन्ते सर्ववस्तुषु ।
सच्चिदानन्दरूपोऽतो भूमा सर्वत्र तिष्ठति ॥ ६५ ॥

"स एवाधस्तात् स उपरिष्टात् स पश्चात् सपुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमि"त्यन्तं व्याचष्टे—बोधक्रम इत्यादिना पद्यत्रयेण । भूम्नः सर्वत्र सत्वमुपपादयति—सत्तेत्यादि द्वाभ्याम् । अत्र जगति । अतः सर्ववस्तुषु सत्ताभानप्रीतीनां दर्शनात ॥ ६४ ॥ ६५ ॥

भूम्नो वियोगे वस्तूनि नैव सन्ति न भान्ति च।
प्रियत्वं दूरतस्तेषां भूमा सर्वात्मकस्ततः ॥ ६६ ॥

भूम्न इति भूम्नो वियोगेऽतिरेके वस्तूनि नैव सान्ति। सतः कारणात् कार्यासत्वस्योपपादितत्वादिति भावः ॥ ६६ ॥

जगद्भ्रान्तिं निवार्यास्य ताटस्थ्यविनिवृत्तये।
अहंकारेण भूमानुसंधेयः सर्वदिक्ष्वसौ ॥ ६७ ॥
सन्त्येव सच्चिदानन्दा देहादिष्वपि वाह्यवत्।
भूमाऽहंकारयोग्योऽतोऽहं सर्वमिति वाश्रयेत् ॥ ६८॥

जगदिति जगदित्यादिपद्यत्रयेण भूम्नि जगद्भ्रान्तिं निरस्य,अस्य भूम्नः ताटस्थ्यविनिवृत्तये स्वस्वरूपातिरेकनिरासायेत्यादियोजना। तस्यास्तात्पर्यान्तोमाह सन्त्येवेति। अतः सच्चिदानन्दानां देहादिष्वपि सत्वाद् भूमा देहादिवदहंकारयोग्योऽहं प्रतीतिविषयतायोग्योऽतोऽहं सर्वमिति वाश्रयेदित्युत्तरार्द्धे योजना ॥६७॥

गृहैकदेशेऽवस्थाय सार्वभौमोऽहमित्यसौ।
राजाभिमन्यते तद्वद्भूमाहमिति नो कुतः ॥ ६९ ॥

ननु देहाद्युपहितोऽहंपदवाच्यः कथमहं सर्वं जानीयादिति शङ्कां दृष्टान्तेन परिहरति—गृहैकेति। यदा गृहैकदेशेऽवस्थितो भवति न तदा सर्वभूमेश्वरो नियन्ता भवत्यथ चाभिमन्यते सार्वभौमोऽहमिति यथा तथेत्यर्थः ॥ ६९॥

आभिमानिकमेवेदं भूमात्मत्वमिति भ्रमम्।
निराकर्त्तुं सर्वदिक्षु भूम्नो ज्ञेया चिदात्मता ॥ ७० ॥

"आत्मैवाधस्तादित्यादि" "आत्मैवेदं सर्वमि"त्यन्तं व्याचष्टे-आभिमानिकमिति। पूर्वोक्तं भूमात्मत्वं भ्रमसिद्धमिति भ्रमामित्यर्थः ॥ ७० ॥

अहं शब्दश्चिदात्मानं साहंकारं ब्रवीति हि।
अहंकारे बोधलीने चिदात्मैवावशिष्यते ॥ ७१ ॥

नन्वहंशब्दार्थसाभासान्तःकरणस्य मिथ्यात्वात्कथमहं सर्वमिति बोधो भ्रमः कथं चाहंकारपदार्थभूतभूम्नोमुक्तावनुवृत्तिरित्याशङ्कां परिहरति—अहमिति

बोधलीन इति । बोधेन स्वरूपसाक्षात्कारेण स्वरूपे लीने सतीत्यर्थः ॥ ७१ ॥

क्रमेणानेन यस्तत्त्वं पश्यन् शास्त्रविचारतः ।
युक्त्या मत्वा धिया वेत्ति जीवन्मुक्तो भवेदसौ ॥ ७२ ॥

"सवा एष एवं पश्यन् एवं मन्वान एवं विजानन्" इत्येतद्व्याचष्टे—क्रमेणेति । अनेन क्रमेण पूर्वोक्तक्रमेण य शास्त्रविचारतो भूमैवाधस्तादित्यादि श्रुतिविचाररूपाच्छ्रवणात्तत्त्वं पश्यन् जानन् युक्त्या मत्वा मननोत्तरं धिया ध्यानेन वेत्ति साक्षात्करोति तत्त्वमित्यनुषज्यते । असौ जीवन्मुक्तो भवेदिति योजना ॥ ७२ ॥

जीवन्मुक्तो रतिक्रीडामिथुनानन्दलक्षणान् ।
व्यवहारान् क्रमेणैति प्रारब्धस्यानुसारतः ॥ ७३ ॥

आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द इत्येतद्व्याख्यातुमुत्थापयति—जीवन्निति । एति । प्राप्नोति । प्रारब्धस्य प्रारब्धफलकर्मणः । अनुसारतः वेगात् ॥ ७३ ॥

सुखदुःखप्रदारब्धकर्मवेगश्चतुर्विधः ।
तीव्रो मध्यो मन्दसुप्तौ चेति तस्य विधा मताः ॥ ७४ ॥

उक्तकर्मवेगचातुर्विध्यमाह—सुखेति ॥ ७४ ॥

तीव्रवेगे स पश्वादितुल्यो नात्मानमीक्षते ।
आत्मनि प्रीतिरस्तीति भवेदात्मरतिस्तदा ॥ ७५ ॥

आत्मरतित्वमाह—तीव्रेति ॥ ७५ ॥

मध्यवेगेतु भोगानां प्राधान्यं स यदा तदा ।
कृत्वावकाशमात्मानं वदन् क्रीडति बालवत ॥ ७६ ॥

आत्मक्रीडत्वमाह—मध्येति । यदा भोगानां प्राधान्यं भवति तदात्मानमवकाशमवसन्नः काशः स्फुरणं यस्यैवं भूतं कृत्वा बालवद्वदन् सक्रीडतीत्यन्वयः । यद्वा मध्यवेगस्तु इतिपाठं प्रकल्प्यान्यथा व्याख्येयम् । यदा भोगानां प्राधान्यं कृत्वाऽऽत्मानमवकाशं भोगैः शून्यं वदन् बालवत्क्रीडति, तदामध्योवेगः कर्मण इत्यर्थः ॥ ७६ ॥

मन्दवेगे तिरस्कृत्य भोगान् प्रायेण चिन्तयन् ।
धियात्मानं द्वन्द्वसुखं प्राप्नोति मिथुने यथा ॥ ७७ ॥

आत्ममिथुनत्वं दर्शयति—मन्देति । मन्दवेगे तु प्रायेण भोगान् तिर-स्य धिया मनसाऽऽत्मानं चिन्तयन् मिथुने यथा द्वन्द्वसुखं द्वन्द्वजनितं सुखं प्रा-तीत्यन्वयः ॥ ७७ ॥

सुप्तवेगेऽतिनिर्विघ्नो निर्विकल्पसमाधिभाक् ।
आत्मानन्दावशेषः सन्नास्ते मुक्तवदद्वयः ॥ ७८ ॥

जीवन्मुक्तस्यात्मरतित्वादित्रयं दर्शयित्वा आत्मानन्दत्वं दर्शयति-सुप्तेति ॥ ७८ ॥

स्वराट् स्यात्पतिते देहे नान्याधीनो विमूढवत् ।
तस्य सर्वेषु लोकेषु कामचारो भवेत् खलु ॥ ७९ ॥

"स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति, अथयेऽन्य-विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति तेषां सर्वेषु लोके"कामचारो भवतिष्व" तद्व्याचष्टे—स्वराडित्यादिपञ्चकेन । स्वराट् स्वतन्त्रः विमूढवदिति व्यति-दृष्टान्तः ॥ ७९ ॥

मायया कल्पिता लोकास्ते सर्वे भूमरूपताम् ।
मुक्तस्य प्राप्नुवन्त्येव सर्वलोकात्मकस्ततः ॥ ८० ॥
कामचारोऽतिविश्रम्भः प्रतिबन्धविवर्जितः ।
सर्वस्य स्वस्वरूपेऽस्ति प्रतिबन्धो न कोऽपिहि ॥ ८१ ॥

उपपत्तिप्रदर्शनपुरस्सरं कामचारपदार्थमाह—माययेत्यादिद्वयेन । ये-यया कल्पिता लोकास्ते मुक्तस्य भूमरूपतां प्राप्नुवन्ति एवं स सर्वलोकात्म-एवेति पाठे एवकारोऽत्यन्तायोगव्यवच्छेदार्थकः । ततः । सर्वलोकात्मकत्व-प्रतिबन्धविवर्जितोऽप्रतिहतोऽतिविश्रम्भः सर्वत्रात्मत्वेन विश्वासस्तद्रूपः कामचार-भवतीत्यर्थः । स्वस्वरूपे प्रतिबन्धराहित्यमुपपादयति—सर्वस्येति ॥ ८० ॥ ८१ ॥

भूमात्मानं न जानाति मूढः किन्त्वन्यथेक्षते ।
जीवोऽहमीश्वराधीनो धर्माधर्मयुतस्त्विति ॥ ८२ ॥
तस्येश्वरो भवेद्राजा लोकः कर्मार्जितः क्षयी ।
कामचारस्तु लोकेषु सर्वथास्य न संभवेत् ॥ ८३ ॥

मूढस्यस्वस्वरूपे आत्मत्वेन विश्वासप्रतिबन्धाभावेऽपि भूमात्मनि तं दर्शयन्नन्यराजत्वादिकं दर्शयति—भूमेत्यादिद्वाभ्याम् । अन्यथेक्षणमेव दर्शयति—जीवइत्युत्तरार्द्धेन ॥ ८२ ॥ ८३ ॥

जीवन्मुक्तस्तत्त्वविद्यः शास्त्रयुक्त्यनुभूतिभिः ।
तस्य प्राणादिकर्मान्तं जगत्स्वात्मन उद्गतम् ॥ ८४ ॥

"इदानीं 'तस्य हवा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण" इत्यादि "आत्मत एवेदं सर्व"मित्यन्तं व्याचष्टे—जीवन्निति । यः शास्त्रादिभिस्तत्त्वविद् जीवन्मुक्तस्तस्येत्यन्वयः ॥ ८४ ॥

तस्मात्प्राणादिवस्तूनां ध्यानेनास्य फलेन वा ।
जीवन्मुक्तस्य नार्थोऽस्ति कृतकृत्यः सुखी ह्यसौ ॥ ८५ ॥
नमृत्युं पश्यति ज्ञानी न रोगं नापि दुःखिताम् ।
सर्वं स्वात्मतया बुद्ध्वा सर्वमाप्नोति सर्वथा ॥ ८६ ॥

"नपश्यो मृत्युं पश्यती"त्यादि "सर्वमाप्नोति सर्वश" इत्यन्तं व्याख्यातुमुत्थापयति—तस्मादित्यादिद्वयेन । अस्य ध्यानस्य । श्रुतिस्थसर्वश इत्यस्यव्याख्यासर्वथेति ॥ ८५ ॥ ८६ ॥

विदेहमुक्तो ब्रह्मत्वात्सर्वं सृजति मायया ।
येन यद्वीक्ष्यते तस्मै तद्रूपं स्वं प्रदर्शयेत् ॥ ८७ ॥

"स एकधा भवति त्रिधाभवति पञ्चधा भवती"त्यादेस्तात्पर्यमाह—विदेहेति । यदिति । यद्रूपमित्यर्थः ॥ ८७ ॥

विषयाहरणं शुद्धं रागद्वेषादिवर्जनात् ।
ततः शुद्धधियाऽऽत्मानं भूमानं सर्वदास्मरेत् ॥ ८८ ॥

शोकादिसर्वग्रन्थीनां भूम्नः स्मृत्या विमोक्षणात् ।
शुद्धधीर्नारदस्तस्मै तमः पारमदर्शयत् ॥ ८९ ॥

"आहारशुद्धौ सत्वशुद्धि"रित्यादि "तमसः पारं दर्शयती"त्यन्तं व्याचष्टे-विषयेत्यादिपद्यद्वयेन । विषयेति । विषयाहरणं शब्दादिविषयविज्ञानं रागद्वेषादिवर्जं शुद्धं भवति । ततो विज्ञानशुद्धेः । शुद्धया धिया भूमानमात्मानं सदा स्मरेदित्यर्थः शोकेति । भूम्नः स्मृत्या शोकादिसर्वग्रन्थीनां विमोक्षणादित्यन्वयः । तस्मै नारदाय ॥ ८८ ॥ ८९ ॥

सनत्कुमारविद्यायास्तात्पर्यं स्पष्टमीरितम् ।
तेन कुर्यान्मयि कृपां विद्यातीर्थमहेश्वरः ॥ ९० ॥

इति श्रीविद्यारण्यमुनिकृतेऽनुभूतिप्रकाशे छान्दोग्ये
सनत्कुमारविद्याप्रकाशो नाम
चतुर्थोऽध्यायः ॥ ४ ॥

एतद्व्याख्यानेन स्वस्मिन् विद्यातीर्थकृपां प्रार्थयते—सनदिति ॥ ९० ॥
इति च्छान्दोग्ये मितप्रकाशविवृतौ सनत्कुमारविद्याप्रकाशो
नाम चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः ॥ ५ ॥

प्रजापतिः स्वात्मविद्यां छान्दोग्ये बहुधाऽब्रवीत् ।
विरोचनाय चेन्द्राय तां वक्ष्ये सुखबुद्धये ॥ १ ॥

इदानीमष्टमाध्यायं संक्षेपतो व्याख्यातुंप्रतिजानीते-प्रजेति ॥ १ ॥

असंसार्ययमात्मासावन्वेष्टव्यो मुमुक्षुणा ।
प्रजापतिरिति प्राहप्रसङ्गेन स्वसंसदि ॥ २ ॥

"य आत्मा अपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः सविजिज्ञासितव्यः स सर्वांश्चलोकानाप्नोति सर्वांश्चकामान् यस्तमात्मानमनुविद्य विजानाति" इत्येतत्प्रजापति वचनं व्याचष्टे असंसारीत्यादिपद्यदशकेन ॥ २ ॥

यो निःपापोऽजरो मृत्युशोकक्षुत्तृड्विवर्जितः ।
सत्योऽस्यकामः संकल्पश्चासंसारी स ईश्वरः ॥ ३ ॥

अपहतपाप्मत्वादिगुणक ईश्वर इत्याह—य इति ॥ ३ ॥

पापं कर्तुरकर्तात्मा चिन्मात्रः पापवान् कथम् ।
जरामृत्यूदेहधर्मौ विद्येते न चितस्ततः ॥ ४ ॥

"अपहतपाप्मा विजरो विमृत्यु"रित्येतदुपपादयति—पापमिति । पापं कर्तुर्भवति अकर्ता चिन्मात्र आत्मा पापी कथं स्यात्, मृत्युजरे यतो देहधर्मौ ततस्तौ चितो न विद्येते इत्यर्थः ॥ ४ ॥

शोकः स्यान्मनसो धर्मः क्षुत्तृष्णे प्राणगे उभे ।
चिद्रूपस्यात्मनो नैव सन्ति शोकादयस्त्रयः ॥ ५ ॥

"विशोको विजिघत्सोऽपिपास" इत्येतदुपपादयति शोक इति । मनसोधर्मः शोकः क्षुतृष्णे प्राणस्येत्येतेऽपि चितो न सन्तीत्यर्थः ॥ ५ ॥

चिन्मात्रस्याप्यस्ति माया कामसंकल्पकारिणी ।
स्रक्ष्यामि जगदित्यादि कामो मायाविनोऽस्ति हि ॥ ६ ॥

"सत्यकामः सत्यसंकल्प" इत्येतदुपपादयति—चिदिति । कामाकारम-

मिनयति—स्रक्ष्यामीति ॥ ६ ॥

आकाशादिपदार्थास्तु यथापूर्वं भवन्त्विह ।
संकल्पोऽस्ति ततो ज्ञेया व्यावहारिकसत्यता ॥ ७ ॥

संकल्पाकारं दर्शयन् कामसंकल्पयोर्व्यावहारिकसत्यतामाह—आ-
शादीति ॥ ७ ॥

अन्वेष्यः परमात्माऽयं मायातत्कार्यलक्षितः ।
गुरुशास्त्रकृतो बोधस्तस्यान्वेषणमुच्यते ॥ ८ ॥

"सोऽन्वेष्टव्य" इत्येतद्व्याचक्षाणोऽन्वेषणपदार्थमाह—अन्वेष्य इति।
लक्षित इति ज्ञापित इत्यर्थः ॥ ८ ॥

ततोऽनुभूत्या विज्ञातुमेष्टव्यो धीनिरोधतः ।
ध्यायन् युक्त्या च मन्वानः स्वात्मानुभवमाप्नुयात् ॥ ९ ॥

"स विजिज्ञासितव्य" इत्येतद्व्याचष्टे—तत इति । ततो निरुक्तान्वेष-
णश्रवणानन्तरम् । अनुभूत्येति तृतीयाऽभेदे । धीनीरोधत इति । निदिध्यास-
त्यर्थः । एतच्चानुभूतिप्रयोजकम् । ध्यायन्निति । यतो युक्त्या मन्वानो ध्या-
स्वात्मानुभवंप्राप्नोतीत्यर्थः ॥ ९ ॥

य एवं वेत्त्यसौ सर्वान् लोकान् कामाँश्च विन्दते ।
लोकाधिष्ठानरूपत्वात्सर्वलोकात्मता भवेत् ॥ १० ॥

"स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामानि"ति वाक्यं व्याचष्टे—य इ-
एवम् । पूर्वोक्तश्रवणादिपुरस्सरम् । सोपपात्तिकं सर्वलोकाप्तिपदार्थमाह-लोकेति।

कामास्तु विषयानन्दाः स्वात्मानन्दस्यतेऽखिलाः ।
लेशास्ततः सर्वकामप्राप्तिरात्मविदोऽस्ति हि ॥ ११ ॥

सर्वकामाप्तिमुपपादयति—कामा इति । तत इति । अखिलविषयान-
स्वात्मानन्दलेशत्वादित्यर्थः । ॥ ११ ॥

एतत्प्रजापतेर्वाक्यं श्रुत्वा देवासुरास्तदा ।
उभयेऽपि बुभुत्सन्तः परमात्मानमादरात् ॥ १२ ॥

देवराजोऽसुरेशश्च तौ द्वाविन्द्रविरोचनौ ।
सत्यलोकं प्राप्य तस्मिन्नसेवेतां प्रजापतिम् ॥ १३ ॥

"तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितीन्द्रो हवै देवानामभि प्रवव्राज विरोचनोऽसुराणां तौ हा संविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतु"रित्येतद्व्याचष्टे—एतदित्यादिपद्यद्वयेन । आदरादित्यस्योत्तरपद्यस्थेनासेवेतामित्यनेनान्वयः ॥ १२ ॥ १३ ॥

द्वात्रिंशद्वर्षसेवातः प्रसन्नोऽसौ प्रजापतिः ।
अक्षिलक्षितमात्मानं ताभ्यां द्वाभ्यामवोचत ॥ १४ ॥

"तौह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति हो वाचैतदमृतमभयमेतद्ब्रह्मे"ति वाक्यं व्याचष्टे —द्वात्रिंशादित्यादिना । अक्षिलक्षितमक्ष्युपलक्षितम् ॥ १४ ॥

पूर्णत्वात्पुरुषो योऽस्ति परमात्मायमक्षणि ।
जाग्रत्साक्षितयास्थित्वा विद्वद्भिः सुविभाव्यते ॥ १५ ॥

"यः पुरुष" इत्यस्य व्याख्यानं परमात्मेत्यन्तम् । शिष्ट"मेषोऽक्षिणि दृश्यते" इत्येतस्येतिबोध्यम् जाग्रत्साक्षितयाऽक्षणि स्थित्वेत्याद्यन्वयः । यद्यपि तेनरूपेण त्वगादावपि स्थितस्तथापि न तत्र सुविभाव्य इति भावः ॥ १५ ॥

चिच्छायावानहङ्कारो मूढैरात्मेति भाव्यते ।
कर्ताभोक्ता सजीवः स्यात्परब्रह्मैवसाक्ष्यसौ ॥ १६ ॥

मूढैरनुभूयमानो जीवो न जाग्रत्साक्षी किन्तु विद्वद्भिस्तत्रानुभूयमानं परब्रह्मैवेत्याह—चिदिति । असौ अक्षणि अनुभूयमानः ॥ १६ ॥

ब्रह्मणोमरणाभावादमृतत्वं तदीर्यते ।
अद्वितीयतयाभीतिहेत्वभावाच्चनिर्भयम् ॥ १७ ॥

"एतदमृतमभयमेतद्ब्रह्मे"ति व्याचष्टे—ब्रह्मण इति । तदितिब्रह्मपरामार्शी निर्भयमित्यनेनान्वयि ॥ १७ ॥

प्रजापत्युक्तितात्पर्यं नानुबुद्धमुभावपि ।
राज्यवासनयाचित्तं तदीयं राजसंखलु ॥ १८ ॥

"अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष" इ-
दिन्द्रविरोचनीयं वचो व्याख्यातुं भूमिकामारचयति—प्रजेति । उभावपीत्यस्य
उभौ प्रतीति पाठो युक्तः । द्वयोरनवबोधे हेतुमाह राज्येत्यादि ॥ १८ ॥

अन्यदेहस्य याछाया साचक्षुष्युपलभ्यते ।
तामेवात्मतया प्राहेत्येषाबुद्धिरभूत्तयोः ॥ १९ ॥

तत्तात्पर्यानवबोधमभिनयति—अन्येति ॥ १९ ॥

छायात्मानं दृढीकर्तुं पुनः पप्रच्छतुर्गुरुम् ।
अप्स्वादर्शेचयोर्दृष्टश्छायात्मासोऽयमेव किम् ॥ २० ॥

तद्वाक्यं व्याचष्टे—छायेति । अयमेवाक्षण्युपदिष्ट एव ॥ २० ॥

तदीयमन्यथाज्ञानं बुद्ध्वापि न निराकरोत् ।
सभामध्येमानभङ्गे बुद्धिभ्रंशोभवेदिति ॥ २१ ॥

मूढौ युवां विपरीतग्राहिणाविति यन्निराकरणं तदभावे हेतुं ब्रुवन् '
उ एवैषु सर्वेष्वन्तेषु परिख्यायत" इति प्रजापतिवाक्यतात्पर्यमाह—तदीये
पद्यद्वयेन । श्रुतावन्तेषु मध्येषु ॥ २१ ॥

स्वेनाक्षण्युपदिष्टो यः स सर्वत्रापि तिष्ठति ।
इत्युक्त्योपायतस्तौ द्वौ बोधयामीत्यमन्यत ॥ २२ ॥

उपायत इति । उदशरावादिदृष्टान्तादित्यर्थः । बोधयामीत्यस्य सा-
मित्यादिः । इत्युक्त्येत्यस्येत्यमन्यतेत्यनेनान्वयः ॥ २२ ॥

शरावेजलयुक्ते वा केवलौ वीक्ष्यतौ पुनः ।
सालंकारावेक्ष्याथ छायां नात्मेति बुध्यताम् ॥ २३

इदानीं "शराव आत्मानमवेक्ष्ये"त्यादि "एवमेवेमौ भगवः सा-
कृतौ सुवसनौ परिष्कृता"वित्यन्तं व्याचष्टे—शरावइत्यादित्रिकेण

शरावेकेवलौवीक्ष्यतौ देहौ पुनः सालंकारौ वा अवेक्ष्याथ आत्मेति छायां भवन्तौ न बुध्यतामिति प्रजापत्यभिप्राय उदशरावदृष्टान्ते ॥ २३ ॥

छायाया अन्यथात्वं स्यात् साक्षी चैकविधः स्थितः ।
आत्मत्वं निर्विकारस्य शक्यतेबोद्धुमञ्जसा ॥ २४ ॥
तथापि पापबाहुल्यप्रतिबद्धधियातुभौ ।
छायात्मतां शरावोक्त्या दृष्ट्वां कृत्वात्यतुष्यताम् ॥ २५ ॥

पूर्वोक्तदृष्टान्तेन च्छायाया अनात्मत्वमात्मनश्च निर्विकारत्वं झटितिबोद्धुं शक्यमित्याह—छायाया इति । तर्हि कुतो न ते ताभ्यां बुद्धे इत्याशङ्क्याह-तथापीति ॥ २४ ॥ २५ ॥

कालेन प्रति बन्धस्य क्षये सत्यथ तं पुनः ।
उपदेशं शराबाख्योपायं चालोच्यमोक्ष्यते ॥ २६ ॥
इत्युपेक्ष्यगुरुस्तस्थौ तौ राज्यत्यागत श्चिरम् ।
प्रयासं प्राप्यसहसा जग्मतुः स्वस्वलोकयोः ॥ २७ ॥

"एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"ति प्रजापतिवाक्यतात्पर्यं व्याचक्षण"स्तौशान्तहृदयौ प्रवव्रजतु"रितिश्रुतिवाक्यं व्याचष्टे—कालेनेत्यादि पद्येन ॥ २६ ॥ २७ ॥

एतौप्रजापतेः शिष्यावितिभ्रान्त्याविपर्ययम् ।
तदीयं प्राप्यनश्येयुरिति सोऽघोषयद्गुरुः ॥ २८ ॥

"अनुपलभ्यात्मानमननुविद्यव्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा ते पराभविष्यन्ति" इति प्रजापति घोषणास्थानीयं वाक्यं स्पष्टतया व्याख्याय तत्र हेतुमाह—एताविति पद्येन । तदीयमिन्द्रविरोचनीयम् ॥२८॥

विरोचनस्तामसत्वाच्छीघ्रं तानसुरान्प्राति ।
गत्वादेहात्मतां तेभ्य उपादिक्षन्निजेच्छया ॥ २९ ॥

"सहशान्तहृदय एव विरोचनोऽसुराञ्जगामतेभ्योहैतामुपनिषदं प्रोवाच"-त्यादेः, "एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्त" इत्यन्तस्य तात्पर्यमाह—विरोचन इत्यादित्रिकेण ॥ २९ ॥

अक्षिच्छायादेहजन्यातया देहोपलक्षणात् ।
देह आत्मास्वस्वदेहं सदा पूजयतासुराः ॥ ३० ॥

उपदेशमेवाह—अक्षीति । देहजन्यत्वादक्षिच्छाययादेहात्माप्रजापते प्रेतो यतोऽतो हेऽसुरा यूयं सदा देहं पूजयतेत्यर्थः ॥ ३० ॥

देहे दृढेऽत्रभोगोऽस्तिमुक्तिः स्याच्छवपूजया ।
इत्यासुरः सम्प्रदायः प्रायेणाद्यापि दृश्यते ॥ ३१ ॥

"तस्मादप्यद्येहाददानमश्रद्दधानमि"त्यादिश्रुत्युक्तमासुरसम्प्रदायमाह— इति ॥ ३१ ॥

इन्द्रस्तु सात्विकत्वेन मननं कुरुतेऽध्वनि ।
आन्ध्यादयोऽपिछायायामलंकारादयोयथा ॥ ३२ ॥
एवं सत्यभयं ब्रह्म देहच्छाया कथं भवेत् ।
एवं मत्वासमागत्यगुरोरग्रेतथाऽवदत् ॥ ३३ ॥

"अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वप्यस्मिञ्छरीरे स्वलङ्कृते साध्वलंकृतो भवती"त्यादि "नाहमत्रभोग्यं पश्यामि," इत्यन्तं द्रष्टे—इन्द्र इति । मननमभिनयति—आन्ध्येत्यादिना कथं भवेदित्यन्तेन समित्पाणिः पुनरेयाये"त्यादे "नाहमत्र भोग्यंपश्यामि" इत्यन्तस्य तात्पर्यमाह समागत्येति ॥ ३२ ॥ ३३ ॥

पापक्षयाय द्वात्रिंशद्वर्षाणि तपसे वस ।
पूर्वोपदिष्टं भूयोऽपि ब्रवीमीत्याह तं गुरुः ॥ ३४ ॥

"एतं त्वेवते भूयोऽनुव्याख्यास्यामिवसापराणि द्वात्रिंशतंवर्षाणि" इत्याचष्टे—पापेति ॥ ३४ ॥

जाग्रतिस्थूलदेहेन सांकर्यं शङ्क्यते ततः ।
स्वप्ने यश्चरतीवासौ साक्ष्यात्मेत्यवगम्यताम् ॥ ३५ ॥

"य एषस्वप्ने महीयमानश्चरत्येष आत्मेति"व्याचक्षाणोजाग्रति आ

देशं विहाय स्वप्ने तदुपदेशस्य तात्पर्यमाह—जाग्रतीति । सांकर्यं शङ्क्यते इति । अभेदशङ्काभवतीत्यर्थः । ततो निरुक्तशङ्कातः ॥ ३५ ॥

आन्ध्यरोगादयोदोषाश्छायायां देहविम्बगाः ।
भान्ति स्वप्ने तु नैवेति तुष्टो वव्राज पूर्ववत् ॥ ३६ ॥

"सहशान्तहृदयः प्रवव्राजे"ति व्याचष्टे—आन्ध्येति ॥ ३६ ॥

मन्वानः सन्नन्यदोषानपश्यत्स्वप्नमात्मानि ।
चोर व्याघ्रादयोघ्नन्तीत्यादीनागत्यचाब्रवीत् ॥ ३७ ॥

"सहाप्राप्यैवदेवानि"त्यादेः "नाहमत्रभोग्यं पश्यामि" इत्यन्तस्य तात्पर्यं दर्शयति—मन्वान इति । स्वप्नमिति । अस्यप्राप्येतिशेषः । वस्तुतः स्वप्ने इति सप्तम्येकवचनान्तः पाठो युक्तः । "स समित्पाणिः पुनरेयाये"त्यादि "नाहमत्रभोग्यं पश्यामी"त्यन्ताग्रेतनवाक्यतात्पर्यमाह—आगत्येति ॥ ३७ ॥

स्वप्नेऽपि वासना देहः शङ्क्येतेति सुषुप्तिगम् ।
साक्षिणं प्रोक्तवाँस्तस्मै द्वात्रिंशद्वर्षसेविने ॥ ३८ ॥

"सहापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मे"त्यादेरभिप्रायं वर्णयन् स्वप्नेऽपि आत्मनि वासनाजन्यदेहाभेदशङ्का संभवत्यतः सुषुप्तावुपदेश इत्याह—स्वप्न इति ॥ ३८ ॥

तुष्टोऽगच्छत्सुषुप्तिस्थे जाड्यं दोषमवैक्षत ।
विनष्टसदृशः सुप्तावात्मेत्यागत्य चाब्रवीत् ॥ ३९ ॥

"सहशान्तहृदयः प्रवव्राजे"त्येतद्व्याचष्टे—तुष्टोऽगच्छदिति । "नाहमत्रभोग्यं पश्यामी"त्यन्तस्य तात्पर्यं दर्शयति सुषुप्तिस्थ इत्यादिना सुप्तावात्मेतीत्यन्तेन । "ससमित्पाणिः पुनरेयाये"त्यादि "नाहमत्र भोग्यं पश्यामी"त्यन्तंव्याचष्टे—आगत्येति ॥ ३९ ॥

अमूर्त्तं कारणं देहं बोद्धुं पापक्षयादसौ ।
शक्तोऽभूदिति सन्तुष्टः पुनः प्रोवाच तं गुरुः ॥ ४० ॥

"एवमेवैषमघवन्नि"त्याद्युपक्रम्य पठितस्य वशा ऽपराणि पञ्चवर्षाणीत्यादेः

तस्मैहोवाचे''त्यन्तस्य तात्पर्यमाह—अमूर्त्तमिति पद्यद्वयेन । अमूर्त्तं कार्यं पापक्षयाद्बोद्धुमसाविन्द्रः शक्तोऽभूदिति सन्तुष्टो गुरुः प्रजापतिस्तमिन्द्रं पुनः त्यन्वयः ॥ ४० ॥

पञ्चवर्षाणि सेवस्व पापशेषक्षयाय ते ।
इत्युक्त्वा सेवते तस्मै गुरुः स्पष्टमुपादिशत् ॥ ४१ ॥

ते तव । सेवते सेवमानायात्रवर्तमानसमीपे भूतेलटः सता ॥ ४१ ॥

मघवन् यत्त्वया बुद्धं शरीरं तत्त्रिधा स्थितम् ।
स्थूलं सूक्ष्मं कारणं च तत्तु सर्वं विनश्वरम् ॥ ४२ ॥

"मघवन् मर्त्यंवा इदं शरीरमि"त्यादि । "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीत्यन्तं व्याचष्टे—मघवन्नित्यादिपद्यषट्केन । कारणं रूपम् ॥ ४२ ॥

अनश्वरात्मतत्त्वस्य प्रवेष्टुर्जीवरूपतः ।
भोगाधिष्ठानमेवैतद्वपुर्नास्यात्मताऽस्ति हि ॥ ४३ ॥

"तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमि"त्यंशं व्याचक्षाणो "ऽनेन नात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतिसिद्धोऽस्य जीवरूपेण इत्याह—प्रवेष्टुरिति । अस्य वपुषः ॥ ४३ ॥

जाग्रत्स्वप्नसुषुप्तेषु भासयेद्योवपुस्त्रयम् ।
स साक्ष्यात्मा ब्रह्मतास्य सुखदुःखादिवर्जनात् ॥ ४४ ॥

कस्यात्मतेत्यपेक्षायां साक्षिणस्सेत्याह—जाग्रदिति ॥ ४४ ॥

आत्मनःप्रतिविम्बो यः सोऽयं देहं प्रविष्टवान् ।
प्रतिरूपो वभूवेति श्रुत्यन्तरसमीरणात् ॥ ४५ ॥

भोक्तारञ्जीवमाह-आत्मन इति देहमिति अत्र सप्तम्यन्तोऽपि पाठो उदाहृतश्रुतौ प्रवेशः प्रतिविम्बात्मनोबोध्य इत्याह—प्रतिविम्ब इति । रूपं प्रतिरूपोवभूवेति श्रुतिं प्रमाणयति—प्रतिरूप इति ॥ ४५ ॥

स भोक्ता त्रिषु देहेषु तादात्म्यमभिमन्यते ।
स शरीरः स्वकर्मोत्थे भुङ्क्तेऽवश्यं प्रियाप्रिये ॥ ४६ ॥

"आत्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीत्यं"शं विवृण्वन् जीवस्य भोक्तृत्वे तन्त्रं शरीरत्रयतादात्म्याभिमानरूपं सशरीरत्वमित्याह—स इति ॥ ४६ ॥

अशरीरं साक्षिणं तु स्पृशेते न प्रियाप्रिये ।
संसारतदभावौ द्वौ सुस्थितौ कर्तृसाक्षिणोः ॥ ४७ ॥

"अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशत" इत्येतद्व्याचष्टे—अशरीरमिति । सुस्थितौ व्यवस्थितौ । जीवे संसारः साक्षिणि तदभाव इति व्यवस्थां दर्शयति—कर्त्रिति ॥ ४७ ॥

एवं व्यवस्थितेऽप्यज्ञः कर्तृदेहेषु साक्षिणम् ।
अशरीरं प्रवेश्याशु सुखं दुःखं चमन्यते ॥ ४८ ॥

"अशरीरोवायुरभ्र"मित्यादि "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इत्यन्तं व्याचष्टे—एवमित्यादिपद्याष्टादशकेन । कर्तृदेहेष्विति । कर्तरिदेहेषु चेत्यर्थः । प्रवेश्य । तादात्म्येनाध्यस्य । अज्ञस्याविवेके सति साक्षिणि दुःखाद्यभिमान इत्यर्थः ॥ ४८ ॥

विवेके सति साक्ष्येव शरीरेभ्यः समुत्थितः ।
स्वाभाविकेन ब्रह्मात्म रूपेण व्यवतिष्ठते ॥ ४९ ॥

विवेक इति । "अस्माच्छरीरात्समुत्थाये"त्यस्य व्याख्यापूर्वार्द्धम् । परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इत्यस्य शिष्टमर्धम् । शरीरेभ्यः समुत्थितस्त्यक्तदेहत्रितयाभिमानः ॥ ४९ ॥

अस्मिन्नर्थे साक्षि तुल्या दृष्टान्ता देहवर्जिताः ।
वाय्वभ्रविद्युतां नास्ति हस्तपादादिमद्वपुः ॥ ५० ॥

"अशरीरो वायु"रित्याद्विव्याचष्टे—अस्मिन्निति । साक्षितुल्यता देहराहि-

त्यम् । अशरीराण्येतानि इति श्रुत्युक्तं देहवर्जितत्वं दृष्टान्तानामाह-वाय्विति

अदेहा वृष्टिसिद्ध्यर्थमाकारान्काँश्चिदाप्नुवन् ।
वृष्टिनिष्पादकस्तत्तदाकारो व्योम्नि दृश्यते ॥ ५१ ॥

अदेहा इति । अस्य वाय्वभ्रादय इति शेषः । व्योम्नीति । अस्य समय इत्यादिः ॥ ५१ ॥

आकारावृष्टिकालात्प्राग् व्योम्निगूढा नतु स्फुटाः ।
ततो व्योम्नः समुत्थाय निदाघे ज्योतिराप्नुवन् ॥ ५२ ॥

"तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरूपसम्पद्यस्वेनरूपेणाभिनिष्पद्यन्ते" इत्येतत्तात्पर्यं दर्शयति—आकारा इत्यादिभ्यां द्वाभ्याम् । ततः प्राग् व्योम्नि गूढत्वादित्यर्थः ॥ ५२ ॥

संतापाख्यं परं ज्योतिः प्राप्यते न दृढी कृताः ।
वृष्टिकाले स्वस्वरूपं स्फोरयन्तीति दृश्यते ॥ ५३ ॥

एतदेव स्पष्टयति-सन्तापेति ॥ ५३ ॥

तथायमशरीरः सन् साक्ष्य ज्ञानतिरोहितः ।
देहेऽन्तर्भूय वपुषो विवेकेन समुत्थितः ॥ ५४ ॥

"एवमेवैषसम्प्रसाद" इत्यादिदार्ष्टान्तिकं सप्रपञ्चं विभजते-तथे- अन्तर्भूयेत्यस्य स्थित इति शेषः । विवेकेन वपुषः समुत्थित इत्यन्वयः ॥ ५४ ॥

परं ज्योति र्ब्रह्मरूपं प्राप्यवाक्योत्थबोधतः ।
स्वेन वास्तवरूपेण निर्द्वैतेनावभासते ॥ ५५ ॥

"परं ज्योतिरूपसम्पद्यस्वेनरूपेणाभिनिष्पद्यत" इत्यस्यतात्पर्यमाह-मिति । वाक्योत्थबोधत इत्यस्य प्राप्येत्यनेनान्वयः ॥ ५५ ॥

स्वतः साक्षी संप्रसादः कालुष्येण विवर्जनात् ।
अविद्यया स्यात्कालुष्य देहतादात्म्यविभ्रमात् ॥ ५६ ॥

सम्प्रसादपदार्थमाह—स्वत इति । स्वरूपेण साक्षिणि कालुष्याभाव

पाधिकं कालुष्यमित्यर्थः । अविद्ययेत्यस्य देहेत्यादिनाऽन्वयः ॥ ५६ ॥

जागरे स्थूलसूक्ष्माभ्यां तादात्म्याद् व्याधयोऽखिलाः ।
आधयश्चास्य सन्तीदं महत्कालुष्यमिष्यते ॥ ५७ ॥
ईषत्कलुषता स्वप्ने सूक्ष्ममात्राभिमानतः ।
सुप्तौ तेनापि हीनत्वादयमात्मा प्रसीदति ॥ ५८ ॥

जागरेमहत् स्वप्ने ईषत्कालुष्यं दर्शयन् दर्शयति सुषुप्तौ प्रसादं जागर-इत्यादिपद्यद्वयेन । अस्य साक्षिणः ॥ ५७ ॥ ५८ ॥

कालुष्यबीजमज्ञानमस्त्यत्रार्थे विवेकिनः ।
बीजेनापि विहीनत्वात्सम्यगेव प्रसीदति ॥ ५९ ॥

विवेके सति बीजाभावादात्मासम्प्रसीदतीति सम्प्रसादपदार्थमभिनयति—कालुष्येति । अत्र । सुषुप्तौ ॥ ५९ ॥

स्वतः साक्षी सम्प्रसादस्तत्स्वरूपानुभूतये ।
समुत्थानं भवेदस्य देहादिभ्यो विवेचने ॥ ६० ॥

साक्षिस्वरूपानुभवफलकं विवेकपूर्वकं देहात्मभावनात्यागरूपं शरीरात्समुत्थानमाह—स्वत इति ॥ ६० ॥

समुत्थितस्य जीवत्व निवृत्त्यै ब्रह्मरूपताम् ।
महावाक्यानि सर्वाणि बोधयन्त्यातियत्नः ॥ ६१ ॥

"स उत्तमः पुरुष" इत्येतद्व्याख्यातुं भूमिकामाह—समुत्थितस्येति । महावाक्यानि तत्त्वमस्यादीनि ॥ ६१ ॥

परं ज्योति र्ब्रह्मरूपं प्राप्यवाक्यार्थबोधतः ।
उत्तमः पुरुषः स स्याद्यः पुराक्षणि वर्णितः ॥ ६२ ॥

अवतारितवाक्यं व्याचष्टे—परमिति । यः पूर्वमक्षणिसाक्षितयोपदिष्टः स एव वाक्यार्थबोधात्परं ज्योति र्ब्रह्मप्राप्य उत्तमः पुरुषः स्यादित्यन्वयः ॥ ६२ ॥

देहादज्ञानतः कार्यात्कारणाच्चायमुत्तमः ।
जीवत्वहानाद्ब्रह्मत्वभावाच्चोत्तमतोचिता ॥ ६३ ॥

उत्तमत्वमुपपादयति—देहादिति । देहात्कार्यात् । अज्ञानात्कारणा[illegible]
योजना ॥ ६३ ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ६४ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
इत्याह भगवान् कार्यकारणाभ्यां तमुत्तमम् ॥ ६५ ॥

एतदेव भगवद्वाक्येन द्रढयति—द्वावित्यादिपद्यद्विकेन ॥ ६४ ॥ [illegible]

उत्तमोऽयं पुमान् मूढप्राणिनामपि विद्यते ।
तत्र तत्त्वविदः कोऽतिशयः स्यादिति चेच्छृणु ॥ ६६

"स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभि[र्वा]
नोपजनंस्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिन् [शरीरे]
प्राणो युक्तः" इत्येतदेकविंशत्या पद्यैर्व्याख्यास्यन् निरास्यां शङ्कां दर्शयति—उत्त[मो]
त्यादिना । तत्र मूढप्राणिनामपि पुरुषोत्तमात्मकत्वे ॥ ६६ ॥

सत्तूत्तमब्रह्मरूपं तत्त्ववित्स्वात्मवस्तुनि ।
पर्येति स्वात्मबुद्ध्यैतं सर्वदेहस्थमीक्षते ॥ ६७ ॥

"स तत्र पर्येति" इत्येतद्व्याचष्टे—स इति । स इत्यस्य व्याख्या[सत्तूत्त]
मब्रह्मरूपं तत्त्वविदिति । तत्रेत्यस्य व्याख्यास्वात्मवस्तुनीति । पर्येति इत्यस्य [व्या]
ख्यानं तदुत्तरं शिष्टम् ॥ ६७ ॥

इन्द्रराजादिदेहेषु नाना खाद्यानि भक्षयन् ।
बालैः साकं हसन् स्त्रीभिः कदाचिद्रमते सह ॥ ६८ ॥
यानैः क्वापि ज्ञातिभिश्च सहितो मोदते खलु ।
न कदाचित्स्मरत्येतद्वपुर्जनसमीपगम् ॥ ६९ ॥

"जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीर"मित्येतद्व्याचष्टे—इन्द्रेत्यादिद्वाभ्याम् । यानैः । अश्वादिभिः ॥ ६८ ॥ ६९ ॥

एतद्देहेन तादात्म्यभ्रान्त्या दुःखमभूत्पुरा ।
विवेकेन भ्रमेऽपेते तद्दुःखं नाद्यवीक्षते ॥ ७० ॥

श्लोकद्वयोक्तमर्थं विशदयति—एतदित्यादिपद्यत्रयोदशकेन । तद्दुःखमेतद्देहगतं दुःखम् । अद्य ज्ञानावस्थायाम् ॥ ७० ॥

इन्द्रराजादिदेहेषु न तादात्म्यं पुरापि च ।
अतो न तद्देहदुःखशङ्काऽप्यस्याद्य विद्यते ॥ ७१ ॥

इन्द्रेति । पुरापि । अपिपदार्थः अद्येति । अतः सर्वदा तद्देहतादात्म्याभावात् चतुर्थपादेनेत्यपपाठोऽसम्बद्धत्वात्तेन तत्स्थानेऽद्यशब्दो निवेशितश्चकारो वा निवेशनीयः ॥ ७१ ॥

सुखानि तद्देहगानि साक्षी सर्वाण्यवेक्षते ।
साक्ष्यात्मत्वाभिमानी सन् ज्ञानी तान्यभिमन्यते ॥ ७२ ॥
दुःखान्यपीक्षते साक्षी तथाप्येतेषु तत्त्ववित् ।
नाभिमानमुपादत्ते दुःखानां मायिकत्वतः ॥ ७३ ॥
ब्रह्मानन्दस्य लेशाः स्युरानन्दा विषयोत्थिाः ।
अतस्तत्त्वविदः पक्षपातो ह्येतेषु विद्यते ॥ ७४ ॥

तद्देहगानां साक्षीक्षितानां सुखानां ज्ञान्यभिमानीभवति । न तादृशानां दुःखानामिति सहेतुकमाह—सुखानीत्यादिपद्यत्रयेण ॥ ७२ ॥ ७३ ॥ ७४ ॥

पुण्यमेवामुमाप्नोति न देवान् पापमाप्नुयात् ।
इति श्रुत्यन्तरं ब्रूते सुखं सर्वात्मदर्शिनः ॥ ७५ ॥

उक्तमर्थं श्रुत्यन्तरारूढं करोति-पुण्यमिति । तज्जन्यं सुखमित्यर्थः ॥ ७५ ॥

प्रजाः शोचन्तियत्किञ्चित्तासामेव भवेदिदम् ।
न सर्वात्मदृशोऽस्तीति प्राहैतदपि सा श्रुतिः ॥ ७६ ॥

तस्य दुःखाभिमानो नास्तीत्यत्रापि श्रुतिमर्थतः पठतिप्रजा इति। शोकरूपं वस्तु ॥ ७६ ॥

सर्वात्मत्वेऽपि देहादि दोषलेपो न मेऽस्ति हि।
अदुष्टा सूर्यभा यद्वच्चण्डालादिस्पृगप्यसौ ॥ ७७ ॥

सर्वात्मत्वेऽपि देहादिदोषलेपाभावे सूर्यप्रभां दृष्टान्तयति—सर्वेति ॥

ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मे वपुः स्मृताः।
कामक्रोधादयो दोषा जायेरन् मे कुतोऽन्यतः ॥ ७८

देहादिदोषाभावमुपपादयति—ब्रह्मेति । जायेरन्नित्यस्य तेष्वित्यां अन्यस्येत्यर्थकमन्यत इति मे इत्यनेनान्वेति ॥ ७८ ॥

इत्याचार्या ब्रह्मबोधकुशला अभवन् पुरा।
सुखमात्रग्राहिणोऽत्र दृष्टान्ताः सन्त्यनेकशः ॥ ७९ ॥

दुःखाभिमानशून्यत्वे सति सुखाभिमानवत्वं तस्यैतिह्यारूढं इतीति । अत्र दुःखाभिमानरहितसुखाभिमानवत्वं ॥ ७९ ॥

वृक्षे मधुकरः पुष्परसं गृह्णाति नेतरत्।
यतिर्भिक्षामुपादत्ते नाशौचं कस्यचिद्गृहे ॥ ८० ॥

दृष्टान्तं दर्शयति—वृक्ष इति ॥ ८० ॥

मूर्खस्यापि सुखे पक्षपातोऽस्तीत्युच्यते यदि।
तर्हि तस्य प्रसिद्ध्यर्थं तत्त्वं सोऽप्यवगच्छतु ॥ ८१
तत्त्वे बुद्धे स्वदेहेन तादात्म्यं न स्मरत्यसौ।
तेन दुःखे विनष्टेऽथ सुखमेव सदेक्षते ॥ ८२ ॥

मूर्खस्य सुखपक्षपातेऽपि तत्त्वमवगन्तव्यं येन देहतादात्म्यविस्म दुःखादर्शनेसदा सुखेक्षणं स्यादित्याह—मूर्खस्येत्यादिपद्यद्वयेन ॥ ८१ ॥ ८२

तादात्म्यस्याऽस्मृतौ देहनिर्वाहो नेति चेच्छृणु।
अश्वादिनेव प्राणेन प्रेरितं रक्ष्यते वपुः ॥ ८३ ॥

शङ्कानिरासकत्वेन "स यथा प्रयोग्य आचरणेयुक्त एवमेवायमस्मिञ्छरीरे प्राणेयुक्तः" इत्येतद्व्याचष्टे–तादात्म्येत्यादित्रिकेण ॥ ८३ ॥

रथे प्रयोगयोग्योऽश्वः शिक्षितः सारथिं विना ।
स्वयमेव सदाभ्यासाद्गन्तव्यं प्रापयेत्खलु ॥ ८४ ॥

अश्वादिनेवेति दृष्टान्तं विभजते–रथ इति ॥ ८४ ॥

ईश्वरेणास्य देहस्य प्रेरणाय नियोजितः ।
प्राणस्तद्भोगदेशेऽमुं देहं नयति कर्मणा ॥ ८५ ॥

दार्ष्टान्तिके दृष्टान्तसिद्धमर्थं योजयति–ईश्वरेणेति । कर्मणाधर्मादिना ॥ ८५ ॥

गर्भस्थानां च बालानां निर्वाहो वपुषो यथा ।
जीवन्मुक्तस्य देहेऽपि निर्वाहः स्यात्तथा न किम् ॥ ८६ ॥

प्रारब्धफलकर्मणां देहरक्षादावावश्यकत्वमाह–गर्भेति ॥ ८६ ॥

समाधावात्मरूपेण व्युत्थाने भोग्यरूपतः ।
सर्वानन्दान्सदा भुङ्क्ते मुक्तस्यातिशयो ह्ययम् ॥ ८७ ॥

उत्तमोऽयं पुमान् मूढप्राणिनामपि विद्यते । तत्र तत्त्वविदः कोऽतिशयः स्यादित्याशङ्कितमातिशयमुपपाद्योपसंहरति–समाधाविति । समाधावात्मरूपेण सर्वानन्दान् भुङ्क्ते । अभेदस्तृतीयार्थः । समाधितो व्युत्थाने भोग्यरूपतस्तान् भुङ्क्ते इत्याद्यन्वयः । सदा समाधौ व्युत्थाने च ॥ ८७ ॥

मुक्तेन बुद्धः साक्ष्येष सर्वाक्षेषु विभाव्यताम् ।
तत्तदिन्द्रियसंयुक्तात्रिपुटीं भासयत्यसौ ॥ ८८ ॥

"अथ यत्रैतदाकाशमनुविषण्णं चक्षुः सचाक्षुषः पुरुषो दर्शनाय चक्षुरित्यादियस्तमात्मानमनुविद्यविजानाती"त्यन्तं व्याचष्टे–मुक्तेनेत्यादिपद्याष्टकेन । यो मुक्तेन बुद्ध एष साक्षी सर्वेन्द्रियेषु भासतेइति विभाव्यतां ज्ञायताम् । असौ साक्षी । तत्तदिन्द्रियविशिष्टां ज्ञातृज्ञानज्ञेयरूपां त्रिपुटीं भासयतीत्यन्वयः ॥ ८८ ॥

भासमाने साक्षितत्त्वे तद्भासाभास्यमिन्द्रियम् ।
चक्षुर्वियत्यभिव्याप्य रूपं सर्वं प्रकाशयेत् ॥ ८९ ॥

त्रिपुटीभासकस्य साक्षिण इन्द्रियभासकत्वमाह—भासमान इति कृ यत्यभिव्याप्य भासमाने साक्षितत्त्वे साक्षिभासाभास्यं चक्षुरिन्द्रियं सर्वरूपं शयेदितियोजना ॥ ८९ ॥

द्रष्टाहं कृत्यवच्छिन्नो दर्शनं चक्षुषः क्रिया ।
दृश्यं रूपमियं सर्वा त्रिपुटी भाति साक्षिणि ॥ ९० ॥

तस्य त्रिपुटीभासकत्वं दर्शयितुं त्रिपुटीं निरूपयितुमारभते—द्रष्टेति ॥

साक्षिणो भासकत्वेऽपि रूपगन्धादिभित्तये ।
चक्षुर्घ्राणाद्यक्षजातं सर्वसाधारणं मनः ॥ ९१ ॥

इन्द्रियाणामुपयोगमाह—साक्षिण इति । रूपगन्धादिभित्तये । रूपगन्धा वैलक्षण्याय । सर्वसाधारणम् । रूपगन्धादिज्ञानसाधारणकारणम् ॥ ९१ ॥

जिघ्राणीममहं गन्धमित्यादित्रिपुटीमिमाम् ।
सदा भासयते साक्षी स एवात्मोत्तमः पुमान् ॥ ९२ ॥

"अथ यो वेदेदं जिघ्राणी"त्यादि व्याचष्टे—जिघ्राणीति । सदा पुमान् आत्मा साक्षीमां ज्ञातृज्ञानज्ञेयरूपां त्रिपुटीं जिघ्राणीममहं गन्धमित्यादि भासयत इत्यन्वयः ॥ ९२ ॥

मनोऽस्य दैवं चक्षुः स्यात्कालत्रयविभासनात् ।
तेन भुङ्क्ते ब्रह्मलोकस्थितान् कामान्निजात्मनि ॥ ९३ ॥

"मनोऽस्य दैवं चक्षु"रित्यादि"यएते ब्रह्मलोक"इत्यन्तं व्याचष्टे—मन इति

देवाः सर्वे तमात्मानमुपास्य प्राप्नुवन्त्यमून् ।
कामाँल्लोकाँश्चात्मतत्त्वं वुद्ध्वा सर्वात्मतां जगुः ॥ ९४ ॥

"तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आ च कामा"इत्यस्य तात्पर्यमाह—देवा इति । सर्वलोकप्राप्तिं तेषामुपपादयि त्मतत्त्वमिति । जगुः । प्रापुः ॥ ९४ ॥

अन्योऽपि यस्तमात्मानमन्विष्य गुरुशास्त्रतः ।
स्वानुभूत्या विजानाति स तानाप्नोति देववत् ॥ ९

"स सर्वांश्चलोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति" इति व्याचष्टे—अन्योऽपीति । आन्विष्य श्रुत्वा ॥ ९५ ॥

प्रजापतिरुवाचेत्थमिन्द्रायेत्थं पुनः पुनः ।
एकाधिकं वर्षशतं सेवित्वासौ च लब्धवान् ॥ ९६ ॥

"इति ह प्रजापतिरुवाचे"त्येतच्छ्रुतिवचनं व्याचष्टे—प्रजेति । प्रजापति-रिन्द्रायेत्थं पुनः पुनरुवाच असाविन्द्रश्च इत्थंपुनः पुनः एकाधिकं वर्षशतं सेवित्वा लब्धवानिति सम्बन्धः ॥ ९६ ॥

गुरुशुश्रूषया पापं विद्यायाः प्रतिबन्धकम् ।
अपैति विद्या लब्धा स्यादित्यत्रेन्द्रो निदर्शनम् ॥९७॥
सर्वज्ञेनोपदिष्टाऽपि प्रतिबन्धक्षयं विना ।
न लभ्यतेऽत्र दृष्टान्तो विरोचन उदीरितः ॥ ९८ ॥
गुरुः कारुणिको भूत्वा सोढ्वायासं पुनः पुनः ।
प्रजापतिरिव प्राप्तानुगृह्णीत सर्वथा ॥ ९९ ॥

आख्यायिकायास्तात्पर्यमाह—गुर्वित्यादित्रिकेण । विद्येत्यस्य तत इत्या-दिः ॥ ९७ ॥ ९८ ॥ ९९ ॥

प्रजापतेरियं विद्या कथितानुग्रहाद्गुरोः ।
सच्छिष्याननुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १०० ॥

इति श्रीविद्यारण्यमुनिकृतेऽनुभूतिप्रकाशे । छान्दोग्ये प्रजापतिविद्याप्रकाशो नाम पञ्चमोऽध्यायः ॥ ५ ॥

छान्दोग्यव्याख्यामुपसंहरन् विद्यातीर्थगुरोरनुग्रहं सच्छिष्येषु प्रार्थयते—प्रजेति ॥ १०० ॥

इति च्छान्दोग्येमितप्रकाशविवृतौ प्रजापतिविद्याप्रकाशो
नाम पञ्चमोऽध्यायः ।

## अथ षष्ठोऽध्यायः ।

ब्रह्मविद्यां शौनकाय यामुवाचांगिरा मुनिः ।
अथर्वणे मुण्डकेऽसौ विशदीकृत्य वक्ष्यते ॥ १ ॥

मुण्डकोपनिषदं व्याख्यातुं प्रतिजानीते—ब्रह्मेति । अथर्वणे मुण्डके व्यधिकरणे सप्तम्यौ । असौ, ब्रह्मविद्या ॥ १ ॥

चतुर्मुखादिके सम्प्रदाये यो मुनिरङ्गिराः ।
उपसद्य यथा शास्त्रमेतं पप्रच्छ शौनकः ॥ २ ॥

"शौनकोहवै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु विज्ञाते सर्वमिदं विज्ञातं भवती"त्येतद्व्याचष्टे—चतुरित्यादिपद्यद्वयेन । यथाशास्त्रमित्यस्योपसद्येत्यनेन सम्बन्धः । एतमाङ्गिरसम् ॥ २ ॥

एकस्मिन्विदिते सर्वं विज्ञातमिति वैदिकी ।
प्रसिद्धिरस्ति तद्वस्तु किं स्यान्निश्चित्य मे वद ॥ ३ ॥

वैदिकीति । "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातंविज्ञात" श्रुतिः ॥ ३ ॥

श्रृणु विद्ये उभे तावद्वेदितव्ये परापरे ।
पृष्टं वस्तु तयोर्मध्ये गम्यते परविद्यया ॥ ४ ॥

"तस्मै सहोवाच द्वेविद्येवेदितव्ये" इत्यादे"रथ परा यया तदक्षरमधिगम्यते" इत्यन्तस्य तात्पर्यमाह—श्रृणिवत्यादिपद्यसप्तकेन । पृष्टमित्यस्य शेषः । तयोः परापरविद्ययोः ॥ ४ ॥

षडङ्गसहिता वेदा विज्ञायन्ते यया धिया ।
सा धीरपरविद्या स्याद्ब्रह्मधीस्तु परामता ॥ ५ ॥

परापरविद्येविशदयति—षडिति ॥ ५ ॥

उपनीतेन विज्ञेया वेदाः सर्वे न तावता ।
ब्रह्मधीः किन्तु वैराग्ये स्यादाचार्योपदेशतः ॥ ६ ॥

उपनीतविज्ञेयत्वसामान्येऽपि सर्ववेदानामौपनिषदब्रह्मबुद्धौ वैराग्या

देशप्रयोज्यत्वरूपपरत्वं विशेष इत्याह—उपनीतेनेति । तावतेति । उपनयनपुरस्सरवेदाध्ययनमात्रेण । अत्र "अष्टवर्षं ब्राह्मणमुपनयीत, तं वेदमध्यापयीत, एकादशवर्षं क्षत्रियं, द्वादशवर्षं वैश्यम् । स्वाध्यायोऽध्येतव्यः परीक्ष्य लोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायान्नास्त्यकृतः कृतेन । आचार्यवान् पुरुषो वेद तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्याद्याः श्रुतयोऽनुसन्धेयाः ॥ ६ ॥

वैदिक्यप्यधिकारस्य भेदादुक्ता पृथक् परा ।
विप्राः परिव्राजकाश्च तिष्ठन्तीति यथातथा ॥ ७ ॥

द्वयोरपि परापरविद्ययोर्वैदिकत्वेऽपि वैराग्यादिरूपाधिकारभेदात् परा ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तेत्याह—वैदिकीति ॥ ७ ॥

यस्यामपरविद्यायां कर्माण्युक्तानि साधकाः ।
कुर्वन्ति कर्मभिः शुद्धिः परविद्यां करोतिहि ॥ ८ ॥

वैराग्यवता क्रियमाणानि कर्माणि चित्तशुद्धिद्वारा परविद्यां कुर्वन्तीत्यपि विशेषोऽपरविद्यातः परविद्यायामित्याह— यस्यामिति । कर्मभिरिति तस्यामपरविद्यायां विहितैः कर्मभिर्जनिताचित्तशुद्धिर्जिज्ञासोत्पादनद्वारा परविद्यां करोति इति हि प्रसिद्धं "तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"इत्यादिश्रुतिषु "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते" इत्यादिस्मृतिषुचेत्यर्थः ॥८॥

परया चाक्षरं ज्ञेयमेतस्मिन् विदिते सति ।
सर्वं जगद्भवेद्बुद्धं तस्य सर्वात्मकत्वतः ॥ ९ ॥

अथ "परा यया तदक्षरमधिगम्यते" इत्यस्य तात्पर्यमाह—परयेति॥९॥

न विनाऽनुष्ठितं कर्मवेदनं पर्यवस्यति ।
ब्रह्मधीस्तावतैव स्यात्फलदेति परामता ॥ १० ॥

कर्मज्ञानमनुष्ठानं विना न पर्यवस्यति न फलदं भवति, ब्रह्मज्ञानं तु स्वोत्पादेनैव फलदमित्यपि ततस्तस्यां विशेषमाह—न विनेति अनुष्ठानमनुष्ठितं भावे निष्ठाप्रत्ययात् ॥ १० ॥

तद्द्रेश्यमक्षरं कीदृगिति चेदभिधीयते ।
ज्ञानेन्द्रियैर्न विज्ञेयं ग्राह्यं कर्मेन्द्रियैर्नवा ॥ ११ ॥

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणि पादं नित्यं विभुं सर्व-गतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्तिधीराः" इत्येतद्व्याचष्टे-तद्द्रेश्या-दिपद्याष्टकेन । अद्रेश्यमितिपदं व्याचष्टे--ज्ञाने इति । अग्राह्यमित्यस्य व्या-ग्राह्यमित्यादि ॥ ११ ॥

न गोत्रं काश्यपाद्यस्ति वर्णः शुक्लादिकश्चन ।
न ज्ञानेन्द्रियमस्त्यस्य नापिकर्मेन्द्रियं तथा ॥ १२ ॥

अगोत्रमित्यस्य व्याख्या गोत्रमिति । अवर्णमित्यस्य सा वर्णइत्या-अचक्षुः श्रोत्रं तदपाणिपादमित्येतदपि उपलक्षणपरतया व्याचष्टे--ने-त्तरार्द्धेन ॥ १२ ॥

नित्योऽक्षरपदार्थोऽयं तद्विनाशानिरूपणात् ।
विभुर्विविधभावित्वात्तच्च सर्वात्मकत्वतः ॥ १३ ॥

नित्यमित्यनेन श्रुत्याऽक्षरपदार्थो दर्शित इत्याह—नित्य इति । वि-दार्थमाह--विभुरिति । विविधभावित्वात् । विविधं ब्रह्मादिस्थावरान्तप्राणि-ति तत्त्वादित्यर्थः । एवं व्याख्यानेन सर्वगतपदेन पुनरुक्तिशङ्काप्रतिक्षिप्ता ॥

आकाशवत्सर्वगोऽतः परिच्छेदो न देशतः ।
न कालतोऽपि नित्यत्वाद्विभुत्वान्नापि वस्तुतः ॥ १४ ॥

सर्वगतपदं व्याचक्षाणस्तत्पदनित्यविभुपदैरक्षरपदार्थस्य परिच्छेदत्र-ताबोधितेत्याह--आकाशेति ॥ १४ ॥

सर्वगस्यापि सूक्ष्मत्वादक्षागोचरतोदिता ।
परिमाणाल्पता नात्र सौक्ष्म्यं दुर्लक्षता तु तत् ॥ १५ ॥

सुसूक्ष्मपदं व्याचष्टे—सर्वगस्येति ज्ञानेन्द्रियकर्मेन्द्रियाग्राह्यत्वे सूक्ष्म-त्वं तच्च दुर्लक्षत्वं नाणुत्वं सर्वगतत्वेन विरोधादित्यर्थः । उदितेति अद्रेश्यमग्राह्यमित्यनेनेति शेषः ॥ १५ ॥

हस्तग्राह्यो घटः स्थूलो ध्वनिः सूक्ष्मस्तदग्रहात् ।
स्वरूपसौक्ष्म्यमेतत्स्यादक्षरेऽपि भवेदिदम् ॥ १६ ॥

हस्ताद्यनेकेन्द्रियग्राह्यो घटः स्थूलोभवति तदभावात् शब्दः सूक्ष्म इति पूर्वार्धार्थः । एतत्—ध्वनिगतं स्वरूपभूतं सौक्ष्म्यं नतु परिमाणविशेषरूपमिति तृतीयपादार्थः । चतुर्थपादेनाक्षरेऽपि तत्संभवमाह—अक्षरेऽपीति । इदं स्वरूपसौक्ष्म्यम् ॥ १६ ॥

धनस्येव व्ययो नास्य विक्रियादेरसम्भवात् ।
स्थिरजङ्गमभूतानां हेतुं तं मन्वते बुधाः ॥ १७ ॥

पूर्वार्द्धोत्तरार्द्धाभ्यां क्रमेणाव्ययपदभूतयोनिपदव्याख्यामाह—धनस्येत्यादि । यथा धनस्यापचयलक्षणो व्यय एवमस्य न । "जायतेऽस्ति वर्द्धते" इत्याद्युक्तविकारासम्भवादिति पूर्वार्द्धार्थः ॥ १७ ॥

यदुक्तलक्षणं तत्तु कौटस्थ्यादक्षरं भवेत् ।
तद्ययावेद्यते सेयं पराविद्येति कीर्तिता ॥ १८ ॥

परविद्याव्याख्यामुपसंहरति—यदुक्तेति । "यत्तदद्रेश्य"मित्यादिनोक्तमदृश्यत्वादि लक्षणमस्येति बहुव्रीहिः । कौटस्थ्यान्निर्विकारत्वात् ॥ १८ ॥

न युक्तं भूतयोनित्वं साधनान्तरवर्जनात् ।
एकस्माच्चेतनाद्भूरिजडानामप्यसम्भवात् ॥ १९ ॥
वह्वोषध्यो यथैकस्या भूमेर्जाता यथाजडाः ।
केशाश्चेतनतो जातास्तथात्वक्षरतो जगत् ॥ २० ॥
ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि ।
अन्यानपेक्षस्तद्वत्स्यादक्षरस्यापि हेतुता ॥ २१ ॥

"यथा ऊर्णनाभिः सृजते गृह्णते च, यथा पृथिव्यामोषधयः सम्भवन्ति, यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वमित्येतं मन्त्रं शङ्कानिरासपरत्वेन व्याचष्टे—नेत्यादिपद्यत्रयेण । तत्र प्रथमं शङ्कात्रयपरं तदुत्तरं द्वयं समाधानपरमितिविवेकः । न युक्तमिति । अक्षरस्य भूतयोनित्वं न युक्तं साधनान्तरराहि-

स्यादेकस्माद्भूरीणामसम्भवाच्चेतनाज्जडानामसंभवाच्चेति सम्बन्धः । तत्र [illegible] शङ्कां निरस्यति—वह्निरित्यादिना जाता इत्यन्तेन । तृतीयशङ्कां निरस्यति- जडा इत्यादिना । प्रथमशङ्कां निरस्यति—ऊर्णनाभिरिति । ऊर्णना[illegible] कीटः ॥ १९ ॥ २० ॥ २१ ॥

ब्रह्मणो जगदुत्पत्तेः क्रमोऽयमवगम्यताम् ।
वक्ष्यमाणेन तपसा ब्रह्मादावुपचीयते ॥ २२ ॥

"तपसा चीयतेब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं कर्मसु चामृत"मितिमन्त्रं व्याख्यातुं प्रक्रमते—ब्रह्मण इति । तपः पदार्थं [illegible] क्ष्यमाणेनेति । सृज्यमानविषयबुद्धिरूपेणेत्यर्थः । आदौ प्रथमम् ॥ २२ ॥

अङ्कुरोत्पादकं वीजमुच्छूनं स्याद्यथा जलात् ।
सृज्यस्य बुद्धया संयुक्तं स्याद्ब्रह्मोपचितं तथा ॥ २[३]

एतदेव सदृष्टान्तमाह—अङ्कुर इति । तथोपचितं स्यादिन्यन्वयः ।

भोग्यवर्गाङ्कुराख्यं यदन्नं तज्जायते ततः ।
अव्याकृतं व्याचिकीर्षावस्थमन्नमिहोच्यते ॥ २४ ॥

भोग्येति । प्रपञ्चस्याङ्कुरनामकं यदन्नं तत्तत उपचिताद्ब्रह्मणो [illegible] व्याचिकीर्षावस्थामापन्नमव्यक्तमिह मन्त्रेऽन्नपदार्थ इत्यर्थः ॥ २४ ॥

तस्मादन्नात्क्रियाशक्तिः प्राणो ज्ञानस्य साधनम् ।
मनश्चाजायत स्थूलं सत्याख्यं भूतपञ्चकम् ॥ २५ ॥
ततो भूम्यादयो लोका ज्योतिष्टोमादिकर्मसु ।
अमृताख्यं स्वर्गफलमित्थं सर्वमजायत ॥ २६ ॥

"अन्नात्प्राण" इत्यादिमन्त्रोत्तरार्द्धं व्याचष्टे—तस्मादित्यादिपद्य[illegible] ज्ञानस्य साधनमित्येतद् मनोऽन्वयि । ज्योतिष्टोमादिकर्मस्वित्येतदमृते[illegible] न्वेति ॥ २५ ॥ २६ ॥

ब्रह्मैव जगदाकारं स्याच्चेतद्विकृतं भवेत् ।
नोचेज्जगन्न जायेतेत्यत्रप्रतिविधीयते ॥ २७ ॥

इदानीं "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्मनामरूपमन्नं च जायते"—इत्येतं मन्त्रं व्याख्यातुं भूमिकामारचयति—ब्रह्मेति । चेदिति । अस्य विकृतमिति शेषः । प्रतिविधीयते समाधिरुच्यते ॥ २७ ॥

निरुपाधिब्रह्मतत्त्वं जगदाकारभाङ् नहि ।
मायोपाधिक एवायं सर्वज्ञः सृजते जगत् ॥ २८ ॥

तमाह—निरिति ॥ २८ ॥

सामान्यवृत्त्या सर्वज्ञो विशेषेण च सर्ववित् ।
ज्ञानमेव तपोऽस्यास्माज्जगद्वेदाद्यजायत ॥ २९ ॥

मन्त्रे सर्वज्ञसर्ववित्पदयोः पौनरुक्त्यं परिहरति—सामान्येति । सामान्यवृत्त्या सामान्यरूपेणेत्यर्थः ॥ २९ ॥

जगत्कारणमद्वैतं ज्ञातव्यं परविद्यया ।
ज्ञातेऽस्मिन् सर्वजगतस्तत्त्वं यत्तद्विबुध्यते ॥ ३० ॥

व्याख्यातग्रन्थस्य तात्पर्यमाह—जगदिति ॥ ३० ॥

अपरा वेदविद्या तु कर्मानुष्ठानमार्गतः ।
साधनं परविद्यायाः सत्यं तत्कर्मणः फलम् ॥ ३१ ॥

"तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यँस्तानि त्रेतायां बहुधा संततानि तानि आचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके" इत्येतद्व्याख्यातुमवतारयति—अपरेति । अपरविद्या कर्मानुष्ठानद्वारा परविद्यां साधयतीत्यर्थः । सत्यमिति । तत्कर्मणोऽपरविद्याविहितकर्मणः फलं सत्यमवश्यम्भावीत्यर्थः ॥३१॥

काम्यकर्मफलं स्वर्गो नित्यकर्मफलं धियः ।
शुद्धिस्तच्चोभयं कर्म कृत्वावश्यमवाप्नुयात् ॥ ३२ ॥

सत्यपदं व्याचष्टे—काम्येति । काम्यानां कर्मणां स्वर्गादि, नित्यानां तेषां चित्तशुद्धिः फलम् । कर्मानुष्ठानानन्तरमवश्यम्भवतीत्यवश्यभाविफलकत्वात्कर्मापि सत्यमित्यर्थः ॥ ३२ ॥

१६

हे सत्यकामाः कर्माणि मन्त्रब्राह्मणदर्शिनः ।
कुरुध्वमेष वः पन्था भोगमोक्षप्रसिद्धये ॥ ३३ ॥

मन्त्रोत्तरार्द्धं व्याचष्टे—हे सत्यकामा इति । स्पष्टम् ॥ ३३ ॥

अग्निहोत्रं जुहोत्यादौ कुर्याद्दर्शादिकानथ ।
तदभावे जन्मसु स्यात्सप्तस्वेतस्य दुर्गतिः ॥ ३४ ॥

"यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरे प्रतिपादयेत्" इत्यादिम् "आसप्तमाँस्तस्य लोकान् हिनस्ति" इत्यन्तं व्याचष्टे—अग्निहोत्रमिति । अग्निहोत्रं जुहोतीतिवाक्यं स्वविहितकर्मपरम् । अग्निहोत्रपूर्वकं दर्शादिकं कुर्यात्तदकरणे जन्मसप्तकं तस्य दारिद्र्यं भवतीत्यर्थः ॥ ३४ ॥

काल्यादिवह्निजिह्वासु होतारं तं यथाविधि ।
आहुत्याख्या देवतास्ता इन्द्रलोके नयन्ति हि ॥ ३५ ॥
प्रियं वदन्त्य एहीति वहन्त्यः सूर्यरश्मिभिः ।
पुण्यार्जितो लोक एष इत्युक्त्वा प्रापयन्ति तम् ॥ ३६ ॥

"काली कराली च मनोजवा च सुलोहिताया च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वा" । इत्यादि । "एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः "इत्यन्तं व्याचष्टे—काल्यादीत्यादिद्विकेन यथाविधि होतारमित्यन्वयः । तं कर्मिणम् ॥ ३५ ॥ ३६ ॥

काम्यकर्मफलं प्रोक्तमीश्वरार्पितकर्मणः ।
फलं संसारहेयत्वबुद्धिः साऽथ विविच्यते ॥ ३७ ॥

वृत्तं कथयन् वर्तिष्यमाणमाह—काम्येति । काम्यानां कर्मणां "एष वः पुण्यः सुकृतो ब्रह्मलोक" इत्यन्तया श्रुत्योक्तमथेश्वरार्पितकर्मणः संसारहेयत्वबुद्धिरूपं तत् । "प्लवा ह्येते" इत्याद्यया "हीनतरं वा विशन्ती"त्यन्तया विविच्यते इत्यर्थः ॥ ३७ ॥

क्षुद्रायास्तरणं नद्याः प्रसिद्ध्यत्यदृढैः प्लवैः ।
न समुद्रस्य यज्ञश्च तद्वच्छिथिलसाधनम् ॥ ३८ ॥

तत्र "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ती" तिवाक्यं व्याचष्टे—क्षुद्राया इत्यादिपद्यद्वयेन । शिथिलसाधनमिति । शिथिलं साधनं मोक्षं प्रतीत्यर्थः ॥ ३८ ॥

तेनाप्नोति स्वर्गमात्रं नतु मोक्षं तथा सति ।
कर्मनिष्ठा जरामृत्यू प्राप्नुवन्ति पुनः पुनः ॥ ३९ ॥

एतदेवाह—तेनेति । स्वर्गमात्रमित्यत्रत्यमात्रपदार्थमाह—नतु मोक्षमिति । तथा सति—मोक्षाभावे सति ॥ ३९ ॥

ज्ञानवद्वैदिकत्वेन कर्मणो मुक्तिहेतुता ।
अस्तीति चेन्न संसारमूलहेत्वनिराकृतेः ॥ ४० ॥

ननु ज्योतिष्टोमादिकं मोक्षजनकं वैदिकत्वाज्ज्ञानवदिति तस्य मोक्षहेतुत्वे-सिद्धे—कथमुच्यते कर्मिणां पुनः पुनर्जरामृत्युप्राप्तिरित्याशङ्क्य अनुमानस्याज्ञान-निवर्तकत्वरूपोपाधिपराहतत्वादिति परिहरति—ज्ञानवदिति ॥ ४० ॥

अविद्या संसृतेर्मूलमेतस्यामेव कर्मिणः ।
वर्तन्ते नतु जानन्ति ब्रह्मात्मानं सदद्वयम् ॥ ४१ ॥
पण्डितंमन्यतां प्राप्ताः कर्मकाण्डार्थवेदनात् ।
गुरुश्च तादृगेतातो ह्यन्धनीतान्धवत्स्थिताः ॥ ४२ ॥

"अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा" इतिमन्त्रं पद्यद्विकेन व्याचक्षाण उपाधेः साधनाव्यापकत्वं दर्शयति—अविद्येति ॥ ४१ ॥ ४२ ॥

अहं यज्वा वाजपेयराजसूयादिभिर्मखैः ।
कृतार्थ इति रागेण मत्वा भोगक्षये पतेत् ॥ ४३ ॥

"अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः यत्कर्मिणो

न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते" इति मन्त्रं व्याचष्टे-... रागेण कर्मफलरागेण । वाजपेयराजसूयादिभिर्यज्वाहं कृतार्थ इति मत्वा ... सति पतेदित्यन्वयः ॥ ४३ ॥

वरिष्ठं कर्म मत्वास्माच्छ्रेयोऽन्यन्नैव वेत्त्यसौ ।
स्वर्गादागत्य विप्रत्वं प्राप्नोति श्वादिजन्म वा ॥ ४४ ॥

पूर्वोक्तमन्त्रस्य व्याख्यानभूतः "इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति" इति यो मन्त्रस्तं व्याचष्टे—वरिष्ठमित्यादिसार्धपद्येन । अस्मात्कर्मणोऽन्यच्छ्रेयस्साधनं नैव वेत्तीतिसम्बन्धः । असौ तादृग्ज्ञाता ॥ ४४ ॥

कर्मान्तरं चेद्रम्यं स्याद्विप्रत्वं श्वादिताऽन्यथा ।
असारतामिमां वेत्ति शुद्धधीर्नित्यकर्मभिः ॥ ४५ ॥
उपासको ब्रह्मलोकं प्राप्नोत्यावृत्तिवर्जितम् ।
तथापि भूयानायासो मुक्तिश्चास्य विलम्बते ॥ ४६ ॥

स्वर्गादागत्य विप्रत्वमित्यादिनोक्तमर्थं विशदयति—कर्मान्तरमिति । अन्यथा कर्मणोऽरम्यत्वे । वैराग्यादिसम्पन्नस्योपासकस्य हिरण्यगर्भलोकप्राप्तिः ...न्तःपातिनी मुक्तिरित्येतपरस्य "तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" इति मन्त्रस्य तात्पर्यं दर्शयति—असारतामित्यादिसार्धपद्येन ॥ ४५ ॥ ४६ ॥

परीक्ष्य कर्मजाँल्लोकान् कर्मणा मुक्त्यसम्भवात् ।
विरक्तो ब्रह्मबोधार्थं गुरुमेति यथाविधि ॥ ४७ ॥

ब्रह्मलोकप्राप्तिपर्यन्तं संसाररूपं कर्मफलमुक्त्वेदानीं तस्माद्विरक्तस्य विद्यायामधिकारप्रदर्शनार्थोऽयं मन्त्रः "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति" तत्तात्पर्यमाह—परीक्ष्येत्यादित्रिकेण ॥ ४७ ॥

वेदान्तानामनेकत्वात् संशयानां बहुत्वतः ।
वेद्यस्याप्यतिसूक्ष्मत्वान्न जानाति गुरुं विना ॥ ४८ ॥

ननु गुरुं विनापि ब्रह्म जानीयादित्याशङ्क्य परिहरति—वेदान्तानामिति ॥४८॥

श्रवणान्मननाद्ध्यानादप्युपायाद् गुरूदितात् ।
अज्ञानसंशयौ जह्याद्विपरीतां च भावनाम् ॥ ४९ ॥

गुरूपसदनस्य फलान्तरमप्याह—श्रवणादिति ॥ ४९ ॥

गुरुश्च योग्यशिष्याय विद्यामक्षरबोधिनीम् ।
ब्रूयात्स्वकीयविद्यायाः सम्प्रदायप्रवृत्तये ॥ ५० ॥

इदानीं "तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या"मिति मन्त्रस्य तात्पर्यमाह—गुरुरिति ॥ ५० ॥

तदेतदक्षरं सत्यं मायाशक्तिसमन्वितम् ।
तस्मात्सर्वे समुत्पन्ना विस्फुलिङ्गा यथाग्नितः ॥ ५१ ॥

याऽक्षराधिगमिनी विद्या शिष्याय गुरुणा वक्तव्या तामतःपरेण मुण्डकसमाप्तिपर्यन्तेन ग्रन्थेन गुरुराहेत्याह—तदेतदक्षरं सत्यमित्यादिना । षष्ठाध्यायसमाप्तिपर्यन्तेन ग्रन्थेन । तत्र ताव"त्तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" इति मन्त्रं व्याचष्टे—तदेतदक्षरमिति ॥ ५१ ॥

अक्षरात्मा स्वयं ज्योतिर्मायारूपाक्षरात्परः ।
अचिन्त्यशक्तिरनृता मायाऽस्मिन्कल्पयेज्जगत् ॥ ५२ ॥

"दिव्योह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरोह्यजः । अप्राणो ह्यमनाः शुभ्रोह्यक्षरात्परतः पर" इति मन्त्रस्य तात्पर्यमाह—अक्षरात्मेति ॥ ५२ ॥

मायाविनोऽस्मात्प्राणादि वियदादि च जायते ।
ततो विराड्भूत्तस्मिन्नवशिष्टमभूज्जगत् ॥ ५३ ॥

इदानीम् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"त्यादिम्, "अतश्च सर्वा ओषधयोरसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मे"त्यन्तं ग्रन्थं व्याचष्टे—मायाविन इति ॥ ५३ ॥

पुरुषो मायया सर्वजगद्रूपेण भासते ।
सर्वं पुरुष एवातो वस्तुतत्त्वावलोकने ॥ ५४ ॥

"पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद गुहायां सो विद्याग्रन्थिं विकिरतीह सोम्ये"त्यस्य तात्पर्यं विस्पष्टयति-पुरुष- त्रिकेण, मन्त्रपूर्वार्द्धव्याख्या पुरुष इति ॥ ५४ ॥

देहत्रयगुहायां यच्चैतन्यं साक्षि विद्यते ।
एतत्सर्वात्मकं ब्रह्मेत्येवं बुद्ध्वा तमो नुदेत् ॥ ५५ ॥

तदुत्तरार्द्धं वर्णयति—देहेति ॥ ५५ ॥

अज्ञोऽहमिति तादात्म्यमज्ञानस्यात्मतास्ति यत् ।
अविद्याग्रन्थिरेव स्यात्स च बोधाद्विकीर्यते ॥ ५६ ॥

अविद्याग्रन्थिपदार्थं ब्रुवन् मन्त्रव्याख्यामुपसंहरति—अज्ञइति ॥ ५६ ॥

आविर्भूतं स्वयं भानात्स्वत्वात्सन्निहितं च यत् ।
ब्रह्मास्मिन्कल्पितं सर्वमिति धीर्बोध उच्यते ॥ ५७ ॥

अविद्याग्रन्थिर्बोधाद्विकीर्णो भवतीत्युक्तं तत्र यादृशबोधात्स विनष्टः तादृशबोधपरम् "आविः सन्निहितं गुहाचरन्नामे"त्यादिं तदेतत्सत्यं तदमृतम् मन्त्रराशिं तात्पर्यतो वर्णयति—आविर्भूतमिति ॥ ५७ ॥

सा धीश्चेन्न स्थिरा तर्हि प्रणवेन विचिन्तयेत् ।
बाणेन विध्यते लक्ष्यं विध्येद्ब्रह्म तथा धिया ॥ ५८ ॥
धीर्बाणो धनुरोंकारो ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं लग्ना ब्रह्मणि धीर्भवेत् ॥ ५९ ॥
दृढं लग्नं बालशल्यमाकृष्टमपि नाव्रजेत् ।
मुक्तशल्यः समागच्छेत् बाण एव वृथा यथा ॥ ६० ॥
ब्रह्मसँल्लग्नधीरेवं स्वयं नायाति कुत्रचित् ।
किन्त्वकिञ्चित्करं चक्षुराद्येवायाति बाह्यतः ॥ ६१ ॥

उक्ताधियश्चाञ्चल्ये तन्निवृत्त्युपायपरं "धनुर्गृहीत्वे"त्यादिं "शरवत्तन्मयो भवे"दित्यन्तं मन्त्रं व्याचष्टे—श्लोकपञ्चकेन ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

दर्शनादिक्रियाः कुर्वन् यथापूर्वं य इन्द्रियैः ।
सिद्ध्यसिद्धी न जानाति जीवन्मुक्तः स उच्यते ॥६२॥

यस्य ब्रह्मसंलग्ना धीर्बहिर्नायाति किन्तु चक्षुराद्येव स जीवन्मुक्त इत्याह—दर्शनादीति—सिद्ध्यसिद्धी इति तयोः सम इत्यर्थः ॥ ६२ ॥

पञ्चीकृतोक्तमार्गेण प्रणवध्यानमाचरेत् ।
ततो जगदधिष्ठानमेकमेव सदेक्ष्यते ॥ ६३ ॥

"यस्मिन् द्यौः पृथिवी चान्तरिक्ष"मित्यादेस्तात्पर्यमाह—पञ्चीकृतेति । पञ्चीकरणग्रन्थोक्तप्रकारेणेत्यर्थः ॥ ६३ ॥

लौकिकीर्वैदिकीश्चान्याः सर्वा वाचः परित्यजेत् ।
ध्यायेच्चेद्ब्रह्म तस्यात्र धीग्रन्थ्यादि विनश्यति ॥ ६४ ॥

अन्या वाचो विमुञ्चथेत्युक्तान्यवाग्विमोकस्य ब्रह्मध्याने तस्य च हृद्ग्रन्थ्यादिविनाशे उपयोगमाह—लौकिकीरिति ॥ ६४ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ६५ ॥

धीग्रन्थ्यादिविनाशप्रतिपादकमत्रत्यमन्त्रं व्याख्यातुमुपन्यस्यति—भिद्यत इति ॥ ६५ ॥

परमव्याकृतं यस्मादवरं स्याच्चिदात्मनः ।
दृष्टे तस्मिन्नहङ्कारचितोर्ग्रन्थिर्विभिद्यते ॥ ६६ ॥

मन्त्रं व्याचष्टे—परमिति । यस्माच्चिदात्मनः स्वकार्यापेक्षया परमव्यक्तमवरं तस्मिन् दृष्टे इति योजना ॥ ६६ ॥

अहंकारस्य कर्तृत्वं चित्यध्यस्य तथा चितः ।
स्फूर्त्तिं चाहंकृतौ ग्रन्थिं कुर्यान्माया तयोर्दृढम् ॥ ६७ ॥

अविद्यावासनाप्रचयरूपहृदयग्रन्थेरध्याससहकृता माया निदानं ज्ञानेन त-

न्निवृत्तौ तन्निवृत्तिरित्याह—अहङ्कारस्येति । स्फूर्तिं चेति । चकारेणाध्यस्येत्यनुकर्षः ॥ ६७ ॥

भिन्ने ग्रन्थौ विवेकेन संशया ब्रह्मतत्त्वगाः ।
छिद्यन्ते स्याद्भाविजन्महेतुकर्मक्षयस्तथा ॥ ६८ ॥

छिद्यन्त इत्यादिशेषमन्त्रव्याख्यामाह—भिन्न इति ॥ ६८ ॥

आनन्दरूपं हृत्कोशे यद्भाति प्राणिनां सदा ।
तच्छुभ्रं ज्योतिषां ज्योतिर्द्रष्टव्यं तन्मुमुक्षुभिः ॥ ६९ ॥
भासका अपि सूर्याद्यास्तद्भासयितुमक्षमाः ।
तस्मिन्नादौ भासमाने तद्भासा भासतेऽखिलम् ॥ ७० ॥

"हिरण्मये परे कोशे" इत्यादे"स्तस्य भासासर्वमिदं विभाती"त्यन्ततात्पर्यमाह—आनन्दरूपमित्यादिपद्यद्विकेन ॥ ६९ ॥ ७० ॥

सर्वासु दिक्षु तद्भाति तस्मिन्नन्तर्भवत्यदः ।
जगत्ततः पृथङ्नास्ति तरङ्गादिर्जलाद्यथा ॥ ७१ ॥
जलतत्त्वं तरङ्गादौ ब्रह्मतत्त्वं तथाऽखिले ।
ततो ब्रह्मणि विज्ञाते विज्ञातं सकलं भवेत् ॥ ७२ ॥

"ब्रह्मैवेदममृतं पुरस्तादि"त्यादेस्तात्पर्यमाह—सर्वास्वित्यादिपद्यकेन ॥ ७१ ॥ ७२ ॥

अखण्डैकरसं ब्रह्म समाधावेव भासते ।
व्युत्थाने भोक्तृभोक्तारौ भासेते पक्षिवत्पृथक् ॥ ७३ ॥

"द्वा सुपर्णा सयुजेत्यादे" स्तात्पर्यमाह–अखण्डैकरसमित्यादिद्विकेन ॥ ७३ ॥

वृक्षे पक्षी फलं भुङ्क्ते क्षुधितोऽन्यस्तु वीक्षते ।
चिच्छायावानहंकारो भुङ्क्ते चिद्वीक्षते तथा ॥ ७४ ॥

पक्षिवदिति दृष्टान्तं विशदयँस्तत्सिद्धमर्थं दार्ष्टान्तिके योजयति—इति ॥ ७४ ॥

बोधात्पुरा तु चिद्भ्रान्त्या मग्ना भोक्तरि शोचति ।
सा भ्रान्तिर्भोक्तृनिष्ठैव तद्विवेकोऽपि भोक्तृगः ॥७५॥

"समाने वृक्षे पुरुषो निमग्न" इत्यादेस्तात्पर्यमाह—बोधादित्यादिद्विकेन । तद्विवेक इति । भ्रान्तिनिवृत्तिफलको विवेक इत्यर्थः ॥ ७५ ॥

भोगावान्तरभेदौ हि भ्रांतितद्बाधकावुभौ ।
इतरारोपवत्तौ च चित्यध्यस्तौ न वास्तवौ ॥ ७६ ॥

उक्तमेवार्थं विशदयति—भोगेति । इतरारोपवदिति । जीवेशाद्यारोपवदित्यर्थः ॥ ७६ ॥

विविनक्ति यथा भोक्ता पुण्यपापे तथास्य नो ।
क्रीडत्यात्मन्यसौ ध्यानाद्द्यूतादौ मूढवत्सदा ॥ ७७ ॥
आत्मन्येव रतिं कुर्यात्सर्वदा नित्यकर्मवत् ।
वरिष्ठो ब्रह्मवित्स्वेष व्यर्थक्षणविवर्जनात् ॥ ७८ ॥

"यदापश्यः पश्यते रुक्मवर्णमि"त्यादिमन्त्रद्विकस्य विविनक्तीत्यादिपद्यद्विकेन तात्पर्यमाह "ब्रह्मविदांवरिष्ठ" इत्यस्य व्याख्यावरिष्ठो ब्रह्मवित्स्वेष इति, एष आत्मरतिर्ब्रह्मवित् ब्रह्मवित्सु वरीयानिति योजना ॥ ७७ ॥ ७८ ॥

सत्यं तपो ब्रह्मचर्यं विद्याधिकृतिकारणम् ।
मुख्याधिकारी विद्यायां वरिष्ठो ब्रह्मविद्भवेत् ॥ ७९ ॥

सत्यादिकं विद्याधिकारकारणमित्येतत्परं "सत्येन लभ्यस्तपसाह्येष आत्मे"त्यादिमन्त्रं व्याचक्षाणोऽन्तर्मुखधीकत्वरूपात्मरतित्वं मुख्याधिकारित्वप्रयोजकमित्याह—सत्यमित्यादिना ॥ ७९ ॥

न चक्षुषा नापि वाचा नान्यैरक्षैश्च गृह्यते ।
न कर्मणा न तपसा विनान्तर्मुखतां क्वचित् ॥ ८० ॥

"न चक्षुषागृह्यते नापि वाचा नान्यैर्देवैस्तपसाकर्मणावे"त्यादिव्याख्ययोक्तं द्रढयति—नेत्यादिना । देवैरित्यस्य व्याख्याऽक्षैरिति ॥ ८० ॥

ध्यानेनान्तर्मुखो वाक्याद्ब्रह्मात्मानमवेक्षते ।
विशुद्धबुद्धिरात्मज्ञो यथा वक्ति तथा भवेत् ॥ ८१ ॥

"यं यं लोकं मनसा संविभाति" इत्यादे"स्तस्मादात्मज्ञं ह्यर्चेतद् भूतिकाम" इत्यन्तस्य तात्पर्यमाह—ध्यानेनेत्यादिद्विकेन ॥ ८१ ॥

भूतिकामो विभूत्यर्थमात्मज्ञं सर्वदाऽर्चयेत् ।
निष्कामस्तमुपासीनो वेत्ति ब्रह्मत्वमात्मनः ॥ ८२ ॥

"सर्वदैतत्परमं ब्रह्मे"त्यादिं "ते शुक्रमेतदतिवर्तन्ति" इत्यन्तं मन्त्रं व्याचक्षाण आत्मज्ञमर्चयतोरकामसकामयोः फलभेदमाह भूतीति ॥ ८२ ॥

कामश्रैष्ठ्यपरः कामैस्तत्र तत्र प्रजायते ।
जीवन्नेवात्मवित्सर्वकामानां लयमाप्नुयात् ॥ ८३ ॥

"कामान् यः कामयते मन्यमान" इत्यादिमन्त्रस्य तात्पर्यमाह-कामैः कामानेव श्रेष्ठत्वेन मन्यते यः स इत्यर्थः ॥ ८३ ॥

न वेदपाठबाहुल्यान्न बहुश्रुतितस्तथा ।
आत्मा लभ्योऽथ देवोऽयं वृणुते तेन लभ्यते ॥ ८४ ॥

"नायमात्मा प्रवचनेन लभ्य" इत्यादिमन्त्रत्रिकस्य तात्पर्यमाह—नेत्यादिपद्यषट्केन । वृणुते यमनुगृह्णाति तेनेति योजना श्लेषरीत्यात्रायं यच्छेदोऽन्यतरच्छेद इतरदध्याहार्यं वा ॥ ८४ ॥

ईश्वरानुग्रहादेव भवेदद्वैतवासना ।
तस्माद्ब्रह्मार्पितं कर्म कुर्यादीश्वरतुष्टये ॥ ८५ ॥

ईश्वरतुष्ट्याऽद्वैतभावना भवति तत्तुष्टिश्च तदर्पितकर्मणेत्याह—ईश्वरेति ॥८५॥

ईशानुग्रहयुक्तस्य सच्चिदानन्दलक्षणाम् ।
तनुं विवृणुते स्वीयां परमात्मा ह्यशेषतः ॥ ८६ ॥
श्रवणं मननं ध्यानं यस्य न प्रबलं भवेत् ।
प्रमादो वास्ति विषयासक्त्यात्मा न स बुध्यते ॥ ८७ ॥

विवृणुते प्रकाशयति ॥ ८६ ॥ ८७ ॥

तपो नास्त्याश्रमोपेतं यस्य शुद्धा न तस्य धीः ।
सम्पत्त्या श्रवणादीनामसौ ज्ञानेन तृप्यति ॥ ८८ ॥

आश्रमोपेतं सन्यासाद्याश्रमेण युक्तम् । चतुर्थपादे नञोऽनुषङ्गो बोध्यः । ज्ञाने इति—सप्तम्यन्तं छित्वा नानुषङ्गः कार्य इति कश्चित् ॥ ८८ ॥

वेदान्तधीनिश्चितार्थाः सन्यासाच्छुद्धबुद्धयः ।
ब्रह्मदृष्टौ स्थिराश्चान्ते मुच्यन्ते मूलकारणात् ॥ ८९ ॥

मूलकारणात् अज्ञानात् ॥ ८९ ॥

संसारिणां देहपातोऽपरान्तः पुनरुद्भवात् ।
परान्तो विदुषां देहपातः पुनरनुद्भवात् ॥ ९० ॥

"वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" इत्यस्य तात्पर्यमाह—संसारिणामित्यादिसार्धपद्येन ॥ ९० ॥

परान्तकाले मुक्ता ये ब्रह्मत्वात्ते परामृताः ।
कलाः पञ्चदशैतेषां लीयन्ते स्वस्वकारणे ॥ ९१ ॥

"गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती"ति मन्त्रं व्याख्यातुमारभते—कला इत्यादिना ॥ ९१ ॥

प्राणः श्रद्धाखादिभूतपञ्चकं चेन्द्रियं मनः ।
अन्नं वीर्यं तपो मन्त्राः कर्म लोकाश्च ताः कलाः ॥ ९२ ॥

कास्ताः पञ्चदशेत्यपेक्षायामाह—प्राण इति ॥ ९२ ॥

वागादीननुगृह्णन्ति वन्ह्यादेःशक्तयः पुरा ।
ताश्च देवानेव यान्ति स्वानुग्राह्यविलोपनात् ॥ ९३ ॥
अनारब्धानि कर्माणि विज्ञानमयनामकः ।
कर्ता च विद्ययालीनः स्वस्मिन्काठिन्यवद्घृते ॥ ९४ ॥

मन्त्रद्वितीयपादतात्पर्यमाह—वागिति । स्वैरनुग्राह्या ये वागादयस्तेषां विलोपादिति चतुर्थपादार्थः ॥ ९३ ॥ ९४ ॥

अब्धावस्तं यान्ति नद्यो नामरूपे विहाय हि ।

तथा विद्वान्नामरूपान्मुक्तो याति परं पदम् ॥ ९५ ॥

"यथा नद्यः स्यन्दमानाः समुद्रे" इत्यादिमन्त्रस्य तात्पर्यमाह—अब्धाविति ॥ ९५ ॥

यः कोऽपि ब्रह्म वेत्त्येष ब्रह्मैव भवति स्वयम् ।
अब्रह्मवित्तस्य कुले न स्यादेतद्विबोधतः ॥ ९६ ॥
शोकं तरति पाप्मानमपि धीग्रन्थितोऽखिलात् ।
मुक्तो ब्रह्मात्मबोधेन भवत्येवामृतोऽखिलः ॥ ९७ ॥

"सयो हवै तत्परमं ब्रह्मे"त्यादे"रमृतो भवती"त्यन्तस्य तात्पर्यमाह-यइत्यादि पद्यद्वयेन ॥ ९६ ॥ ९७ ॥

क्रियावन्तः श्रोत्रिया ये सगुणब्रह्मचिन्तकाः ।
तेषामेव ब्रह्मतत्त्वविद्यामेतां वदेद्बुधः ॥ ९८ ॥

"क्रियावन्त" इत्यादे"र्विधिवद्यैस्तु चीर्णमि"त्यन्तस्य तात्पर्यं दर्शयति-क्रियावन्त इति ॥ ९८ ॥

अङ्गिराः शौनकायैतत्सत्यं ब्रह्मोपदिष्टवान् ।
नमस्कृत्य ब्रह्मविदो ब्रह्मविद्यामवाप्नुयात् ॥ ९९ ॥

"तदेतत्सत्यमि"त्यादे"र्नमः परमऋषिभ्य" इत्यन्तस्य व्याख्यामाह-अङ्गिरा इति ॥ ९९ ॥

शौनकस्य ब्रह्मविद्या विस्पष्टमुपवर्णिता ।
तुष्टेऽस्माननुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १०० ॥

इति विद्यारण्यविरचितेऽनुभूतिप्रकाशे मुण्डकोपनिषद्विवरणं नाम षष्ठोऽध्यायः ॥ ६ ॥

विद्यातीर्थमहेश्वरानुग्रहं प्रार्थयमानोमुण्डकोपनिषद्व्याख्यामुपसंहरति-शौनकस्येत्यादिना ॥ १०० ॥

इति श्रीमितप्रकाशविवृतौ मुण्डकोपानिषद्विवरणं नाम षष्ठोऽध्यायः । ६ ।

अथ सप्तमोध्यायः ।

अथर्वणे पिप्पलादः षण्मुनिभ्यो यदब्रवीत् ।
तत्सर्वं प्रविविच्यात्र प्रवक्ष्यामि पृथक् पृथक् ॥ १ ॥

प्रश्नोपनिषदं व्याख्यातुमारभते—अथर्वणइति । षण्मुनिभ्य इति । कात्यायनभार्गवकौशल्यगार्ग्यसत्यकामभारद्वाजेभ्य इत्यर्थः ॥ १ ॥

मुनयो वेदतात्पर्यात्सगुणब्रह्मचिन्तकाः ।
परं ब्रह्मापेक्षमाणाः समिद्धस्ता गुरुं ययुः ॥ २ ॥

इदानीं "सुकेशाचभारद्वाज" "इत्यादेः" पिप्पालादमुपसन्ना"इत्यन्तस्य तात्पर्यं दर्शयति मुनय इति ॥ २ ॥

गुरूपसत्तिसम्पूर्त्यै वर्षं गुर्वन्तिकेऽवसन् ।
सम्यक् फलति विद्यैषा वार्षिक्या गुरुसेवया ॥ ३ ॥

"तान् ह स ऋषिरुवाचे"त्यादि "संवत्सरं संवत्स्यथे"त्यन्तं व्याचष्टे—गुरूपसत्तीति ॥ ३ ॥

कात्यायनोऽपृच्छदादौ स्थुलदेहजनिक्रमम् ।
फलं त्वपरविद्यायास्तत्र स्पष्टीभविष्यति ॥ ४ ॥

इदानीम् "अथकवन्धी कात्यायन उपेत्ये"त्यादेः "न येषुजिह्ममनृत न मायाचे"त्यन्तस्य तात्पर्यमाह–कात्यायन इत्यादिश्लोकसप्तदशकेन । ननु स्थूलदेहजन्मक्रमप्रश्ने किंफलमित्यपेक्षायामाह–फलंत्विति । तत्र उक्तप्रश्नेऽपरविद्याफलस्य स्पष्टताफलमित्यर्थः ॥ ४ ॥

कर्मोपास्तिश्चापरस्यां विद्यायां श्रूयते द्वयम् ।
तत्फलं जन्मकष्टं तादित्यभिप्रेत्य वर्ण्यते ॥ ५ ॥

उक्तमर्थं स्पष्टयति—कर्मेति । ऋग्वेदाद्यपराविद्यायां कर्मोपासनयोर्विधानं तयोश्च फलं जन्म तच्च दुःखरूपमिति तद्वैराग्याय तद्वर्णनमित्यर्थः ॥ ५ ॥

प्रजापतिः प्रजाकामो विराट्सृष्टेरनन्तरम् ।
स्रष्टव्यालोचनाख्यं तत्तपः कृत्वाऽसृजत्प्रजाः ॥ ६ ॥

"प्रजाकामो वै प्रजापतिरि"त्यादेः "मूर्तिरेवरयिरि"त्यन्तस्य तात्पर्यं दर्श-
यति प्रजापतिरित्यादिपद्यत्रिकेण । स्रष्टव्यसंकल्पात्मकं यत्तपस्तत्कृत्वेति यो-
त्तरार्द्धे बोध्या ॥ ६ ॥

भोग्यभोक्त्रात्मकं द्वन्द्वं रयिप्राणाख्यमादितः ।
सृष्ट्वाऽभिमानिनौ देवौ चन्द्रादित्यौ च सृष्टवान् ॥ ७ ॥

अभिमानिनाविति । भोग्याभिमानी चन्द्रः भोक्त्राभिमानी सूर्य इति
बोध्यम् ॥ ७ ॥

मूर्त्तमोषध्यादिभोग्यं शब्दगन्धरसादिकम् ।
अमूर्त्तमनयोर्वृद्धिं देवश्चन्द्रः करोति हि ॥ ८ ॥

मूर्त्तपदार्थौषध्यादेरमूर्त्तपदार्थशब्दादेश्च भोग्यस्य वृद्धिं चन्द्रः करोतीति त-
दभिमानित्वं तस्येत्याह—मूर्त्तमिति ॥ ८ ॥

आदित्य उद्यन्भोक्तॄणां तत्तद्दिग्वर्त्तिनामिमान् ।
प्राणान्प्रवर्त्तयेद्भोक्तॄनतेऽन्नं भुञ्जते ततः ॥ ९ ॥

"अथादित्य उदयन् यत प्राचीं दिशं प्रविशती"त्यादिग्रन्थं व्याख्याय
आदित्यस्य भोक्त्रभिमानित्वं दर्शयति—आदित्य इति ॥ ९ ॥

चन्द्रास्थितिं महोरात्रं सूर्यः सम्पादयत्यतः ।
तत्समूहस्वरूपोऽसौ कालः संवत्सरोऽभवत् ॥ १० ॥

यद्यदुत्पद्यते तत्तस्यादुपाधिः प्रजापतेः ।
प्रजापतिर्वत्सरात्मा स पुनर्द्विविधोऽभवत् ॥ ११ ॥

"संवत्सरो वै प्रजापतिरि"त्यादे"स्त एव पुनरावर्तन्त" इत्यस्य तात्पर्य-
माह— चन्द्रस्थितिमित्यादिपद्यचतुष्केण ॥ १० ॥ ११ ॥

अभूतां वत्सरांशौ द्वावयने दक्षिणोत्तरे ।
चन्द्रादित्यौ तत्र देवौ दक्षिणोत्तरमार्गयोः ॥ १२ ॥

द्वैविध्यमाह—अभूतामिति । दक्षिणोत्तरायणयोर्यथासंख्यं चन्द्रादित्यावभिमानिदेवावित्याहोत्तरार्द्धेन ॥ १२ ॥

इष्टापूर्तकृतश्चन्द्रं यान्ति दक्षिणमार्गतः ।
आवर्तन्ते पुनस्तत्र क्रममुक्तिर्न विद्यते ॥ १३ ॥

इष्टापूर्तेति । "अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् । आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते । वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमित्येतत्पूर्तमित्यभिधीयते" इतिस्मृत्योक्त इष्टापूर्तपदार्थ इति बोध्यम् ॥ १३ ॥

योगिनः सगुणध्यानाद्रविमुत्तरमार्गतः ।
गत्वा तन्मण्डलं भित्त्वा ब्रह्मलोकं व्रजन्ति हि ॥ १४ ॥

"अथोत्तरेण तपसा ब्रह्मचर्येणे"त्यादेस्तात्पर्यमाह—योगिन इति ॥१४॥

आसीत्प्रजापतिर्मासः पक्षौ शुक्लेतराविह ।
यौ तयोश्च रविश्चन्द्रोऽभिमन्तारावुभौ स्थितौ ॥ १५ ॥

"मासो वै प्रजापतिरि"त्यादिवाक्यं विवृणोति—आसीदिति ॥ १५ ॥

रविध्यायी तु कृष्णेऽपि कुर्वन् शुक्लफलं व्रजेत् ।
शुक्लपक्षे फलाधिक्यं शास्त्रोक्तं काम्यकर्मणाम् ॥ १६ ॥

सूर्याचन्द्रमसौ क्रमेण शुक्लकृष्णपक्षाभिमानिन्यौ देवते इत्युक्तं तत्र सूर्योपासकः शुक्लपक्षे कर्तव्यं कर्म कृष्णपक्षेऽपि कुर्वन् शुक्लपक्षकृतकर्मफलसजातीयंफलं प्राप्नोतीत्याह रवीति ॥ १६ ॥

प्रजापतिरहोरात्ररूपोऽभूदाह्निदेवता ।
रविश्चन्द्रो रात्रिदेवो रात्रावेव रतिस्ततः ॥ १७ ॥

इदानीं "महोरात्रो वै प्रजापतिरि"त्यादे"रत्या संयुज्यन्ते" इत्यन्तस्य तात्पर्यं दर्शयति—प्रजापतिरिति ॥ १७ ॥

भोक्तृभोग्यात्मकं द्वन्द्वं सृष्ट्वाऽप्येष प्रजापतिः ।
अन्नरूपोऽभवत्तस्मादन्नाद्रेतः समुद्भवः ॥ १८ ॥

"अन्नं वै प्रजापतिरि"त्यादेस्तद्दर्शयति- भोक्तित्यादिसपादश्लोकेन ॥

रेतसोऽमूः प्रजा जाता रेतः सेकं प्रजापतेः ।
व्रतं चरन्ति चेत्पुत्रं पुत्रीं चोत्पादयन्ति हि ॥ १९ ॥

"तद्येहे"त्यादिश्रुतेस्तात्पर्यं दर्शयति—रेतः सेकमित्यादिपादत्रयेण ॥ १

ब्रह्मचर्यरता ऊर्द्ध्वरेतसो ब्रह्मचिन्तकाः ।
ब्रह्मलोकं ब्रजन्त्यन्ये निस्तपस्का न यांति तम् ॥ २

"तेषामेवैष इत्यादेर्व्याख्यामाह— ब्रह्मचर्येति ॥ २० ॥

कात्यायनेन यत्पृष्टं हेयं जन्म तदीरितम् ।
भार्गवः सूक्ष्मदेहस्य स्थूलेऽप्राक्षीद्विवेचनम् ॥२१

वृत्तं कथयन् द्वितीयं भार्गवप्रश्नं व्याख्यातुमारभते—कात्यायनेनेति ॥

तस्मिन्विवेचिते स्थूलस्यानात्मत्वं स्फुटं भवेत् ।
धारको द्योतकः श्रेष्ठ इत्यप्राक्षीदसौ त्रयम् ॥ २२ ॥

सूक्ष्मदेहविवेचनस्य प्रयोजनमाह—तस्मिन्निति "भगवन् कत्येव देवा" इत्यादेः "कः पुनरेषां वरिष्ठ" इत्यन्तस्य तात्पर्यमाह—धारक इत्याद्युत्तरार्द्धेन ॥

देवाः कति स्थूलदेहं धारयंत्यत्र धारणम् ।
द्विविधं जननं तस्य प्रेरणं चेति तद्द्वयम् ॥ २३ ॥

जननप्रेरणभेदेन धारणपदार्थद्वैविध्यमाह—देवाइति ॥ २३ ॥

ज्ञानवर्गे क्रियावर्गे स्थिताः के भासयन्ति तम् ।
प्रेरणाख्ये धारणेऽस्मिन श्रेष्ठो देवेषु को भवेत् ॥ २४

"कतर एतत्प्रकाशयन्ते" इत्यादेस्तात्पर्यं स्पष्टमाह—ज्ञानेति ॥२४

काठिन्यं च द्रवोष्णत्वे चलनं छिद्रमित्यमी ।
दृश्यन्तेंऽशाः पञ्चभूतजन्योऽतो देह इष्यते ॥ २५ ॥

यदुक्तं तस्मिन् विवेचिते स्थूलस्यानात्मत्वं स्फुटं भवेदिति तद्दर्शयति—काठिन्यमिति । काठिन्यादयः पञ्चानां भूतानां धर्मा देहे दृश्यन्तेऽतोभौतिकत्वात् । स्थूलदेहो नात्मेत्यर्थः ॥ २५ ॥

वाक्पाण्यादिः क्रियावर्गः क्रियां कुर्वन्न भासयेत् ।
ज्ञानवर्गो मनश्चक्षुरादिको भासयेद्वपुः ॥ २६ ॥
प्रेरणाख्यां धारणां तु प्राण एव करोति हि ।
भूतेन्द्रियाभिमानिन्यो देवता गर्वमाप्नुवन् ॥ २७ ॥

"तस्मै सहोवाचाकाश" इत्यादे"रेतद्बाणमवष्टभ्य विधारयाम" इत्यन्तस्य तात्पर्यमाह—वागित्यादिनासार्धपद्यद्विकेन ॥ २६ ॥ २७ ॥

वयं देहमवष्टभ्य प्रेरयामो गृहादिषु ।
प्राणदेवोऽन्यदेवानामेतं गर्वं न्यवारयत् ॥ २८ ॥

"तान्वरिष्ठः प्राण उवाचे"त्यादेस्तात्पर्यमाह—अष्टाविंशोत्तरार्द्धसहितेनैकोनत्रिंशत्तमेन पद्येन । प्राणदेव इति मुख्यः प्राण इत्यर्थः । अन्यदेवानाम् वागादीनाम् । एतं पूर्वार्द्धोक्तम् ॥ २८ ॥

यूयं मा प्राप्नुत भ्रान्तिमहमेवात्र पञ्चधा ।
प्राणापानादिभिर्भोगैर्धारयामि ह्यदो वपुः ॥ २९ ॥

भ्रान्तिमभिनयति—अहमित्यादिपादत्रयेण । भोगैर्व्यापारैः भागैरिति पाठोभाति ॥ २९ ॥

तानविश्वसतो देवान्विश्वासयितुमेष तु ।
देहान्निर्गन्तुमुद्युक्तो ह्यासन् देवाश्च विह्वलाः ॥ ३० ॥

"तेऽश्रद्दधाना बभूवुरि"त्यादे"स्ते प्रीताः प्राणं स्तुवन्ती"त्यन्तस्याभिप्रायमाह—तानित्यादित्रिकेण । हि चौ निपातौ हेत्वर्थौ यतो निर्गन्तुमुद्यतोऽतो देवा विह्वला आसन्नित्यर्थः ॥ ३० ॥

स्थिते स्वराज्ञि तिष्ठन्ति निर्गच्छन्ति च निर्गते ।
मधुकृन्मक्षिका देवाश्चासन् प्राणवशास्तथा ॥ ३१ ॥

एतदेवोपपादयति—स्थित इत्यादिना स्थित इत्यस्य यथेत्यादिः मधुकरराजे मधुकृतो वशगा मक्षिका मधुकृन्मक्षिका इत्युत्तरपदलोपिसमा कर्मधारयो वा, दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—देवाश्चेत्यादि ॥ ३१ ॥

प्राणः सूत्रं तेन बद्धाः सर्वे तत्तद्वशा इमे ।
उत्क्रान्तिं वारयंतस्ते प्राणं तुष्टुवुरादरात् ॥ ३२ ॥

प्राणवशत्वमुपपादयति —प्राण इत्यादिपूर्वार्द्धेन । तत तस्मात् सूत्र प्राणबद्धत्वात् । तद्वशगाः प्राणवशगाः । "एषोऽग्निस्तपत्येषसूर्य" इत्यादेः प्रज्ञां च विधेहि न" इत्यन्तस्य तात्पर्यमाह-उत्क्रान्तिमित्याद्युत्तरार्द्धेन ॥ ३२ ॥

देहोऽकिञ्चित्करः प्राण एव संसारकारणम् ।
भार्गवो निश्चिकायेत्थं पिप्पलादेन बोधितः ॥ ३३ ॥

द्वितीयप्रश्नव्याख्यामुपसंहरति—देह इति ॥ ३३ ॥

क्रममुक्तिर्हेतुरस्य प्राणस्य ध्यानमित्यसौ ।
कौशल्यः प्राणविषयान् षट्प्रश्नानकरोत्स्फुटम् ॥ ३४ ॥

तृतीयं कौशल्यप्रश्नं व्याचिख्यासुः प्रश्नाभिप्रायमाह—क्रमेति । प्राणस्य ध्यानं क्रममुक्तिहेतुरिति योजना ॥ ३४ ॥

प्राणोऽयं कुत उत्पन्नः कथमेष वपुर्व्रजेत् ।
स्वरूपं प्रविभज्यैष कथं देहेऽवतिष्ठते ॥ ३५ ॥
केन वृत्तिविशेषेण देहादुत्क्रान्तिमाप्नुयात् ।
बाह्यं जगत्कथं धत्ते तस्याध्यात्मधृतिः कथम् ॥ ३६ ॥

"भगवन् कुत एष प्राण" इत्यादि "कथमध्यात्म"मित्यन्तं षट्प्रश्नानाह- प्राण इत्यादिपद्यद्विकेन ॥ ३५ ॥ ३६ ॥

उपास्तिश्रद्धया सर्वं विशेषं पृष्टवानिति ।
तुष्टो गुरुरुवाचैषां प्रश्नानां स्पष्टमुत्तरम् ॥ ३७ ॥

"सहो वाचातिप्रश्नान् पृच्छसी" त्यादेर्व्याख्या उपास्तीत्यादिपद्यम् ॥३७॥

परमात्मन उत्पन्नः प्राण आत्मा त्वविक्रियः ।
अविकृत्यैव देहं स्वं देहच्छाया यथोचिता ॥ ३८ ॥
छायाऽनृतैव दृष्टा चेत्प्राणोऽप्यात्मनि कल्पितः ।
यथादर्पणदीप्त्यादिर्मायोपाधिस्तथात्मनः ॥ ३९ ॥

इदानी "आत्मन एष प्राणो जायते" इत्यादेर्व्याख्यामाह—परमात्मन इत्यादिद्विकेन । उचिता उत्पन्ना । उदितेति पाठोयुक्तः । यथा दर्पणदीप्त्यादिरिति । यथा दर्पणदीप्त्यादिर्वा, दीप्तदर्पणादिर्वा मुखादेरुपाधिस्तथेत्यादि योजना॥३८॥३९॥

पूर्वकल्पे कृतं कर्म मनसा यत्तदेव हि ।
प्राणस्य स्थूलदेहेषु समागमनकारणम् ॥ ४० ॥

"मनो कृतेनायात्यस्मिञ्छरीरे" इत्येतद्वाक्यं व्याचष्टे—पूर्वेति । मनो कृतेनेत्यत्र रोरुत्वादिकं छान्दसम् ॥ ४० ॥

ग्रामेष्वधिकृतान् सम्राड्विनियुंक्ते यथा पृथक् ।
प्राणो वृत्तीः स्वकीयास्ता विनियुंक्ते यथायथम् ॥ ४१ ॥

इदानीं "यथा सम्राडेवाधिकृतान् विनियुक्ते" इत्यादेः "सप्तार्चिषो भवन्ती" त्यन्तस्य तात्पर्यं दर्शयति—ग्रामेष्वित्यादिश्लोकत्रयेण ॥ ४१ ॥

मलमूत्रविसर्गार्थमपानं स्थापयेदधः ।
मुखनासिकयोः कुर्वन् स्वयं श्वासमवस्थितः ॥ ४२ ॥

अपानादिवृत्तीर्यथायथं विनियुङ्क्ते इत्युक्तं तदेवदर्शयति—मलेत्यादिना । मुखनासिकयोरवस्थित इतियोजना ॥ ४२ ॥

समानः स्थापितो मध्ये भुक्तमन्नं समं नयेत् ।
अन्नाप्यायनतो मूर्द्धच्छिद्रैः सप्तविधोऽभवत् ॥ ४३ ॥

सप्तविध इति । चक्षुष्ट्वादिरूपाः सप्तविधाः प्रकारा यस्येन्द्रियस्ये-त्यर्थः ॥ ४३ ॥

हृत्पुण्डरीके जीवात्मा स्थितस्तद्बहुभिर्वृतम् ।
नाडीभेदैर्मूलनाडीसंख्या चैकाधिकं शतम् ॥ ४४ ॥

"हृदिह्येष" इत्येतद्व्याचक्षाणः "अत्रैतदेकशतं नाडीनामि"त्येतद्व्याचष्टे—हृदिति । बहुभिर्नाडीविशेषैस्तद्हृत् । पुण्डरीकं वृतमितियोजना ॥ ४४ ॥

प्रत्येकं शतसंख्याः स्युः शाखानाड्यस्तथा पुनः ।
द्वासप्ततिसहस्राणि प्रतिशाखाः प्रकीर्त्तिताः ॥ ४५ ॥

"तासां शतं शतमेकैकस्या" इत्यादेस्तात्पर्यमाह—प्रत्येकमिति ॥ ४५ ॥

तासु सर्वास्ववस्थाय व्यानोऽयं कुरुते बलम् ।
करोत्युदान उत्क्रान्तिं कण्ठस्थो ह्यन्यजन्मने ॥ ४६ ॥

"आसु व्यानश्चरती"त्यादि "उभाभ्यामेव मनुष्यलोकमि"त्यन्तं विवृणोति—तास्विति ॥ ४६ ॥

विभज्य पञ्चधात्मानमेवं देहे व्यवस्थितः ।
उदानवायुनोत्क्रान्तिरुक्ता बहिरथोच्यते ॥ ४७ ॥

वृत्तं कथयन्नुत्तरग्रन्थं व्याख्यातुं प्रतिजानीते विभज्येति ॥ ४७ ॥

आपोभूमिवियद्वायुतेजसां येऽभिमानिनः ।
देवास्तद्रूपतः प्राणो धत्ते बाह्यमिदं जगत् ॥ ४८ ॥

"आदित्यो हवै" इत्यादिं "वायुर्व्यान" इत्यन्तमर्थक्रममनुसृत्य व्याचक्षाणो बहिरथोच्यते इत्युक्तं प्राणकर्तृकं बहिर्धारणं प्रथममेकेन श्लोकेनाह—आपो इत्यादि ॥ ४८ ॥

पुनस्तद्देवतारूपः शारीरांश्चक्षुरादिकान् ।
प्राणादीननुगृह्णातीत्याध्यात्मं धारणं भवेत् ॥ ४९ ॥

अध्यात्मं धारणमाह—पुनरित्यादि ॥ ४९ ॥

रवेरनुग्रहश्चक्षुष्यस्ति तद्वत्परेष्वपि।
अपानादिषु भूम्यादेरुपकारोऽस्ति शास्त्रतः ॥ ५० ॥

चक्षुरादिषु रव्यादेरुपकारस्य शास्त्रैकसमधिगम्यत्वं दर्शयति—रवेरिति॥५०॥

तेजोदेवतयोदानोऽनुगृहीतो यतस्ततः।
शारीरौष्ण्ये प्रशान्तेऽस्माद्देहाद्देहान्तरं व्रजेत् ॥ ५१ ॥

"तेजो ह वै" इत्यादे "र्लोकं नयति" इत्यन्तस्य तात्पर्यमाह—तेज इत्यादिपद्यद्वयेन ॥ ५१ ॥

मनस्येकीभवन्त्यादाविन्द्रियाणि तदात्मनः।
यं देहं भावयेत्तत्र याति प्राणः सजीवकः ॥ ५२ ॥

सजीवकः जीवेन सहितः ॥ ५२ ॥

षट्सु प्रश्नेषु निर्णीतं प्राणं ध्यायति यः पुमान्।
सोपाधिकब्रह्मवेदी स क्रमेण विमुच्यते ॥ ५३ ॥

"य एवं विद्वान् प्राणमि"त्यादे"र्विज्ञायामृतमश्नुते" इत्यन्तस्य तात्पर्यमाह—षट्स्विति ॥ ५३ ॥

ब्रह्मलोकान्तसंसारोऽपरविद्याफलं ततः।
गार्ग्यस्तु परविद्यार्थं पञ्चप्रश्नानवोचत ॥ ५४ ॥

चतुर्थं गार्ग्यप्रश्नं परविद्याफलकं व्याख्यातुमवतारयति—ब्रह्मेति। ततः अपराविद्यायाः संसारफलकत्वात्। गार्ग्यप्रश्नाः परविषयकत्वात् परविद्या फलका इति ध्येयम् ॥ ५४ ॥

कानि स्वपन्ति कान्यत्र जाग्रति स्वप्नदृक् च कः।
सुप्तौ सुखं भवेत्कस्य जगत्कस्मिन्विलीयते ॥ ५५ ॥

"भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति" इत्यादेः "कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ती"त्यन्तस्य प्रश्नजातस्य तात्पर्यं विशदयति—कानीति ॥ ५५ ॥

दशेन्द्रियाणि बाह्यानि स्वपन्त्यन्तर्धिया सह ।
रश्मयोऽस्तं यथा यांति संध्यायां रविणा सह ॥ ५६ ॥

गार्ग्यप्रथमप्रश्नस्योत्तररूपं "तस्मै सहोवाच"त्यादि "स्वपतीत्याचक्षते" इत्यन्तं व्याचष्टे—दशेत्यादिसार्धश्लोकेन ॥ ५६ ॥

श्रवणादिक्रिया नैव सुप्तत्वादिति गम्यते ।
तदापि जाग्रति प्राणाः श्वासादेरविलोपनात् ॥ ५७ ॥

तदा ज्ञानेन्द्रियस्वापे श्रवणाद्यभावं हेतुमाह— श्रवणेत्यादि । तदापीति इन्द्रियाणां स्वापसमयेऽपीत्यर्थः ॥ ५७ ॥

जाठराग्निः पटुर्भूत्वा भुक्तं जरयते तदा ।
प्राणान् यागाग्निरूपेण ध्यात्वा यागफलं व्रजेत् ॥ ५८ ॥

तदा प्राणजागरदशायां तत्संधुक्षितो जाठराग्निः पटुर्भूत्वा भुक्तमिति तस्याप्युपलक्षणं भुक्तं पीतं च जरयते परिणमयतीत्यर्थो जाठरेत्यादिपूर्वार्द्धस्य भुङ्क्ते इत्यपपाठः । उत्तरार्द्धमतिरोहितार्थम् ॥ ५८ ॥

बाह्याक्षाणामुपरमे मनोऽनुपरतं यदा ।
जीवात्मा तदुपाधिःसन् तदा स्वप्नमवेक्षते ॥ ५९ ॥

तदीयद्वितीयप्रश्नस्योत्तरम् "अत्रैष देवः स्वप्ने"इत्यादि "सर्वः पश्यति" इत्यन्तं निगदव्याख्यातेन बाह्याक्षाणामिति पद्येन व्याचष्टे—बाह्येति । यदा ऽनुपरतं तदा मन उपहितो जीवात्मेत्यादियोजना ॥ ५९ ॥

नाडीषु सञ्चरञ्जीवो नानाजन्मभिरर्जिताः ।
वासना वीक्षते सोऽयं स्वप्न इत्यभिधीयते ॥ ६० ॥

स्वप्नपदार्थमाह—नाडीष्विति ॥ ६० ॥

हृच्छिद्राण्यावृतानि स्युः सुप्तौ पित्ताख्यतेजसा ।
चित्तोपाधिकजीवोऽपि पित्तेनात्राभिभूयते ॥ ६१ ॥

दुःखवृत्त्युदयश्चित्ते नास्ति छिद्रनिरोधतः ।
आत्मानन्दः स्वप्रकाशस्तदा जीवस्य तिष्ठति ॥ ६२ ॥

"स यदा तेजसे"त्यादि "शरीरे सुखं भवती"त्यन्तं तदीयचतुर्थप्रश्नस्योत्तरं हृदित्यादिपद्यद्विकेन व्याचष्टे ॥ ६१ ॥ ६२ ॥

सुप्तौ च प्रलये मुक्तौ जगदात्मनि लीयते ।
निवासवृक्षे लीयन्ते संध्यायां पक्षिणो यथा ॥ ६३ ॥

तदीयपञ्चमप्रश्नस्योत्तररूपं "स यथा सोम्ये"त्यादि "पर आत्मनि संप्रतिष्ठते"इत्यन्तं विवृणोति—सुप्तौ चेति ॥ ६३ ॥

तन्मात्राणि च भूतानि ज्ञानकर्मेन्द्रियाण्यपि ।
अन्तःकरणभेदाश्च शक्ती ज्ञानक्रियात्मिके ॥ ६४ ॥

"पृथिवी च पृथिवी मात्राचे"त्यादि "प्राणश्च विधारयितव्यं चे"त्यन्तं विवृण्वन् जगदात्मनि लीयते इत्यत्रत्यजगत्पदार्थमाह-तन्मात्राणीत्यादि पद्यत्रिकेण ॥ ६४ ॥

एतेषां विषयाः सर्वे द्रष्टृश्रोत्रादिनामकाः ।
जीवोऽन्तःकरणस्थोऽपि जगत्सर्वमिदं भवेत् ॥ ६५ ॥

अन्तःकरणप्रतिबिम्बो जीवोऽपीति तृतीयपादे योजना ॥ ६५ ॥

न किञ्चिद्भाति निद्रायां लीनं स्यात्तदपेक्षया ।
सर्वेषां प्रलये यद्वन्मुक्तौ तत्त्वविदस्तथा ॥ ६६ ॥

"सुप्तौ च प्रलये मुक्तौ जगदात्मनि लीयत" इत्युक्तमर्थं विशदयति—नेत्यादिना । यद्वत् तदपेक्षया प्रत्यगभिन्नब्रह्मसाक्षात्कारेण सर्वेषां प्रलये तत्त्वविदो न किञ्चिद्भाति तथा निद्राणस्य जगद्भानाभावादात्मनि तल्लयसम्भव इत्यर्थः ॥ ६६ ॥

परमात्मा लयाधारो यथा तद्वत्स्थितेरपि ।
आधारस्तेन जगतः परमात्मोपलक्ष्यताम् ॥ ६७ ॥

"एष हि द्रष्टा स्प्रष्टे" त्यादेः "स सर्वज्ञः सर्वो भवती"त्यन्तस्य तात्पर्य-

परमात्मेत्यादि पद्यचतुष्टयेनाह—तद्वत्स्थितेरपीत्यस्याधार इत्युत्तरार्द्धगतेनान्वय: तेन जगदाधारत्वेनेत्यर्थः ॥ ६७ ॥

उपलक्षयिता जीवो बुद्धौ चित्प्रतिबिम्बकः ।
उपलक्ष्यं ब्रह्म तत्तु स्यादच्छायादिरूपकम् ॥ ६८ ॥

"अच्छायमि"त्यादिवाक्यं व्याख्यातुमुत्थापयति–उपेति । चित्प्रति- जीव उपलक्षयिता ब्रह्मोपलक्ष्यं तद् ब्रह्म वक्ष्यमाणलक्षणच्छायादिरहितमित्यर्थः ।

छाया तमस्तेन हीनं शरीरत्रयवर्जितम् ।
लौहित्यादिगुणैर्हीनं शुभ्रं क्रोधाद्यभावतः ॥ ६९ ॥

अच्छायाशरीरालोहितशुभ्राक्षरपदानां व्याख्या छायेत्यादि किञ्चिन्न्यू- द्धपद्यम् । शुभ्रत्वे हेतुमाह—क्रोधाद्यभावत इति ॥ ६९ ॥

अक्षरं नाशहेतूनामभावाद्ब्रह्म तादृशम् ।
यो जानाति स सर्वज्ञः सर्वात्मा च भवेत्खलु ॥ ७० ॥

"स सर्वज्ञः" इत्यादि व्याचष्टे–ब्रह्मेति तादृशं ब्रह्म यो जानातीति जना ॥ ७० ॥

सत्यकामस्तु पूर्वोक्तब्रह्मानुभवसाधनम् ।
प्रणवध्यानमप्राक्षीत्फलभेदेन संयुतम् ॥ ७१ ॥

लोकेषु ज्ञानकर्मभ्यां साध्येषु कतमं व्रजेत् ।
आमृतिप्रणवध्यायी स विशेषमिदं वद ॥ ७२ ॥

चतुर्थपञ्चमप्रश्नयोः, प्रयोज्यप्रयोजकभावसंगतिं वदन् पञ्चमं सत्य- श्न"मथ हैनं शैब्य" इत्यादिं "तेन लोकं जयती"त्यन्तं व्याचष्टे—सत्य इत्यादिपद्यद्विकेन ॥ ७१ ॥ ७२ ॥

शृण्वोंकारः प्रतीकं स्यादपरस्य परस्य च ।
ब्रह्मणोऽन्यतरद्ब्रह्म प्रणवेन विचिन्तयेत् ॥ ७३ ॥

"एतद्वै सत्यकामे"त्यादिम् "एकतरमन्वेति"त्यन्तं विवृणोति—श्रुतिवि-ति ॥ ७३ ॥

विराडाद्यपरं तद्वत्सत्यज्ञानात्मकं परम् ।
मात्रात्रयविभक्तं तदपरं ब्रह्म चिन्तयेत् ॥ ७४ ॥

परापरपदार्थमाह—विराजिति पूर्वार्द्धेन । उत्तरार्धं स्पष्टम् ॥ ७४ ॥

विराडकारः सूत्रात्मोकारो ह्यव्याकृतं पुनः ।
मकार इति विज्ञेयो विभागोऽपरचिन्तने ॥ ७५ ॥

"स यद्येकमात्रमभिध्यायी"त्यादि व्याख्यातुमवतारयन् मात्रात्रयविभक्त-मित्युक्तं विभागत्रयमभिनयति—विराडिति ॥ ७५ ॥

सूत्रव्याकृतविज्ञानहीनो यदि विचिन्तयेत् ।
विराण्मात्रं तमोंकारं तदापि व्यर्थता नहि ॥ ७६ ॥

ऋगाख्यदेवाः सहसा भूलोकं प्रापयंति तम् ।
पूर्ववासनया योगमभ्यस्यत्यधिकं पुनः ॥ ७७ ॥

"स यद्येकमात्रमभिध्यायीते"त्यादि "महिमानमनुभवती"त्यन्तं विवृणोति—सूत्रेत्यादिद्विकेन ॥ ७६ ॥ ७७ ॥

विराट्सूत्रात्मकं मात्राद्वयं ध्यात्वा तु नीयते ।
यजुर्वेदैः सोमलोकं पुनरावृत्तिसंयुतम् ॥ ७८ ॥

"अथ यदि द्विमात्रेणे"त्यादिं "पुनरावर्तत" इत्यन्तं विवृणोति—विरा-डिति । मात्राद्वयमकारोकारात्मकम् ॥ ७८ ॥

विराट्सूत्राव्याकृताख्यं त्रिमात्रं प्रणवं स्मरेत् ।
सामवेदैर्ब्रह्मलोकं नीयते मुक्तिकारणम् ॥ ७९ ॥

"यः पुनरेतात्रिमात्रेणे"त्यादेः "पुरिशयं पुरुषमीक्षत" इत्यन्तस्य तात्पर्य-माह—विराडित्यादिश्लोकत्रयेण ॥ ७९ ॥

समस्तजीवसंघाख्यः सूत्रात्मा यः परोऽन्यतः ।
तस्मादपि परं ब्रह्मतत्त्वं यत्तदवेक्षते ॥ ८० ॥

क्रममुक्तिर्भवेदित्थमपरब्रह्मचिन्तनात् ।
ओंकारेण परं ब्रह्म ध्यात्वेक्षित्वा च मुच्यते ॥ ८१

समस्तेति । "एतस्माज्जीवघनात्परादि"त्यस्य व्याख्या पूर्वार्द्धम्, राद्धं तु पुरिशयं पुरुषमीक्षत इत्यस्य ॥ ८० ॥ ८१ ॥

शान्तं जरामृत्युहीनमभयं ब्रह्म यत्परम् ।
तच्चोंकारेण विद्वान् यः सोऽन्वेतीति पृथक्श्रुतम् ॥

"तिस्रो मात्रा" इत्यादेः "अभयं परञ्चे"त्यन्तस्य मन्त्रस्य तात्प ति-शान्तमिति । पृथक् मन्त्रे इत्यर्थः ॥ ८२ ॥

मुक्तौ प्राप्यं परं ब्रह्म यत्तस्य प्रत्यगात्मताम् ।
बुभुत्सुः सन् भरद्वाजः पुरुषं प्रष्टुमिच्छति ॥ ८३

षष्ठं भारद्वाजप्रश्नं व्याख्यातुमवतारयति -मुक्ताविति ॥ ८३ ॥

राजपुत्रः षोडशभिः कलाभिः पुरुषं युतम् ।
अपृच्छन्मां न वेदाहं वद तं पुरुषं मुने ॥ ८४ ॥

"भगवन् हिरण्यनाभ" इत्यादेः "क्वासौ पुरुष" इत्यन्तस्याभिप्रा राजपुत्र इति ॥ ८४ ॥

शृण्वसौ पुरुषो देहे हृन्मध्ये भासते सदा ।
तस्मिन्प्राणादिनामान्ता माययोत्पादिताः कलाः ॥

"इहैवान्तः शरीरे सोम्ये"त्यादेः "कलाः प्रभवन्ती"त्यन्तस्य तात्प यति-शृण्विति ॥ ८५ ॥

प्राणः श्रद्धा खादिभूतपञ्चकं चेन्द्रियं मनः ।
अन्नं वीर्यं तपो मन्त्राः कर्मलोकाश्च नाम च ॥ ८

प्राणादिनामान्ता उक्ताः कला उद्दिशति–प्राण इति ॥ ८६ ॥

आरोपिताः कला यस्मिन् पूर्णोऽसौ पुरुषस्ततः ।
उपलब्धिस्तथाप्यस्य देहमध्ये प्रशस्यते ॥ ८७ ॥

न "न्विहैवान्तः शरीर" इति श्रुत्या देहे एव पुरुषोपलब्धिरुक्ताऽयुक्ता पूर्णत्वात् तस्य सर्वत्रोपलब्धिसम्भवादित्याशङ्क्य तस्या देहोपलब्धिप्रशंसायां तात्पर्यं नान्यत्र तद्वारण इत्याहआरोपिता इति ॥ ८७ ॥

चिद्रूपतात्र विस्पष्टा दर्शनश्रवणादिभिः ।
अपैति जीवता देहे स्थिते पूर्णत्वबोधनात् ॥ ८८ ॥

देहोपलब्धेः सुगमत्वजीवतानिवर्तकत्वरूपाभ्यां प्रशंसामाह–चिदिति । देहे स्थिते इति । अनेन जीवन्मुक्तिर्दर्शिता ॥ ८८ ॥

जीवत्वापादकोपाधिः प्राणस्तस्माज्जनैः सह ।
प्राणोत्क्रान्तिस्थिती स्वात्मन्यारोप्येते मुमुक्षुभिः ॥ ८९ ॥

पूर्णत्वबोधाज्जीवताऽपैतीत्युक्तमर्थमुपपादयति—जीवत्वेत्यादिपद्यचतुष्केण ॥ ८९ ॥

कस्मिन्नुत्क्रान्त उत्क्रान्तिमाप्स्यामीति विचारयन् ।
परमात्माऽसृजत्प्राणान् जनारोपो भवेत्ततः ॥ ९० ॥

"कस्मिन्नुत्क्रान्त" इत्यादेः "प्राणमसृजत" इत्यन्तस्य तात्पर्यं दर्शयन् उक्तजनारोपं सम्भावयति—कस्मिन्निति ॥ ९० ॥

जीवत्वस्यारोपितस्य निवृत्त्यर्थं चिदात्मनि ।
देहस्थे पूर्णरूपेण पुरुषत्वं विबुध्यताम् ॥ ९१ ॥

देहे पुरुषोपलब्धेः सफलत्वात्तत्र तदुपलब्धिः सम्पादनीयेत्युक्तमुपसंहरति—जीवत्वेति ॥ ९१ ॥

जगत्प्राणादिनामान्तं सर्वमस्मिन् प्रकल्पितम् ।
सर्वाधिष्ठानरूपत्वात् पूर्णत्वमुपपद्यते ॥ ९२ ॥

"स प्राणमसृजते"त्यादेः "लोकेषु च नामचे"त्यन्तस्य तात्पर्यं पूर्णत्वे दर्शयति—जगदिति ॥ ९२ ॥

नदीष्वब्धिं प्रविष्टासु लीयेते रूपनामनी ।
कलास्वात्मनि बोधेन लीनास्वात्माब्धिवत्स्थितः॥

इदानीं "स यथेमा नद्य"इत्याद्य"कलोऽमृतो भवती"त्यन्तं विवृणोति—नदीष्वित्यादिसार्द्धपद्येन ॥ ९३ ॥

एषोऽकलोऽमृतः पूर्णश्चिदात्मा मुक्त उच्यते ।
एवं बोधयितुं सर्वे वेदान्ताः संप्रवर्तिताः ॥ ९४ ॥

"अरा इव रथ नाभावि"त्यादिमन्त्रं व्याख्यातुमवतारयति । एवं बोधयितुमिति ॥ ९४ ॥

कलाः प्रतिष्ठिता यस्मिन् रथनाभावरा इव ।
तं वेद्यं पुरुषं सर्वे जानीध्वं मृत्युहानये ॥ ९५ ॥

उक्तमन्त्रं विवृणोति—कला इति, रथनाभावरा इवेति । अरा यथाधिष्ठानकाष्ठे तिष्ठन्तीत्यर्थः ॥ ९५ ॥

कात्यायनादयः सर्वे शृणुध्वं मुनिपुङ्गवाः ।
एतावदेव ब्रह्माहं वेद्मि नातोऽधिकं क्वचित् ॥ ९६

"तान् होवाचैतावदेवाहमि"त्यादेस्तात्पर्यमाह—कात्यायनादय इति

मुनयोऽप्यर्चयन्तस्तं पिप्पलादं वचोऽब्रुवन् ।
संसारभयतोऽस्माकं पालनात्त्वं हि नः पिता ॥ ९७
अविद्यायाः परं पारं यस्तारयाति तस्य ते ।
शुश्रूषामुचितां कर्तुं न शक्ताः प्रणतिं विना ॥ ९८

"त तमर्चयन्त" इत्यादेः "नमः परमऋषिभ्य" इत्यन्तस्य तात्पर्यमाह—मुनय इत्यादि सार्द्धद्विकेन ॥ ९७ ॥ ९८ ॥

गुरुभ्यः परमर्षिभ्यो भूयो भूयो नमो नमः ।
इत्येवं पिप्पलादस्तान्मुनीननुगृहीतवान् ॥ ९९ ॥

उत्तरार्द्धेन मुनीन्प्रति पिप्पलादीयमनुग्रहं दर्शयति—इतीति ॥ ९९ ॥

वेदैश्चतुर्भिरुत्पन्ना विद्येयं ब्रह्मगोचरा ।
प्रकाशितातः संतुष्याद्विद्यातीर्थमहेश्वरः ॥ १०० ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे प्रश्नोपनिषद्विवरणं नाम सप्तमोऽध्यायः ॥ ७ ॥

वेदैश्चतुर्भिः ऐतरेयतैत्तरीयच्छान्दोग्याथर्वणीयमुण्डकप्रश्नलक्षणैः उत्पन्ना विहिता प्रकाशिता व्याख्याता, अतः व्याख्यानात् ॥ १०० ॥

इति काशीनाथकृतौ मितप्रकाशविवृतौ प्रश्नोपनिषद्विवरणं नाम सप्तमोऽध्यायः ॥ ७ ॥



अथाष्टमोऽध्यायः ।

ऐतरेये तैत्तिरीये छान्दोग्येऽथर्वणे च यत् ।
तत्त्वं चतुर्वेदविद्या प्रकाशे तत्समीरितम् ॥ १ ॥

ऋग्वेदाङ्गशाखारूपां कौषीतकीब्राह्मणोपनिषदं व्याचिख्यासुः ऋग्वेद-मुख्यशाखारूपाणामैतरेयादीनां पञ्चानामुपनिषदां वृत्तं व्याख्यानं कथयति—ऐतरेय इति । अथर्वणे इति मुण्डकप्रश्नयोरित्यर्थः । चतुर्वेदाविद्याप्रकाशे इदमुत्तरपद्यगतेनाऽनुभूतिप्रकाश इत्यनेनान्वेति ॥ १ ॥

अनुभूतिप्रकाशेऽथ कौषीतक्यादिनामसु ।
चतुर्वेदाङ्गशाखासु यत्तत्त्वं तदुदीर्यते ॥ २ ॥

चतुर्वेदाङ्गशाखोपनिषदो व्याख्यातुं प्रतिजानीते—अथकौषीतक्यादि ॥ २ ॥

ऋग्वेदस्थितशाखा या कौषीतक्यभिधाङ्किता ।
तस्यां प्रतर्दनायेन्द्रः प्राहात्मानुभवं स्फुटम् ॥ ३ ॥

तत्रादौ ऋग्वेदाङ्गशाखां कौषीतकीं व्याख्यातुमुपक्रमते—ऋगिति। तस्यामित्यस्य तृतीयाध्याय इति शेषः ॥ ३ ॥

मनुष्येभ्यो हिततमं वरं वव्रे प्रतर्दनः ।
हितं हिततरं चेन्द्रो मेने हिततमं धिया ॥ ४ ॥

"प्रतर्दनो हवै दैवोदासिरि"त्याद्युपक्रम्य "त्वमेव वृणीष्व यं मनुष्याय हिततमं मन्यसे" इतिश्रुत्या प्रतर्दनेन हिततमो वरो वृत इत्युक्तः, इन्द्रश्च हितहिततरहिततमभेदेन वरत्रैविध्यं ज्ञातवानित्याह ॥ ४ ॥

हितं स्वर्गसुखं मर्त्यसुखादप्याधिकत्वतः ।
तद्वैराग्यं हिततरं यागाद्यायासवर्जनात् ॥ ५ ॥
स्वात्मबोधो हिततमो नित्यानन्दानुभूतिदः ।
इति मत्वेन्द्र आहैतं शिष्यं जानीहि मामिति ॥ ६ ॥

हितादिदर्शयन् प्रतर्दनं प्रति "मा मेव विजानीही"तीन्द्रवाक्यं व्याख्या-तुमुप न्यस्यति हितमित्यादिपद्यद्वयेन ॥ ५ ॥ ६ ॥

सहस्राक्षोऽहमित्युक्तेर्मद्देह इति चेरणात् ।
अस्मच्छब्दो वपुस्तस्य स्वामिनं च ब्रवीत्ययम् ॥ ७ ॥

ननु कथं मामेव विजानीहीतीन्द्रवाक्यात् प्रतर्दनस्य परमात्मनिश्चयः । तत्र हि सहस्राक्षोहमित्यर्थैकवाक्यस्थस्य मद्देह इत्यर्थैकवाक्य घटकस्य चास्मच्छब्दस्य क्रमाद् वपुस्तत्स्वामिसूक्ष्मदेहयोर्बोधकत्वेनोक्तालौकिकात्माबोधकत्वादिति शङ्कते सह-स्रेति तस्य वपुषः । अयमिति । इदं पूर्वगतेन । अस्मच्छब्द इत्यनेनान्वेति ॥७॥

सहस्राक्षवपुस्तेन दृष्टं स्वामी तु तद्दृशा ।
न द्रष्टुं शक्यते लिङ्गात्पुरैवानुमितः खलु ॥ ८ ॥

ननु शरीरमेव वा तत्स्वाम्येव वा तं प्रति तेन बुबोधयिषितो न निर्विशेषं ब्रह्मेत्याशङ्क्य तथा सति तं प्रति तदुपदेशानर्थक्यप्रसङ्गान्मैवमिति परिहरति—सहस्राक्षवपुरिति । तेन प्रतर्दनेन तादृशा प्रतर्दनदृशा । तन्नेत्रेणेति यावत् । ननु दृशा मा स्वामी ज्ञायि. अस्मच्छब्दप्रयोगलिङ्गकानुमितिं विषयो भवत्वित्याश-ङ्क्य तदुपदेशात्पूर्वमपि तस्य तदतिरिक्तव्यवहारलिङ्गकानुमितिविषयत्वेन तद्वैयर्थ्या-पत्तेस्तादवस्थ्यान्मैवमित्याह—लिङ्गादित्यादि ॥ ८ ॥

सहस्राक्षवपुः स्वामियुक्तं स्याद्व्यवहारतः ।
मच्छरीरवादित्येवं बालेनाऽप्यवबुध्यते ॥ ९ ॥

तत्स्वामिनो व्यवहारतस्तत्संभावनायामपि न तं प्रति तस्य बुबोधयिषेन्द्र-स्य तस्य तथा बालेनापि बोध्यत्वादित्याह—सहस्राक्षेति ॥ ९ ॥

अतो बुद्धिमतां बोद्धुं योग्योऽस्मच्छब्दलक्षितः ।
विवक्षितः कश्चिदर्थ इति शिष्येण निश्चितम् ॥ १० ॥

पारिशेष्यादलौकिकात्मनीन्द्रेणात्मशब्दो लक्षणया प्रयुक्त इति प्रतर्दनो नि-श्चितवानित्याह—अत इति ॥ १० ॥

अलौकिकात्मा ज्ञेयोऽस्तु तद्विज्ञानेन किं फलम् ।
इति चेद् दुःखसंबंधराहित्यं तत्त्वधीफलम् ॥ ११ ॥

प्रश्नपूर्वकमलौकिकात्मज्ञानस्य फलं दर्शयति—अलौकिकेति ॥ ११ ॥

तस्माद्धिततमं ज्ञानं दुःखाभावोऽत्र वर्ण्यते ।
सहस्राक्षे स्थूलदेहे दुःखं रोगादिजं भवेत् ॥ १२ ॥
स्वामिन्यस्मिन् सूक्ष्मदेहे पुण्यपापकृतं भयम् ।
त्वाष्ट्रादीनां बधेऽप्यासीद्भयं नैत्र चिदात्मनः ॥ १३ ॥

हिततमरूपज्ञानेनात्रदुःखाभावश्रवणात् इन्द्रस्य स्थूलशरीरे रोगदर्शनात् स्वामिरूपसूक्ष्मशरीरे पुण्यपापकृतभयदर्शनात् त्वाष्ट्रादीनां वधेऽपि चिदात्मनो भयाभावाच्चात्र चिदात्मैवास्मच्छब्दलक्षित इत्याह—तस्मादिति पद्ये ॥ १२ ॥ १३ ॥

त्वष्टुः पुत्रो विश्वरूप आसीद्देवपुरोहितः ।
स्वामिद्रोहं चकारासौ तं त्वाष्ट्रं हतवानहम् ॥ १४ ॥
कर्तर्यभूद्ब्रह्महत्या न त्वसंगे चिदात्मनि ।
वेदान्तज्ञानहीनानां यतीनां हनने तथा ॥ १५ ॥
लोकत्रये बहुविधानसुरान्हतवानहम् ।
चिदात्मनोऽपि मे तत्र नैव लोमापि हिंस्यते ॥ १६ ॥

"त्रिशीर्षाणं त्वाष्ट्रमहनामि"त्यादेः "न लोम चने"त्यन्तस्य ग्रन्थस्य चिदात्मनोऽसंगत्वे इत्याह-त्वष्टुरित्यादिपद्यत्रिकेण ॥ १४ ॥ १५ ॥ १६ ॥

माहात्म्यं मम नैतत्स्यात्किन्तु ज्ञानस्य तद्भवेत् ।
अन्योऽपि मां चिदात्मानं वेत्ति चेत्तत्फलं भवेत् ॥ १७ ॥
वाचा वा मनसा मातृवधादीन् कुरुते यदि ।
तथापि ज्ञानिनो मोक्षो न ह्येतैर्विनिवार्यते ॥ १८ ॥
पापं कृतवतोऽप्यस्य मुखे हर्षक्षयो न हि ।
न मुक्तिर्नश्यतीत्येवं शास्त्रैरस्य विनिश्चयात् ॥ १९ ॥

त्रिशीर्षाणमित्यादिग्रन्थस्येन्द्र स्तुतिपरत्वं निषेधन् विद्यायास्ततरां

यन् "स यो मामि"त्यादेः "मुखान्नीलं वेत्ती"त्यन्तस्य तात्पर्यमाह—माहात्म्यमित्यादिपद्यत्रिकेण ॥ १७ ॥ १८ ॥ १९ ॥

ननु मूढस्यापि नास्ति चिन्मात्रे पापलेपनम् ।
ततः कोऽतिशयस्तत्त्वविदः स्यादिति चेच्छृणु ॥ २० ॥

मूढतत्त्वविदोर्विशेषाभावमाशङ्क्य समाधिं प्रतिजानीते–नन्विति ॥ २० ॥

अहंकर्तृगतं पापमज्ञात्वा रोप्यते चिति ।
तेन ग्लानिर्मुखे भाति जन्मापि नरके भवेत् ॥ २१ ॥
ज्ञानेन कर्मणस्तस्य बीजभावो विनश्यति ।
जन्मप्ररोहो नैवास्तीत्येवं निश्चित्य हृष्यति ॥ २२ ॥
दग्धबीजं यथा लोके न प्ररोहक्षमं तथा ।
ज्ञानाग्निदग्धं यत्कर्म न तज्जन्मप्रदं भवेत् ॥ २३ ॥

अनयोर्विशेषं दर्शयति–अहमित्यादि पद्यत्रिकेण ॥ २१ ॥ २२ ॥ २३ ॥

तर्हि तत्त्वविदः श्रेष्ठाः मूढवन्नियमेन तत् ।
कुतः पापं त्यजन्तीति चेद्रहस्यमिदं शृणु ॥ २४ ॥

ननु तत्त्वविदः कर्मणो दग्धबीजभावे ते पापं कुतो नाचरन्तीत्याशङ्क्य समाधानं प्रतिजानीते–तर्हीति ॥ २४ ॥

यद्यप्यामुष्मिकी हानि र्नास्त्यथाप्यैहिकी तु सा ।
महती विद्यते तेन पापं यत्नेन वर्जयेत् ॥ २५ ॥

रहस्यमाह—यदीत्यादि पद्यषट्केन । आमुष्मिकी हानिः । पारलौकिकी हानिः ॥ २५ ॥

शिष्टास्त्यजन्ति पापिष्ठं प्रत्यक्षो नरकः स हि ।
तन्निन्दकस्तस्य पापं गृहीत्वा नरकं व्रजेत् ॥ २६ ॥
स्तोता कर्मी तु संसर्गात्स्वयमप्याचरेत्तथा ।
इत्थं दोषत्रयं दृष्ट्वा शिष्टाः पापं त्यजन्ति हि ॥ २७ ॥

ऐहलौकिकीं हानिं दर्शयति—शिष्टा इत्यादिपद्यद्विकेन ॥ २६ ॥

किञ्च पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा ।
पश्चाच्च तद्वासनया पुण्यमेव करोत्यसौ ॥ २८ ॥

तत्त्वविदः पापत्यागे हेत्वन्तरमाह—किञ्चेति ॥ २८ ॥

किं बहूक्त्या तत्त्वविदो न भयं पारलौकिकम् ।
उपदेशसहस्र्यां च तथाचार्यैरुदीरितम् ॥ २९ ॥

आचार्योक्त्यापि तत्त्वविदः पारलौकिकभयाभावमाह—किमिति ॥

परलोकभयं यस्य नास्ति मृत्युभयं तथा ।
तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः ॥

आचार्यवाक्यमाह—परेति ॥ ३० ॥

मां जानीहीत्येवमिन्द्रः स्वात्मज्ञाने प्रवर्त्य तम् ।
प्राणोऽस्मीत्यादिवाक्येन तस्मै तत्त्वमवोचत ॥ ३१

"मामेव विजानीही"त्यादिना "प्राणोऽस्मि प्रज्ञात्मे"ति वाक्यस्य दर्शयन्नेतद्वाक्यं व्याख्यातुमुपन्यस्यति—मामिति ॥ ३१ ॥

प्राणप्रज्ञे क्रियाज्ञान शक्ती द्वे लिङ्ग देहगे ।
तदधिष्ठानरूपत्वात्ताभ्यामात्मोपलक्षितः ॥ ३२ ॥

व्याचष्टे प्राणेति । तदिति, तयोर्निरुक्तप्राणप्रज्ञापदार्थयोरधिष्ठा- त्यर्थः ॥ ३२ ॥

प्रज्ञात्मा प्राणरूपोऽस्मीत्येवं तस्मा अवोचत ।
आनन्दोऽजर इत्यादि निर्णयस्तस्य उच्यते ॥ ३३

'प्राणोऽस्मी'ति प्रतर्दनं प्रतीन्द्रवाक्यं तद्विचार्य प्रतर्दननिर्णयः जरोऽमृत इति श्रुत्योच्यते इत्याह—प्रज्ञात्मेति ॥ ३३ ॥

अत्रोपायो नास्ति कश्चिदुपाधिमुपलक्षकम् ।
विनात्मवाचकः शब्दो यस्मान्नक्वापि वीक्ष्यते ॥

लोके गुणक्रिया जातिरूढयः शब्दहेतवः ।
नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥ ३५ ॥

ननु किमर्थं स्ववाचकशब्दं विहाय निरूक्तोपाधिभ्यामात्मोपलक्षित इत्याशङ्कां परिहरति—अत्रेति । उपाधिं विनात्मोपलक्षणेऽन्यो हेतुर्नास्ति, नन्वात्मशक्तः शब्दस्तत्र सोऽस्तुनेत्याह—आत्मवाचक इति । आत्मनि शब्दशक्तिवीक्षणाभावमुक्तमुपपादयति—लोक इति । रूढिर्यदृच्छाशब्दः शब्दहेतवः तत्प्रवृत्तिनिमित्तानि गुणादीनामेकोऽप्यात्मनि नास्ति तेनशक्तिवृत्त्या शब्देन नात्मा बोध्यत इत्युत्तरार्द्धार्थः ॥ ३४ ॥ ३५ ॥

उपाधिष्वपि सर्वेषु सामीप्यात्प्रत्यगात्मनः ।
प्राणप्रज्ञाद्वयं योग्यमत्यन्तं तेन लक्ष्यते ॥ ३६ ॥

ननु कुतश्चक्षुराद्युपाधिनात्मानोपलक्षित इत्याशङ्क्य तयोरत्यन्तयोग्यत्वात् ताभ्यामेवोपलक्षित इत्याह—उपाधिष्विति ॥ ३६ ॥

प्राणशब्दोऽभिधावृत्त्या वायुं चेष्टकमाह हि ।
प्रज्ञाशब्दो ज्ञानहेतुं बुद्धिं वक्ति स्वशक्तितः ॥ ३७ ॥

प्रज्ञाप्राणशब्दयोर्ज्ञानहेतौ बुद्धौ चेष्टाकर्तरिवायौ च शक्तिमाह प्राणेति ॥३७॥

तद्भ्रान्त्याधिष्ठानतया तद्धेतुत्वोपचारतः ।
ताभ्यामात्मा लक्ष्यमाणो ज्ञेयः शाखाग्रचन्द्रवत् ॥ ३८ ॥

शाखाग्रे चन्द्र इत्यत्र यथा शाखाग्रपदार्थेन चन्द्र उपलक्षितो भवति, तथा प्रज्ञाप्राणपदार्थाभ्यामात्मोपलक्ष्यत इत्याह—तदिति । अत्र त्रिभिस्तच्छब्दैः प्रज्ञाप्राणौ परामृश्येते ॥ ३८ ॥

देहेन्द्रियादयो भावा ज्ञानादिव्यापृतिक्षमाः ।
यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥ ३९ ॥
अजडात्मवदाभान्ति यत्सान्निध्याज्जडा अपि ।
देहेन्द्रियमनः प्राणाः सोऽहमित्यवधारय ॥ ४० ॥

प्राणोऽस्मि प्रज्ञात्मेत्यत्रोत्तमपुरुषप्रयोगादस्मच्छब्दार्थमाह—देहेन्द्रिये-

त्यादिश्लोकद्वयेन । ज्ञानादीत्यादिना क्रियासंग्रहः ॥ ३९ ॥ ४० ॥

उपाधिलक्षितं तत्त्वं यदि बोद्धुं न शक्नुयाः ।
तर्ह्युपाधिद्वयोपेतमुपास्स्व गुणसंयुतम् ॥ ४१ ॥

प्राणोऽस्मि प्रज्ञात्मेत्येतद् व्याख्याय तं मामायुरमृतमित्युपास्स्वेत्येतद् व्याचष्टे—उपाधीति ॥ ४१ ॥

आयुष्यममृतत्वं च गुणौ प्राणस्य संमतौ ।
इहायुः प्राणतः स्वर्गे चामृतत्वमिति स्फुटम् ॥ ४१ ॥

प्रज्ञाप्राणोपाधिगुणसंयुतमुपास्स्वेत्युक्तं तत्र प्राणस्य गुणावाह—आ मिति । प्राणगुणोपासनफलमाह इहेत्युत्तरार्द्धेन । प्राणतः जीवतः ॥ ४२ ॥

सत्यसंकल्पता प्रज्ञा गुणध्यानानुसारतः ।
फलमाप्नोति कामी चेन्निष्कामस्तत्त्वमीक्षते ॥ ४३ ॥

प्रज्ञागुणोपासने फलमाह—सत्येति । सत्यसंकल्पतारूपो यः प्रज्ञागु ध्यानानुसारतः कामी चेत् सत्यसंकल्पता रूपं फलं प्राप्नोतीत्यर्थः । निष्क चित्तैकाग्र्यद्वारा तत्त्वेक्षणफलमाह—निष्काम इति ॥ ४३ ॥

उपास्त्यैकाग्र्यमाप्त्वाथ तत्त्वंवीक्षितुमादितः ।
प्रज्ञाप्राणावुपाधीतौ विविच्येतां यथातथम् ॥ ४४ ॥

चित्तैकाग्र्यानन्तरं तत्त्ववीक्षणफलकमुक्तोपाध्योर्यथायथं विवेचनी यमित्यर्थः । यथायथमिति पाठो युक्तो भाति ॥ ४४ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणन्धीन्द्रियपञ्चकम् ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् ॥ ४५ ॥

इन्द्रियेभ्यस्तौ विवेक्तुं तानि तावदाह—श्रोत्रमिति ॥ ४५ ॥

इन्द्रियाणां प्रवृत्तिः स्यात्प्रज्ञालोचनपूर्विका ।
प्राणवायुप्रेरिता चेत्येवं लोके व्यवस्थितिः ॥ ४६ ॥

प्रज्ञाप्राणव्यापारपूर्वकत्वेनेन्द्रियव्यापाराणां तेभ्यस्तौ भिनत्ति—इन्द्रि मिति ॥ ४६ ॥

तत्र मूढाः केचिदाहुर्युगपच्चक्षुरादयः ।
सर्वेऽपि स्वस्व विषये प्रवर्तन्त इतीदृशम् ॥ ४७ ॥

"तद्धैक आहुरेकभूयं वै प्राणा गच्छन्ती"त्येतं पूर्वपक्षं व्याचष्टे–तत्रेति ॥४७॥

तदसन्निपुणोऽप्यत्र न शक्तः सूक्ष्ममीक्षितुम् ।
कालाल्पत्वेन संछाद्य क्रमं धूर्तो विडम्बयेत् ॥ ४८ ॥

"नहिकश्चन शक्नुयादि"त्यादिकां "सर्वाण्येवैतानि प्रज्ञापयन्ती"त्यन्तां श्रुतिं तात्पर्यतो व्याचक्षाण उक्तपूर्वपक्षं निरस्यति–तदसादित्यादिना त्रिभिः । सूक्ष्ममिति । अस्य क्रमामितिशेषः । क्रममिति । अत्र सूक्ष्ममित्येतत्पदमनुषञ्जनीयम् । धूर्तः इन्द्रियाणां युगपत्प्रवृत्तिवादी साङ्ख्यः । विडम्बनम्– वञ्चना ॥ ४८ ॥

प्रज्ञाप्राणसहायेन विनानैवेन्द्रियं क्वचित् ।
प्रवर्तते सहायस्तु क्रमभावीति निश्चितः ॥ ४९ ॥

सहायः प्रज्ञाप्राणसहायः अस्य प्रवर्तेत इत्यत्रान्वयः इति हेतोर्निश्चितः क्रमभावीतिं योजना ॥ ४९ ॥

अन्यथा निखिलं वेदं धूर्तो ह्येकक्षणे पठेत् ।
या प्रज्ञाप्राणयोर्वृत्तिः सा स्याद्वाग्वृत्तिवत्क्रमात् ॥ ५० ॥

एकस्या वाचोऽपि स्वविषयविशेषेषु क्रमेण प्रवृत्तिर्भवति किमुत सर्वेषामिति बाधप्रसञ्जनेन द्रढयति—अन्यथेतिपूर्वार्द्धेन । प्रज्ञाप्राणयोरपि वाक्प्रवृत्तिवत् क्रमिकप्रवृत्तिमाह—येत्युत्तरार्द्धेन ॥ ५० ॥

प्रज्ञाप्राणानुग्रहेण वाग्यदाह तदेतरे ।
चक्षुराद्या उपरतास्तामनुब्रुवते खलु ॥ ५१ ॥

"वाचं वदन्ती"मित्यादिकां "सर्वे प्राणा अनुप्राणन्तीत्येव मुहैवैत"दित्यन्तां श्रुतिं व्याचष्टे—प्रज्ञेति । यदावागाह तदाऽइतरे चक्षुराद्या उपरता इति योजना । तामनुब्रुवत इत्यस्य स्वव्यापारे प्रवृत्ताश्चेत्युत्तरेणान्वयः ॥ ५१ ॥

स्वव्यापारे प्रवृत्ताश्चेत्प्रज्ञाप्राणानुकर्षणात् ।
वाचो विघ्नो भवेद्विघ्नाचरणं ह्यनुवादिता ॥ ५२ ॥

श्रौतानुवदन्तिपदमनुब्रुवत इति व्याख्यायानुवदन पदार्थमाह— णेति। विघ्नाचरणं प्रज्ञाप्राणानुकर्षणात्मकोऽनुवाद इत्यर्थः ॥ ५२ ॥

एवमन्यत्रापि योज्यमतः सर्वेऽपि संहताः।
एकैकविषयो ह्युक्तो व्यवहारः क्रमाद्भवेत् ॥ ५३ ॥

उक्तव्याख्यां चक्षुषा रूपं श्रोत्रेण शब्दमित्यादिष्वतिदिशन् विघ्नकर्तृत्वसम्भवेन संहतत्वं तेषामुपपाद्य क्रमिकप्रवृत्तिमुपसंहरति—एवमिति।

क्रमभावी विचित्रोऽयं व्यवहारश्चिदात्मना।
येनैकेनेक्ष्यते सोऽयमन्यः सर्वेभ्य इष्यताम् ॥ ५४ ॥

एवं चक्षुरादिभ्यः प्रज्ञाप्राणौ विविच्य सर्वेभ्यः साक्षिणं विवे- क्रमभावीति ॥ ५४ ॥

प्राणावागादयः सर्वे किं समा उत विद्यते।
श्रेष्ठस्तेष्विति चेत्प्राणः श्रेष्ठो जीवनकृत्त्वतः ॥ ५५ ॥
तस्मादुपेक्ष्यवागादीन् प्राणोपाधिः समाश्रितः।
आत्मबोधाय किञ्चायं प्राण उत्थापयेद्वपुः ॥ ५६ ॥

इदानीम् 'अस्तीत्येव प्राणानां निःश्रेयसादान'मित्यादितस्मादे "तमेवे- मुपासीते"त्यन्तां श्रुतिं व्याचष्टे—प्राण इत्यादिनाद्विकेन, 'अथ प्राण एवे- 'मुत्थापयती'त्यन्तां श्रुतिं व्याचष्टे—किञ्चेत्यादिना ॥ ५५ ॥ ५६ ॥

ननु सुप्तावयं प्राणो देहं नोत्थापयत्यमुम्।
किन्तु जागरणे तस्मात्प्रज्ञैवात्र प्रयोजिका ॥ ५७ ॥

इदानीं "यो वै प्राणः सा प्रज्ञा यावै प्रज्ञा सप्राण" इत्येतद्व्या- शङ्कते—नन्वित्यादिना द्विकेन। अत्र प्राणोत्थापने ॥ ५७ ॥

चतुर्भिरुह्यते यत्तु सर्वशक्त्या शरीरकम्।
तूलायते तदेवाहं धियाप्रातमितीक्ष्यते ॥ ५८ ॥

चतुर्भिः ज्ञानेन्द्रियकर्मेन्द्रियबुद्धिप्राणैः तूलायते तूलमिवाचरति अहं- या साभासया बुद्ध्या ॥ ५८ ॥

सत्यमेव ततः प्रज्ञोपाधिः प्राणवदाश्रितः ।
प्रज्ञात्मा प्राणएवैको मिलित्वोपाधिरिष्यते ॥ ५९ ॥

उक्थत्वेन प्रज्ञैवोपासनीया न प्राण इति पूर्वपक्ष्यनुशयं श्रुत्यर्थस्याशङ्कनीयत्वेन निरस्यंस्तां व्याचष्टे—सत्यमेवेति । त्वदुक्तं शरीरोत्थापकत्वं सत्यमेव नासत्यं ततस्तदुत्थापकत्वात् तत्रोपाधित्वमाश्रितं श्रुत्या तदपि न स्वातन्त्र्येण किन्तु प्राणविशेषणतयैवेतिपद्यार्थः ॥ ५९ ॥

द्वयोर्मृतौ जीवने च सहभावात्तदेकता ।
उत्थापकत्वादुक्थं तदित्यैकाग्र्याय चिन्तयेत् ॥ ६० ॥

इदानीं "सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामत"इत्येतद्व्याचष्टे—द्वयोरिति । तदेकता तयोः प्रज्ञाप्राणपदार्थयोः एकता तादात्म्यम् । "तस्मादेतमेवोक्थमुपासीते"तिश्रुत्यर्थमुपसंहरन्नुत्थापकत्वगुणाचिन्तनफलं चित्तैकाग्र्यमाह—उत्थेत्यादि ॥ ६० ॥

तत्रैकाग्र्ये क्षमा बुद्धिर्बोद्धुं तत्साक्षिणं भवेत् ।
जगद्धेतुतयाऽप्येष प्राणः स्वात्मोपलक्षकः ॥ ६१ ॥
एकादशेन्द्रियाण्येषां विषयाश्च जगत्खलु ।
सुप्तौ सर्वं जगल्लीनं प्राणोपाधिक आत्मनि ॥ ६२ ॥

चित्तैकाग्र्ये सति साक्षिबोधे बुद्धिः समर्था भवतीत्याह—तत्रेति । "यत्रैतत्पुरुषःसुप्त"इत्यादिं "देवेभ्यो लोका" इत्यन्तां श्रुतिं व्याचष्टे—जगद्धेतुतयेत्यादिना सार्द्धपञ्चकेन ॥ ६१ ॥ ६२ ॥

इन्द्रियाण्येव लीयन्ते विषया नेति चेन्न तत् ।
प्रातीतिकस्य जगतो भानाभावो लयो मतः ॥ ६३ ॥
प्रातीतिकत्वं वेदान्तसिद्धान्ते जगतः स्फुटम् ।
अतः सुप्तौ जगल्लीनं प्रबोधे जायते पुनः ॥ ६४ ॥

तत्र विषयलयाभावमाशङ्क्य जगतः प्रातिभासिकत्वेन परिहरति-इन्द्रियाणीति ॥ ६३ ॥ ६४ ॥

प्राणप्रतीतिरप्यस्य सुप्तौ नास्तीति चेत्तदा ।
प्राणोक्तिरन्यदृष्ट्यैव प्राणेनात्मोपलक्ष्यते ॥ ६५ ॥

अस्य सुप्तस्य ॥ ६५ ॥

प्रबोधे स्वात्मनोऽक्षाणि जायन्ते विस्फुलिङ्गवत् ।
तेभ्योऽभिमानिदेवाः स्युर्देवेभ्यो विषया इमे ॥ ६६ ॥

श्रुतिस्थलोका इत्यस्य विषया इति व्याख्या ॥ ६६ ॥

दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहुमन्यते ।
स्वप्नबोधात्स्वसंसारो लीयते स्वप्नवद्यतः ॥ ६७ ॥

"तस्यैषैव दृष्टिरेतद्विज्ञान"मित्येतद्व्याचष्टे-दृष्टीति ॥ ६७ ॥

न्यायेनानेन मरणे मूर्च्छादौ चोह्यतां लयः ।
लीनस्य पुनरुत्पत्तौ व्यवहारक्रमं शृणु ॥ ६८ ॥

"यत्रैतत्पुरुष आर्त" इत्यादौ "देवेभ्यो लोका" इत्यन्ते उक्तन्यायमतिदिशति—न्यायेनेति । व्यवहारक्रमं दर्शयितुं प्रतिजानीते— लीनेति ॥ ६८ ॥

प्राणोपाधिकजीवात्मा यदा व्यवजिहीर्षति ।
तदा वाक्सृजते शब्दं जीवो वाचा ब्रवीति तम् ॥ ६९ ॥

'स यदाऽस्माच्छरीरादुत्क्रामती'त्यादिं 'सैषा प्राणे सर्वाप्ति'रित्यन्तं व्याचष्टे—प्राणोपाधीति सार्द्धेन ॥ ६९ ॥

एवं सर्वत्र विज्ञेयं प्राणे सर्वाप्तिरीरिता ।
प्रज्ञा प्राणादभिन्नाऽतस्तस्यां सर्वाप्तिरुच्यते ॥ ७० ॥

"यो वै प्राणः सा प्रज्ञे"त्यादि व्याख्यातत्वादुपेक्ष्य 'अथ खलु यथा प्रज्ञा'मित्यादि 'नहि प्रज्ञापेताधीः काचन सिध्येन्न प्रज्ञातव्यं प्रज्ञापये'दित्यन्तं श्रुतिं व्याचष्टे प्रज्ञा प्राणादभिन्नेति सार्द्धाष्टकेन ॥ ७० ॥

वाक् प्रज्ञायासेकमंशमभिमानाख्यमाश्रिता ।
प्रज्ञाभिमानवशतः शब्दोच्चारणशक्तियुक् ॥ ७१ ॥

प्रज्ञायां सर्वासिवचनं प्रतिज्ञातमाह—वागिति । प्रज्ञाया एकोंऽशो वृत्तिविशेषरूपोऽभिमानः ॥ ७१ ॥

शरीरगात्वगप्येवं शक्ताऽभूत स्पर्शजे सुखे ।
रतौ प्रजातावानन्दे चोपस्थः शक्तिमानभूत ॥ ७२ ॥

इदमेवोत्तरत्रातिदिशति—शरीरगेति ॥ ७२ ॥

क्रीडाचोत्पादनं वीर्यमोक्षश्चोक्तमिदंत्रयम् ।
ध्येयेज्ञेये च काम्यादौचित्तंशक्तमभूत्खलु ॥ ७३ ॥

रत्यादित्रयमाह—क्रीडेतिपूर्वार्द्धेन । ध्येयादौ चित्तशक्तिमाह ध्येयइत्युत्तरार्धेन ॥ ७३ ॥

सर्वेन्द्रियेषु प्रज्ञाया अभिमानोऽवधार्यताम् ।
अन्वयव्यतिरेकाभ्यामुदाहार्योऽखिलेष्वसौ ॥ ७४ ॥

वागादिषूक्तः शब्दादिविषयः प्रज्ञाभिमानश्चक्षुरादिषु चाक्षुषादि विषयं तमाह । सर्वेन्द्रियेष्विति ॥ ७४ ॥

प्रज्ञया वाचमारुह्य जीवो नामाभिवक्ति च ।
अन्यचित्तोऽभवं तेन नावोचामिति चोच्यते ॥ ७५ ॥

इदानीं "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोती"त्यादिकां षष्ठीं सप्तमीं च कण्डिकामुपलक्षणविधया व्याचष्टे प्रज्ञयेति ॥ ७५ ॥

वक्ष्यामीत्यभिमानोयं वागारोह इतीर्यते ।
ध्यास्यामीत्यभिमानात्तु चित्तारोहस्तथा भवेत् ॥ ७६ ॥

रुह धात्वर्थमाह । वक्ष्यामीति ॥ ७६ ॥

अभिमानोऽपि धीवृत्तिः सापि पूर्वं भवेदथ ।
धिया ध्यानादिरित्येका धीः क्रमात्कुरुते द्वयम् ॥ ७७ ॥

यथा प्राणे जगत्सर्वं लयोत्पत्त्योरवस्थितम् ।
प्रज्ञायां च तथा सर्वं स्थितिकाले व्यवस्थितम् ॥ ७८ ॥

धियोऽभिमानरूपा ध्यानादिरूपा च द्वयी वृत्तिरित्याह । अमीति ॥७८

प्रज्ञाप्राणौ ततो मुख्योपाधी स्वात्मावबोधने ।
तद्द्वारेणावबोद्धव्यो जीवात्मादौ विवेकिना ॥ ७९ ॥

ततः प्रज्ञायां स्थितत्वात् आदौ जीवात्मावबोद्धव्य इत्यनेनान्वयः ॥

वाचा नामाभिवदनं यत्तस्यात्कर्तृपूर्वकम् ।
क्रियात्वात्कृषिवत्कर्ता चाहमित्यनुभूयते ॥ ८० ॥

इदानीं "न वाचं विजिज्ञासीत वक्तारं विद्या"दित्यादिकां "समर्पि-
ति विद्या" दित्यन्तामष्टमीं नवमीं च कण्डिकां व्याख्यातुमुपक्रमते । वाचेति
र्वाद्धः प्रतिज्ञा । तृतीयपादो हेतुदृष्टान्तपरः । चतुर्थपादः साध्यान्तर्गतस्य कर्तु
त्वयविषयत्व प्रदर्शनार्थः ॥ ८० ॥

शब्दादिविषयेऽहंधीः केनापि नहि शक्यते ।
देहेन्द्रियेष्वपि तथा मदीयत्वावभासनात् ॥ ८१ ॥

अहंबुद्धेः शब्दादिविषयकत्वं देहेन्द्रियादिविषयकत्वं च निरस्यति श-
ब्दादीति ॥ ८१ ॥

आनखाग्रमहंकारो वपुर्व्याप्यावतिष्ठते ।
चिद्बिम्बप्रतिबिम्बाभ्यां व्याप्तोऽसौ कर्तृतां व्रजेत् ॥ ८२ ॥

आनखाग्रवपुर्व्यापिन्या अहं बुद्धेश्चिद्बिम्बप्रतिबिम्बविशिष्टायाः कर्तृत्वं
आनखेति ॥ ८२ ॥

क्रियावांश्चेतनः कर्ताहंकारस्तादृशस्ततः ।
कर्ताभूत्वाखिलैरक्षैर्व्यापारान्कुरुतेऽखिलान् ॥ ८३ ॥

क्रियेति लोके क्रियावान् चेतनः कर्ता भवति तादृशो निरुक्तरू-
पोऽहंकारः ॥ ८३ ॥

जीवात्मानं विविच्येत्थं चेतनं प्राणधारिणम् ।
विविञ्च्यात्परमात्मानमानन्दं शुद्धचेतनम् ॥ ८४ ॥

साभासबुद्धिरूपं जीवं विविच्य परमात्मानं विवेक्तुमारभते । जीवेति ॥८४ ॥

प्रतिबिम्बाहंकृतिभ्यां बिम्बं निष्कृष्य साक्षिणम् ।
ब्रह्मेति विद्यात्सर्वस्य तस्मिन्नारोपितत्वतः ॥ ८५ ॥

"तावाएतादशैवे" त्यादिं 'नो एतन्नाने" त्यन्तां श्रुतिं तात्पर्यतो व्याख्यातुमारभते । प्रतीति ॥ ८५ ॥

प्रज्ञामात्रा भूतमात्रा ग्राह्यग्राहकरूपतः ।
संसारं निर्वहन्त्यस्मिन्नात्मतत्त्वे प्रकल्पिताः ॥ ८६ ॥

ग्राह्यग्राहकरूपतो विषयेन्द्रियस्वरूपत्वात् ॥ ८६ ॥

चक्रस्यारेष्वाश्रिता स्यान्नेमिर्नाभावरास्तथा ।
अक्षेषु विषयास्तानि चात्मनि प्राणलक्षिते ॥ ८७ ॥

"तद्यथा रथस्यारे"ष्वित्यादि व्याचष्टे चक्रस्येति ॥ ८७ ॥

चेष्टाकल्पनहेतुत्वात्प्राणो धीकल्पनस्य च ।
हेतुत्वेन भवेत्प्रज्ञा ततस्त्वानन्द एव हि ॥ ८८ ॥

"स एष प्राण एव प्रज्ञात्मानन्दो जरोऽमृत" इत्येतद्व्याचष्टे । चेष्टेति चेष्टाकल्पनहेतुत्वात्प्राणो धीकल्पनहेतुत्वात् प्रज्ञा उभयात्मकत्वादानन्दः परमात्मेत्यर्थः ॥ ८८ ॥

परप्रेमास्पदतया सर्वेषां यो विभात्यसौ ।
नित्यानन्दपरात्मा स्याज्जरामरणवर्जितः ॥ ८९ ॥

परप्रेमविषयत्वेनापि जरामरणरहितस्यात्मनो नित्यानन्दतामाह । परेति ॥८९॥

न पुण्येन भवेद्देवो न पापेन पशुर्भवेत् ।
चिच्छायावानहंकार एव स्यात्पुण्यपापवान् ॥ ९० ॥

तदीये पुण्यपापे द्वे देहस्थे च जरामृती ।
स्वात्मन्यारोपयेन्मूढस्ततो देवादिजन्मभाक् ॥ ९१ ॥

आरोपे बाधिते बोधात्कर्म स्याद्दग्धबीजवत् ।
ततो जन्माङ्कुरो नास्ति निर्लेपे परमात्मनि ॥ ९२ ॥

इदानीं "न साधुना कर्मणा भूया" नित्यादिकां "एभ्यो लोकेभ्यो ... त" इत्यन्तां श्रुतिं व्याचष्टे । न पुण्येनेत्यादिना सप्तभिः श्लोकैः ॥ ९० ॥ ९१ ॥

कार्योपाधेरभावेपि कारणोपाधिमत्त्वतः ।
कर्मास्यास्त्विति चेदीशः कर्माध्यक्षो न कर्मकृत् ॥ ९३ ॥

शङ्कते कार्योपाधेरिति कार्योपाधिरन्तःकरणं कार्णोपाधिर्माया अस्य ... त्मनः समाधत्ते । ईश इत्यादि ॥ ९३ ॥

कारयित्वा पुण्यमेव कर्तारं स्वर्गमापयेत् ।
पापं तु कारयित्वा तं नरकं प्रापयेदसौ ॥ ९४ ॥

"एष ह्येवैनं साधुकर्मे" त्यादिवाक्यं विवृणोति । कारयित्वेति ॥ ९४ ॥

पर्जन्यवत्प्रेरकत्वान्नास्य वैषम्यमापतेत् ।
शाल्यादीन् बहुधा वृष्टिर्वर्धयेद्विषमापि नो ॥ ९५ ॥

वैशम्यमाशङ्क्य पर्जन्यन्यायेन समाधत्ते । पर्जन्येति ॥ ९५ ॥

उत्तमाधमभावोऽत्र तत्तद्बीजन कारितः ।
तारतम्यं च जीवेषु स्वस्ववासनया कृतम् ॥ ९६ ॥

दृष्टान्ते तत्तद्बीजं तारतम्यहेतुर्जीवेषु स्वस्ववासना इत्याह उत्तमेति ॥

मातृवत्पालयेल्लोकं शिक्षयेत् पितृवत्प्रभुः ।
स्वामी स्याद्राजवत्सोयं ममात्मेत्यत्रगम्यताम् ॥ ९७ ॥

इदानीम् "एष लोकपाल एष लोकाधिपतिरेष-सर्वेश्वर" इत्येतद्व्या... मातृवदिति प्रथमपादेन लोकपालपदं व्याख्यातं । द्वितीयेन लोकाधिपतिपदं ... स्याद्राजवदित्यनेन सर्वेश्वरपदं च सम आत्मेत्येतत् व्याचष्टे सोयमित्यादि ॥ ९७ ॥

मायोपाधौ स्थिते तस्य मिथ्यात्वं बुध्यते ततः ।
संसारी जीववन्नेशः स्वानन्दैकरसो ह्ययम् ॥ ९८ ॥

मायोपाधेर्मिथ्यात्वमिश्वरो जानाति यतस्ततः स जीववत् संसारी न किन्तु स्वानन्दकैरस इत्याह । मायोपेति ॥ ९८ ॥

अखण्डैकरसानन्दो मुक्तोऽयं स्वात्मदृष्टितः ।
संसारिदृष्ट्या सर्वेश इति विद्धि प्रतर्दन ॥ ९९ ॥

स्वात्मदृष्ट्यायं मुक्तोऽपि जीवदृष्ट्या सर्वेश इति प्रतर्दनं सम्बोध्येन्द्र आहेत्याह अखण्डैकेति ॥ ९९ ॥

इन्द्रानुग्रहतः सोऽभूत्कृतकृत्यः प्रतर्दनः ।
एतद्व्याख्यानतस्तु स्याद्विद्यातीर्थमहेश्वरः ॥ १०० ॥

इति श्रीविद्यारण्य विरचितेऽनुभूतिप्रकाशे कौषीतकी शाखा विवरणे इन्द्रप्रतर्दनसंवादो नामाष्टमोऽध्यायः ॥ ८ ॥

आख्यायिकामुपसंहरति इन्द्रेति ॥ १०० ॥

इति श्रीकाशीनाथकृतौ कौषीतकीशाखीयमितप्रकाशविवृतौ इन्द्रप्रतर्दनसंवादो नामाष्टमोऽध्यायः ॥ ८ ॥



अथ नवमोऽध्यायः ॥ ९ ॥

राजा बालाकये प्राह विप्राय ब्रह्मवेदनम् ।
कौषीतक्याख्यशाखायामत्र स्पष्टी करोमि तत् ॥ १ ॥

अधुनाऽजातशत्रुबालिकिसंवादरूपं कौषीतकीशाखोपनिषच्चतुर्थाध्यायं विवरितुं प्रतिजानीते । राजेति ॥ १ ॥

दृप्तो बालाकिरपरब्रह्मवित् स कदाचन ।
अजातशत्रुं काशीशं बुबोधयिषुरागतः ॥ २ ॥
अजातशत्रुर्ब्रह्मात्मवेदनाच्छौर्यतोऽपि च ।
अन्तर्बहिश्च निःशत्रुः काश्यां राजा बभूव सः ॥ ३ ॥

"गार्ग्योह वै बालाकि"रित्यादि प्रथमकण्डिकां व्याचष्टे दृप्त इत्यादि द्विकेन ॥ २ ॥ ३ ॥

गर्गगोत्रजविप्रोऽयं बालाकिर्नैव तत्त्ववित् ।
किन्तु प्राणोपासकोऽयं दर्पेण महतावृतः ॥ ४ ॥
राजन्बुभुत्सवे तुभ्यं परं ब्रह्म ब्रवाण्यहम् ।
इत्युक्त्वादित्यपुरुषं ब्रह्मोपास्स्वेत्यवोचत ॥ ५ ॥

"सहोवाच बालाकिर्य एवैष आदित्ये पुरुष"इत्यादीः "सर्वेषामात्मा"इत्यन्ताः षोडशकण्डिका व्याचष्टे गर्गगोत्रेत्यादि पादोनश्लोकपञ्चकेन ॥ ४ ॥

राजा निवार्य तं प्राह फलं ध्येयगुणानपि ।
एवं पञ्चदश ब्रह्माण्यप्यत्रासाववोचत ॥ ६ ॥

फलं अतिष्ठत्वं सर्वभूतमूर्धत्वरूपम् । ध्येयगुणाः बृहत्त्व पाण्डरवासस्त्व... तिष्ठात्वानि एवम् आदित्यवत् असौ अजातशत्रुः ॥ ६ ॥

चन्द्रे विद्युति मेघे खे वायावग्नौ जलेऽपि च ।
आदर्शे श्रवणे गन्तृशब्दे छायाकृतावपि ॥ ७ ॥

तान्येव पञ्चदश ब्रह्माण्याह चन्द्रइत्यादिना सार्धश्लोकेन ॥ ७ ॥

देहे स्वप्ने दक्षिणेऽक्षण्यपि वामेऽब्रवीत्क्रमात् ।
सर्वत्र राज्ञा प्रत्युक्तो विप्रस्तूष्णीमवस्थितः ॥ ८ ॥

"तत उह बालाकिस्तूष्णीमासे"त्येतद्व्याचष्टे सर्वत्रेत्यादि ॥ ८ ॥

अजातशत्रू राजा तं परब्रह्मविदुक्तवान् ।
परब्रह्म वदिष्यामीत्युक्तिस्तव मृषा भवेत् ॥ ९ ॥

"तं होवाचाजातशत्रु"र्मृषा वै किलमासंवदिष्ठा ब्रह्मते ब्रवाणी"त्येतद् व्याचष्टे । अजातेति ॥ ९ ॥

जगतः पुरुषाणां च कर्तृ ब्रह्मेति बुध्यताम् ।
बालाकिः परविद्यार्थं राजानमुपसन्नवान् ॥ १० ॥

"सहोवाच यो वै बालाक" इत्यादि व्याचष्टे । जगत इत्यादि पूर्वार्द्धेन । "तत उह बालाकिः समित्पाणि"रित्यादि व्याचष्टे । बालाकिरित्युत्तरार्धेन ॥ १० ॥

राजा नाङ्गीचकारैतत्स्वजातेरधमत्वतः ।
गुरुत्वं नास्ति मे तुभ्यं ब्रह्म विज्ञापयाम्यहम् ॥ ११ ॥

"तंहोवाचाजातशत्रु"रित्यादि"त्वाज्ञापयिष्यामी"त्यन्तम् व्याचष्टे राजेत्यादि ॥ ११ ॥

इत्युक्त्वा पाणिना विप्रमादायान्तःपुरं गतः ।
सूत्रात्मैव परं ब्रह्म प्राणो जीव इतीदृशः ॥ १२ ॥

इदानीं "तं ह पाणावभिपद्ये" त्यादि "तत एव समुत्तस्था"इत्यन्तं व्याचष्टे । इत्युक्त्वेत्यादिना चतुर्भिः ईदृश इत्यस्य निश्चयं इत्युत्तरगतेनान्वयः ॥१२॥

बालाकेर्निश्चयस्तस्य व्यावृत्त्यै स्पष्टमाह तम् ।
सुषुप्ते पुरुषे प्राणो न लीनश्चक्षुरादिवत् ॥ १३ ॥

तस्य सूत्रात्मेत्याद्युक्तबालाकिनिश्चयस्य तं बालाकिम् चक्षुरादिवदिति विषमदृष्टान्तः ॥ १३ ॥

जीवश्चेत्प्रतिबुध्येत समाहूतः स्वनामभिः ।
इति मत्वाह्वयत्प्राणं शास्त्रीयैस्तस्य नामभिः ॥ १३

यदि प्राणो भोक्ता स्यात्तर्हि बृहदादिस्वनामभिः समाहूतः प्रति
इति मनसि निधाय शास्त्रीयैर्नतु लोकप्रसिद्धैः बृहदादिभिः प्राणस्य ना
राजाह्वयतेत्याह । जीव इति ॥ १४ ॥

नोत्तस्थौ स पुमान् किन्तु शिश्य एवात्र पूर्ववत् ।
यष्ट्यासौ ताडितः सुप्तः समुत्तस्थौ त्वरान्वितः ॥ १

"स उह तूष्णी"मित्यादि "तत एव समुत्तस्था" इत्यन्तं व्याचष्टे नेति

यथा भस्मावृतो वह्निर्वायुना ज्वाल्यते तथा ।
प्राणो नात्मा बोधहीनो घटवद्यस्तु बुध्यते ॥ १६ ॥

इदानीं प्राणातिरिक्तो भोक्ता जीवो न प्राण इत्युक्तोपदेशेन बुद्ध
लाकिरतिविस्मितः । शुद्धं ब्रह्म स एवेति सन्तुष्टः । नान्यत् प्रष्टुमैच्छ
यथेत्यादि सार्धचतुर्भिः राज्ञः प्रश्नानवसारयितुं । यस्तु बुध्यते इत्यस्य असौ
जीव इत्युत्तरान्वयः ॥ १६ ॥

इन्द्रियैः सहितो भोक्ता जीवोऽसौ चेतनत्वतः ।
द्वा सुपर्णेति मन्त्रेण चेतनौ द्वावुदीरितौ ॥ १७ ॥

"द्वा सुपर्णेति" श्रुतिमवलम्ब्य भोक्त्रभोक्तारौ द्वौ चेतनावित्याह द्वे
त्यादिना प्रकाशत इत्यन्तेन ॥ १७ ॥

तयोरन्यतरो भोक्ताऽनश्नन्नन्यः प्रकाशते ।
चिच्छायावानहंकारो व्याप्तो जागरणे पुमान् ॥ १८

भोक्तृस्वरूपमाह । चिच्छेत्यादिना ॥ १८ ॥

इन्द्रियैर्विषयान् भुङ्क्ते तं बोद्धारमबुध्यत ।
प्राणात्मवाद्यसौ भोक्तृबोधेनैवातिविस्मृतः ॥ १९

प्राणात्मवादित्वं तदतिरिक्त भोक्तृबोधेनैवातिविस्मयेहेतुः ॥ १९

बुद्धं ब्रह्मेति सन्तुष्टो नान्यत्प्रष्टुमपैक्षत ।
ज्ञापयिष्येऽहमित्येवं राज्ञा तस्मै प्रतिश्रुतम् ॥ २० ॥

स्वयं प्रश्नकरणे राज्ञस्तात्पर्यमाह ज्ञापयिष्य इति ॥ २० ॥

शिष्टं बोधयितुं तस्मात्स्वयं प्रश्नांश्चकार सः ।
मन्दधीरपि यः श्रोता श्रद्धालुर्विनयान्वितः ॥ २१ ॥

नापृष्टेनोत्तरं वक्तव्यमित्यस्यापवादमाह । मन्दधीरित्यादिना शास्त्रधीरित्यन्तेन शिष्टत्वमाह श्रद्धेति ॥ २१ ॥

अपृष्टेनापि वक्तव्या तस्मै विद्येति शास्त्रधीः ।
यो भोक्ताऽत्रोत्थितः सोयं क्वाशयिष्ट पुरा क्व वा ॥२२॥

शास्त्रधीः शास्त्रनिर्णय इदानीम् "तंहोवाचाजातशत्रु"रित्यादि राजप्रश्नत्रयं व्याचष्टे यो भोक्तेत्यादिना ॥ २२ ॥

अभूद्धीरहिता सुप्तिः कुतो वाऽगादयं पुमान् ।
बालाकिना अविज्ञातमिदं सर्वमिति स्वयम् ॥ २३ ॥

"तदुह बालाकिर्न विजज्ञौ" इत्येतद्व्याचष्टे बालेत्यादि । इति स्वयमित्यस्य निश्चित्येत्युत्तरगतेनान्वयः ॥ २३ ॥

निश्चित्य त्रितयस्यास्य निर्णयं स्पष्टमब्रवीत् ।
हृदयं कमलाकारं देहमध्येऽस्त्यधोमुखम् ॥ २४ ॥

नाड्यस्तस्माद्विनिर्गत्य व्याप्नुवन्त्यखिलं वपुः ।
अहंकारोपाधिरात्मा जीवो भूत्वा हृदि स्थितः ॥ २५ ॥

नाडीभिः प्रसृतः सोक्षैर्जानन् जगारणे स्थितः ।
बाह्यभोगप्रपदं कर्म यदा क्षीणं तदा पुनः ॥ २६ ॥

"तंहोवाचे"त्यादि "तासु तदा भवती"त्यन्तं व्याचक्षाणः स्पष्टं निर्णयमाह हृदयमित्यादिना सप्तविंशतितमपूर्वार्धपर्यन्तेन ॥ २४ ॥ २५ ॥२६ ॥

वासनाभोगदे कर्मण्युद्बुद्धे स्वप्नभाग्भवेत् ।
स्वप्ननाडीष्ववेक्ष्याथ कर्मणोऽस्यापि संक्षयात् ॥ २७

इदानीं "यदा सुप्त" इत्यादिम् "एकधाभवति" इत्यन्तां व्याचष्टे
त्यादिपञ्चकेन ॥ २७ ॥

हृदि संकोचमाप्नोति सा सुषुप्तिरितीर्यते ।
नाडीमूलानि हृत्पद्मे पुरीतद्वेष्टितेऽवसन् ॥ २८ ॥

सा सङ्कोचः ॥ २८ ॥

यानि तेषु प्रविश्यान्तर्लीयते परमात्मनि ।
परमात्मा स्वतः पूर्णः सच्चिदानन्दलक्षणः ॥ २९ ॥

यानीति । पुरीतद्वेष्टिते हृत्पद्मे यानि नाडीमूलान्यवसंस्तेष्वन्तः
श्य जीवः परमात्मनि लीयते इति पूर्वपद्योत्तरार्धेन सह योजना । परमात्म
माहोत्तरार्धेन परमात्मेत्यादिना ॥ २९ ॥

सोऽहंकार परिच्छिन्नो जीवत्वारोपवान्भवेत् ।
अज्ञानकार्योऽहंकारोऽवस्थितः फलभुक्तये ॥ ३० ॥

स्वतः पूर्णत्वादिलक्षणस्यात्मनः आरोपितभोक्तृत्वमाह स इत्
भोगसाधनाहंकारस्य जाग्रत्स्वप्नयोरवस्थितिमाहाज्ञानेत्यादिना ॥ ३० ॥

फलदे कर्माणि क्षीणे लीयतेऽसौ स्वकारणे ।
पूर्णेनैक्यमवाप्नोति परिच्छिन्नो यथा घटे ॥ ३१ ॥

सुषुप्तावज्ञानेऽहंकारलये पूर्णेन भोक्तुरैक्यं सदृष्टान्तमाह फलद
ना सार्धेन पद्येन । स्वकारणे अज्ञाने, यथा घट इत्युत्तरश्लोकान्वयि ॥ ३१

नष्टे घटाकाश ऐक्यं वियता महता व्रजेत् ।
यदा न कंचन स्वप्नं पश्येत्सुप्तस्तदाऽखिलम् ॥ ३२

इदानीं "यदा सुप्त" इत्यादि "सर्वैर्ध्यातैः सहाप्येती" त्यन्तं
दित्यादिना । अखिलमित्यस्य विषयेन्द्रियजातमित्युत्तरगतेनान्वयः ॥ ३२ ॥

विषयेन्द्रियजातं यत्तत्प्राणे प्रविलीयते ।
प्राणशब्दो वायुमाह परमात्मानमप्यसौ ॥ ३३ ॥

प्राणपदार्थं वायुपरमात्मोभयरूपमाह प्राणशब्द इति ॥ ३३ ॥

प्रविष्टचेष्टाहेतुत्वमुभयत्रापि विद्यते ।
वायौश्वासक्रियाः सर्वाः सृष्टिस्तु परमात्मनि ॥ ३४ ॥

प्राणशब्दप्रवृत्तिनिमित्तमाह । प्रविष्टेति । अत्र प्रविश्येति पाठो भाति । उभयत्र वाय्वात्मनोः प्रविष्टचेष्टाहेतुत्वमेव विशदयति वायावित्यादि ॥ ३४ ॥

दृष्टिभेदाद्द्वयोश्चाक्षलयो वक्तुं हि शक्यते ।
सुप्तस्याक्षलयः प्राणवायाविति तटस्थधीः ॥ ३५ ॥

नन्वेवं कुत्र लयः प्राणे परमात्मनि वोभयत्र तस्य वक्तुमशक्यत्वादित्याशङ्क्य दृष्टिसृष्टिवादमाश्रित्य परिहरति दृष्टीति । दृष्टिभेदात् दर्शनभेदात् द्वयोर्वाय्वात्मनोः । दर्शनभेदमाह । सुप्तस्येत्यादि । तटस्थः सुप्तादतिरिक्तस्तत्समीपवर्ती॥३५॥

अद्वैते द्वैतविलयं मन्यते सुप्त उत्थितः ।
सुप्ताभिप्रायमाश्रित्य परात्मनि जगल्लयः ॥ ३६ ॥

सुप्ताभिप्रायेण परमात्मन्येव जगल्लयः श्रुत्युक्तो न तु वायावित्याह अद्वैत इति जगल्लय इत्यस्य श्रुत्युक्त इत्युत्तरगतेनान्वयः ॥ ३६ ॥

श्रुत्युक्तस्तेन पूर्वोक्तप्रश्नयोरुत्तरं भवेत् ।
कैषोऽशयिष्ट कुत्रेयं सुप्तिस्तत्रोत्तरं क्रमात् ॥ ३७ ॥

प्रश्नावाह कैष इत्यादि ॥ ३७ ॥

परमात्मन्यशयिष्टाऽभूदज्ञाने सुप्तिरित्यदः ।
परिच्छिन्नस्य पूर्णात्मतादात्म्यं शयनं भवेत् ॥ ३८ ॥

तत्रोत्तरं क्रमादित्युक्तमेवाह । परेति शयनपदार्थमाह । परिच्छिन्नस्येति ॥३८॥

साहंकारस्य जगतो विलयः सुप्तिरुच्यते ।
कुत आगादिति प्रश्नस्योत्तरं दृश्यतामिदम् ॥ ३९ ॥

सुप्तिपदार्थमाह । साहमिति पूर्वार्धेन ॥ ३९ ॥

अज्ञानेनावृत्तात्पूर्णादागच्छति परात्मनः ।
यदा प्रबुध्यते सुप्तस्तदाग्नेर्विस्फुलिङ्गवत् ॥ ४० ॥

"कुत आगादि"त्यस्योत्तरं ददत् "स यदा प्रतिबुध्यत" इत्यादि "लोका" इत्यन्तंव्याचष्टे अज्ञानेनेत्यादिना सार्धपद्यद्वयेन ॥ ४० ॥

प्राणा यथायथं तस्माज्जायन्ते परमात्मनः ।
प्राणाभिमानिदेवानामग्न्यादीनां जनिस्ततः ॥ ४१ ॥

तत इन्द्रियेभ्यः ॥ ४१ ॥

लोक्यन्ते विषया अक्षैस्ते देवेभ्यः समुद्गताः ।
सर्वसाधारणः सर्ग एकः प्रातिस्विकोऽपरः ॥ ४२ ॥

प्रातिस्विकोऽसाधारणः ॥ ४२ ॥

आकाशादिक्रमादाद्यः प्राणादिक्रमतोऽपरः ।
सर्वेषां प्राणिनां कर्मक्षये स्यात्प्रलयो महान् ॥ ४३ ॥

सक्रमं सर्गद्वयमेवाह । आकाशादीति ॥ ४३ ॥

पुनः कर्मोद्भवे तेषां स्यान्महासृष्टिरीश्वरात् ।
एकस्य कर्मणि क्षीणे प्रलयः सुप्तिनामभृत् ॥ ४४ ॥

तेषां सर्वेषां प्राणिनाम् ॥ ४४ ॥

पुनः कर्मोद्भवे तस्य सृष्टिः स्याज्जागराभिधा ।
अद्वैततत्त्वबोधाय सृष्टिः सर्वत्र कथ्यते ॥ ४५ ॥

तस्यैकस्य प्राणिनः । ननु सर्वत्र श्रुतौ सृष्टिक्रमविगानं श्रूयते सा श्रद्धातव्येत्याशङ्क्यं नहि श्रुतिः सृष्टिक्रमं प्रतिपादयितुं प्रवृत्ताऽपित्वैकात्म्यं तत्तु सर्वत्रैकरूपेणैव प्रतिपादितमिति समाधिंचोक्तत्वादुपेक्ष्य सृष्टिवैयर्थ्यमाशङ्क्य तत्साफल्यं दर्शयति । अद्वैततत्त्वबोधायेत्याद्युत्तरार्द्धेन ॥ ४५ ॥

अल्पा सा महती वास्तु सदद्वैतं विबुध्यते ।
प्रौढस्य राजगेहस्य द्वारं स्यात्पुरतो महत् ॥ ४६ ॥
पृष्ठतोऽन्तः पुरद्वारं चोरद्वाराख्यमल्पकम् ।
महाद्वारेण सहसा दुर्लभं राजदर्शनम् ॥ ४७ ॥

एतदेव विशदयति अल्पेत्यादिसार्धपञ्चकेन ॥ ४६ ॥ ४७ ॥

जनसंमर्दबाहुल्याद्वाराणां च बहुत्वतः ।
अल्पद्वारे स्वामिभक्तो हठाद्राजानमीक्षते ॥ ४८ ॥

तद्दुर्लभत्वे हेतुमाह जनेति पूर्वार्द्धेन ॥ ४८ ॥

दृष्टिसृष्ट्यानुभूत्यर्थी वेत्त्यात्मानं तथा हठात् ॥
महासृष्ट्या तत्पदार्थमादौ ज्ञात्वा तथा पुनः ॥ ४९ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति दृष्टीति । दृष्टिसृष्ट्येति प्रातीति-क्यातयेत्यर्थः अनुभूत्यर्थी अस्यपुरुष इतिशेषः दृष्टिसृष्टिंवक्तुमुपक्रमते महेति॥४९॥

त्वं पदार्थं शोधयित्वा वाक्याद्बोधो विलम्बते ।
तस्मादिहाजातशत्रुर्बालाकेरविलम्बतः ॥ ५० ॥

प्रत्यग्ब्रह्मत्वबोधार्थं दृष्टिसृष्टिमवोचत ।
सुप्तावासीद्यदज्ञानमहंकारलयोऽत्र हि ॥ ५१ ॥
सोहंकारः कर्म भोगकाले स्यात्पुनरुद्गतः ।
तेनावच्छिन्न आत्मापि कर्ता भोक्तापि पूर्ववत् ॥ ५२ ॥
भोक्तुरात्मन उत्पन्नं भोगसाधनमिन्द्रियम् ।
इन्द्रियप्रेरको देवानुग्रहस्तत उद्गतः ॥ ५३ ॥

स प्रयोजनां तां वक्तित्वमित्यादिना ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

अक्षेभ्योऽनुगृहीतेभ्यो लोका भान्ति समुद्गताः ।
सेयं प्रातीतिकी सृष्टिस्तस्माज्जाता ततः स्वयम् ॥ ५४ ॥

तस्मादहंकारावच्छिन्नचेतनात् ततः प्रातीतिक्याः सृष्टेः जगत् क... मात्मेति बालोऽपि स्वयं क्षणाद्बुध्यत इत्युत्तरेण योजना अत्रायं प्रयोगः ... रिकीवियदादिसृष्टिश्चेतनजन्यासृष्टित्वात् प्रातीतिकसृष्टिवदिति ॥ ५४ ॥

जगत्कर्ता परात्मेति क्षणाद्बालोऽपि बुध्यते ।
ईश्वरो महिमोपेतः सोऽप्यन्न इति वासना ॥ ५५ ॥

ईश्वर इत्यादि वासना धीमतां चिरमारूढेत्यन्वयः ॥ ५५ ॥

धीमतां चिरमारूढा वियदादिक्रमस्ततः ।
किं बहूक्त्याऽस्तु या काचित्सृष्टिः सा मायिकी ततः ॥

तत ईश्वरात् वियदादिक्रमः क्रमेणाकाशादिसृष्टिः सर्वस्याः सृष्टे... स्त्वेन मिथ्यात्वमाह किमिति । तत मायिकत्वात् इदमुत्तरत्रान्वयि ॥ ५६ ॥

अद्वितीयानन्द आत्मा सुषुप्तावनुभूयते ।
अहंकारो मायिको यस्तदवच्छिन्नचेतनः ॥ ५७ ॥

सृष्टेर्मायिकत्वेनाद्वितीयानन्दस्वरूप आत्मेति प्रतिज्ञायां प्रमाणमाह ... षुप्ताविति । "तद्यथा क्षुर" इत्यादि "आनखाग्रेभ्य" इत्यन्तं पाठक्रममुपेक्ष्य ... तुमुपक्रमतेऽहंकार इत्यादिना स्पष्टा भान्ति पृथक् तथेत्यन्तेन त्रिकेण ॥ ५...

आत्मा जागरणे कृत्स्नमानखं व्याप्नुयाद्वपुः ।
गूढोऽग्निररणौ व्यापी तथा सुप्तौ चितिर्वपुः ॥ ५८

दार्ष्टान्तिकमाह । तथेति अविद्यया गूढाचितिर्वपुर्व्याप्नोतीत्युत्तरेणान्व...

व्याप्नोत्यविद्यया गूढा जागरे क्षुरवत्स्थिता ।
नापितस्य क्षुराः पात्रे स्पष्टा भान्ति पृथक्स्थिताः ।

क्षुरवदिति दृष्टान्तं विशदयति नापितस्येत्यादिना ॥ ५९ ॥

चक्षुरादिषु चिल्लेखाः स्पष्टा भान्ति पृथक् तथा ।
सर्वेऽपि करणात्मानः कर्त्रात्मानमिमं सदा ॥ ६० ॥

दार्ष्टान्तिकमाह । चक्षुरादिष्विति । 'तमेतमात्मान" इत्यादि

स्वा"इत्यन्तं व्याचष्टे सर्वेपीत्यादिना श्रुत्यन्तरे श्रुतमित्यन्तेन श्लोकपञ्चकेन ॥६०॥

अनुसृत्यैव तिष्ठन्ति श्रेष्ठिनं स्वजना इव ।
पुत्रमित्रादिभिः स्वीयैः सार्द्धं श्रेष्ठी धनी सदा ॥ ६१ ॥

श्रेष्ठीत्यस्य व्याख्या धनी अस्य भुङ्क्त इत्युत्तरेणान्वयः ॥ ६१ ॥

भुङ्क्ते तेपि तदिष्टार्थं कुर्वन्तो भोजयन्ति तम् ।
एवं जीवः स्वकीयाक्षैः सार्द्धं शब्दादिकान् सदा ॥ ६२ ॥

ते पुत्रमित्रादयः तम् श्रेष्ठिनं पुरुषं दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति । एवमित्यादिना जीव इत्यस्य भुङ्क्त इत्युत्तरेणान्वयः ॥ ६२ ॥

भुङ्क्तेऽक्षाणि च शब्दादीन् गृह्णन्ति स्वामितुष्टये ।
यत्र तिष्ठति भोक्तासौ सुप्तौ जागरणे पुनः ॥ ६३ ॥

यत्रेत्यस्य स इत्युत्तरेणान्वयः । एवं जागरणे इत्यस्योदेतीत्युत्तरेणान्वयः ॥६३॥

यस्मादुदेति सोऽद्वैतः परमात्मेति बुध्यताम् ।
इत्थमद्वैतबोधार्थमहंकारे परेश्वरः ॥ ६४ ॥

परेश्वर इत्यस्य स्पष्टेत्यादावन्वयः ॥ ६४ ॥

स्पष्टचित्प्रतिबिम्बोऽभूदिति श्रुत्यन्तरे श्रुतम् ।
यावदद्वैतमात्मानमिन्द्रो नैव विजज्ञिवान् ॥ ६५ ॥

श्रुत्यन्तरे"ऽनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"त्यादौ "सयावद्धे"त्यादि "आधिपत्यं पर्य्येती"त्यन्तं व्याचष्टे । यावदित्यादिना सार्द्धसप्तकेन॥६५॥

असुरा बहिरन्तः स्थास्तावदभ्यभवन्निमम् ।
बहिष्ठा असुराः स्वर्गे स्थितमेनं बबाधिरे ॥ ६६ ॥

बहिष्ठा असुरा हिरण्यकशिपुप्रभृतयः ॥ ६६ ॥

आन्तरा असुराश्चित्ते कामाद्या दुःखदायिनः ।
यदा विजज्ञावात्मानमसुरानखिलांस्तदा ॥ ६७ ॥

आन्तराँस्तानाह । आन्तरा इत्यादि विजज्ञौ एतदमृतमभयमेतद्ब्रह्म-
रूपेणात्मानं विज्ञातवानित्यर्थः । असुरानित्यस्य हत्वेत्युत्तरेणान्वयः ॥ ६७ ॥

हत्वाजयेन देवानां श्रैष्ठ्यं स्वाराज्यमाप्तवान् ।
अजातशत्रुतामोति जातब्रह्मात्मबोधतः ॥ ६८ ॥

अन्तर्वहिर्वा कः शत्रुर्मम सर्वात्मदर्शिनः ।
ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम ते वपुः ॥ ६९ ॥

कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ।
असुराणां स्वात्मताप्तावसुरत्वं हतं भवेत् ॥ ७० ॥

उक्तामजातशत्रुतां विशदयति हत्वेत्यादिनात्रिकेण ॥ ६८ ॥ ६९ ॥

अयमेव जयस्तस्य देवेभ्यः श्रेष्ठता ततः ।
अद्वैतमपराधीनं स्वारट् स्यात्तेन तत्त्ववित् ॥ ७१ ॥

तस्येन्द्रस्यायं मेव जयो यां देवेभ्यः श्रेष्ठता ततः श्रेष्ठतातः अद्वैत-
नरूपं स्वाराट् स्यात्तेन स्वाराज्येन तत्त्वविदात्मानं बोधयित्वा एषामधिपो-
स्युत्तरेणान्वयः ॥ ७१ ॥

आत्मानंबोधयित्वैषामधिपोऽधिकपालनात् ।
नैतदिन्द्रस्य माहात्म्यं किन्तु ज्ञानस्य तत्त्वतः ॥ ७२ ॥

अपराधीनत्वरूपं स्वाराज्यमाधिकपालनरूपमाधिपत्यमित्येतदद्वन्द्वस्य
माहात्म्यं न किन्तु ज्ञानस्येत्येतदाह आत्मानमिति "तथो एवैव" मित्यादि
व्याख्यातुम् ॥ ७२ ॥

अन्योऽप्यद्वैतमात्मानं वेत्ति चेदिन्द्रवद्भवेत् ।
अजातशत्रुर्बालाकिं विप्रमित्थमबोधयत् ॥ ७३ ॥

तद् व्याचष्टे अन्य इति ॥ ७३ ॥

तथैवोत्तमतागर्वं त्यक्त्वा जानीत बुद्धिमान् ।
विद्वानप्युपसन्नाय दद्याद्विद्यां महादरात् ॥ ७४ ॥

आत्ययिकायास्तात्पर्यमाह । तथेति ॥ ७४ ॥

देयात्ताभ्यां स्वभावं तं विद्यातीर्थमहेश्वरः ॥ ७५ ॥

उपसंहरति देयादिति ॥ ७५ ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे ।
कौषीतकीशाखोपनिषद्विवरणं नाम नवमोऽध्यायः ॥९॥

इति श्रीकाशीनाथकृतौ मितप्रकाशविवृतौ
कौषीतकीशाखोपनिषद्विवरणं नाम
नवमोऽध्यायः ॥ ९ ॥



अथ दशमोऽध्यायः ।

मैत्रायणीयनाम्नी या शाखा सा याजुषी मता ।
तस्यां शाकायन्यमुनिर्बोधयामास भूपतिम् ॥ १ ॥

मैत्रायण्युपनिषदं व्याख्यातुमारमते मैत्रेति ॥ १ ॥

बृहद्रथः स्वस्य राज्ये पुत्रं संस्थाप्य निर्गतः ।
वने महत्तपस्तप्त्वा विद्यार्थं मुनिमाययौ ॥ २ ॥
अशाश्वतं शरीरं मे कदा यायात्ततः पुरा ।
ज्ञास्याम्यात्मानमात्मज्ञो मुनिर्मां बोधयिष्यति ॥ ३ ॥

"बृहद्रथो हवै नाम राजे"त्यादि "सत्वन्नो ब्रूही"त्यन्तं व्याचष्टे इत्यादिभिस्त्रिभिः ॥ २ ॥ ३ ॥

इत्यभिप्रेत्य साष्टाङ्गं प्रणिपत्य भुवि स्थितः ।
वृणीष्व वरमित्युक्तो वृत्तवानात्मवेदनम् ॥ ४ ॥

इत्युक्त इति । अस्य मुनिनेति शेषः ॥ ४ ॥

राज्ञां भोगप्रधानानामात्मज्ञानं सुदुःशकम् ।
वृणीष्व कामानित्युक्तः स मुनेः पादमग्रहीत् ॥ ५ ॥
पादं स्वमूर्ध्न्यवस्थाप्य स्ववैराग्यं प्रकाशयन् ।
आधारे करणे दोषानवोचद्भोक्तृभोग्ययोः ॥ ६ ॥

"एतद्वृत्तं पुरस्तादशक्य"मित्यादि "भगवँस्त्वंनो गति"रित्यन्तं प्रघट्टकं तात्पर्यतो व्याचष्टे राज्ञामित्यादि । भोगतत्परत्वेन राज्ञामात्मज्ञानं दुःशकं मुनिना वृणीष्वान्यान् कामानित्युक्तो बृहद्रथो मुनेःपादमग्रहीदित्यर्थः ॥ ५ ॥ ६ ॥

भोगाधिकरणं देहस्तस्य दोषा इमे स्फुटाः ।
अस्थिचर्मस्नायुमज्जामांसशुक्रादयोऽखिलाः ॥ ७ ॥

स्नायुर्नाडी विशेषः ॥ ७ ॥

बीभत्साः करणेष्वेषु मज्जता भुज्यते कथम् ।
विट्पूर्णखाते मग्नः सन् भुंक्ते कोऽपि न बुद्धिमान् ॥८॥

बीभत्सा ग्लानिविषयाः । मज्जतेति । अस्य पुरुषेणेति शेषः ॥ ८ ॥

पुरा त्वविद्ययाच्छन्नदोषोऽहं भुक्तवांस्ततः ।
बालोऽपि मूढो यत्किंचिदद्याद्विष्ठादिकं तथा ॥ ९ ॥

ततोऽविद्ययाच्छन्नदोषत्वात् ॥ ९ ॥

भोगाधिकरणे दोषा आसतां भोगसाधने ।
चित्तेऽपि बहवो दोषा वर्तन्ते हि निरन्तरम् ॥ १० ॥
कामक्रोधौ लोभमोहौ विषादेर्ष्याभयादयः ।
ये सन्त्येतैर्ग्रस्तचित्ते भोगिनः किं सुखं भवेत् ॥ ११ ॥

भोगसाधने चित्ते दोषानाह । चित्तेऽपीत्यादिना ॥ १० ॥ ११ ॥

श्रूयतां भोक्तृदोषाँश्च भोक्तारो बहवो मताः ।
देहाभिमानिनो जीवा उत्तमा मध्यमाधमाः ॥ १२ ॥

भोक्तृदोषानाह । श्रूयतामित्यादिनाऽष्टकेन ॥ १२ ॥

दरिद्रा अधमा ज्ञेया मध्यमाश्चक्रवर्तिनः ।
गंधर्वाद्या उत्तमाः स्युस्ते सर्वेपि क्षयिष्णवः ॥ १३ ॥
उत्पन्नध्वंसिनो यद्वत्स्युर्दंशमशकादयः ।
तथैव सर्वभोक्तारो म्रियन्ते स्वायुषः क्षये ॥ १४ ॥

अधमादिभोक्तॄनाह दरिद्रा इति । गंधर्वादीनां मरणाभावमाशङ्क्यमाह । ते सर्वेऽपि क्षयिष्णव इति । क्षयिष्णुत्वं च तेषां "नाकस्य पृष्ठेते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति" इति श्रुतेर्बोध्यम् ॥ १३ ॥ १४ ॥

भोक्ता न म्रियते किन्तु देह एवेति चेच्छृणु ।
देहस्थस्यैव भोक्तृत्वं तन्नश्येद्वपुषा सह ॥ १५ ॥

मुनिः शङ्कते भोक्तेति समाधिं प्रतिजानीते । शृणिष्वति ॥ १५ ॥

दारिद्राणां भोगहेतुः श्रीर्भृत्याश्च न सन्त्यथ ।
सुद्युम्नप्रमुखाणां ते विद्यन्ते चक्रवर्तिनाम् ॥ १६ ॥

मुनिः शङ्कते दरिद्रेति । ते श्रीर्भृत्याश्च ॥ १६ ॥

इति चेत्सन्तु सर्वेषां मिषतामेव मध्यगः
म्रियते चक्रवर्ती तां सन्त्यज्य महतीं श्रियम् ॥ १७ ॥

समाधत्ते सर्वेषामिति । मिषतां पश्यताम् ॥ १७ ॥

अन्तर्धानादिशक्तिश्चेद्गन्धर्वादिषु विद्यते ।
विद्यतां नाम मृत्युस्तु तेषां शास्त्रेषु कथ्यते ॥ १८ ॥

मुनिः शङ्कते अन्तरिति । राजा समाधत्ते विद्यतामिति ॥ १८ ॥

भोक्तृणां नश्वराणां को भोगः स्यान्मृत्युचिन्तया ।
शयानो भुवि नो कश्चिन्मुमूर्षुर्धनमिच्छति ॥ १९ ॥

उक्तमेवार्थं स्पष्टयति भोक्तृणामिति ॥ १९ ॥

तिष्ठत्यसौ भोक्तृदोषो भोग्येपि श्रूयतामयम् ।
अब्धिगिर्यादिकं सर्वं नश्वरं किमुतेतरत् ॥ २० ॥

भोग्यदोषानाह भोग्येऽपीति ॥ २० ॥

दोषान् सोढ्वा सकृद्भुक्तः संसारो नश्यतीति चेत् ।
न भोगैराश्रितस्यास्य संसारावृत्तिदर्शनात् ॥ २१ ॥

मुनिः शङ्कते दोषानिति । समाधत्ते नेति ॥ २१ ॥

भोगकाले कृतं कर्म कुतो जन्म ददाति नो ।
अन्धकूपस्थितो भेक इवाहं संसृति स्थितः ॥ २२ ॥

संसारकूपपातितमस्मादुद्धर्तुमर्हसि ।
त्वमेवगतिरस्माकमन्या कापि न विद्यते ॥ २३ ॥

भोगकाले कृतं कर्म कुतो नो जन्म ददातीत्यन्वयः ॥ २२ ॥ २३

राज्ञोऽस्य तीव्रवैराग्यं दृष्ट्वा मुख्याधिकारिताम् ।
तमाह कृतकृत्यस्त्वमात्मज्ञोऽसि न संशयः ॥ २४ ॥

अधुनाऽ"थ भगवाञ्छाकायन्यः सुप्रीतोऽब्रवीद्राजानं महाराजे"त्यादि । द्वितीयप्रपाठकप्रथमकण्डिकां व्याचष्टे राज्ञोस्येत्यादिना पञ्चसप्तकेन ॥ २४ ॥

यज्ञदानादि कृत्यं ते जातं विविदिषोदयात् ।
सफलं न पुनः कर्म कर्तव्यं तेऽत्र विद्यते ॥ २५ ॥

विविदिषोदयात् यज्ञादिकर्म ते सफलं जातं विषयासक्तिहेतुकं कर्म ते नास्तीत्याह । यज्ञेति ॥ २५ ॥

विषयासक्तिरेवास्य ज्ञानस्य प्रतिबन्धिका ।
एषा तु नास्ति ते ज्ञानं हस्तप्राप्तमिव स्थितम् ॥ २६ ॥

एषा विषयासक्तिः ज्ञानमात्मज्ञानम् ॥ २६ ॥

संसारहेयतां बुद्ध्वा त्यक्ते तास्मिन्नशेषतः ।
योवशिष्टो भाति सोयमेवात्मेत्यवगच्छ भोः ॥ २७ ॥

आत्मज्ञानमेवाह संसारेति । तस्मिन्संसारे ॥ २७ ॥

अवशिष्टोऽयमात्मासावहमित्येव गम्यते ।
मतभेदादहंबुद्धिर्बहुष्वस्त्यत्र को भवेत् ॥ २८ ॥

शङ्कते मतेति ॥ २८ ॥

देहः कर्ता च साक्षीति त्रयो वादिभिरीरिताः ।
आत्मानस्तेषु कतमो भवतोऽभिमतो वद ॥ २९ ॥

शङ्कां विशदयति देह इति ॥ २९ ॥

साक्ष्यात्माभिमतो नान्यो तयोर्दोषांस्त्वयेरिताः ।
संसारान्तःपातिनौ तौ न तयोरात्मतोचिता ॥ ३० ॥

समाधत्ते साक्षीति ॥ ३० ॥

चाक्षुषव्यवहारेऽस्य भासकत्वेन साक्षिता ।
विवेक्तुं शक्यते तस्मादक्ष्युपाधौ स उच्यते ॥ ३१ ॥

"य एषो वाह्यावष्टम्भनेनोर्ध्वमुत्क्रान्तो व्यथमानो व्यथमानस्तमः ... आत्मेत्याह भगवानि"त्येतद् व्याख्यातुमवतारयति चाक्षुषेत्यादिपद्यैः ... अस्यात्मनः साक्षितेत्यस्य विवेक्तुं शक्यत इत्यत्रान्वयः । स साक्षी । उच्यते उक्तश्रुत्या वर्ण्यत इत्यर्थः ॥ ३१ ॥

देहमध्येऽस्ति हृत्पद्मं नाडीयुतमधोमुखम् ।
नाड्यस्तूर्ध्वमधश्चैतं देहं व्याप्य व्यवस्थिताः ॥ ३२ ॥

प्रतिज्ञातं प्रपञ्चयति देहेति ॥ ३२ ॥

अहंकारोऽत्र चिद्युक्तः कर्ता भोक्ता हृदि स्थितः ।
मनोन्तःकरणं स्थित्वा हृदि वृत्त्या वहिर्व्रजेत् ॥ ३३ ॥

अत्र संघाते हृदि स्थितोऽहंकारश्चिद्युक्तः कर्ता भोक्ता च भवति त... गसाधनं मनो हृदि स्थित्वा स्वयं बहिर्गमनेऽशक्तं स्वीयवृत्त्या वहिर्गच्छ... अहमिति ॥ ३३ ॥

रश्मिवत्प्रसृता वृत्तिर्नाड्याप्नोत्यक्षिगोलकम् ।
अस्वतंत्रा वहिश्चक्षुरिन्द्रियेण सह व्रजेत् ॥ ३४ ॥

वृत्त्यावहिर्व्रजेदित्युक्तं तत्र वृत्तेर्नाडीद्वाराऽक्षिगोलकप्राप्तिपूर्वकं ... न्द्रियेण सह बहिर्गमनमाह । रस्मीति ॥ ३४ ॥

वृत्त्यवच्छिन्नचैतन्य घटाकाशवदेतया ।
वृत्त्या सह वहिर्गत्वा तत्राज्ञानं नुदेत्क्षणात् ॥ ३५ ॥

वृत्त्यवच्छिन्नचैतन्यस्य घटाकाशवत् वृत्त्या सह वहिर्गमनं सम्प्रयोज... वृत्त्यवच्छिन्नेति । नुदेत् नाशयेत् ॥ ३५ ॥

तद्वृत्त्यागमनात्पूर्वमज्ञानेन समावृतम् ।
वाह्यं जगत्तदज्ञानं तया वृत्त्याऽपसार्यते ॥ ३६ ॥

नुदेदित्युक्तमर्थं प्रपञ्चयति तदिति । अपसार्यते दूरीक्रियते ॥ ३६ ॥

वर्तिनिष्ठो यथा दीपस्तमो नाशयते तथा ।
चैतन्यं वृत्तिनिष्ठं यत्तदज्ञानस्य नाशकम् ॥ ३७ ॥

केवलायां वृत्तौ नाज्ञाननिवर्तकत्वं किन्तु तद्विशिष्टचैतन्य इति सदृष्टान्तमाह । वर्तीति । दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति तथेत्यादिना ॥ ३७ ॥

एष हृन्निष्ठचैतन्यपदार्थोऽक्षणा बहिर्गतः ।
व्याप्नुवन्निखिलं तत्र व्यथां नाप्नोति काञ्चन ॥ ३८ ॥

प्रतिकूलात्तु विषयाद्या व्यथा सा तु मानसी ।
न चैतन्यगतेत्येवमाचार्याः स्पष्टमब्रुवन् ॥ ३९ ॥

बहिर्गतस्य साक्षिणः प्रतिकूलविषयजन्यं दुःखं न भवति किन्तु मनस इत्याह एष इत्यादिना द्वाभ्याम् ॥ ३८ ॥ ३९ ॥

दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् ।
दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा ॥ ४० ॥

दुःखिनो विक्रियावत्त्वेन साक्षित्वासम्भवमाह दुःखीत्यादिना सार्द्धेन॥४०॥

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ।
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ ४१ ॥

अतो विक्रियावत्त्वविरहादाविक्रियोऽहं धीविक्रियासहस्राणां साक्षीत्युत्तरार्द्धे योजना ॥ ४१ ॥

यः साक्षी चित्पदार्थोऽसौ जीवात्मा तस्य जीवता ।
अहंकारेण तादात्म्यभ्रांत्यैव परिकल्पिता ॥ ४२ ॥

एष संप्रसाद इत्यवतारयन्नात्मनो जीवत्वं कल्पितमित्याह य इति ॥४२॥

आत्माहंकारदेहाभ्यां युक्तः कलुषितः पुरा ।
विविचितः स्थूलदेहादीषदेव प्रसीदति ॥ ४३ ॥

साक्षिणं साधयन् "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्य परं ज्योतिरुपसम्पद्यत" इति व्याचष्टे । आत्मेत्यादिना पद्यषट्केन ॥४३॥

बोधयित्वा जीवतत्त्वं जीवस्य ब्रह्मरूपताम् ।
बोधयामास सोऽप्यात्मा स्वेन रूपेण तिष्ठति ॥ ४४ ॥

स्थूलदेहाद्विवेकेनाहंकारयुक्तस्य जीवतां बोधयित्वा तद्रहितस्य बोधयामासानेन वाक्येनेत्याह । बोधयित्वेति ॥ ४४ ॥

अहंकाराद्विविक्तश्चेत्तदा सम्यक् प्रसीदति ।
आधिव्याध्याख्यकालुष्यं न चिन्मात्रेऽस्ति किंचन ॥

संप्रसादमेवाहोत्तरार्धेनाधीति ॥ ४५ ॥

एष साक्षी संप्रसादो देहद्वयसमुत्थितः ।
शास्त्रसिद्धं परं ब्रह्म ज्योतिः प्राप्नोति वाक्यतः ॥

उक्तश्रुतिं विवृणोति एष इति ॥ ४६ ॥

मत्तोऽन्यद्ब्रह्म परमं स्वप्रकाशमिति भ्रमः ।
पुरासीत्तत्त्वमस्यादिवाक्येनासौ निवर्तते ॥ ४७ ॥

उक्तश्रुत्युक्तसाक्षिणोऽहं भिन्न इति भ्रमनिवृत्तिस्तत्त्वमस्यादिवाक्येनेत्याह । मत्त इति ॥ ४७ ॥

अब्रह्मत्वभ्रमापायो ज्योतिःप्राप्तिरितीर्यते ।
ततोऽयं ब्रह्मणा स्वेन रूपेण व्यवतिष्ठते ॥ ४८ ॥

ज्योतिःप्राप्ति पदार्थमाह । अब्रह्मत्वेति । तत अब्रह्मत्वभ्रमापायाद् भिनिष्पद्येति ल्यप् प्रयोगो मुखं व्यादाय स्वपितिवद्व्याख्येय इति सूचितम् ॥

एवं व्यवस्थिते योऽसावात्मानुभवगोचरः ।
स एव मृतिभीत्यादिरहितं ब्रह्म नेतरत् ॥ ४९ ॥

"एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मे"ति श्रुतेरर्थमाह एवमिति ॥ ४९ ॥

श्रवणं मननं ध्यानं विद्यायाः साधनंत्रयम् ।
अज्ञानं संशयो भ्रान्तिरित्येतेषां निवर्तकम् ॥ ५० ॥

"अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रेयेण व्याख्याताऽहंते कथयिष्यामी"त्येतद्व्याख्यातुमवतारयन्नब्रह्मत्वभ्रमनिवर्तकस्य साक्षात्कारस्याज्ञानादिनिवृत्तिद्वारा साधनत्रयमाह । श्रवणमित्यादि । निवर्त्यत्रयमाह अज्ञानमित्यादि ॥ ५० ॥

गुरूपदेशश्रवणादज्ञानं विनिवर्तते ।
उपपत्तिपरामर्शात्संशयानां निवर्तनम् ॥ ५१ ॥

श्रवणादीनांमध्ये येन यन्निवर्त्यते तेन तन्निवृत्तिमाह गुर्विति सार्धेन । ५१॥

निरन्तरध्यानतस्तु नश्यति भ्रान्तिवासना ।
राजन् ते श्रवणं जातं मननं कुरु यत्नतः ॥ ५२ ॥

भ्रान्तेः क्षणिकत्वाद्ध्यानं विना तन्निवृत्तिः स्यादित्याशङ्क्य पूर्वत्र भ्रान्तिपदेन तद्वासना ग्राह्येतिनिरस्यति निरन्तरेति । मुनिर्मननं कर्तव्यतयोपदिशति राजन्निति॥५२॥

प्रमाणे सम्प्रदाये वा तत्त्वे वा संशयो भवेत् ।
उदितेऽनुदिते वेति होमः शास्त्राद्विकल्पितः ॥ ५३ ॥

मनननिवर्त्यप्रमाणादित्रयविषयकसंशयत्रयसम्भवमाह । प्रमाण इति । प्रमाणसंशयं निवर्तयति उदित इति । उदिते जुहोति अनुदिते जुहोतीति शास्त्रात् यथाहोमो विकल्पित इति यथा पदाध्याहारेणोत्तरार्द्धयोजना ॥ ५३ ॥

न तथा ब्रह्मविद्येयं सर्वोपनिषदीरणात् ।
न प्रमाणे संशयोऽतः सम्प्रदायेऽपि नास्त्यसौ ॥ ५४ ॥

तथा उदितानुदितहोमवदियं ब्रह्मविद्या विकल्पेन साधनं नेत्यत्र हेतुमाह सर्वेति । सर्वोपनिषदि तस्या एव साधनत्वश्रवणादित्यर्थः । विकल्पाश्रवणात् प्रमाणे संशयं निरस्य सम्प्रदायेऽपि तं निवर्तयितुमुपक्रमते न प्रमाण इत्यादिना ॥ ५४ ॥

शाखाप्रवर्तको मैत्रो मह्यमाह न चापरः ।
सोऽपि किंचिदुपाख्यानमुदाहृत्य ममाब्रवीत् ॥ ५५ ॥

संशयस्य निवर्तिकां सम्प्रदायशुद्धिमाह । शाखेति । सम्प्रदायशुध्या संप्रदायसंशयो निवर्तत इति भावः । अपरोऽनशिष्ट इत्यर्थः । "अथापहतपाप्मान"

इत्यादि "प्रचोदयिताऽस्य को भगवन्नेतदस्माकं ब्रूही"त्यन्तं तावदुपाख्या व्याख्यातुमुपक्रमते सोऽपीति । ममेति कर्मणः शेषत्वविवक्षया षष्ठी ॥ ५५ ॥

तत्त्वस्य संशयोऽपैति तदाख्यानमिदं शृणु ।
मुनयो बालखिल्या ये ते प्रजापतिमब्रुवन् ॥ ५६ ॥

तत्त्वसंशयनिवर्तकमुदाहरणभूतमाख्यानं श्रोतव्यमिति पूर्वार्धेनोक्त मुनय इत्यादिना तदाख्यानमाह तत्त्वस्येति ॥ ५६ ॥

अचेतनं शरीरं तत्केन चेतनवत्कृतम् ।
प्रेरको वास्य को ब्रूहीत्युक्तः प्रत्यब्रवीदसौ ॥ ५७ ॥

अस्य शरीरस्य । असौ प्रजापतिः तान् होवाचे"त्युपक्रम्य पठितस्य "ह खलु वाचोपरिस्थ"इत्यादेः "प्रचोदयिता चैषोऽस्ये"त्यन्तस्य तात्पर्यमाह इत्युक्तः प्रत्यब्रवीदसावित्यादिना स्थितिरत्रोपचर्यत इत्यन्तेन ॥ ५७ ॥

वेदानामुत्तरे भागे श्रूयते परमेश्वरः ।
स करोत्युभयं तस्य तात्त्विकं रूपमुच्यते ॥ ५८ ॥

वेदानामुत्तरे भागे उपनिषदीत्यर्थः । उभयं स्थूलसूक्ष्मशरीरद्वयं स्वो भूतं तस्य परमेश्वरस्य तात्त्विकं परमार्थभूतम् ॥ ५८ ॥

अज्ञानमिश्रणाभावात् शुद्धः पापविवर्जनात् ।
पूतो रूपेण नाम्ना च हीनत्वाच्छून्यमुच्यते ॥ ५९ ॥
शान्तः क्रोधादिराहित्यादप्राणोऽचेष्टकत्वतः ।
ईशत्वोपाधिराहित्यादनीशात्मा स्वतो भवेत् ॥ ६० ॥

उत्तरभागे शुद्धः पूतः शून्यः शान्तोऽप्राणोऽनीशात्मे त्येवमीश्वर स्तत्र शुद्धादिपदार्थानाह अज्ञानेत्यादिना पद्यत्रिकेण ॥ ५९ ॥ ६० ॥

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ६१ ॥

तत्राऽखण्डबोधात्मकत्वेनानीशपदार्थमेवोपपादयति । कार्योपाधिरि दिना ॥ ६१ ॥

देशात्कालाद्वस्तुतस्तु परिच्छेदविवर्जनात् ।
अनन्तोऽपक्षयाभावादक्षयोऽचलनात्स्थिरः ॥ ६२ ॥
नित्यस्फूर्त्या शाश्वतोयमजो जन्मादिवर्जनात्।
स्वतंत्रो न पराधीनः स्वमहिम्न्येव तिष्ठति ॥ ६३ ॥

तत्राऽनन्तोक्षयः स्थिरः शाश्वतोऽजः, स्वतन्त्र इत्येवमीश्वरः श्रुतस्तत्रानन्तादिपदार्थमाह देशेत्यादिना पादोनपद्यद्विकेन ॥ ६२ ॥ ६३ ॥

महिमाश्चर्यरूपत्वादखण्डैकरसात्मता ।
आधारान्तरराहित्यात्स्थितिस्त्रोपचर्यते ॥ ६४ ॥

स्वमहिम्नि तिष्ठतीत्यत्रत्यस्वमहिमपदार्थं दर्शयँस्तत्र तत्स्थितेराधारत्वस्योपचारमाह महिमेति ॥ ६४ ॥

अनिच्छस्येदृशस्यैतद्देहनिर्वहणं कथम् ।
इति चेत्स्वांशरूपेण देहेऽवस्थाय निर्वहेत् ॥ ६५ ॥

"ते होचु"रित्युपक्रम्य पठितं "कथमनेनेदृशेनानिच्छेनें"त्यादिव्याचक्षाणः शङ्कतेऽनिच्छस्येति । ईदृशस्य वर्णितसाक्षिरूपस्य । एतद्देहनिर्वहणं तत्प्रेरकत्वं स्थूलसूक्ष्मदेहद्वयस्य स्वीयकार्यकारयितृत्वमिति यावत् । "तान् होवाचे"त्युपक्रम्य पठितं "स वा एष सूक्ष्म"इत्यादि "प्रतिपुरुषं क्षेत्रज्ञ"इत्यन्तं व्याचक्षाणः समाधत्ते स्वांशेति । मायया तत्र स्वांशं क्षेत्रज्ञं परिकल्प्य देहे ईश्वरस्य निर्वाहकृत्वमिति तात्पर्यम्॥६५॥

स एवोक्तो देहसाक्षी विद्वद्भिरनुभूयते ।
नेतरैः सूक्ष्मरूपोयमिन्द्रियाविषयत्वतः ॥ ६६ ॥

ननु देहनिर्वाहकक्षेत्रज्ञादन्यो देहसाक्षी नोक्तः श्रुत्यादिष्वित्याशङ्क्य नेत्याह । स इति उक्त इति । अस्य साक्षी चेताइत्यादिभिरितिशेषः । तत्र विद्वदनुभवमपि प्रमाणयति विद्वद्भिरिति । इतरानुभवाभावे सूक्ष्मत्वं तत्र चेन्द्रियाविषयत्वं हेतुमाह नेतरैरित्यादि ॥ ६६ ॥

पूर्णत्वात्पुरुषाख्येऽसौ देहे स्वांशेन वर्तते ।
बुद्धिपूर्वं यथा सुप्तः स्वेच्छया प्रतिबुध्यते ॥ ६७ ॥

तस्य स्वांशेन व्यापारं सदृष्टान्तमाह । पूर्णत्वादिति इदं श्रुत्या पुरुष शब्दस्य प्रवृत्तिनिमित्तकथनम् ॥ ६७ ॥

अध्यापकः प्रदोषेषु मध्यरात्रे प्रबुध्यते ।
स्वेच्छया परमात्मापि तथात्रांशेन वर्तताम् ॥ ६८ ॥

दृष्टान्तं विशदयति । अध्यापक, इति । प्रदोषेषु अत्र सुप्त इति सम्बन्धनीयम् । दार्ष्टान्तिकमाह स्वेच्छयेति ॥ ६८ ॥

प्रतिदेहं तु चिन्मात्रो घटाकाश इव स्थितः ।
देहं साक्षितया जानन् क्षेत्रज्ञ इति कथ्यते ॥ ६९ ॥

सर्वदेहेषु निरुपाधिचितो घटाकाशवत् स्थितिं ब्रुवन् श्रुत्युक्तक्षेत्रज्ञपदमाह । प्रतीति ॥ ६९ ॥

संकल्पाध्यवसायाभिमानैरेषोऽनुमीयताम् ।
सर्वैरक्षैरुपेतत्वात् संकल्पाद्यस्य सम्भवेत् ॥ ७० ॥

"संकल्पाध्यवसायाभिमानलिङ्गक" इति श्रौतपदं व्याचक्षाणो विद्वदनुभवातिरिक्तं साक्षिण्यनुमानमाह संकल्पेति, सङ्कल्पादयः सकर्तृकाः क्रियात्वात् छिदादिवदिति तत्प्रयोगः । साधनराहितत्वादस्य तत्कर्तृत्वं न स्यादित्याशङ्क्य "प्रजापति विश्वाध्यक्ष" इत्येतद्विवृण्वन् समाधत्ते । सर्वैरिति । अस्य आत्मनः ॥ ७० ॥

तेनावच्छिन्नचैतन्यरूपेणेदं वपुः सदा ।
चेतनीकृत्य कार्येषु प्रेर्यतेऽश्वैर्यथा रथः ॥ ७१ ॥

"तेनेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता चैषोऽस्य" इत्येतद्विवृण्वन् प्रक्रान्तं देहनिर्वाहकत्वं सप्रकारं सदृष्टान्तञ्चाह तेनेति ॥ ७१ ॥

अखण्डैकरसस्यांशो नेति चेच्छ्रूयतामिदम् ।
अखण्डैकरसात्मैव माययेश्वरतामगात् ॥ ७२ ॥

"ते होचुर्भगवन्नीदृशस्य कथमंशेन वर्तनमि" त्येतद्व्याचक्षाणः आह अखण्डैकेति । समाधिं श्रोतुं नियुञ्जानः समाधिं प्रतिजानीते श्रूयतामित्यादि ॥ ७२ ॥

मायाया अनृतत्वेन नाखण्डत्वं विरुध्यते।
मायायां स्वच्छरूपायामात्मायं प्रतिबिम्बति ॥ ७३ ॥

ननु माययेश्वरभावेऽखण्डत्वं न स्यादित्याशङ्क्य तस्या अनृतत्वेन नैवमिति। समाधत्ते मायाया इति। मायाप्रयोज्यामीश्वरतां स्पष्टयति। मायायामिति ॥७३॥

तदुपाधिक ईशोऽभूत्सृष्टेः प्रागेक एव सः।
अतो नारमतैकाकी राजामात्यादिको यथा ॥ ७४ ॥

देहादिसृष्टिमात्मबोधोपयोगिनीं वक्तुं प्रक्रममाण "स्तान्होवाचे"त्युपक्रम्य पठितं प्रजापतिर्वा एषोऽग्रे तिष्ठत् स नारमतैक इत्यस्य तात्पर्यमाह। तदित्यादिना। अत एकाकित्वात् ॥ ७४ ॥

द्यूतक्रीडामिवेशोऽसौ सृष्टिक्रीडामवैक्षत।
द्रव्यान्तरमुपादानमदृष्ट्वा स्वं व्यचारयत् ॥ ७५ ॥

अरतिनिवर्तिकां राजादिर्द्यूतक्रीडामिवेश्वरः क्रीडारूपां सृष्टिमैक्षतेक्षित्वा च स्वभिन्नोपादानद्रव्यदर्शनाभाव आत्मानमेवोपादानत्वेन विचारितवानित्याह द्यूतेति। अनेन स आत्मानमभिध्यायदिति श्रुतिभागो व्याख्यातः ॥ ७५ ॥

बहुस्यामहमेवात्र प्रजारूपीति चिन्तयन्।
देहानसृजत स्थूलान् पाषाणप्रतिमा इव ॥ ७६ ॥

"एकोहं बहु स्यां प्रजायेये"ति श्रुत्येकवाक्यत्वायाभिध्यायतपदोक्तविचारमभिनयन् स्थूलदेहसृष्टिमाह बह्वित्यादिपद्यद्विकेन। पाषाणप्रतिमा इवेत्यनेन प्राणेन्द्रियादिराहित्यं विवक्षितम्। उत्तरार्द्धेन "बह्वीः प्रजा असृजत्ता अस्यैवात्मप्रबुद्धा अप्राणा स्थाणुरिव तिष्ठमाना अपश्यत् स नारमते"त्येष श्रुतिभागो व्याख्यात इति बोध्यम्॥७६॥

स्वयमेव यथा स्वप्ने गिरिनद्यादिरूपतः।
कल्पितो भात्यसावात्मा भात्वेवं बहुरूपतः ॥ ७७ ॥

स्वप्ने जीवो यथा स्वयं गिरिनद्यादिरूपेण कल्पितो भात्येवमीश्वरो बहुरूपेण भातीत्याह स्वयमिति ॥ ७७ ॥

ज्ञानक्रियाशक्तिहीना देहाः क्रीडार्थमक्षमाः ।
इत्यालोच्य क्रियाशक्तिः प्राणो भूत्वान्तराविशत् ॥७८॥

"इदानीं सोऽमन्यतैतासां प्रतिबोधनाये"त्यादिषु आसप्तमकण्डिकासमाप्ति पद्यद्विकेन व्याख्यास्यन्नालोचनपूर्वं देहेषु प्राणात्मनाप्रवेशमाह ज्ञानेति ॥ ७८ ॥

श्वासाधोगत्यन्नसाम्योद्गारादिव्याप्तिसिद्धये ।
पञ्चधा व्यभजत्प्राणं प्राणोपाधिक ईश्वरः ॥ ७९ ॥

श्वासादिनियतफलकर्मीश्वरकर्तृकं पञ्चधा प्राणस्य विभागमाह। श्वासेति ॥ ७९ ॥

उपांश्वन्तर्यामिसंज्ञौ ग्रहौ द्वौ सोमयाजिनः ।
नियतौ तद्वदुच्छ्वासनिश्वासौ प्राणिनामपि ॥ ८० ॥

"अथोपांशुरन्तर्याम्यभिभनती"त्यादिं स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोतीत्यन्तामष्टमी कण्डिकां पद्यपञ्चकेन विवृण्वन् ग्रहवदुच्छ्वासनिश्वासयोर्नियममाह । उपांश्विति ॥ ८० ॥

लोहकारः स्वहस्ताभ्यां पर्यायेण दृतिद्वयात् ।
वह्निं ज्वालयते यद्वज्जठरो ज्वाल्यतेऽनलः ॥ ८१ ॥

जाठरानलज्वलनं तयोः प्रयोजनं सदृष्टान्तमाह । लोहेति ॥ ८१ ॥

निश्वासोच्छ्वाससंदीप्तो भुक्तं पाचयतेऽनलः ।
ईशस्य जाठराग्नित्वाकारो भगवतोरितः ॥ ८२ ॥

ताभ्यां ज्वलितस्य तस्यान्नपाचनं व्यापारमाह । निश्वासेति ॥ ८२ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ ८३ ॥

स्वस्य जाठराग्नित्वाकारबोधकं भगवद्वाक्यमाह । अहमिति ॥ ८३ ॥

कर्णौ पिधाय यं घोषं शृणोत्यन्तः स जाठरात् ।
वह्नेर्जातो मुमूर्षुस्तु नैनं घोषं शृणोति हि ॥ ८४ ॥

कर्णपिधाने श्रूयमाणान्तःशब्दस्य जाठराग्निजन्यत्वं मुमूर्षोरश्रवणंचाह । कर्णाविति ॥ ८४ ॥

औष्ण्योपेतं पञ्चविधप्राणलिङ्गाभिधं वपुः ।
प्राणोपाधिकचिद्रूपो ज्ञानशक्त्यापि युज्यते ॥ ८५ ॥

"स वा एष पञ्चधात्मानं प्रविभज्ये"त्यादिकां नवमीं कण्डिकां पद्यसप्तकेन व्याख्यास्यन् पञ्चविधप्राणलिङ्गनाम्नः शरीरस्य जाठराग्निसम्बन्धादौष्ण्यं कथयँस्तदुपाधिकस्य ज्ञानशक्तियोगमाह औष्ण्योपेतमिति ॥ ८५ ॥

ततो मनोमयो भूत्वा सत्यसंकल्पतां व्रजेत् ।
यत्संकल्पयाते जीवस्तत्करोत्येव सर्वथा ॥ ८६ ॥

ततो ज्ञानशक्तियोगात् ॥ ८६ ॥

हृदि स्थितः सन् शब्दादीन् भुंजेऽहं विषयानिति ।
सङ्कल्प्याक्षाणि सृष्ट्वा तैर्भुंक्तेऽक्षैर्विषयान् सदा ॥ ८७ ॥

सङ्कल्पमभिनयति हृदीति पूर्वार्द्धेन ॥ ८७ ॥

देहो रथः पञ्चहयास्तस्य कर्मेन्द्रियाणि हि ।
ज्ञानेन्द्रियाणि यानि स्युस्तानि बन्धनरज्जवः ॥ ८८ ॥
मनोऽत्र सारथिः सर्वैरवच्छिन्नेशतां व्रजन् ।
चिदात्मा चेतनं देहं कृत्वा प्रेरयते सदा ॥ ८९ ॥

सर्वैरुक्तैरवच्छिन्नेशतां नतु निरवच्छिन्नेशतां व्रजन् चिदात्मेत्यादि योजना ॥ ८८ ॥ ८९ ॥

तस्याऽपाये मृतो देहो चेतनो न प्रवर्तते ।
चिदंशस्य प्रेरकत्वं ब्रवीति भगवान् स्फुटम् ॥ ९० ॥

तस्येति । तस्य सोपहितस्येशत्वेनोक्तस्य जीवस्य अध्यस्तोपाध्यपाये दूरगमने चिदंशस्य प्रेरकत्वमुपपाद्य तत्र भगवत्संमतिमाह चिदिति ॥ ९० ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ९१ ॥

भगवद्वाक्यमाह ममैवेति ॥ ९१ ॥

अवच्छिन्नचिदात्मासौ स्वतो नेच्छति किञ्चन ।
न भुङ्क्ते सुखदुःखे च तस्मिन्नारोप्यतेऽखिलम् ॥ ९२ ॥

"स वा एष आत्मेत्यद"इत्यादिकां नवमीं "स वा एष" इत्यादिदशमीं च कण्डिकां विवृण्वन् सोपहितस्य तत्प्रेरकत्वेऽपि स्वतोऽसङ्गत्वमाह अवच्छिन्नेत्यादिना पद्याष्टकेन ॥ ९२ ॥

सर्वेष्वपि शरीरेषु भाति तद्धर्मवानिव ।
न तिष्ठति स्वतस्तेषु नापि तद्धर्मसंयुतः ॥ ९३ ॥
ज्ञानेन्द्रियैर्न दृश्योऽयं ग्राह्यः कर्मेन्द्रियैर्न च ।
स्वरूपसौक्ष्म्यादव्यक्तो वेदान्तैरेव बुध्यते ॥ ९४ ॥
निर्ममत्वात्सर्वगोपि शरीरेषु च तिष्ठति ।
अकर्ताऽप्यनभिज्ञैस्तु कर्तेवासौ विभाव्यते ॥ ९५ ॥

स्वतः शुद्धचिदंशात्मना । तद्धर्मेति । देहधर्मेत्यर्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥

वेदानामुत्तरे भागे इत्यादिग्रन्थवर्णितम् ।
आत्मनो वास्तवं रूपं कर्तृत्वं नास्य विद्यते ॥ ९६ ॥
स सर्वोपनिषत्सिद्ध एष हृद्युपलभ्यते ।
शुद्धः स्थिरोऽचलो नास्य कर्मलेपोऽस्ति कश्चन ॥ ९७ ॥

वेदानामुत्तरे भागे श्रूयते परमेश्वर इत्यादिग्रन्थेन वर्णितमात्मनो वास्तवं रूपमुपसंहरन्नाह । कर्तृत्वमित्यादिना ॥ ९६ ॥ ९७ ॥

अव्यग्रो निस्पृहस्तूष्णीमुदासीन इव स्थितः ।
स्वस्थो विक्षेपराहित्यादित्यात्मानं प्रपश्यत ॥ ९८ ॥

अव्यग्रोऽचलः ॥ ९८ ॥

ईशतोऽप्यज्ञदृष्ट्यासौ सत्त्वादिगुणधारिणा ।
मायापटेन संछन्नो भुञ्जान इव लक्ष्यते ॥ ९९ ॥

चित्रपटसादृश्यं मायायां विवक्षितम् अतएव सत्त्वादिगुणधारिणेति विशेषणमुपात्तम् ॥ ९९ ॥

इत्थं बोधितवानेष बालखिल्यान् प्रजापतिः ।
तत्त्वं बुद्ध्वाऽथ पप्रच्छुः कः संसारीति ते गुरुम् ॥ १०० ॥

तं होचुर्भगवन्नित्यादिं कतम एष इत्यन्तां तृतीयप्रपाठकीयप्रथमकण्डिकां व्याचष्टे । इत्थमिति । कः संसारीति पप्रच्छुरिति योजना ॥ १०० ॥

श्रूयतां परमात्मोक्तस्तस्मादन्योऽस्ति कश्चन ।
भूतात्माख्यो निकृष्टो यं पुण्यपापफलैर्युतः ॥ १ ॥

तान् होवाचेत्युपक्रम्य पठितां तृतीयप्रपाठकगतां द्वितीयां तृतीयां चतुर्थीं पञ्चमीं च कण्डिकां त्रयोविंशत्या पद्यैर्विवृण्वन् परमात्मोक्त स्तस्मात् परमात्मनो भिन्नः पुण्यपापफलयुक्तत्वात्ततोनिकृष्टो भूतात्मपदबोध्यः श्रूयतां युष्माभिरिति प्रजापतेस्तेषां सावधानत्वाय तच्छ्रवणनियोग इत्याह श्रूयतामिति ॥ १ ॥

विप्रक्षत्रादिसद्योनिं श्ववराहादिकामपि ।
असद्योनिमवाप्नोति भूलोके जन्म चेत्तदा ॥ २ ॥
अन्यत्र जन्म चेत्तर्हि पुण्येन स्वर्गमश्नुते ।
पापेन नरकं द्वन्द्वैरभिभूतः परिभ्रमेत् ॥ ३ ॥

पुण्यपापकर्मफलमाह । विप्रेत्यादिना ॥ २ ३ ॥

मानावमानौ शीतोष्णे द्वन्द्वानीत्यादिकानि हि ।
यो भूतात्मोदितः सोऽथ विस्पष्टमभिधीयते ॥ ४ ॥

द्वन्द्वान्याह । मानेति पूर्वार्द्धेन । उत्तरार्धेन भूतात्मनः स्पष्टाभिधानं प्रतिजानीते ॥ ४ ॥

अपञ्चीकृतभूतैर्यज्जातं सूक्ष्मं वपुर्हि तत् ।
भूतैः पञ्चीकृतैर्जातं यत्तत्स्थूलमिदं वपुः ॥ ५ ॥

भूतोत्थलिङ्गशरीरान्तर्गतबुद्धौ प्रतिबिम्बितचैतन्यस्य भूतात्मत्वं वक्तुं सोपादानशरीरद्वयमाह । अपञ्चीति ॥ ५ ॥

ज्ञानाक्षाणां क्रियाक्षाणां वायूनां पञ्चकत्रयम् ।
मनोऽहङ्कार इत्येवं लिङ्गं सप्तदशात्मकम् ॥ ६ ॥

सप्तदशात्मकलिङ्गशरीरमाह ज्ञानेति । अहङ्कारो बुद्धिः ॥ ६ ॥

अहङ्कारे भौतिके यच्चैतन्यं प्रतिबिम्बितम् ।
स भूतात्माऽत्र चिद्बिम्बं निर्लेपं ब्रह्म कथ्यते ॥ ७ ॥

अत्र भूतात्मनि स्थितमिति शेषः ॥ ७ ॥

भूतात्मा प्रकृतेर्जातैर्गुणैरेषोऽभिभूयते ।
तमो गुणाभिभूतत्वात्स्वात्मस्थं ब्रह्म नेक्षते ॥ ८ ॥

गुणाभिभूतत्वात् भूतात्मा ब्रह्म न पश्यतीत्याह भूतेति ॥ ८ ॥

अधिष्ठानतया ब्रह्म भूतात्मन्यपि तिष्ठति ।
पद्मपत्रे नीरबिन्दुरसंश्लिष्टो यथा तथा ॥ ९ ॥

पूर्वसिद्धस्य ब्रह्मणोऽर्वाचीने भूतात्मनि स्थितिरसंभविनीत्याशङ्क्याधि-
नतारूपां तां संभावयन् निर्लेपत्वे दृष्टान्तमाह । अधीत्यादिना ॥ ९ ॥

इद्दशोपीश्वरो मायायुक्तः सन् प्रेरयत्यमुम् ।
भूतात्मानं स भूतात्मा विविनक्तीश्वरं न तम् ॥१०॥

ईशस्य मायया जीवप्रेरकत्वं ब्रुवन् जीवस्य तद्विवेकाभावमाह । इद्दश इति॥१०॥

सुखैर्वैषयिकैः सत्वगुणोद्भूतैः प्रतृप्यति ।
उद्रेके रजसः सोऽयं कलुषीक्रियते भृशम् ॥ ११ ॥

विवेकाभावप्रयोजकमाह । सुखैरिति ॥ ११ ॥

तदानीमतिचाञ्चल्याल्लुप्यते ह्यखिलात्फलात् ।
कृषिं प्रक्रम्य तां त्यक्त्वा तपः कुर्वंस्त्यजेदद: ॥ १२ ॥
तत्तत्फले सस्पृहत्वाद्यग्रो नाप्नोत्यसौ सुखम् ।
अहङ्कारेण बद्धः स्याज्जालेन विहगो यथा ॥ १३ ॥

तदानीं रजसः समुद्रेकसमये । फललोपमाह कृषिमित्यादिना । अदत्तपः ॥ १२ ॥ १३ ॥

संसारभ्रमणं तस्य प्रोक्तं शाखान्तरेष्वपि ।
करणप्रेरकः कर्ता भूतात्मा संसरत्ययम् ॥ १४ ॥

शाखान्तरेष्वपीति । मैत्रेयीशाखाभिन्नशाखास्वपीत्यर्थः । तस्य भूतात्मनः । तत्प्रोक्तं तदर्थतो दर्शयति । करणप्रेरक इति ॥ १४ ॥

चैतन्येन हि पूर्णेन सोन्तर्व्याप्तस्ततश्चिति ।
भ्रान्त्यारोपेण संसारस्तत्रासौ नतु वास्तवः १५ ॥

ब्रह्मणि वास्तवं संसारं निवारयति चैतन्येनेति । ततः जीवात्मनः पूर्णचैतन्यव्याप्तत्वात् । चिति ब्रह्मणि । तत्र चिति । असौ संसारः ॥ १५ ॥

दृष्टान्तोऽत्राग्निना व्याप्तो लोहपिण्डोऽभिधीयते ।
तप्तलोहं मुद्गरेण हतं बहुविधं भवेत् ॥ १६ ॥

उक्तमर्थं साधयति दृष्टान्त इत्यादिनाऽष्टभिः । अभिधेयत्वेन प्रतिज्ञातं दृष्टान्तमाह । तप्तेति । बहुविधं दात्रादिरूपेणानेकप्रकारम् ॥ १६ ॥

अहङ्कारे चिदाभासो भूतात्मा साक्षिभासितः ।
हन्यमानो गुणैः सत्त्वादिभिर्बहुविधो भवेत् ॥ १७ ॥

दार्ष्टान्तिकमाह । अहङ्कार इति । बुद्धौ चिदाभासः चित्प्रतिबिम्ब इत्यर्थः । बहुविधो देवतिर्यगादिरूपेणेति शेषः ॥ १७ ॥

यज्जन्मयोनिलक्षाणां भवेच्चतुरशीतिषु ।
सोयंबहुविधो भावो लोहे दात्रकुठारवत् ॥ १८ ॥

एतदेव विशदयति यदिति ॥ १८ ॥

कुलालेन यथा चक्रं तथा मायाविना गुणाः ।
सत्त्वादयः प्रेरितास्युस्तैश्च जन्मान्यनेकधा ॥ १९ ॥

लोहे मुद्गरघातेन नाग्नेर्बाधस्तथा गुणैः ।
भूतात्मोपद्रवेणास्य साक्षिणो नास्त्युपद्रवः ॥ २० ॥

जीवे संसारो न ब्रह्मणीति प्रकारान्तरेणोपदिशति प्रजापतिरित्याह । लालेनेति ॥ १९ ॥ २० ॥

एकैकदेहो नरको भवेद्भूतात्मनो महान् ।
मैथुनोद्भूत्यादिदोषाः प्रसिद्धा एव देहिनाम् ॥ २१ ॥

गुणजन्यं जीवस्योपद्रवमाह । एकैकेति । एकैकः स्थूलदेहो महान्नरक इत्युक्त्वोपद्रवान्तराण्याह । मैथुन इत्यादिना ॥ २१ ॥

देहे दोषा यथा चित्ते दोषास्तद्वदनेकशः ।
संमोहाद्यास्तामसास्स्युस्तृष्णाद्या राजसा मता ॥ २२ ॥

देहे स्थूलदेहे । चित्तदोषानाह सम्मोहाद्या इत्यादि ॥ २२ ॥

भूतात्मा तैः प्रेरितः संस्तैस्तैस्तामसराजसैः ।
कर्मभिर्बहुधा देहानवाप्नोति पुनः पुनः ॥ २३ ॥

स्थूलसूक्ष्मदेहगतद्दोषवत्त्वेन जीवस्य तद्वत्त्वमभिधाय चित्तगतदोषप्रयोज्यानेकदेहसम्बधित्वमाह । भूतात्मेति ॥ २३ ॥

श्रुत्वा संसारिणं वालखिल्या विस्मयमाययुः ।
संसारस्य प्रतीकारं पप्रच्छुर्मुनयः पुनः ॥ २४ ॥

"ते ह खल्वथोर्ध्वरेतसोऽतिविस्मिता" इत्यादि "येनेदं हित्वात्मन्येव सायुज्यमुपैतीत्यन्तां चतुर्थप्रपाठस्थां प्रथमां कण्डिकां पादोनपद्यद्वयेन व्याचष्टे । स्तावत् पृष्टं संसारिरूपं प्रजापतेः श्रुत्वा विस्मितवन्तो बालखिल्यास्तं प्रति संसारनाशहेतुं प्रपच्छुरित्याह । श्रुत्वेति ॥ २४ ॥

शाम्येद्भूतात्मता येन चिदात्मत्वं तु शिष्यते ।
तमुपायं गुरो ब्रूहीत्युक्तः सन् गुरुरुक्तवान् ॥ २५ ॥

प्रश्नमभिनयति शाम्येदिति "तान् होवाचे" त्यस्य व्याख्यानमित्युक्तः सन् गुरुरुक्तवानिति ॥ २५ ॥

नद्यूर्म्यादिकदृष्टान्तैः संसारस्याप्यनिष्टताम् ।
मिथ्यात्वं च विनिश्चित्य ब्रजेज्ज्ञानाधिकारिताम् ॥२६॥

इदानीं "महानदीषूर्मय इवे" त्यादिं तदीयां द्वितीयाम् "अयं वाव ख-ल्वस्य प्रतिविधिर्भूतात्मन" इत्यादिं तृतीयां च कण्डिकां विवृण्वन् गुरुवचनमाह । नद्यूर्म्येति । जीवनिरासहेतुर्विद्या तदधिकारिताप्राप्तिहेतुः संसारस्यैष्टत्वरहितत्वमि-थ्यात्वयोर्निश्चय इत्यर्थः ॥ २६ ॥

या वेदेनोदिता विद्या सा भूतात्मप्रतिक्रिया ।
तपो योगः स्तुतिर्बोधश्चोक्तं वेदे चतुष्टयम् ॥ २७ ॥

प्रतिक्रिया नाशहेतुरुक्तविद्यायाश्चातुर्विध्यमाह । तप इति ॥ २७ ॥

स्वाश्रमोचितधर्मो यः स एवास्य तपो भवेत् ।
शान्ताः स्युर्मोहतृष्णाद्यास्तेन तामसराजसाः ॥ २८ ॥

तपो नियच्छँस्तत्फलमाह । स्वाश्रेति ॥ २८ ॥

तच्छान्तौ सत्त्ववृद्धिः स्यात्सत्त्वेनैकाग्रता धियः ।
तयात्मतत्त्वानुभवस्ततो मुक्तो न संसरेत् ॥ २९ ॥

इदानीं योगसुबोधावाह । तदिति । मोहादिशान्तौ सत्त्ववृद्धिः तया बु-द्धेरेकाग्रता तयाऽऽत्मबोधः तेन मुक्तिः ततः संसाराभाव इत्यर्थः ॥ २९ ॥

निरिन्धनाग्निवच्चित्तं शाम्येद्योगेन कारणे ।
संस्कारमात्रशेषत्वान्न धीः संसर्तुमर्हति ॥ ३० ॥

यथा निरिन्धनो वह्निरित्यादीनेकादशमन्त्रान् पद्यत्रिकेण व्याचक्षाणः सा-क्षाद्योगफलं दर्शयति । निरिति । कारणेऽज्ञाने ॥ ३० ॥

तदानीं जीवचैतन्यं ब्रह्मण्येकीभवेद्यथा ।
जले जलं वह्निरग्नौ व्योम्नि व्योम स्थितं यथा ॥ ३१ ॥

समाधिसमये जीवस्य ब्रह्मण्येकीभावं सदृष्टान्तमाहतदानीमिति । व्योम्नि महाकाशे । व्योम घटाकाशादिकम् ॥ ३१ ॥

अद्वैतमनुभूयास्मिन्समाधौ व्युत्थितः पुनः ।
स्तुवन् सर्वात्मतां तस्य ब्रह्मणोऽनुस्मरेत्सदा ॥ ३२ ॥

समाधौ अद्वैतमनुभूय व्युत्थितस्य सर्वात्मतास्तवनपूर्वकं ब्रह्मणोनुसन्धानं सम्पाद्यमित्याह । अद्वैतमिति ॥ ३२ ॥

कुत्सो मुनिर्यथाऽस्तौषीत्त्वं ब्रह्मेत्यादिना तथा ।
स्तुवन्नपनुदेद्द्वैतवासनां चिरमाश्रिताम् ॥ ३३ ॥
योगादद्वैतविज्ञाने वासनायाश्च संक्षये ।
संत्यज्य जीवताभ्रान्तिं परमात्मत्वमाप्नुयात् ॥ ३४ ॥

अथ यथेयं कौत्सायनीस्तुतिरित्युपक्रम्य पठितान् त्वं ब्रह्मा त्वं च वै विष्णुरित्यादींश्चतुरो मन्त्रान् पद्यद्विकेन व्याचक्षाणः तत्फलं चिरसञ्चितद्वैतवासनानाश इत्याह । कुत्स इति ॥ ३३ ॥ ३४ ॥

सा भ्रान्तिस्तमसा जन्या तमस्त्वाश्रितमात्मनि ।
परमात्मत्वमावृत्य कल्पयंज्जीवताभ्रमम् ॥ ३५ ॥

तमो वा इदमेकमासेत्यादि व्याख्यातुमवतारयन् तमोजन्यो जीवताभ्रम इति सप्रकारमाह । सेति ॥ ३५ ॥

यदावरकमज्ञानमात्माऽस्मिन् प्रतिबिम्बति ।
ईश्वरः प्रतिबिम्बोसौ सृष्ट्यादीनां प्रवर्तकः ॥ ३६ ॥

परमात्मत्वमावृत्त्येत्युक्तं तत्प्रसङ्गात् तदावरके ऽज्ञाने परमात्मप्रतिबिम्बस्येश्वरस्य सृष्ट्यादिप्रवर्तकत्वमाह । यदिति ॥ ३६ ॥

यदज्ञानं विक्रियते भवत्येष तमोगुणः ।
दृश्यमानं जगदिदं तम एवाभवत्पुरा ॥ ३७ ॥

अज्ञानस्य विकारभूतं तमोगुणादित्रयमित्याह । यदज्ञानमिति ॥ ३७ ॥

ईशेन प्रेरितन्तत्स्याद्रजो जलतरङ्गवत् ।
रजोपि प्रेरितं तद्वत्सत्त्वमेवं गुणत्रयम् ॥ ३८ ॥

रजोगुणसत्त्वगुणोत्पत्तिं सदृष्टान्तमाह । ईशेनेति । उक्तत्रयोत्पत्तिं निगमयति एवमिति । गुणत्रयमिति । अस्य भवतीति शेषः ॥ ३८ ॥

समष्टिरूपोहङ्कारः सत्त्वात्सारः समुद्धृतः ।
चिद्बिम्बप्रतिबिम्बाभ्यां युक्तोऽसौ चेतनो भवेत् ॥ ३९ ॥
प्रतिदेहं व्यष्टिरूपक्षेत्रज्ञत्वेन तिष्ठति ।
सङ्कल्पोऽध्यवसायश्च देहे तत्सत्त्वसाधकः ॥ ४० ॥
हिरण्यगर्भो वेदेषु समष्टिव्यष्टिरूपधृक् ।
श्रूयते यः स सूत्रात्मा प्रजापतिरिहोदितः ॥ ४१ ॥

इदानीं सोंऽशोयं यश्चेतनमात्रःप्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिरित्येतद्विवृणोति समष्टीत्यादिना पद्यत्रिकेण ॥ ३९ ॥ ४० ॥ ४१ ॥

तस्य श्रेष्ठास्त्रयो देहाः सृष्ट्यन्तस्थितिहेतवः ।
ब्रह्मा रुद्रो विष्णुरिति गुणत्रयसमुद्गताः ॥ ४२ ॥

"तस्य प्रोक्ता अग्र्यास्तनव"इत्यादि व्याचक्षाणो ब्रह्मादीनां तद्देहत्वमाह तस्येति ॥ ४२ ॥

यो यः सृजति लोकेस्मिन् ब्रह्मा तत्राभिमन्यते ।
नाशाभिमानी रुद्रोऽयं विष्णुः स्थित्यभिमानवान् ॥४३॥

गुणत्रयसमुद्गता इत्युक्तम्प्रपञ्चयति । यो य इति । तत्र सर्गे ॥ ४३ ॥

प्रजापतिस्त्रिधा भूत्वा भूयोऽपि बहुधाऽभवत् ।
वसुरुद्रादित्यभेदैर्गिरिनद्यादिभेदतः ॥ ४४ ॥

"स वा एष एकस्त्रिधा भूतो ऽष्टधे"ति विवृण्वंस्तस्यबहुधा भवनमाह । प्रजापतिरिति ॥ ४४ ॥

आत्मन्यध्यारोप एवं प्रोक्तो मायाविनिर्मितः ।
आत्माधिष्ठानरूपेण प्रविष्टः सर्ववस्तुषु ॥ ४५ ॥

अध्यारोपापवादाभ्या"निष् प्रपञ्चं प्रपञ्च्यते"इति न्यायेन प्रजापतिना आरोप उक्तः इत्याह आत्मनीति पूर्वार्धेन । "भूतेषुचरति प्रतिष्ठ"त्येतद् विवृण्वन्नुत्तरार्धेन सर्ववस्तुषु अधिष्ठानरूपेण प्रविष्टस्य चिदात्मनो ऽवशेषः प्रोक्तः इत्याह आत्मेति ॥ ४५ ॥

इत्थं विवेचितश्चात्मा भात्याधिक्येन पालकः ।
नाधिष्ठानं विना किञ्चिदारोप्यं बाध्यते क्वचित् ॥ ४६ ॥
आरोपितस्य सर्वस्याधिष्ठानं तत्त्वमीक्षते ।
तस्मादन्तर्बहिश्चात्मा स्थितः सर्वेषु वस्तुषु ॥ ४७ ॥

सर्वभूतानामधिपतिर्वभूवेत्यसावात्माऽन्तर्बहिश्चेत्येतद्विवृणोति इत्थमिति । आधिक्येन पालक इति । अधिष्ठाय पालक इत्यर्थः नतु चिदात्मनोऽपि बाधः स्यादित्याशङ्कां निरस्यति नाधिष्ठानमित्यादिना सार्धेन पद्येन ॥ ४६ ॥ ४७ ॥

प्रजापतिर्वालखिल्यान्मुनीनेवमबूबुधत् ।
शाकायन्यः कथामेतां राज्ञे प्रोवाच धीमते ॥ ४८ ॥

आख्यानं निगमयति प्रजापतिरिति ॥ ४८ ॥

वैराग्यं परमात्माऽत्र जीवात्मा साधनानि च ।
तपो योगः स्तुतिर्बोध इति सर्वं व्यवस्थितम् ॥ ४९ ॥
शाकायन्याय भगवान्मैत्रोऽखिलमुवाच ह ।
तत्सर्वं मेऽनुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १५० ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे मैत्रायणीयशाखाविवरणं नाम दशमोऽध्यायः ॥ १० ॥

अस्या उपनिषदो व्यवस्थितं विषयं प्रपञ्चयन् विद्यातीर्थमहेश्वरानुग्रहं प्रार्थयते वैराग्यमित्यादिना द्विकेन ॥ ४९ ॥ १५० ॥

इति श्रीकाशीनाथकृतायां मितप्रकाशविवृतौ मैत्रायणीयशाखाप्रकाशविवरणं नाम दशमोऽध्यायः ॥ १० ॥



## अथैकादशोऽध्यायः ।

याजुष्यां कठशाखायां विद्यां यां नचिकेतसे ।
यमः प्रोवाच तां सर्वां संग्रहेण ब्रवीम्यहम् ॥ १ ॥

"उशन् हवै वाजश्रवस" इत्यादिकां यजुर्वेदीयां कठशाखोपनिषदं व्याख्यातुं प्रक्रमते याजुष्यामित्यादिना ॥ १ ॥

नचिकेताः कुमारः सन् स्वपित्रा प्रेषितो यमम् ।
गत्वा तं तोषयित्वात्मज्ञानं वरमयाचत ॥ २ ॥

"सहोवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं तृतीयं होवाच मृत्यवे त्वा ददामी"त्यादि "तृतीयं वरं नचिकेतो वृणीष्वे"त्यन्तं व्याचष्टे नचिकेता इत्यादिना । तं यमम् ॥ २ ॥

प्रेते मनुष्ये संदेहो भूयान्मतविभेदतः ।
पारलौकिक आत्मास्ति नास्ति वा निर्णयं वद ॥ ३ ॥

"येयं प्रेते विचिकित्सा मनुष्ये ऽस्तीत्येकेनायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेषवरस्तृतीय" इति श्रुतिं व्याचष्टे प्रेत इति ॥ ३ ॥

चार्वाका देहमेवाहुः कर्मिणः स्वर्गगामिनम् ।
मुमुक्षवो मुच्यमानमित्युक्तो गुरुराह तम् ॥ ४ ॥

मतभेदः संशयहेतुरित्युक्तमेव विशदयति चार्वाका इति । तं नचिकेतसम् ॥ ४ ॥

दुर्विज्ञेयमणुत्वात्तद्देवैश्च विचिकित्सितम् ।
त्यक्त्वैतत्पुत्रवित्तादीन् वृणीष्वेत्युक्त आह तम् ॥ ५ ॥

"देवैरत्रापि विचिकित्सितं पुरा नहि सुविज्ञेयमणुरेषधर्म" इत्यादि "नहीं दृशा लम्भनीया मनुष्यै"रित्यन्तं नचिकेतसं प्रति यमवाक्यं व्याचष्टे दुर्विज्ञेयमिति । इत्युक्तो नचिकेता इति शेषः । तं यमम् ॥ ५ ॥

पुत्राद्या नश्वराः क्लेशहेतवश्चाथ दुर्गमम् ।
तत्त्वं वक्तुं त्वादृशोऽन्यो नेत्यात्मैव त्वयोच्यताम् ॥ ६ ॥

"श्वोभावा मर्त्यस्ये"त्यादि "नान्यं तस्मान्नचिकेता वृणीते" इत्येतदन्तं नचिकेतोवाक्यं विवृणोति पुत्राद्या इति ॥ ६ ॥

शृणु प्रियं हितं चेति पुरुषैरर्थ्यते द्वयम् ।
प्रियाः पुत्रादयस्त्वात्मा हितो दुःखविवर्जितः ॥ ७ ॥
अविवेकाविवेकौ द्वौ मार्गौ तत्राविवेकिनः ।
प्रियार्थिनस्त्वं तु नैवं मत्तो ज्ञानं हितं भज ॥ ८ ॥

परीक्ष्य शिष्यं तस्य विद्यायोग्यतां चावगम्य विद्यादेयेत्येतत् परम् "अन्यच्छ्रेयोऽन्यदुतैव प्रेय" इत्यादि "न त्वा कामावहवो लोलुपन्ते" त्यन्तं यमवाक्यं व्याचष्टे शृण्वित्यादिना पद्यद्विकेन ॥ ७ ॥ ८ ॥

मूढातिमूढौ न समौ त्वयाऽत्यन्तविवेकिना ।
मूढस्त्वीषद्विवेकी सन् स्वर्गमिच्छति नैहिकम् ॥ ९ ॥

अविवेकिनां मूढत्वातिमूढत्वाभ्यां द्वैविध्यं तद्वत्तु नचिकेतसः साम्याभावं दर्शयन् कर्मितदुपदेष्ट्रोर्मूढत्वमाह मूढेत्यादिना तद्गुरुश्चेत्यन्तेन ॥ ९ ॥

तद्गुरुश्च तथैतौ द्वावन्धनीतान्धवत्स्थितौ ।
आत्मतत्त्वानभिज्ञत्वादविद्याभ्यन्तरे स्थितौ ॥ १० ॥

तदुभयपरा "मविद्याया मन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः। दन्द्रम्यमाणा परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः" इति श्रुतिं व्याचष्टे तथैतौ द्वावित्यादिना ॥ १० ॥

अतिमूढो धनार्थी सन् ब्रह्महत्यादिकान्यपि ।
करोति परलोकस्तु न तस्य प्रतिभासते ॥ ११ ॥

"न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे" इति श्रुतिमतिमूढपरत्वेन व्याचष्टे अतिमूढ इति ॥ ११ ॥

चार्वाकैः कर्मिभिश्चात्मा श्रवणायापि दुर्लभः ।
मुमुक्षवोपि बहवः शृण्वन्तोपि न जानते ॥ १२ ॥

"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः । आश्चर्यो वक्ता कुशलोऽस्यलब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्ट" इत्येतद्व्याचष्टे चार्वाकैरित्यादिपद्यपञ्चकेन ॥ १२ ॥

हविर्भुजां हि देवानामप्रियं मर्त्यवेदनम् ।
मर्त्यास्तत्त्वं न जानन्ति विघ्नैर्देवकृतैर्हताः ॥ १३ ॥

उक्तमर्थमुपपादयति हविर्भुजामित्यादिना ॥ १३ ॥

आचार्यशिष्ययोर्दोषान्देवा उत्पादयन्ति हि ।
वाग्दोषाद्बुद्धिदोषाद्वा वक्तुं शक्नोति नो गुरुः ॥ १४ ॥

आचार्यदोषान् सकलानाह । वाग्दोषादित्यादि ॥ १४ ॥

अविश्वासात्कुतर्काद्वा शिष्यो बोद्धुं न शक्नुयात् ।
ईश्वरानुग्रहाद्देवा विहन्तुं शक्नुवन्ति नो ॥ १५ ॥

शिष्यदोषान्सकलानाह । अविश्वासादित्यादिना । देवविघ्ननिवर्तक ईश्वरानुग्रह इत्याह ईश्वरेति ॥ १५ ॥

सहनावित्यादिशान्तिजपनेशप्रसादतः ।
निर्विघ्नौ गुरुशिष्यौ स्तस्तादृशौ दुर्लभौ खलु ॥ १६ ॥

ईश्वरानुग्रहे "सहना" वित्यादिशान्तिजपो हेतुरित्याह । सहेति । तादृशौ निर्विघ्नौ ॥ १६ ॥

शब्दार्थज्ञः स्वात्मतत्त्वानुभवी च गुरुर्द्विधा ।
आद्यो नरो न तु ब्रह्म नरत्वभ्रान्त्यनाशनात् ॥ १७ ॥

"न नेरणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमनुप्रमाणा" दिति मन्त्रं व्याख्यातुं गुरुद्वैविध्यं दर्शयन् शब्दार्थमात्रज्ञस्य गुरोर्नरत्वमाह शब्देति ॥ १७ ॥

तेनोक्ते संशया एव स्युर्वाचा बहुयोजनात् ।
ब्रह्मैवानुभवी तेन ब्रह्म प्रोक्तं विबुध्यते ॥ १८ ॥

उक्तश्रुतिं व्याचष्टे तेनोक्त इति ॥ १८ ॥

कुतर्कान्नाश्यते विद्या तार्किको न गुरुस्ततः ।
आगमे चानुभूतौ च कुशलोत्र गुरुर्भवेत् ॥ १९ ॥

"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे"ति व्याचष्टे कुतर्कादिति ॥ १९ ॥

शिष्यो वहिर्मुखो न स्यादध्यात्मं योगमाचरन् ।
दुर्दर्शत्वादिसंयुक्तमप्यात्मानं प्रपश्यति ॥ २० ॥
वाह्येन्द्रियैर्न दृश्योऽयं गूढस्थानप्रवेशतः ।
पञ्चकोशगुहान्तस्थो गह्वरे तमसि स्थितः ॥ २१ ॥
योगेनान्तर्मुखा बुद्धिस्तमो नाशयते ततः ।
देवं ज्ञात्वा हर्षशोकौ त्यजेत्तद्योग्यतास्ति ते ॥ २२ ॥

"तन्दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति व्याचष्टे शिष्य इत्यादिना त्रिभिः॥ २० ॥ २१ ॥ २२ ॥

योग्योहं चेत्तर्हि तत्त्वं रहस्यं यत्त्वमीक्षसे ।
तद्ब्रूहि सर्वसंसारगुणातीतं विमुक्तये ॥ २३ ॥

तव हर्षशोकत्यागात् योग्यताऽस्तीत्युक्तं श्रुत्वा नचिकेता आह योग्य इति ॥ २३ ॥

धर्माधर्मौ कार्यहेतू तथा भूतभविष्यती ।
अन्यच्च सर्वं नो यत्र तदेवापेक्षितं मम ॥ २४ ॥

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्रभूताच्चभव्याच्च यत्तत्पश्यसि तद्वदे" त्येतद्व्याचष्टे । धर्मेति ॥ २४ ॥

सर्ववेदेषु यद्वेद्यं तपांसि यदवाप्तये ।
ब्रह्मचर्यं च तद्वस्तु प्रणवेनाभिधीयते ॥ २५ ॥

इत्थं सर्वसंसारगुणातीतं पृष्टवन्तं नचिकेतसम्प्रति "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छतो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इति यमवाक्यं व्याचष्टे सर्वेति ॥ २५ ॥

प्रणवो वाचकस्तस्य स्यात्प्रतीकमुपास्तये ।
तेन बोद्धुर्भवेन्मुक्तिर्ब्रह्मलोकोऽप्युपासितुः ॥ २६ ॥

"एतदेवाक्षरं ब्रह्म" त्यादि "ब्रह्मलोके महीयते" इत्यन्तम् व्याचष्टे प्रणव इत्यादिना ॥ २६ ॥

न जायते न म्रियते प्रणवार्थश्चिदात्मकः ।
पुराणोऽसावजत्वेन नित्यः स्यादमृतत्वतः ॥ २७ ॥
कारणं नास्यकार्य्यं वा देहघातेपि नो हतिः ।
देहो देहान्तरं हन्ति न चिद्धन्ति न हन्यते ॥ २८ ॥

"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्नवभूव कश्चित । अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥ हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥" इत्येतौ मन्त्रौ व्याचष्टे नेत्यादिना द्वाभ्याम् ॥ २७ ॥ २८ ॥

श्यामाकादेरणोरेषोऽणीयांस्तत्राणुकल्पनात् ।
महीयान् महतः खादेस्तत्राकाशादिकल्पनात् ॥ २९ ॥

"अणोरणीयान्महतो महीयान्नात्मास्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुप्रसादान्ममाहिमानमात्मनः ॥" इति मन्त्रं व्याचष्टे श्यामेत्यादिना द्वाभ्याम् । तत्र आत्मनि । अणोः श्यामाकादेः । कल्पनादध्यस्तत्वात् ॥ २९ ॥

स्थितो जन्तोर्हृद्गुहायां तं निष्कामस्तु पश्यति ।
इन्द्रियाणां प्रसन्नत्वाद्वीतशोकस्तदा भवेत् ॥ ३० ॥

धातुप्रसादादित्यस्य विवरणम् । इन्द्रियाणां प्रसन्नत्वादिति ॥ ३० ॥

अन्तर्मुखोऽहं पश्यामि मत्तोऽन्यो बाह्यधीःपुमान् ।
ज्ञातुमर्हति को वा तं विरुद्धात्मत्वभासिनम् ॥ ३१ ॥

अन्तर्मुखदृष्टिमन्तरा दुर्विज्ञोऽयमात्मा कामिभिः प्राकृतैरित्येतदर्थपरम् "आसीनो दूरं व्रजति शयानो याति सर्वतः । कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हतीति" यमवचनरूपां श्रुतिं विवृणोति अन्तर्मुखमित्यादिना षड्भिः । विरुद्धेति । आत्मानं विरुद्धधर्मवत्त्वेन भासयन्तमित्यर्थः ॥ ३१ ॥

दूरं गच्छेदिहासीनः शयानो याति सर्वतः ।
समदो विमदश्चाऽतो दुर्लक्षो ह्यविवेकिभिः ॥ ३२ ॥

वने ध्यातुं समासीनो देहं संकल्प्य मानसम् ।
तेनैव नगरं गत्वा करोति क्रयविक्रयौ ॥ ३३ ॥

आत्मनो दुर्लक्षताप्रयोजकान् विरुद्धधर्मानाह । दूरमित्यादिना चतुर्भिः ॥ ३२ ॥ ३३ ॥

शयानो मञ्चकेऽक्षेषु विलीनेषु निराकृतिः ।
आकाशवत्सर्वगत एकः सुप्तोऽवतिष्ठते ॥ ३४ ॥

धनविद्यादिभिर्मत्तः पाण्डित्यं सदसि ब्रुवन् ।
वैराग्यनटनेनासौ लक्ष्यते मदहीनवत् ॥ ३५ ॥

अक्षेष्विन्द्रियेषु ॥ ३४ ॥ ३५ ॥

एवं विरुद्धधर्मत्वात्स्वभावः कोस्य वास्तवः ।
इति ज्ञातुमशक्यत्वादन्तर्दृष्ट्यैवमीक्षताम् ॥ ३६ ॥

स्वभावोऽसाधारणो धर्मः ॥ ३६ ॥

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
सर्वगं बहुभावाधिष्ठानं मत्वा न शोचति ॥ ३७ ॥

तद्विज्ञानाच्च शोकापनय इत्येतदर्थपरम् "अशरीरं शरीरेष्वनवस्थेष्व-

स्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचती''ति यमवाक्यं व्याचष्टे। अशरीरमिति ॥ ३७ ॥

नायमात्मा बहोः पाठाद्बहुश्रुत्या च मेधया।
लभ्यो बहिर्मुखस्यास्य नेश्वरानुग्रहो यतः ॥ ३८ ॥
यमन्तर्मुखमीशोऽनुगृह्णीते तेन लभ्यते।
तस्येशः स्वात्मनो रूपं भासयत्यखिलं स्फुटम् ॥ ३९ ॥

"नायमात्माप्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन-॥ यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वा''मिति मन्त्रं व्याचष्टे नेत्यादिना द्वाभ्याम् ॥ ३८ ॥ ३९ ॥

पापं क्रोधमनैकाग्र्यं योगसिद्धिं च नैति यः।
तमीश्वरोऽनुगृह्णाति स ज्ञानेनैनमाप्नुयात् ॥ ४० ॥

"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयादि" त्येतं मन्त्रं व्याचष्टे पापमिति। एनमात्मानम् ॥ ४० ॥

ब्राह्मणादि जगन्मृत्युसहितं यस्तु संहरेत्।
सोयमुग्रः कथं बोद्धुं शक्यः स्यान्नियतिं विना ॥ ४१ ॥

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः।" इति मन्त्रं विवृणोति। ब्राह्मणादीति। नियतिर्यथोक्तसाधनम् ॥ ४१ ॥

को बोद्धा कश्च बोद्धव्य इति चेत्तावुभौ शृणु।
बुद्धिं प्रविष्टौ जीवेशौ बोद्धृबोद्धव्यतां गतौ ॥ ४२ ॥

विद्याविद्ये नानाविरुद्धफले उपन्यस्ते नतु सफले ते यथावन्निर्णीते तन्निर्णयार्थं रथरूपककल्पना प्रतिपत्तिसौकर्यार्था। एवं च प्राप्तृप्राप्यगन्तृगन्तव्यविवेकार्थरथरूपकल्पनाद्वारा द्वावात्मानावुपन्यसनीयावित्यभिप्रायकम् "ऋतं पिबन्तौ सुकृतस्यलोके गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता'' इति मन्त्रं विवृणोति क इत्यादिना सार्धेन ॥ ४२ ॥

अवच्छिन्नो भवेज्जीवोऽनवच्छिन्नो महेश्वरः ।
रथस्वामी च गन्तव्यदेशो यद्वदुभौ तथा ॥ ४३ ॥

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि प्रग्रहमेव चे"तिमन्त्रं व्याचष्टे रथस्वामीत्यादिना सार्द्धेन ॥ ४३ ॥

जीवं तं रथिनं विद्धि शरीरं रथमेव तु ।
जीवोपाधिमहङ्कारं सारथिं प्रग्रहं मनः ॥ ४४ ॥

रथी रथस्वामी । जीवोपाधिरहङ्कारो बुद्धिः ॥ ४४ ॥

इन्द्रियाणि हया ज्ञेया विषया गम्यभूमयः ।
सारथ्यधीनाः सर्वत्र रथिनः सदसद्गतिः ॥ ४५ ॥

"इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भो[क्ते]त्याहुर्मनीषिणः" इत्यादि "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽ[ध्वनः] पारमाप्नोति तद्विष्णोःपरमं पदम्" इत्यन्तं मन्त्रजातं सक्षेपतो विवृणोति इ[न्द्रि]याणीत्यादिना द्वाभ्याम् । रथिनो रथस्वामिनः । इन्द्रियमनोयुक्तस्यात्मनः स[दस]द्गतिः । सद्गतिः सद्गमनम् । असद्गतिः संसारप्राप्तिः ॥ ४५ ॥

कर्ता सारथिरक्षाणि नियम्य मनसा क्रमात् ।
गच्छन्नन्तर्मुखो मार्गपारं विष्णुपदं व्रजेत् ॥ ४६ ॥

रथस्वामिनः सद्गतिं ससाधनमाह कर्त्तेति ॥ ४६ ॥

इन्द्रियादिर्विष्णुतत्त्वपर्यन्तो ह्यान्तरक्रमः ।
इन्द्रियेभ्यो भौतिकेभ्यो भूतेष्वान्तरता स्थिता ॥ ४७ ॥

अधुना यत्पदङ्गन्तव्यं तस्येन्द्रियाणि स्थूलान्यारभ्यसूक्ष्मतारतम्यक्रमे[ण] प्रत्यगात्मतयाधिगमः कर्तव्य इत्येवमर्थपरौ " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्[यश्च] परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्य[क्ता]त्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति"रित्येतौ मन्त्रौ [व्या]चष्टे । इन्द्रियादिरित्यादिना सप्तभिः ॥ ४७ ॥

तद्भूतेभ्यः सूक्ष्मभूतकार्यत्वान्मन आन्तरम् ।
ततोऽतिसूक्ष्मकार्यत्वात्कर्तृत्वोपाधिरान्तरः ॥ ४८ ॥

ततो मनसः कर्तृत्वोपाधिर्व्यष्टिबुद्धिरूपः ॥ ४८ ॥

समष्टिकर्तृतोपाधिरान्तरो व्यष्टिकर्तृतः ।
समष्ट्याख्यमहत्तत्त्वात्तद्धेत्वव्यक्तमान्तरम् ॥ ४९ ॥

समष्टिकर्तृत्वोपाधिर्महत्तत्त्वम् । तद्धेत्वव्यक्तम् । समष्ट्याख्यमहत्तत्त्वकारणीभूतमव्यक्तम् मायेति यावत् ॥ ४९ ॥

मायाख्याव्यक्ततोऽप्यस्याधारः पुरुष आन्तरः ।
पुरुषान्नपरं किंचित्सर्वं तेनैव पूरितम् ॥ ५० ॥

अस्य मायाख्याव्यक्तस्य । पुरुषपदार्थमाह सर्वं तेनैव पूरितमिति ॥५०॥

सद्रूपः पुरुषस्तस्य सत्त्वेनान्यत्र पूरणात् ।
अस्तीति निखिलं भाति पूरकः पुरुषो मतः ॥ ५१ ॥

एतदेवोपपादयति सद्रूप इति ॥ ५१ ॥

वस्तुतत्त्वविचारोऽत्र पुरुषेऽस्मिन्समाप्यते ।
गन्तव्यतत्त्वसीमत्वाद्रथी गच्छति तं क्रमात् ॥ ५२ ॥

अत्र पुरुषे सर्वान्तपुरुषे । सीमत्वादवधित्वाद्रथी रथस्वामी । तं पुरुषम् ॥५२॥

रथिनो वास्तवं रूपं पूर्णत्वं तदबोधतः ।
अवच्छिन्नत्वमेतच्च तद्बोधेन निवर्तते ॥ ५३ ॥

रथस्वामिनो वास्तवरूपाज्ञानात् संसारप्राप्तिमाह रथिन इति ॥ ५३ ॥

आत्मा सर्वेषु देहेषु भ्रान्त्या गूढो न भासते ।
एकाग्र्यया सूक्ष्मयैतं पश्येत्ताच्छील्यवान् धिया ॥ ५४ ॥

"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि"रिति मन्त्रं व्याचष्टे आत्मेति । एतमात्मानम् ॥ ५४ ॥

धियस्तथात्वं योगात्स्याद्योगो भूमिचतुष्कवान् ।
वाग्धीकर्तृसमष्टीनां निरोधाद्भूमयोऽभवन् ॥ ५५ ॥

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि" इति मन्त्रं विवृणोति धिय इत्यादिना सार्द्धत्रिकेण । तथात्वमेकाग्रतोपेतत्वे सति सूक्ष्मवस्तुनिरूपणपरत्वरूपसूक्ष्मत्वम् । भूमिचतुष्कमाह वागित्यादि ॥ ५५ ॥

वागादिकं वाह्यमक्षं निरुन्धन् शेषयेन्मनः ।
मनो निरुन्धन् कर्तारं शेषयेद्व्यष्टिरूपिणम् ॥ ५६ ॥

वाक्पदं बाह्येन्द्रियपरमित्याह । वागादिकमिति ॥ ५६ ॥

सविकल्पकमेतच्च निरुन्धन् निर्विकल्पकम् ।
अस्मीत्येतन्मातृरूपं महान्तमवशेषयेत् ॥ ५७ ॥

निरिति । निर्विकल्पकमस्मीत्येवमेतन्मातृरूपं सविकल्पजननीरूपम् महान्तमवशेषयेदिति योजना ॥ ५७ ॥

तमप्यन्ते निरुध्याथ शान्तात्मा शिष्यते स्वयम् ।
क्षुरधारेव विषमो योगो मन्दमतेरयम् ॥ ५८ ॥
क्षुरोऽतिलग्नो देहघ्नो न लग्नश्छिद्यपेत नो ।
समाहितं मनोऽप्येवं निद्रां कुर्याद्वहिर्व्रजेत् ॥ ५९ ॥

"उत्तिष्ठत जाग्रत प्राप्यवरान्निवोधत क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति" इति मन्त्रं व्याचष्टे । क्षुर इत्यादिना सार्द्धद्विकेन ॥५८॥५९॥

कौशलं योगिनोऽपेक्ष्यं नापितस्य यथा क्षुरे ।
निवार्य लयविक्षेपौ समादद्ध्यात्परात्मनि ॥ ६० ॥

समादद्ध्यात्समाधिं कुर्यात् ॥ ६० ॥

शब्दस्पर्शादिहीनात्मा सौक्ष्म्यात्सूक्ष्माधियेक्ष्यते ।
खवाय्वग्निजलोर्वीणां स्थौल्यं शब्दादिमत्वतः ॥ ६१ ॥
शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा इमे ॥
एकद्वित्रिचतुःपञ्चगुणा व्योमादयः क्रमात् ॥ ६२ ॥

गुणाधिक्यं स्थौल्यवृद्धिः सौक्ष्म्यवृद्धिर्गुणक्षयात् ।
निर्गुणं चातिसूक्ष्मत्वादतिसूक्ष्मधियेक्षते ॥ ६३ ॥

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्येतं मन्त्रं शब्देत्यादिना त्रिकेण व्याचष्टे ॥ ६१ ॥ ६२ ॥ ६३ ॥

विद्यायोगौ यमेनोक्तौ वैराग्यं नचिकेतसा ।
स्वत एवास्त्युपाख्यानं नाचिकेतमिदं शुभम् ॥ ६४ ॥

"नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्" इत्यादि व्याचष्टे विद्येति ॥ ६४ ॥

एतदेवातिविस्पष्टं पुनश्चात्र प्रपञ्च्यते ।
श्रूयतां नचिकेतोऽत्र विद्यायाः प्रतिबन्धकम् ॥ ६५ ॥

द्वितीयाध्यायं व्याख्यातुमारभत एतदेवेति ॥ ६५ ॥

इन्द्रियाणि बहिर्द्रष्टुं ससृजे परमेश्वरः ।
अतस्तैः प्रत्यगात्मानं न कश्चिदपि वीक्षते ॥ ६६ ॥

सकामं च मनस्तद्वन्निष्कामं चात्मशुद्धये ।
सृष्टं तयोर्योगयुक्तमनसाऽऽत्माऽवलोक्यते ॥ ६७ ॥
यच्चैतन्यानुग्रहेण रूपादीनिन्द्रियैः पुमान् ।
यानाति येन स्वप्नादि दृश्यते तद्विविच्यताम् ॥ ६८ ॥

"पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्म" त्रित्यादि "किमत्र परिशिष्यते एतद्वै तदित्यन्तं" मन्त्रत्रयं व्याचष्टे । इन्द्रियाणीत्यादिना पद्यपञ्चकेन ॥ ६६ ॥ ६७ ॥ ६८ ॥

चैतन्येन जडं ज्ञेयमित्युक्ते शिष्यतेऽत्र किम् ।
अभानं निखिलं प्राज्ञ चैतन्यं ब्रह्म वस्तु हि ॥ ६९ ॥
यद्देवैरपि संदिग्धं यत्पृष्टं नचिकेतसा ।
धर्माधर्माद्यतीतं यत्तादिदं ब्रह्म वर्णितम् ॥ ७० ॥

जडमज्ञानादिनिखिलम् । शिष्यतेऽत्र किमज्ञानं निखिलमिति । अत्राज्ञाना- दिनिखिलं किं शिष्यते इति योजना । किं शब्दः क्षेपे न शिष्यते इत्यर्थः । अ- सर्वावभासकं प्रज्ञानं ब्रह्म वस्तु इत्याह । प्राज्ञमित्यादि ॥ ६९ ॥ ७० ॥

यः कर्मफलभोक्ताऽस्ति जीवः प्राणादिधारकः ।
उपाधितो विविच्यैतं ज्ञात्वेशं न जुगुप्सते ॥ ७१ ॥

"य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानम्भूतभव्यस्य न ततो विजुगुप्सते ॥" इति मन्त्रं व्याचष्टे य इति । एतमीशं ज्ञात्वेति योजना ॥ ७१ ॥

जुगुप्सा योनिसम्प्राप्तिर्नासावतस्य विद्यते ।
जगत्कर्तृतया लक्ष्य ईशोयं तस्य का जनिः ॥ ७२ ॥

जुगुप्सापदार्थमाह । जुगुप्सायेनिसम्प्राप्तिरिति । असौ योनिसम्प्राप्तिः ... स्य उपाधितो विविक्तेश्वररूपस्य जीवस्य । तस्य का जनिरिति । तस्येशस्य ... जनिर्न कापीत्यर्थः ॥ ७२ ॥

यदिहेऽस्ति तदेवैषु वेदेषु ब्रह्म गीयते ।
मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ॥ ७३ ॥

"यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह ना- नेव पश्यति" इत्येतद्व्याचष्टे । यदिति । वेदेषु ऋगादिषु । अत्र 'देवेषु' इति पा- भाति अस्मिन्पाठेऽत्रवेदेष्वितिपदमध्याहार्य्यम् ॥ ७३ ॥

मनसैवेदमाप्तव्यमेकाग्र्येणेशजीवयोः ।
तत्त्वमद्वैतमेतस्मिन्योगी भेदं न पश्यति ॥ ७४ ॥

"मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योः स मृत्युं गच्छति य इह नानेव पश्यती" ति मन्त्रं विवृणोति । मनसैवेदमिति । एतस्मिन्नी- जीवयोस्तत्त्वे ॥ ७४ ॥

हृन्निष्ठो वुध्यवच्छिन्नो जीवो ह्यङ्गुष्ठमात्रकः ।
उपाध्यपगमे सोयमीशानो भूतभव्ययोः ॥ ७५ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानम्भूतभव्यस्य न त-

विजुगुप्सते ।" इत्येतदर्थं वर्णयति ह्यनिष्ट इति ॥ ७५ ॥

वृष्टं जलं पर्वताग्रे बहुधाऽधोगतिं व्रजेत् ।
जीवेशभेददृक्चैवं बहुयोनिषु जायते ॥ ७६ ॥

"यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावती" ति मन्त्रं व्याचष्टे । वृष्टं जलमिति ॥ ७६ ॥

वृष्टं तु निर्मले कूपे सुस्थितं पीयतेऽमृतम् ।
तथैव ब्रह्मतां स्वस्य विजानन्मुच्यते सुधीः ॥ ७७ ॥

"यथोदकं शुद्धे शुद्धमासिक्तन्तादृगेव भवति । एवं पुनर्विजानत आत्मा भवति गौतमे' ति मन्त्रं व्याचष्टे । वृष्टमिति ॥ ७७ ॥

पुरमेकादशद्वारं नाभिमूर्धन्यसंयुतम् ।
देहाख्यं यस्य तं दृष्ट्वा विमुक्तः सन्विमुच्यते ॥ ७८ ॥

"पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्चविमुच्यते" इति मन्त्रं व्याचष्टे । पुरमिति ॥ ७८ ॥

जीवन्नविद्याकामादिबन्धैर्मुक्तो मृतः पुनः ।
शरीरग्रहणाभावाद्विदेहः सन विमुच्यते ॥ ७९ ॥

"विमुक्तश्च विमुच्यते" इत्यंशं व्याचष्टे । जीवन्निति ॥ ७९ ॥

प्राणमूर्ध्वं नयत्यात्माऽपानवायुं नयत्यधः ।
तत्सेवकाश्चक्षुराद्या लिङ्गेनात्माऽनुमीयताम् ॥ ८० ॥

आत्मनः स्वरूपाधिगमे लिङ्गपरम् "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासते ।" इति मन्त्रं विवृणोति । प्राणमिति ॥ ८० ॥

सकर्तृकाः प्राणचक्षुराद्याः स्युः साधनत्वतः ।
कुठारवतो नायमस्तीत्येतन्निराकृतम् ॥ ८१ ॥

अनुमानप्रयोगमाह । सकर्तृका इत्यादि कुठारवदित्यन्तम् । तत उक्तानुमानात् । नायमस्तीत्येतादिति । नायमस्तीतिचैक इत्युक्त प्रत्यवस्थानमित्यर्थः ॥८१॥

प्राणापानवशाद्देहो जीवन्निति यदुच्यते ।
तत्र प्राणाद्याश्रयो यः कर्ता तेनैव जीवति ॥ ८२ ॥

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मि[न्ने]तावुपाश्रितौ ।" इति मन्त्रं शङ्कानिरासपरत्वेन व्याचष्टे । प्राणेति ॥ ८२ ॥

स कर्ताऽस्मिन्मृते देहे स्वकर्मवशतः पुनः ।
विप्रादियोनिमाप्नोति लतावृक्षादिनामुत ॥ ८३ ॥

नीचोत्तमत्वलिङ्गेन देहातिरिक्तात्मसाधनपरम् "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥ स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतं" मितिमन्त्रं व्याचष्टे स इत्यादिना द्वाभ्याम् । लतावृक्षादिनामित्युपलभ्यमानपाठे ह्रस्वो माषमेव कुर्याच्छन्दोभङ्गं त्यजेद्गिरागित्यनुशासनानुरोधात् । वस्तुतो लतावृक्षादिकामिति [पाठ]व्यम् । उतेत्यव्ययमप्यर्थे ॥ ८३ ॥

देहौ नीचोत्तमौ तादृक्कर्मकर्तृपुरःसरौ ।
नीचोत्तमत्त्वात्प्रासादपर्णशाले यथा तथा ॥ ८४ ॥

अनुमानप्रयोगमाह । देहाविति । तादृगिति । नीचोत्तमेत्यर्थः ॥ ८४ ॥

सुप्तेष्वक्षेषु यः स्वप्ने कामं कामं सृजत्ययम् ।
देहातिरिक्तस्तं को वा निराकर्तुं प्रभुर्भवेत् ॥ ८५ ॥

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥" इत्यस्य तात्पर्यमाह । सुप्तेष्विति ॥ ८५ ॥

जीवात्मानं प्रसाध्यैवं तस्यैवोपाध्युपायतः ।
ब्रह्मतां वेत्ति जगत आधारत्वेन लक्षिताम् ॥ ८६ ॥

"तस्मिंल्लोकाश्रिता" इत्यादेस्तात्पर्यमाह । जीवेति ॥ ८६ ॥

अग्निर्यथैकः काष्ठेषु प्रविश्य बहुधा भवेत् ।
तथात्मा त्वेक एवैषु देहेषु बहुधोच्यते ॥ ८७ ॥

"अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा

भूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्च ।" इति मन्त्रं वर्णयति अग्निरिति ॥८७॥

वायुश्चैकोऽपि देहेषु प्रविश्य प्राणरूपतः ।
बहुधा भात्येवमात्मा प्रत्युपाधि पृथग्भवेत् ॥ ८८ ॥

"वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो वहिश्च । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्च ।" इति मन्त्रं व्याचष्टे वायुरिति ॥ ८८ ॥

सर्वचक्षुःस्थरूपोपि न रविर्नैत्ररोगभाक् ।
सर्वात्मत्वेऽपि तद् ब्रह्म तथा दुःखैर्न लिप्यते ॥ ८९ ॥

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥" इति मन्त्रं व्याचष्टे सर्वेति ॥८९॥

सर्वभूतान्तरात्मैकः स्वतन्त्रो मायया वृतः ।
एकं स्वं वहुधा कुर्याद्बहुरूपो यथा नटः ॥ ९० ॥
मायोपाधिक ईशोयं बुद्ध्युपाधिमतां नृणाम् ।
कर्मानुसारिणः कामान्विदधात्युपभुक्तये ॥ ९१ ॥
स्वचित्तस्थं साक्षिरूपमीशं पश्यन्ति ये नराः ।
तेषां नित्या दुःखशान्तिर्ब्रह्मानन्दश्च शाश्वतः ॥ ९२ ॥

'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति' इत्यादि "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इत्यन्तं मन्त्रद्वयं व्याचष्टे सर्वेत्यादिना त्रिकेण ॥ ९० । ९१ । ९२ ॥

अनिर्देश्यं तमानन्दं प्रत्यक्षं मन्वते बुधाः ।
स दृश्यो वा स्वप्रकाश इति चेन्न स दृश्यते ॥ ९३ ॥

"तदेतदिति मन्यतेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति विभाति वा" इति मन्त्रं व्याचष्टे । अनिर्देश्यमिति । स आनन्दः दर्शनविषयः स्वप्रकाशो वेति विकल्प्य आद्यकल्पं निरसितुं प्रतिजानीते न दृश्यत इति ॥९३॥

न भासयन्ति सूर्याद्या बुद्ध्याद्याश्च स्वयंप्रभम् ।
किन्तु भान्तं तमन्वेते भान्ति भासा तदीयया ॥ ९४ ॥

तत्र हेतुपरत्वेन "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तं प्रतिभाति सर्वं तस्य भासा सर्वमिदं विभाति ।" इति मन्त्रं विवृणोति । नेति ॥ ९४ ॥

सर्वोत्तमत्वादूर्ध्वं तन्मूलं संसारशाखिनः ।
देवमानुषपश्वाद्याः शाखास्तस्याधमा मताः ॥ ९५ ॥
यन्मूलं तत्स्वयंज्योतिस्तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तत्र नात्येति कश्चन ॥ ९६ ॥

तूलावधारणेनैव मूलावधारणं वृक्षस्य यथा क्रियते लोके एवं संसारवृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधारयिषया षष्ठीवल्ली आरब्धा तत्रेयम् "ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।" इति मन्त्रं वर्णयति सर्वोत्तमेत्यादिना द्वाभ्याम् ॥ ९५ ॥ ९६ ॥

मायाशक्तियुजा तेन जगत्सर्वं नियम्यते ।
अग्निसूर्यादयस्तस्माद्भीताः सन्तश्चरन्ति हि ॥ ९७ ॥

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।" इत्यादि "भयादिन्द्रश्च वायुश्च मृत्युर्धावतिपञ्चम" इत्यन्तं मन्त्रद्वयं व्याचष्टे मायेति ॥ ९७ ॥

नरदेहस्य पातात्प्राक् तद्बोद्धुं शक्नुयान्न चेत् ।
जन्मान्तरेषु तद्बोधः प्रायेणात्यन्तदुर्लभः ॥ ९८ ॥

"इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः । ततः सर्वेषु लोकेषु शरीरत्वाय कल्पते ।" इति मन्त्रं व्याचष्टे । नरेति ॥ ९८ ॥

स्वप्नवत्पितृलोकस्य स्वातन्त्र्यं नास्ति किञ्चन ।
गन्धर्वलोकभोगेच्छावशाद्धीरतिचञ्चला ॥ ९९ ॥

ब्रह्मलोकेऽस्त्येष बोधः स लोकः सुलभो नहि ।
आदर्शवच्छुद्धचित्ते नरेणात्मेक्ष्यते स्फुटम् ॥ १०० ॥

"यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके । यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके" इतिश्रुतिं व्याचष्टे । स्वप्नेत्यादिना द्वाभ्याम् ॥ ९९ ॥ १०० ॥

इन्द्रियाणामनात्मत्वमागमापायदर्शनात् ।
बुद्ध्वा तत्साक्षिणि स्वस्मिन् ब्रह्मत्वं बुध्यते सुखात् ॥१॥

"इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ।" इति मन्त्रार्थं वर्णयति । इन्द्रियाणामिति ॥ १ ॥

मन्दश्चेदक्षधीकर्तृसमष्ट्यव्यक्तरूपतः ।
क्रमाद्विविच्य मूढः स्वं वीक्षते सूक्ष्मया धिया ॥ २ ॥

"इन्द्रियेभ्यः परं मनः" इत्यादि "अमृतत्वं च गच्छति" इत्यन्तं मन्त्रद्वयं विवृणोति । मन्द इति । अक्षेत्यादि । अक्षाणि च धीश्च कर्ताच समष्टिश्चाव्यक्तं च तेषां रूपेभ्यः इत्यर्थः ॥ २ ॥

वाह्याक्षविषयेष्वात्मस्वरूपं न हि तिष्ठति ।
निवृत्ताक्षो निरुद्धेन सूक्ष्मेण मनसेक्षते ॥ ३ ॥

"न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ।" इति मन्त्रं व्याचष्टे । बाह्येति । निवृत्ताक्षो विषयेभ्यः प्रत्याहृतेन्द्रियग्रामः ॥ ३ ॥

अप्रमत्तोऽखिलाऽक्षाणि सकर्तृणि यदा पुमान् ।
निरुणाद्धि तदा योगं तामवस्थां प्रचक्षते ॥ ४ ॥

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमाङ्गतिम् ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगेहि प्रभवाप्ययौ ॥" इति मन्त्रद्वयं व्याचष्टे । अप्रमत्त इति । तां निरोधरूपाम् ॥ ४ ॥

सर्वाक्षागोचरत्वेऽपि स्वात्माऽस्तीत्याह तत्त्ववित् ।
कारणस्यात्मनोऽसत्त्वे शून्यं कार्यं जगद्भवेत् ॥ ५ ॥

'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथन्तदुपलभ्यते ॥ अस्तीत्येवोपलब्धव्यः तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥"इतिमन्त्रद्वयार्थं वर्णयति । सर्वाक्षेत्यादिना षड्भिः ॥

अस्तीत्येवोपलब्धव्यो नायमस्तीति न त्वया ।
सर्वत्रानुगतं यत्तत्तन्नास्तीत्युच्यते कथम् ॥ ६ ॥
सोपाधिकं तावदादौ दृष्ट्वास्तीति ततः पुनः ।
उपाधीन्संपरित्यज्य तत्त्वभावेन पश्यति ॥ ७ ॥

उपलब्धव्यः साक्षात्कर्तव्यः ॥ ६ ॥ ७ ॥

उपाधीनां माययैषां कल्पितत्वेन तैर्विना ।
निरुपाधिकसन्मात्रं वस्तु तच्च तथेक्ष्यताम् ॥ ८ ॥

तैरुपाधिभिः ॥ ८ ॥

कलुषं जलमानीय ततोऽस्मिन्कातकं रजः ।
यदा क्षिपेत्तदा नीरं प्रसीदति यथा तथा ॥ ९ ॥

प्रसीदति निर्मलं भवति । तथेत्युत्तरान्वयि ॥ ९ ॥

सोपाधिकज्ञानवतो निरुपाधिः प्रसीदति ।
रजःप्रक्षेपसदृशी योगान्निष्कामता धियः ॥ १० ॥

निरुपाधि निर्विकारं ज्ञानं भवतीत्यर्थः ॥ १० ॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिस्थिताः ।
तदैव मर्त्यतां हित्वा स जीवन् ब्रह्मतां व्रजेत् ॥ ११ ॥

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिस्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥"इति मन्त्रं व्याचष्टे । यदेति । जीवन् ब्रह्मतां जीवन्मुक्तिः

अहङ्कारेण चैतन्यं ग्रथित्वेच्छति चेत्तदा।
हृदये ग्रन्थयः कामास्ते भिद्यन्ते विवेकिनः॥ १२॥

"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्॥" इति मन्त्रार्थं दर्शयति। अहङ्कारेणेत्यादिना चतुष्केण॥१२॥

अहङ्कारचितोरैक्यभ्रान्तेरपगमे सति।
कामाभासाः सन्तु चित्ते क्रमान्नश्यन्ति तेऽपि च॥ १३॥
जीवन्मुक्तस्तु निष्कामो न मृतिं प्रतिपद्यते।
प्राणोत्क्रान्तिर्मृतिः सा तु ज्ञानिनो नहि विद्यते॥ १४॥

ते कामाभासाः॥ १३॥ १४॥

प्राणा अन्तर्विलीयन्ते तप्ताश्मक्षिप्तनीरवत्।
ज्ञानी पुराऽपि ब्रह्मैव सन्ब्रह्माऽप्येति तल्लये॥ १५॥

तल्लये कामाभासलये॥ १५॥

ब्रह्मबोद्धुमशक्तः सन्नुपास्ते चेत्तदा पुमान्।
नाड्या मूर्धन्यया ब्रह्मलोकं गत्वा विमुच्यते॥ १६॥

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इत्यादि मन्त्रं व्याचष्टे ब्रह्मेति॥१६॥

अत्रैवोपासकस्यास्य धीशुद्धिश्चेत्तदा त्वसौ।
देहाद्विविच्य हृन्निष्ठं ब्रह्मत्वेनावगच्छति॥ १७॥

अत्र ब्रह्मलोके। धीशुद्धिरिति। अस्य भवतीति शेषः। असावुपासकः॥१७॥

मृत्युप्रोक्तां नाचिकेतोविद्यां योगं तथाखिलम्।
लब्ध्वा ब्रह्मासवानेवं लब्ध्वाऽन्योऽपि विमुच्यते॥ १८॥

"मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नं। ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव॥" इति मन्त्रं व्याचष्टे। मृत्युप्रोक्तामिति॥ १८॥

विद्या तत्फलयोर्विघ्नशान्त्यर्थं सहनाविति ।
मन्त्रं जपेत्तेन विघ्नाः शाम्यन्त्येव न संशयः ॥ ११९ ॥
वैराग्यं नाचिकेतस्य यथा तीव्रं तथा पुमान् ।
प्राप्नोति सेवमानः सन्विद्यातीर्थमहेश्वरम् ॥ १२० ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे कठवल्ली विवरणं नामैकादशोऽध्यायः ॥ ११ ॥

"सह नाववतु सह नौ भुनक्तु सहवीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै" । ॐशान्तिः शान्तिः शान्तिरिति मन्त्रजपेन विघ्नशान्तिर्भवतीत्याह । विद्येति ॥ ११९ ॥ १२० ॥

इति श्रीकाशीनाथकृतायां मितप्रकाशविवृतौ कठवल्लीविवरणं नामैकादशोऽध्यायः ॥ ११ ॥



श्वेताश्वतरनामा यो यजुःशाखाप्रवर्तकः।
सोऽन्त्याश्रमिभ्यः प्रोवाच विद्यां व्याचक्ष्महेऽत्र ताम्॥१॥

श्वेताश्वतरशाखोपनिषदं विवरितुमुपक्रमते। श्वेतेति। अत्र। द्वादशाध्याये॥ १॥

ये वेदवादिनस्ते तु मीमांसन्ते मुमुक्षवः।
जगतः कारणं ब्रह्मेत्येवं वेदेषु घुष्यते॥ २॥

"ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्॥" इति मन्त्रं व्याचष्टे। य इत्यादिना त्रिकेण॥ २॥

उत्पत्तिस्थितिनाशाः स्युर्यतस्तत्कारणं त्विति।
सामान्यमेव विज्ञातं विशेषस्तु न वुध्यते॥ ३॥

संशयहेतुविशेषाज्ञानसहकृतसामान्यज्ञानमाह। उत्पत्तीति॥ ३॥

कस्माद्वस्तुविशेषान्नो जन्म केन च जीवनम्।
लयः कस्मिन्व्यवहृतौ सुखादौ को नियच्छति॥ ४॥

कस्मादिति कुतः स्म जाता इत्यस्य विवरणम् जन्मेत्यन्तम्। जीवाम केनेत्यस्य व्याख्या जीवनमित्यन्तम्। क्व च संप्रतिष्ठा इत्यस्य व्याख्यानम् लयः कस्मिन्निति। अधिष्ठिता इत्यादेर्व्याख्या व्यवहृतावित्यादिः। अधिष्ठितत्वम् नियमितत्वम्। नियच्छतीति। नियामको भवतीत्यर्थः॥ ४॥

पितृभ्यामन्नतो रेतादपि जन्मादयस्त्रयः।
नियामकश्च राजेति वचनं बालभाषितम्॥ ५॥

नास्तिकवचनमुपन्यस्य निन्दति। पितृभ्यामिति। रेतादितिप्रयोगः रेतःशब्दपर्यायरेतशब्दस्य बोध्यः॥ ५॥

पितृराजाद्यशेषस्य जगतश्चिन्त्यतेऽधुना।
कारणं तच्च शास्त्रैकगम्यं शास्त्रं तु नैकधा॥ ६॥

"कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखःदुखहेतो"रिति मन्त्रं व्याख्यातुमवता-रयति पितृराजेति । कारणं चिन्त्यत इत्यन्वयः । तच्च । कारणंच ॥ ६ ॥

कालः स्वभावो नियतिर्यदृच्छा भूतपञ्चकम् ।
प्रधानं जीव एतानि मतान्युक्तानि शास्त्रिभिः ॥ ७ ॥

मन्त्रं व्याचष्टे । काल इति । योनिरित्यस्य व्याख्या—प्रधानमिति ॥ ७ ॥

ऋतुकाले भवेद्गर्भो वर्षतौ सस्यसम्भवः ।
उदाह्रियत इत्यादि बहुधा कालवादिना ॥ ८ ॥

कालकारणवादिनो ज्योतिर्विदो मतमाह । ऋत्विति ॥ ८ ॥

स्वभाववाद्यग्निमुष्णं जलं द्रवमुदाहरत् ।
रूपज्ञानं चक्षुषैवेत्याहुर्नियतिवादिनः ॥ ९ ॥

स्वभाववादिनो नास्तिकविशेषस्य मतमाह—स्वेति । नियतिकारणवादमा-ह रूपेति ॥ ९ ॥

धनिकत्वादिव्यवस्था यदृच्छावादिनोच्यते ।
भूतवादी देहगतकाठिन्यादीनुदाहरत् ॥ १० ॥

यदृच्छावादभूतवादावाह । धनीति ॥ १० ॥

प्रधानवादी पुरुषान्सात्त्विकादीनुदाहरत् ।
जीववादी कर्मवशाज्जन्म देवाद्युदाहरत् ॥ ११ ॥

प्रधानजीववादावाह । प्रधानेति ॥ ११ ॥

सर्वत्रयुक्तदृष्टत्वात्किं तत्त्वमिति चिन्त्यते ।
सर्वेषामनिवार्यत्वात्तत्संघोऽस्त्विति चेन्न तत् ॥ १२ ॥

संयोगएषामित्यन्तं च शङ्कापरत्वेन व्याख्याय 'ननु' इत्येतद् व्याचष्टे। चेन्न तदिति ॥ १२ ॥

स्वतन्त्रे चेतने जीवे सति कालाद्यचेतनाः ।
समप्रधानभावेन कथं सङ्घीभवन्तिते ॥ १३ ॥

निषेधे हेतुपरत्वेन "आत्मभावादि" त्येतद्व्याचष्टे । स्वतन्त्र इति ॥१३॥

तर्हि जीवो हेतुरस्तु तन्न दुःखादिदर्शनात् ।
स्वतन्त्रः स्वात्मनो दुःखं कुर्वन्दृष्टो नहि क्वचित् ॥ १४ ॥

"आत्माप्यनीशः सुखदुःखहेतोरि"त्येतद्व्याचष्टे तर्हीति । तन्नेति अस्य तस्येतिशेषः । हेतुं विशदयति । स्वतन्त्रइति ॥ १४ ॥

दोषान् सर्वेषु पक्षेषु पश्यन्तो बहुधा तदा ।
मायाशक्तिमनिर्वाच्यामपश्यन् ध्यानयोगतः ॥ १५ ॥

"ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक" इति मन्त्रं विवृणोति । दोषानित्यादिना षट्केन ॥ १५ ॥

द्वित्रिकक्षासु युक्तीनां सत्त्वेऽप्यन्ते न सन्ति ताः ।
न जानामीत्येवमन्ते विषीदन्ति हि वादिनः ॥ १६ ॥
यदन्ते शरणं सर्ववादिनामविवादतः ।
तदज्ञानमनिर्वाच्या मायेत्याहुर्विपश्चितः ॥ १७ ॥
अनिर्वाच्येऽपि युक्तिं चेदन्विच्छति स मूढधीः ।
न रूपं चक्षुषा द्रष्टुमिच्छत्येवातिमोहितः ॥ १८ ॥

मायामुपपादयति द्वित्वादिना चतुष्केण । ता युक्तयः ॥ १६ ॥ १७ ॥ १८ ॥

सर्वकार्येषु शक्तत्वान्मायाऽऽक्षेपं न सार्हति ।
दुर्घटस्यैव घटने स्वभावः सर्वसंमतः ॥ १९ ॥

मायोपपादनं निगमयति । सर्वेति ॥ १९ ॥

तथाविधायां मायायां परात्मा प्रतिबिम्बितः ।
अवान्तराणि वस्तूनि कालादीन्याधितिष्ठति ॥ २० ॥

य इत्यादिमन्त्रोत्तरार्द्धं व्याचष्टे । तथेति ॥ २० ॥

मायाविशिष्टमीशानं जगदाकारतां गतम् ।
संसारचक्रमित्याहुः संसाराख्यनदीति च ॥ २१ ॥

"तमेकनेमिमित्यादि पञ्चपर्वामधीम" इत्यन्तं मन्त्रद्वयं संक्षेपतो व्याचष्टे मायेत्यादिना त्रिकेण ॥ २१ ॥

पुनःपुनर्जायमानश्चक्रवत्परिवर्तते ।
अविच्छेदेन संसारो नदीवत्प्रवहेत्सदा ॥ २२ ॥

संसारचक्रमिति संसाराख्यनदीति चोक्तं प्रपञ्चयति । पुनरिति ॥ २२ ॥

जीवोऽहङ्कारोपहितश्चक्रवद्भ्राम्यते सदा ।
मायोपहित ईशानो जन्मसु प्रेरयेदमुम् ॥ २३ ॥

ससारचक्रमितीत्युक्तं विशदयति । जीव इति ॥ २३ ॥

उपाधिद्वयहीनं तु ब्रह्म वेदेषु बोध्यते ।
इत्थं वेदरहस्यज्ञा भवेयुर्ब्रह्मतत्पराः ॥ २४ ॥

"सर्वा जीवे" इत्यादि "तत्परा योनिमुक्ता" इत्यन्तं मन्त्रद्वयं विवृणोति । उपाधीति ॥ २४ ॥

जगतस्याद्व्यक्तमव्यक्तं सृष्टिसंहारयोः क्रमात् ।
विभर्त्ति द्वयमीशानश्चिदात्मा तु विमुक्तिभाक् ॥ २५ ॥

"संयुक्तम्" इत्यादि "मुच्यते सर्वपाशै" रित्यन्तमष्टममन्त्रं विवृणोति जगदिति । द्वयम् सृष्टौ व्यक्तं सहारेऽव्यक्तं जगदीश्वरो बिभर्ति न तु निर्विशेषचिदात्मेति योजना ॥ २५ ॥

ईशानीशावज्ञतज्ज्ञौ भोक्ता भोजयिता च तौ ॥
तयोर्निर्वाहिता माया ब्रह्मण्यारोपितं त्रयम् ॥ २६ ॥
जगद्भ्रमं जीवभेदं वासना देहधारणम् ।
चतुष्टयं निराकुर्यादभिध्यानादिभिः क्रमात् ॥ २७ ॥

'ज्ञाज्ञौ द्वौ' इत्यादिमन्त्रद्वयं वर्णयति । ईशेत्यादिचतुष्केण ॥ २६ ॥ २७ ॥

अभितो ब्रह्मरूपत्वध्यानाद्याति जगद्भ्रमः ।
ब्रह्मत्वे योजिते स्वस्य जीवभावोऽपि गच्छति ॥ २८ ॥

जगद्भ्रमजीवभेदयोर्निवृत्तिमाह अभित इति ॥ २८ ॥

अद्वये भाविते तत्त्वे वासना विनिवर्तते ।
आरब्धान्ते देहहानिर्मायैवं क्षीयतेऽखिला ॥ २९ ॥

वासनानिवृत्तिं देहहानिं चाह । अद्वय इति ॥ २९ ॥

ब्रह्मज्ञानात्पाशहानौ क्षीणक्लेशो न जन्मभाक् ।
पाशाश्चतुर्विधाश्चैव शास्त्रेषु प्रतिपादिताः ॥ ३० ॥

"ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः" इत्यादि "त्रिविध ब्रह्ममेतत्" इत्यन्तं मन्त्रद्वयं व्याचष्टे । ब्रह्मेत्यादिसार्द्धचतुष्केण ॥ ३० ॥

मलो माया कर्म तत्त्वतिरोधानं च ते मताः ।
मलो ज्ञानक्रिया शक्त्योश्छादको दोष इष्यते ॥ ३१ ॥

उक्तपाशचातुर्विध्यं दर्शयति मल इति । मलमुत्तरार्द्धेन दर्शयति मलो ज्ञाने-त्यादि ॥ ३१ ॥

रागादिहेतुर्मायोक्ता कर्म पुण्यं च पातकम् ।
मूढैस्तत्त्वतिरोधानं सर्वैरप्यनुभूयते ॥ ३२ ॥

मायां कर्म च पूर्वार्द्धेन दर्शयाति । रागेत्यादि । तत्त्वतिरोधाने मूढानुभवं प्रमाणयत्युत्तरार्द्धेन । मूढैरित्यादि ॥ ३२ ॥

क्लेशान्पतञ्जलिः प्राह तेष्वविद्यादिरस्मिता ।
द्वितीया द्वेषरागौ चाभिनिवेशस्तु पञ्चमः ॥ ३३ ॥

श्रुतिस्थ पाशपदं पतञ्जलिर्व्याख्यातवानित्याह । क्लेशानिति ॥ ३३ ॥

भोक्ता भोग्यं प्रेरकश्च त्रयं ब्रह्मेति तत्त्वधीः ।
उपायेन ब्रह्मधीः स्यादरणिस्थाग्निलाभवत् ॥ ३४ ॥

"वह्नेर्यथा योनिगतस्य मूर्त्ति"रित्यादि 'देवं पश्येन्निगूढव' दित्यन्तं मन्त्रं व्याचष्टे । उपायेनेति ॥ ३४ ॥

उपायः प्रणवेनात्मध्यानं तेनैष लभ्यते ।
तिलात्तैलादयो यद्वल्लभ्यास्तत्तदुपायतः ॥ ३५ ॥

उपायमाह । उपाय इति । 'तिलेषु तैलं दधनीव सर्पि' रित्याद्याप्रथमाऽध्यायसमाप्तिव्याचष्टे । तिलादित्यादिसार्धेन ॥ ३५ ॥

सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्यातपोभ्यां तमुपलभ्य विमुच्यते ॥ ३६ ॥

तमात्मानम् ॥ ३६ ॥

यदुक्तं प्रणवध्यानं स योगस्तत्र यत्नवान् ।
मनो ब्रह्मणि युञ्जानस्तत्साक्षात्कुरुते धिया ॥ ३७ ॥

"युञ्जानं प्रथमं मन" इत्यादिद्वितीयाध्यायं व्याख्यातुमुपक्रमते यदुक्तमिति। तत्र योगे । तद्ब्रह्म ॥ ३७ ॥

उरोंशमूर्धस्थानेषु त्रिषु देहं समुन्नतम् ।
अवस्थाप्यासनं जित्वा प्रत्याहारं समाचरेत् ॥ ३८ ॥

"त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिरुध्य । ब्रह्मोडुपेन प्रतरेतविद्वान् स्रोतांसि सर्वाणि भयावहानि ।" इति मन्त्रं व्याचष्टे उरोंशेति ॥ ३८ ॥

हृद्यक्षाणां निरोधो यः प्रत्याहारः स उच्यते ।
जयेत्प्राबल्यमक्षाणां प्राणायामेन धैर्यवान् ॥ ३९ ॥

प्रत्याहारपदार्थमाह । हृदीति ॥ ३९ ॥

प्राणाधीनव्यापृतीनामक्षाणां प्राणरोधानात् ॥
निरोधः स्यात्ततश्चित्तं धारयेताप्रमादतः ॥ ४० ॥

प्राणायामेनेन्द्रियप्राबल्यजयो भवतीत्याह । प्राणाधीनेति ॥ ४० ॥

समे शुचौ शर्करादिमशकादिविवर्जिते ।
मनोऽनुकूलेऽवस्थाय देशे ध्यानं समाचरेत् ॥ ४१ ॥

ध्यानयोग्यदेशपरम् "समे शुचौ शर्करा वह्निवालुकाविवर्जिते शब्द जलाश्रयादिभिः । मनोऽनुकूले नतु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ।" इति मन्त्रं विवृणोति । सम इति ॥ ४१ ॥

नाडीरूपाणि नीहारधूमान्यत्र विभान्ति चेत् ।
ब्रह्मसन्निधिमाप्ता धीरिति निश्चीयतां तदा ॥ ४२ ॥

"नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फीटकशशिनाम् । एतानि रूपाणि पुरः सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे" इति मन्त्रं व्याचष्टे नाडीति ॥ ४२ ॥

निर्जरत्ववितृष्णत्वशुभगन्धादि चेद्भवेत् ।
योगसिद्धिः प्रवृत्तेति ज्ञात्वा योगे स्थिरो भवेत् ॥ ४३ ॥

"पृथ्व्याप्यतेजोनिलखे" इत्यादिं "योग प्रवृत्तिंप्रथमां वदन्ति" इत्यन्तं द्वादशं त्रयोदशं च मन्त्रौ व्याचष्टे । निर्जरत्वेति ॥ ४३ ॥

मेघच्छन्नं चन्द्रबिम्बं मेघापायेति निर्मलम् ।
तथैव बुद्धिचाञ्चल्यशान्तावात्मा प्रसीदति ॥ ४४ ॥

"यथेवाविम्वम्" इत्यादिं "मुच्यते सर्वपापैः" इत्यन्तं चतुर्दशं पञ्चदशञ्च मन्त्रौ व्याचष्टे । मेघच्छन्नमित्यादि त्रिकेण ॥ ४४ ॥

स्वात्मतत्त्वप्रसादेन ब्रह्मतत्त्वं प्रसीदति ।
शास्त्रादबुद्धं ब्रह्मतत्त्वमात्मत्वेनानुभूयताम् ॥ ४५ ॥

अजं ध्रुवं मायिकैस्तैः कार्यैः सर्वैर्विवर्जितम् ।
ज्ञात्वा देवं परात्मानं सर्वपापैर्विमुच्यते ॥ ४६ ॥

"अजं ध्रुवमि" त्यादिव्याख्यातुमवतारयति । शास्त्रादित्यादिना सार्धेन ॥ ४५ ॥ ४६ ॥

एष देवः सर्वदिक्षु वह्न्यादिष्वखिलेषु च ।
वर्तते तं विचिन्त्याथ प्रणमेत्सर्वदैवतम् ॥ ४७ ॥

"एषो ह देवः प्रदिशो नु सर्वा" इत्यादिं "तस्मै देवाय नमो नमः" इत्यादिं षोडशं सप्तदशं च मन्त्रं व्याचष्टे एष इति ॥ ४७ ॥

तत्त्वयोगौ समुद्दिष्टावुक्तमस्याधिकारिणः ।
अथ सोपाधिकं वस्तु मन्दं प्रत्यभिधीयते ॥ ४८ ॥

वृत्तकथनपूर्वकं तृतीयाध्यायं व्याख्यातुं प्रतिजानीते । तत्त्वेति ॥ ४८ ॥

ऐन्द्रजालिकवन्मायाजालवानेक ईश्वरः ।
नियच्छन् शक्तिभिर्लोकान्सृजते संहरत्यपि ॥ ४९ ॥
एक एवेश्वरस्तादृक् द्वितीयो नैव विद्यते ।
जनानां प्रत्यगात्माऽसौ जगत्सृष्ट्यादिकार्यपि ॥ ५० ॥

"य एको जालवानि"त्यादि "द्यावाभूमीजयन्देव एकः" इत्यन्तं मन्त्रद्वयं व्याचष्टे ऐन्द्रेत्यादिना त्रिकेण ॥ ४९ ॥ ५० ॥

स विराड्रूपतां प्राप्य विश्वतश्चक्षुरादिमान् ।
सर्वेषां चक्षुराद्या ये तदीया एव तेऽखिलाः ॥ ५१ ॥

"विश्वतश्चक्षुरर्" इत्यादेस्तात्पर्यमाह स इत्यादिना ॥ ५१ ॥

यो देवानामिति प्रोक्तैस्त्रिभिर्मन्त्रैस्तमीश्वरम् ।
मुमुक्षुः प्रार्थयेतैव सदा बुद्धिविशुद्धये ॥ ५२ ॥

"यो देवानां प्रभवश्चोद्भवश्च" इत्यादे "र्मा हिंसीः पुरुषं जगद्" इत्यन्त मन्त्रत्रयस्य तात्पर्यमाह । य इति ॥ ५२ ॥

ततः शुद्धमतिर्ब्रह्म सर्वभूतेष्ववस्थितम् ।
अन्तर्बहिश्च संव्याप्तं ज्ञात्वा स्यान्मृतिवर्जितः ॥ ५३ ॥

"ततः परंब्रह्मपरम्" इत्यादेः "तं ज्ञात्वाऽमृता भवन्ति" इत्यन्तस्य तात्पर्यमाह । तत इति ॥ ५३ ॥

श्वेताश्वतरनामाऽहं पुरुषं वेद्मि तं प्रभुम् ।
अन्योऽपि तं विदित्वैवं मृत्युमत्येति नान्यथा ॥ ५४ ॥

"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति मन्त्रं व्याचष्टे । श्वेतेति ॥ ५४ ॥

यस्मात्परं नापरं वा किञ्चिदस्ति तदद्वयम् ।
वृक्षवन्निश्चलं तेन पूर्णं सर्वमिदं जगत् ॥ ५५ ॥

"यस्मात्परं नापरमस्ति किञ्चि दि"त्यादि "अथेतरे दुःखमेवापियन्ति" इत्यन्तं मन्त्र द्वयं व्याचष्टे । यस्मादिति पादोनपद्यद्विकेन ॥ ५५ ॥

एतद्विदुर्मृत्युहीनास्ते स्युर्ये तु न तद्विदुः ।
ते दुःखमेव गच्छन्ति न तत्सोपाधिकेक्षणे ॥ ५६ ॥

तद्दुःखं सोपाधिकेक्षणे न गच्छन्तीति पूर्वेणान्वयः । इदं "सर्वाननशिरोग्रीव"इत्यादेर्व्याचिख्यासितस्यावतरणम् ॥ ५६ ॥

दुर्लक्षो निरुपाध्यात्मा सूक्ष्मधीवर्जितैर्नरैः ।
सुलक्ष एव सोपाधिस्तस्मादेवं स्मरेदमुम् ॥ ५७ ॥

तदाह । दुर्लक्ष इति । एवं वक्ष्यमाणप्रकारेण ॥५७॥

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ ५८ ॥

विश्वाकारजनेः प्राक्च सर्वव्यवहृतिक्षमः ।
अपाणिपादो जवनो ग्रहीता सर्वशक्तियुक् ॥ ५९ ॥

अणोरणीयान्दुर्लक्षो महीयान्महतः स्फुटः ।
इत्यात्मानं शास्त्रदृष्ट्या पश्यतो नास्ति दुःखिता ॥ ६० ॥

एवमित्युक्तप्रकारान् "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः" इत्यादीनातृतीयाध्यायसमाप्तिमन्त्रान् व्याचक्षाण आह । सर्वेत्यादि चतुष्केण ॥५८॥५९॥६०॥

स्थूलदर्शी तु साकारे सार्वात्म्ये वासिते सति ।
निराकारं ततो बोद्धुं प्रार्थयेतैश्वरं वपुः ॥ ६१ ॥

तृतीयाध्यायव्याख्यां निगमयति । स्थूलेति ॥ ६१ ॥

य एको वर्ण इत्यादि स्तुवन्मन्त्रचतुष्टयात् ।
प्रार्थ्याथ मायाजीवौ च बद्धमुक्तौ विचारयेत् ॥ ६२ ॥

चतुर्थाध्यायं व्याचिख्यासुः "य एको वर्णो बहुधा शक्तियोगा" दि-त्यादेः "यतो जातानि भुवनानि विश्वे" त्यन्तस्य मन्त्रचतुष्टयस्य तात्पर्यमाह । य एक इति । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति मन्त्रं व्याख्यातुम-वतारयति अथमायाजीवाविति ॥ ६२ ॥

लोके काचिदजा वर्णत्रयोपेता बहुप्रजाः ।
सृजते तामजः कश्चित्सेवतेऽन्यस्तु तां त्यजेत् ॥ ६३ ॥
तेजोऽवन्नात्मिका तद्वन्माया वर्णैस्त्रिभिर्युता ।
आसक्तो भजते मायां विरक्तस्तु विमुञ्चति ॥ ६४ ॥

मन्त्रं व्याचष्टे । लोक इत्यादिना द्विकेन । अजाशब्दस्तेजोवन्नात्मिकायां मा-यायां गौण इति मुख्याजावृत्तं तत्राभिनीतम् ॥ ६३ ॥ ६४ ॥

विरक्तः कर्त्रकर्तारौ विचिन्त्यात्स्वस्य विग्रहे ।
चिच्छायावानहङ्कारः कर्ता चिद्भाति केवला ॥ ६५ ॥
पादपे क्षुधितः पक्षी फलमत्तीतरः पुनः ।
पश्यन्नास्ते तथा विद्याद्भोक्तृतत्साक्षिणावुभौ ॥ ६६ ॥
चिच्छायागतभोक्तृत्वं साक्षिण्यारोप्यते भ्रमात् ।
अनीश्वरोऽयं साक्षीति शोको भवति मोहतः ॥ ६७ ॥
नित्यतृप्तेश्वरत्वं तत्साक्षितत्त्वं तदीक्षते ।
यदा तदा वीतशोको महिमानमवाप्नुयात् ॥ ६८ ॥

"द्वासुपर्णा सयुजा सखाये"त्यादिं "महिमानमिति वीतशोक" इत्यन्तं षष्ठं सप्तमञ्च मन्त्रं व्याचष्टे । विरक्त इत्यादिना चतुष्केण । अकर्तृपदार्थमाह । चिद्भाति केवलेति ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

ऋचो देवाश्च शब्दार्थो यस्मिन्नात्मनि कल्पिताः ।
यस्तं न वेद तस्यर्चा किं स्याद्यो वेत्त्यसौ कृती ॥६९॥

"ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः । यस्तं न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते" इत्यस्यार्थं वर्णयति ऋच इति॥६७॥

छन्दांसि यज्ञानन्यच्च मायावी सृजतेऽखिलम् ।
जीवात्मना प्रविश्यास्ते सन्निरुद्धो वपुष्ययम् ॥ ७० ॥

"छन्दांसि यज्ञाः क्रतवो व्रतानि भूतंभव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इति मन्त्रं विवृणोति । छन्दांसीति । अन्यदिति क्रत्वादिकमित्यर्थः ॥ ७० ॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ ७१ ॥

माययेति पूर्वमन्त्रगतस्य मायापदस्य व्याख्यानभूतं मन्त्रं व्याख्यानत्वेनोपन्यस्यति । मायामिति । तस्य महेश्वरस्य ॥ ७१ ॥

ईशो यः स्वत एकः सन् जीवाकारैरनेकशः ।
योनिं योनिं व्रजत्येतमीशं ज्ञात्वा न संसरेत् ॥ ७२ ॥

"यो योनि" मित्यादिं "शान्तिमत्यन्तमे"तीत्यन्तं व्याचष्टे । ईश इति॥७२॥

प्रतिबन्धस्य वाहुल्याद्यो देवेत्यादिमन्त्रतः ।
पुनः पुनर्भजेतेशं प्रतिबन्धनिवृत्तये ॥ ७३ ॥

"यो देवानां प्रभवश्चोद्भवश्च" त्यादे "मृत्युपाशांश्छिनत्ति" इत्यन्तस्यार्थं यति प्रतिवन्धस्येति ॥ ७३ ॥

अदृष्टप्रतिबन्धो यो निवर्त्यं भजनेन तम् ।
दृष्टो यः प्रतिबन्धस्तं विचारेण जयेत्पुनः ॥ ७४ ॥

"घृतात्परमण्डमिवातिसूक्ष्म" मित्यादि "य एतद्विदुरमृतास्ते भवन्ती" न्तं व्याचिख्यासुर्भूमिकामारचयति । अदृष्टेति । भजनेनेति । अस्य मन्त्र त्यादिः ॥ ७४ ॥

सूक्ष्मेभ्यः परमाणुभ्योऽप्यतिसूक्ष्मो न लक्ष्यते ।
वहिर्मुखैः स्वतः सोयं विश्वं व्याप्यावतिष्ठते ॥ ७५ ॥

मन्त्रं व्याचष्टे सूक्ष्मेभ्य इत्यादित्रिकेण ॥ ७५ ॥

जगतः पालनेनायमस्तीत्यादौ विबुध्यताम् ।
ब्रह्मर्षयो देवताश्च योगेनैतं विजानते ॥ ७६ ॥
क्षीरे घृतनिमित्तं यत्सारं तद्धीमतेक्ष्यते ।
तथा वृत्तिनिरोधिन्या सूक्ष्मं वस्तु धियेक्ष्यताम् ॥७७॥

अयमात्मा । एतमात्मानम् ॥ ७६ ॥ ७७ ॥

दिवारात्रिस्तमश्चान्यद्यस्मिन्नास्ति न किंचन ।
नोर्ध्वं न तिर्यक्तद्वस्तु न दृष्टान्तोऽस्य विद्यते ॥७८॥

"यदा तमस्तं न दिवा न रात्रि" रित्यादि "यस्य नाम महद्यश" इ मन्त्रद्वयं व्याचष्टे । दिवेत्यादि । अस्य आत्मनः ॥ ७८ ॥

दृग्गोचरे तस्य रूपं नास्त्यतः कोऽपि नेक्षते ।
अजात इति मन्त्राभ्यामन्तर्दृष्ट्या भजेत तम् ॥ ७९ ॥

"न संदृशे तिष्ठति रूपमस्ये" त्यादिमन्त्रं विवृणोति । दृग्गोचर इति र्द्धेन । "अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यत" इत्यादि "सदमित्वा ह" त्यन्तं चतुर्थाध्यायावसानवृत्ति मन्त्रद्वयं व्याचष्टे । अजात इत्युत्तरार्द्धेन ॥

पुनश्चैवं विवेक्तव्यं विद्याविद्ये निजात्मगे ।
अविद्यया बध्यतेऽसौ विद्यया तु विमुच्यते ॥ ८० ॥

पञ्चमाध्यायं व्याचिख्यासुर्भूमिकामारचयति। पुनरिति ॥ ८० ॥

अविद्याकल्पितोपाधिभेदादीशत्वजीवते।
चैतन्यस्य भवेतां ये कथ्येते ते क्रमादिह ॥ ८१ ॥

ते ईशत्वजीवत्वे। इह पञ्चमाध्याये ॥ ८१ ॥

हिरण्यगर्भमुत्पन्नमादौ ज्ञानैर्बिभर्ति यः।
एकैकमन्तःकरणं बहुधा विकरोत्ययम् ॥ ८२ ॥
अधश्चोर्ध्वं दिशः सर्वा भ्राजतेऽसौ प्रकाशयन्।
भारं वहेद्यथाऽनड्वाञ्जगद्भारं वहेत्तथा ॥ ८३ ॥
यो भावान् क्षीरबीजादीन्दधिवृक्षादिरूपतः।
परिणामं नयेत्सोयं गुणास्त्रीन्विनियोजयेत् ॥ ८४ ॥

"द्वे अक्षरे ब्रह्मपरे त्वनन्ते" इत्यादि "तद्वेद गुह्योपनिषत्सु गूढ" मित्यन्तं मन्त्रजातं व्याचष्टे। हिरण्येत्यादिचतुष्केण ॥ ८२ ॥ ॥ ८३ ॥ ॥ ८४ ॥

अविद्याकृतमीशत्वं तदिदं स्पष्टमीरितम्।
वेदगुह्योपनिषदा तस्य तत्त्वमुदीरितम् ॥ ८५ ॥

वेदगुह्योपनिषदा यदीश्वरस्यतत्त्वमुदीरितम् तन्मया स्पष्टीकृतमित्याह। अविद्येति ॥ ८५ ॥

अविद्याकृतजीवत्वमथ स्पष्टमुदीर्यते।
सत्त्वं रजस्तमश्चेति गुणैर्जीवः समान्वितः ॥ ८६ ॥

"गुणान्वयो यः फलकर्मकर्ता" इत्यादि "सचानन्त्याय कल्प्यते" इत्यन्तं मन्त्रजातं व्याचष्टे। अविद्येत्यादिना चतुष्केण। सत्त्वमित्याद्युत्तरार्द्धेन गुणान्वय इत्येतद्व्याख्यातम् ॥ ८६ ॥

स फलार्थं कर्म कुर्याद्भुङ्क्ते तस्यैव तत्फलम्।
दक्षिणोदगधोमार्गैः संसरत्येष कर्मभिः ॥ ८७ ॥

स इति जीव इत्यर्थः । तस्यैव जीवस्यैव फलस्य दक्षिणादिमार्गैः प्राप्
त्वमाह । दक्षिणेत्युत्तरार्द्धेन ॥ ८७ ॥

अङ्गुष्ठमात्रहृन्निष्ठः स्वप्रकाशः स सूर्यवत् ।
अहङ्कारोपाधिकः सन् संकल्पान् कुरुते बहून् ॥ ८८ ॥

अङ्गुष्ठमात्र इति श्रौतपदस्य व्याख्यानम् । अङ्गुष्ठमात्रहृन्निष्ठ इति अङ्गुष्ठ
मात्र यद्धृदयं तत्रोपलभ्यमानत्वात् अङ्गुष्ठमात्र इति श्रुत्योक्तमितिभावः । "
चानन्त्याय कल्प्यते" इत्येतद्व्याचष्टे । अहमित्युत्तरार्द्धेन ॥ ८८ ॥

बुद्धिवृत्त्यात्मचैतन्यसंयोगादेष चेतनः ।
स सङ्कोचविकाशाभ्यां तैस्तैर्देहैः समो भवेत् ॥ ८९ ॥

"न स्त्री न पुमानेष नचैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन
युज्यते ।" इत्यादीनध्यायसमाप्तिगतान् मन्त्रान्व्याचष्टे बुद्धिवृत्तीत्यादिना ॥ ८९ ॥

नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स कथ्यते ॥ ९० ॥

उक्तमेवार्थं विशदयति । नैवेति ॥ ९० ॥

अविद्याधीनजीवेशावुक्तौ यत्तत्त्वमेतयोः ।
तद्विद्यासिद्धये कालस्वभावादीन्विचारयेत् ॥ ९१ ॥

पञ्चमाध्यायं व्याख्याय षष्ठाध्यायं व्याख्यातुमुपक्रमते । अविद्येति ॥ ९१ ॥

मूलकारणतैतेषां न युक्ता जनिमत्त्वतः ।
देवस्य महिमा योऽसौ मायाख्यस्तस्य युज्यते ॥ ९२ ॥

"स्वभावमेके कवयो वदन्ति" इत्यादिं "भ्राम्यते ब्रह्मचक्र" मित्यन्तं
न्त्रं विवृणोति । मूलेति । एतेषां कालस्वभावादीनां । तस्य मायाख्यस्य मूलका
णता युज्यते इति योजना ॥ ९२ ॥

तन्महिम्नावृतं सर्वं कालं च कलयत्यसौ ।
भूतभव्यादिरूपेण भिन्नोऽसौ जायते ततः ॥ ९३ ॥

"येनावृतं नित्य" मित्यादि "कालेन चैवात्मगुणैश्च सूक्ष्मै" रित्यन्तं मन्त्रद्वयं व्याचष्टे । तदित्यादिचतुष्केण तन्महिम्ना देवस्य मायारूपेण महिम्ना । असौ देवः भिन्नोसौ देवादन्यः कालः । ततो—मायाख्यान्महिम्नः ॥ ९३ ॥

जलाग्न्यादिसमुत्पत्तौ स्वभावः सह जायते ।
यदृच्छा पञ्चभूतानि प्रधानं चेति मायिकम् ॥ ९४ ॥

जलाग्न्याद्युत्पत्तिसमये जलादिना सहैव शीतस्पर्शोष्णादिरूपः स्वभावो जायते तेन युगपज्जनिमत्त्वं प्रकृतस्वभावपदबोध्यतावच्छेदकं दर्शितम् । यदृच्छादीनामपि जायते इत्यनेनान्वयः काकतालीयन्यायस्थलीयस्यावर्कितोपनिपतितस्य कार्यस्योत्पादनशक्तिर्यदृच्छातत्त्वं प्रकृतयदृच्छापदप्रवृत्तिनिमित्तं बोध्यम् । प्रधानं मायायाः प्रथमं कार्यमिति । मायिकमिति । कालादिसर्वं मायाजन्यमित्यर्थः ॥ ९४ ॥

मूलकारणताऽस्त्येव मायाया जन्यभावतः ।
अवान्तरं कारणत्वं कालादीनां भवत्विदम् ॥ ९५ ॥

फलितं निगमयति । मूलेति । जन्यभावतः कार्य्यत्वात् कालादीनामवान्तरं कारणत्वमिति योजना ॥ ९५ ॥

एकं प्रधानं द्वे पुण्यपापे सत्त्वादिकास्त्रयः ।
अष्टौ प्रकृतयो भूमिमुख्यास्तैर्जायते वपुः ॥ ९६ ॥

श्रौतान्येकद्वित्रिपदानि पूर्वार्द्धेनाष्टपदमुत्तरार्द्धेन व्याचष्टे एकमिति । मायामहत्तत्त्वाहङ्कारैः सहितं भूतपञ्चकमष्टपदार्थमाह । अष्टाविति एतेषां कार्यमाह । तैरिति प्रधानादिभिरित्यर्थः ॥ ९६ ॥

यो मायावी स सर्वेषामादिः कालत्रयात्परः ।
विश्वरूपं स्वचित्तस्थं तमुपास्य प्रसादयेत् ॥ ९७ ॥

"आदिः स संयोगनिमित्तहेतु"रित्यादिं पञ्चमं मन्त्रं व्याचष्टे । य इति ॥९७॥

संसारवृक्षात्कालादिशाखायुक्तात्परो ह्ययम् ।
धर्मावहं पापनुदं स्वचित्तस्थं तमीक्षताम् ॥ ९८ ॥

"स वृक्षकालाकृतिभिः परोन्य" इत्यादिं षष्ठं मन्त्रं व्याचष्टे । संसारेति ॥९८॥

विष्णवादीनामीश्वराणां परमं तं महेश्वरम् ।
देवानां परमं देवं विदामोऽस्य प्रसादतः ॥ ९९ ॥
न तस्य वपुरक्षं च विद्यते तत्समोऽपि न ।
परास्य शक्तिर्विविधा बलज्ञानक्रियादिका ॥ १०० ॥

"तमीश्वराणां परमं महेश्वर" मित्यादि "ज्ञानबलक्रियाचे" त्यन्तं मन्त्रद्वयं विवृणोति । विष्णवादीनामित्यादिपद्यद्वयेन ॥ ९९ ॥ १०० ॥

सोऽधिष्ठानतया सर्वकारणं करणाधिपाः ।
ये जीवा अधिपस्तेषां नान्योऽस्याधिपतिर्भवेत् ॥ १ ॥

"न तस्य कश्चित्पतिरस्तिलोके" इत्यादिं नवमं दशमञ्च मन्त्रं व्याचष्टे स इत्यादिना सार्धेन पद्येन । करणाधिपा ये जीवा इत्यन्वयः ॥ १ ॥

यस्तन्तुनाभ इत्यादिमन्त्रेण प्रार्थयेत्ततः ।
एको देवः सर्वदेहे गूढो व्यापी च सर्वतः ॥ २ ॥
सर्वप्राण्यन्तरात्माऽसावध्यक्षः सर्वकर्मणाम् ।
सर्वभूताश्रयः साक्षी निर्गुणः शुद्धचिद्वपुः ॥ ३ ॥
ये तु पश्यन्ति तं धीरास्तेषां स्याच्छास्वतं सुखम् ।
नित्यं तं चेतनं बुद्ध्वा प्राप्नुयाच्छान्तिमक्षयाम् ॥ ४ ॥
अशक्यं यत्सुखं वक्तुं तदेतदनुभूयते ।
इति तत्त्वविदः प्राहुरुपायः श्रूयतामिह ॥ ५ ॥

"एको देवः सर्वभूतेषु गूढ" मित्यादि "सांख्ययोगाभिगम्यंज्ञात्वा देवं मुच्यते सर्वपाशै" रित्यन्तं मन्त्रत्रयं विवृणोति । एको देव इत्यादिना सार्धचतुष्केण ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

विवेकयोगस्त यद्बोधहेतुस्तत्त्वविवेकतः ।
यथाशास्त्रं विविच्यानुभवन्ति दृढयोगतः ॥ ६ ॥

उपायमाह । विवेकयोग इति । तद्बोधेति । 'एको देव" इत्यादिमन्त्रोक्त-चेतनबोधेत्यर्थः । तत्त्वविवेकत इत्युत्तरान्वयि ॥ ६ ॥

सूर्यचन्द्रादयः सर्वभासका अपि तत्सुखम् ।
नैव भासयितुं शक्ता भास्यन्ते किन्तु तेन ते ॥ ७ ॥

इदानीं "न तत्र सूर्यो भाति" इत्यादि "नान्योहेतुर्विद्यते ईशनाये" त्य-न्तं मन्त्रचतुष्कं संक्षेपतो व्याचष्टे । सूर्येत्यादिपद्यचतुष्केण । तत्सुखमात्मसुखम् । ते न मन्त्रोक्तात्मना । ते सूर्यादयः ॥ ७ ॥

चित्सुखात्मा स्वप्रकाशो भासते प्रथमं स्वयम् ।
सूर्यादयस्तस्य चिता भासन्ते न चिताऽन्यया ॥ ८ ॥

तस्य चित्सुखात्मनः । मन्त्रस्थभासेत्यस्य व्याख्या चितेति ॥ ८ ॥

एकाकी सूर्यवद्योऽयं सर्वं व्याप्नोति भासयन् ।
तं यो वेत्ति स एवेशो नास्त्यन्यो हेतुरीशतः ॥ ९ ॥

योऽयं चित्सुखात्मा ॥ ९ ॥

ज्ञान्येव विश्वकृत्काल कालः सत्त्वादिभासकः ।
प्रधानजीवयोः स्वामी हेतुः संसारमोक्षयोः ॥ ११० ॥

"ज्ञः कालकाल" इत्याद्यंशं व्याचष्टे । ज्ञान्येवेति ॥११०॥

विद्याफलमिदं वाह्यधीयोगं स्यात्कदाचन ।
तद्धीशान्त्यै प्रार्थयेत तं यो ब्रह्माणमीश्वरम् ॥ ११ ॥

इदानीं "यो ब्रह्माणं विदधाति पूर्वं" मित्यादि "दग्धेन्धनमिवानल" मि-त्यन्तं मन्त्रद्वयं व्याख्यातुं भूमिकामारचयति । विद्याफलमिति । तद्धीति वाह्यविषयाया धियः शान्त्यै इत्यर्थः । तद्धि इत्यपपाठः ॥ ११ ॥

हिरण्यगर्भं सृष्ट्यादौ वेदांस्तस्मै ददाति यः ।
तं भासकं स्वात्मधियो मुमुक्षुः शरणं भजे ॥ १२ ॥

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
भजे स्वयं भासमानं तं दग्धेन्धनवह्निवत् ॥ १३ ॥

उक्तमन्त्रद्वयं व्याचष्टे । हिरण्यगर्भमित्यादित्रिकेण ॥ १२ ॥ १३ ॥

निष्कलोऽवयवैर्हीनो हेतुहीनो निरञ्जनः ।
निरिन्धनाग्निसाम्यं तु मायातत्कार्यवर्जनात् ॥ १४ ॥

दग्धेन्धनवह्नि साम्यं विशदयति । निरिन्धनेत्युत्तरार्धेन ॥ १४ ॥

तादृशं परमात्मानं विदित्वैव विमुच्यते ।
विना ज्ञानं न मुक्तिः स्यादितरैः कोटिसाधनैः ॥ १५ ॥

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति—।" इति विंशमन्त्रं व्याचष्टे । तादृशमित्यादिद्विकेन ॥ १५ ॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय मुक्तिर्न त्वास्ति तद्द्वयम् ॥ १६ ॥

तद्द्वयमिति । चर्मवदाकाशवेष्टनं देवविज्ञानं विना मुक्तिरित्येतद्द
त्यर्थः ॥ १६ ॥

तपसा देवमाराध्य श्वेताश्वतरनामकः ।
अन्त्याश्रमिभ्यः प्रोवाच ब्रह्मविद्यामृषिप्रियाम् ॥ १७ ॥

"तपः प्रभावाद्देवप्रसादाच्चे"त्यादिमेकविंशं मन्त्रं विवृणोति । तपसेति ॥ १७ ॥

वेदान्ते परमं गुह्यं नानोपाख्यानवर्णितम् ।
नाऽप्रशान्ताय दातव्यं देयं शिष्याय धीमते ॥ १८ ॥

"वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् । नाप्रशान्ताय दातव्यं नाऽपुत्रायाशिष्याय वा ।" इति मन्त्रं व्याचष्टे । वेदान्त इति ॥ १८ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १९ ॥

उक्तमन्त्रनिगदव्याख्यानभूतं यस्य देव इत्यादिं मन्त्रमुपन्यस्यति । यस्येति ॥ १९ ॥

अन्तः प्रविष्टः शास्तेति योन्तर्यामी श्रुतीरितः ।
सोऽस्मान्मुख्यगुरुः पातु विद्यातीर्थमहेश्वरः ॥ १२० ॥

अन्तर्यामिस्वरूपविद्यातीर्थमहेश्वरगुरुकर्तृकरक्षणं श्वेताश्वतरोपनिषद्व्याख्यानान्तेप्रकाशकृत् प्रार्थयते । अन्तरिति ॥ १२० ॥

इति श्रीविद्यारण्यमुनिविरचितेऽनुभूतिप्रकाशे श्वेताश्वतरविवरणं नाम द्वादशोऽध्यायः ॥ १२ ॥

इति श्रीकाशीनाथकृतायां मितप्रकाशविवृतौ श्वेताश्वेतरप्रकाशविवरणं नाम द्वादशोऽध्यायः ॥ १२ ॥



## अथ त्रयोदशोऽध्यायः ।

काण्वो याजुषशाखायां नानाऽऽख्यानोपबृंहिताम् ।
ब्रह्मविद्यामुवाचेमां संग्रहेण ब्रवीम्यहम् ॥ १ ॥

बृहदारण्यकोपनिषदं संक्षेपतो व्याख्यातुं प्रतिजानीते । काण्व इति । तन्नामा ऋषिरित्यर्थः ॥ १ ॥

बृहदारण्यकप्रोक्तैर्विराट्सूत्राद्युपासनैः ।
स्याद्विराडादिरूपत्वं स विराडिह कथ्यते ॥ २ ॥

बृहदारण्यकीयतृतीयाध्यायस्थचतुर्थब्राह्मणं व्याख्यातुं पातनिकां करोति बृहदिति । इह तृतीयाध्यायस्य चतुर्थब्राह्मणे ॥ २ ॥

उपास्तेर्महिमा तेन भात्युपासनमिच्छतः ।
मुमुक्षुस्तु विराडादिदोषान्दृष्ट्वा विरज्यते ॥ ३ ॥

विराट्स्वरूपकथनेनोपासिसिषोरुपासनामहिमा भाति । ततः स तत्र प्रवर्तते मुमुक्षुस्तु न तत्र प्रवर्तते विराड्दोषदृष्ट्या विरक्तत्वादित्याह । उपास्तेरिति ॥ ३ ॥

अध्यायस्य तृतीयस्य चतुर्थब्राह्मणे श्रुतम् ।
वैराजं वपुरेतच्च शरीरान्तरकारणम् ॥ ४ ॥

श्रुतं वैराजं वपुरिति योजना एतच्च ब्रह्माण्डरूपं वैराजशरीरं तु । शरीरान्तरकारणमिति उक्तशरीरभिन्ननरादिशरीरेत्यर्थः ॥ ४ ॥

इदं नरगवाश्वादिवपुस्तत्सृष्टितः पुरा ।
आत्मासीत्पुरुषाकारो ब्रह्माण्डाख्यशरीरभृत् ॥ ५ ॥

"आत्मैवेदमग्र आसीत्पुरुषविध" इत्येतद्व्याचष्टे । इदमिति शरीरान्तरमित्यर्थः । तत्सृष्टितः उक्तशरीरसर्जनात् पुरुषविध इत्यस्य व्याख्या पुरुषाकार इति ॥ ५ ॥

प्रत्यग्रूपः पराग्रूपाद्व्यावृतोऽनुभवात्मकः ।
प्रथते यः स आत्मेति प्राहुरात्मविदो बुधाः ॥ ६ ॥

श्रुतिस्थात्मपदस्यार्थमाह । प्रत्यग्रूप इति ॥ ६ ॥

बहिर्मुखेन न ज्ञातं प्रत्यक्तत्त्वमतिं विना ।
यदज्ञातं परं तत्त्वं तद्भवेत्सर्वकारणम् ॥ ७ ॥

अज्ञानोपहितस्यात्मनः सर्वकारणत्वं न तु शुद्धस्येत्याह । बहिरिति ॥७॥

विराडपि ततो यज्ञे त्रैलोक्यात्मकदेहवान् ।
यथोक्तज्ञानकर्मभ्यामेवं प्रत्यग्विराडभूत् ॥ ८ ॥

ततोऽज्ञानोपहितायाश्चितः । ज्ञानेति । पूर्वकल्पसम्पादिताविशिष्टोपासनकर्मभ्यामित्यर्थः ॥ ८ ॥

स एष परमोप्यात्मा कोशपञ्चकधारणात् ।
संवृत्तः पुरुषाकारः कामाविद्याद्युपप्लुतः ॥ ९ ॥

परमोऽपीति । अस्य स्वत इत्यादिः । संवृत्त इति तकारद्वयघटितः पाठः साधुस्तस्यजात इत्यर्थः । अविद्यादीत्यादिना कर्मवासनादिग्राह्यं पुरुषाकारत्वोपपादकं कोशपञ्चकधारणम् ॥ ९ ॥

सोऽनुवीक्ष्यात्ममोहोत्थं वैराजं रूपमात्मनः ।
नापश्यदपरं किञ्चित्सोहमस्मीत्यथाऽभ्यधात् ॥ १० ॥

"सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोहमस्मीत्यग्रे व्याहरत् ततोहंनामाभवदि"त्येतद्विवृणोति । स इत्यादिना किञ्चिदधिकसपादेन पद्येन ॥ १० ॥

अहमित्येव नामास्य सम्पन्नं तेन लौकिकाः ।
तत्पृष्टाः स्वं स्वमात्मानमहमित्यभिचक्षते ॥ ११ ॥

"तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवती"त्येतस्यार्थं वर्णयति । तेनलौकिका इत्यादिना किञ्चिदूनपद्यचतुष्केण । तेनेति । येन कारणभूते विराज्येवं वृत्तं तेनेत्यर्थः । तत्पृष्टा इति तच्छब्दोऽत्र प्रसिद्धार्थस्तदर्थश्च प्रश्नक्रियायामभेदान्वयी कोऽसीति प्रसिद्धप्रश्नविषयीभूता इत्यर्थः ॥ ११ ॥

कोशपञ्चकयुक्तस्य प्रत्यक्तत्त्वस्य नाम तत् ।
विराजा कृतमित्ये तत् सर्वसाधारणं मतम् ॥ १२ ॥

तदिति अहमितिपदमित्यर्थः ॥ १२ ॥

असाधारणदेहस्य तत्तात्पित्रादिना कृतम् ।
देवदत्तादिकं नाम जघन्यं पूर्वनामतः ॥ १३ ॥

पूर्वनामतः अहमिति नामतः ॥ १३ ॥

कस्त्वमित्येष पृष्टः सन्नादावहमिति ब्रुवन् ।
पश्चाज्जघन्यं नामेदं वक्ति जिज्ञासवे जनः ॥ १४ ॥

जघन्यत्वं स्पष्टयति । कस्त्वमिति ॥ १४ ॥

चिदेकरस आत्मैव कश्मले कोशपञ्चके ।
एकतामभिसम्पन्नोऽहङ्कारोत्पत्तिमात्रतः ॥ १५ ॥

चिदेकरसस्यात्मनोऽहङ्कारोत्पत्त्या कोशपञ्चकतादात्म्याध्यासाद् विरा[illegible]
मित्याह । चिदिति ॥ १५ ॥

बहवोऽतीतकल्पेऽन्य आसन्यद्यप्युपासकाः ।
तथापि भावनाधिक्यादेक एव विराडभूत् ॥ १६ ॥

बहुषूपासकेषु सत्स्वपि भावनाधिक्यादेक एव सृष्ट्यादौ विराड्भवत्[illegible]
ह । बहवइति ॥ १६ ॥

निःशेषेणासुरं पापं दग्धवान् बहुजन्मभिः ।
ततो विराडभूदन्योऽप्येवं दग्ध्वा भवेद्विराट् ॥ १७ ॥

"स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान्पाप्मन औषत् तस्मात्पुरुष ओषति
स तं योऽस्मात्पूर्वो बुभूषति य एवं वेदेती" त्येतद्व्याचष्टे । निःशेषेणेति ॥ १७ ॥

दग्धपापोऽप्यनात्मज्ञो देहादावभ्यमन्यत ।
ततः स्वनाशमाशङ्क्य सोऽबिभेदस्मदादिवत् ॥ १८ ॥

"सोऽबिभेत्तस्मादेकाकी बिभेती" त्यस्यार्थं वर्णयति । दग्धेति ।
देहादावात्माभिमानात् । स विराट् ॥ १८ ॥

स्रज्यहिं कल्पयित्वास्ते तद्भयादाकुलेन्द्रियः।
एवं नश्वरदेहादि प्रतीच्यारोप्य कम्पते ॥ १९ ॥

इममर्थं दृष्टान्तेन विशदयति। स्रजीति। तद्भयात्स्रजिकल्पितसर्पभयात् दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति एवमिति। प्रतीच्यारोप्य नश्वरदेहादिकं प्रत्यञ्चमभिमत्य ॥ १९ ॥

आलोचयेत्स्रजस्तत्त्वं भीतिध्वस्त्यै यथा नरः।
विराडालोचयत्तद्वत्प्रतीचस्तत्त्वमादरात् ॥ २० ॥

"सहायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति। तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवती" त्येतत्सदृष्टान्तं व्याचष्टे। आलोचयेदित्यादिनवकेन ॥ २० ॥

आलोचितं यथा तत्त्वमपास्तध्वान्तवद्भवेत्।
अनन्यानुभवं साक्षाद्ददर्शैकात्म्यमात्मनि ॥ २१ ॥

अपास्तध्वान्तवदिति। नष्टाज्ञानकमित्यर्थः। अनन्यानुभवमिति स्वप्रकाशमित्यर्थः। इदमैकात्म्यमित्यस्य विशेषणम् ॥ २१ ॥

प्रत्यग्याथात्म्यविज्ञानशिखाप्लुष्टमहातमाः।
आत्माशेषपुमर्थोऽयं सोऽमन्यत ततो विराट् ॥ २२ ॥

प्रत्यग्याथात्म्यविज्ञानशिखया प्लुष्टं दग्धं महत्तमोऽज्ञानं यस्येति पूर्वार्धार्थः ॥ २२ ॥

देहेन्द्रियमनोबुद्धि भावाभावादिसाक्षिणः।
प्रतीचोऽन्यत्किमप्यत्र नास्ति कस्माद्बिभेम्यहम् ॥ २३ ॥

देहेन्द्रियमनोबुद्धीनां भावाभावावादी यस्य तस्य साक्षी यः प्रत्यङ् ततोऽन्यदिति योजना। आदिशब्दात् वृत्तितद्भावाभावसन्ध्यादिकं गृह्यते ॥ २३ ॥

अन्वयव्यतिरेकभ्यां स्वमात्मानं यदा पुमान्।
प्रतीच्येवानुसन्धत्ते ब्रह्मास्मीति तदेक्षते ॥ २४ ॥

अनुसन्धत्ते ध्यायति । तदा ब्रह्मास्मीति ईक्षते साक्षात्करोतीति योजना ॥२४॥

**प्रत्यग्दृष्ट्या तदज्ञानं न तज्जं चेक्षते स्वतः ।**
**ब्रह्मप्रतीचोरैकात्म्यात्तद्दूरीकृत्य गर्जति ॥ २५ ॥**

प्रत्यग्दृष्ट्या प्रत्यक् साक्षात्कारेण । तदज्ञानं । प्रत्यग् विषयकमज्ञानं । तज्जञ्च उक्ताज्ञानजन्यं वियदादिकं च । स्वतः स्वरूपेण । न पश्यति ब्रह्मप्रतीचोः स्वत ऐकात्म्यदर्शनात् । तदुक्ताज्ञानं तत्कार्यञ्च दूरीकृत्य प्रविलाप्य गर्जतीत्यर्थः॥२५॥

**प्रत्यक्ता ब्रह्मणो रूपं ब्रह्मता चात्मनः स्वतः ।**
**एवं सति कुतो मे भीरिति विद्वाँस्त्रपायते ॥ २६ ॥**

लज्जितोऽपि स भवतीत्याह । प्रत्यक्तेति । स्वतो ब्रह्मणो रूपं प्रत्यक्ता स्वत आत्मनो रूपं ब्रह्मता । एवं सति कुतो मे भीरिति एवं त्रपायते विद्वानित्य-र्थः ॥ २६ ॥

**ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत ।**
**अतोऽवबोधादेवास्य भयं वीयाय सर्वतः ॥ २७॥**

"तत एवास्य भयं वीयाये"त्येतद्व्याचष्टे । ब्रह्मेति । तत एवेत्यस्य व्याख्या-पादोनं पद्यम् । अस्य विराजः ॥ २७ ॥

**कस्मादभेष्यदीशोऽयं द्वितीयात्खलु तद्भयम् ।**
**द्वितीयो नेश्वरस्यास्ति ततो निर्भय एव सः ॥ २८ ॥**

"कस्मादभेष्यत् द्वितीयाद्वै भयं भवती"त्येतद्व्याचष्टे । कस्मादिति । किं शब्दो द्वितीयः क्षेपे । आक्षेपं विशदयति । द्वितीयादित्यादिना । फलितं तत इत्यादि । द्वितीयाभावाद्भयरहित एव ईश्वर इत्यर्थः ॥ २८ ॥

**ननु प्रजापतेरैक्यदर्शनं कुत उद्बभौ ।**
**शास्त्राचार्यादितद्धेतोरसत्त्वात्तदसंभवः ॥ २९ ॥**

शङ्कते नन्विति । तद्धेतोरैक्यज्ञानहेतुशास्त्राचार्यादेः । तदसम्भवः ऐक्यद-र्शनासम्भवः ॥ २९ ॥

उच्यते महता पुण्यपुञ्जपाकेन तत्पदम् ।
वैराजं लब्धवाँस्तेन ज्ञानमस्योद्बभौ स्वतः ॥ ३० ॥

समाधिं प्रतिजानीते । उच्यत इति । तत्प्रसिद्धं वैराजं पदमिति योजना । तेन महता पुण्यपुञ्जविपाकेन । अस्य विराजः । स्वत इति अस्य व्यावर्त्यं लोकप्रसिद्धशास्त्राचार्यादि ज्ञानकारणम् ॥ ३० ॥

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यञ्चैव धर्मश्च सहसिद्धमिति स्मृतिः ॥ ३१ ॥

शास्त्राचार्यादिज्ञानहेतुं विना तस्यैक्यदर्शने स्मृतिं प्रमाणयति । ज्ञानमिति । स्मृतौ सह सिद्धमित्यस्याग्रे चतुष्टयमिति पाठः ॥ ३१ ॥

एवं सति स्वयंभातवेदत्वाद्बुद्धवान् स्वयम् ।
बोधध्वस्तात्ममोहस्याप्यरतिः समजायत ॥ ३२ ॥

"स वै नरेमे" इत्येतद्व्याचष्टे । एवमिति । स्वयंप्रतिभातवेदत्वं बोधप्रयोजकम् ॥ ३२ ॥

स्वाभीष्टवस्त्वलाभेन चेतसो याऽनवस्थितिः ।
अरतिः सा सिसृक्षोः सा वस्त्वलाभादजायत ॥ ३३ ॥

अरतिपदार्थं दर्शयन्नुक्तार्थं विशदयति । स्वेति । सा निरुक्ताऽरतिः ॥ ३३ ॥

ननु विज्ञानविध्वस्ताविद्यायाः कुतोऽरतिः ।
ध्वस्तान्ध्यस्यापि सा चेत्स्यादनिर्मोक्षः प्रसज्यते ॥ ३४ ॥

शङ्कते । नन्विति । नन्वविद्यानाशेऽपि अरतिः स्यादित्याशङ्कामनिर्मोक्षप्रसञ्जनेन निरस्यति । ध्वस्तान्ध्यस्येत्यादिना ॥ ३४ ॥

अप्युत्पन्नात्मबोधानामाधिकारासमाप्तितः ।
अरत्यादि यथा दृष्टं तथैव स्यात्प्रजापतेः ॥ ३५ ॥

प्रबलप्रारब्धकर्मणाऽरत्याभासं प्रजापतौ सम्भावयति । अपीति । उत्पन्नात्मबोधानामपीन्द्रादीनामधिकारासमाप्तेर्यथाऽरत्यादि शास्त्रे दृष्टं तथैव प्रजापतेस्तत्सम्भवतीत्यर्थः ॥ ३५ ॥

अधिकारो यस्य यावान् भुक्ते भोगे स तावति ।
कुतो न मुच्यते मुक्तिप्रतिबन्धस्य संक्षयात् ॥ ३६ ॥

शङ्कतेऽधिकारइति । भोग इत्यर्थः । मुक्तिप्रतिवन्धस्य भोगप्रदकर्मणः ॥३६॥

सत्यामत्यात्मविद्यायां यो दोषो न निवर्तते ।
तेन दोषेणानुमेयोऽधिकारो विदुषामसौ ॥ ३७ ॥

समाधत्ते । सत्यामिति । यो दोषो भोगप्रदप्रारब्धकर्मरूपः । विदुषां ज्ञातसाक्षात्काराणां व्यासादीनाम् ॥ ३७ ॥

प्रबलारब्धवेगेन कामुकः सन्प्रजापतिः ।
एकं देहं स्वभोगार्थमसृजन्मिथुनात्मकम् ॥ ३८ ॥

"साद्वितीयमैच्छदि" त्यादि । "आपिपीलिकाभ्य" इत्यन्तं व्याचष्टे। प्रबले त्यादिना चतुष्केण ॥ ३८ ॥

तद्द्वेधाऽपातयद्देहमभूतां दम्पती उभौ ।
मनुः पुमान्वधूर्ज्ञेया शतरूपाऽत्र नामतः ॥ ३९ ॥

दम्पती स्त्रीपुरुषौ ॥ ३७ ॥

तयोः संभोगतो जाता मनुष्या दम्पती पुनः ।
नानादेहानगृह्णीतां ताभ्यां द्वन्द्वानि जज्ञिरे ॥ ४० ॥

तयोरिति मनुशतरूपयोरित्यर्थः । दम्पती इत्यत्य अगृह्णीतामित्यत्रान्वयः॥४०॥

गवाश्वरासभाजाविप्रमुखा आपिपीलिकम् ।
प्राणिनो मिथुनात्मानो जाताः कर्मानुसारतः ॥ ४१ ॥

मिथुनात्मानः स्त्रीपुरुषरूपाः ॥ ४१ ॥

मुखबाहूरुपादेभ्यो वह्नीन्द्रवसुभूमिकाः ।
देवता असृजद्ब्रह्मा चातुर्वर्ण्यनियामिकाः ॥ ४२ ॥

"अथेत्यभ्यमन्थत्समुखाच्चयोने र्हस्ताभ्यां चाग्निमसृजते" त्येतदुपलक्षणत्वेन विवृणोति । मुखेति । भूमिका इति भूमीरित्यर्थः ॥ ४२ ॥

तत्रेन्द्रादीन् भिन्नदेवान्मन्यन्ते यागभूमिषु।
कर्मिणस्तद्दसञ्ज्ञेयं विराडेवाऽखिला इमे॥ ४३॥

"तद्यदिदमाहुरमुं यजामुं यजेत्यादि "एषउह्येव सर्वे देवा" इत्यन्तं व्याचष्टे। तत्रेत्यादिद्विकेन॥ ४३॥

अविद्वदधिकारित्वात्कर्मणां भिन्नदेवताः।
उच्यन्तां कर्मकाण्डेन वस्तुतस्तु न तत्तथा॥ ४४॥

अविद्याकल्पिता अनेकदेवताः कर्मकाण्डविषयो न परमार्थभूता इत्याह। अविद्वदिति॥ ४४॥

विराजो जीवतामाहुः केचिदन्ये परात्मताम्।
उभयं युक्तमेवैतद्विवक्षाया विशेषतः॥ ४५॥

उभयं जीवत्वपरमात्मत्वद्वयम्॥ ४५॥

सोपाधिकविवक्षायां जीव एव विराड्भवेत्।
निरुपाधिविवक्षायां परमात्मैव नेतरः॥ ६॥

विवक्षाविशेषं विशदयति। सोपाधिकेति॥ ४६॥

वयमप्येवमेवेति यद्युच्येत तथास्तु तत्।
स्रष्टा विराड्भोक्तृवर्गं भोग्यमन्नमचीक्लृपत्॥ ४७॥

निरुपाधिविवक्षायां वयमपि परमात्मैवेति शङ्कामिष्टापत्त्या परिहरन् "अथ यत्किञ्चेदमार्द्रमि"त्यादि "तस्मादतिसृष्टि" रित्यन्तं व्याचष्टे। वयमित्यादिना द्विकेन।॥ ४७॥

पूर्वजन्मनि मर्त्यः सन्कृत्वाऽसौ ज्ञानकर्मणी।
अमृतानसृजद्देवान्नह्यते तन्महाद्भुतम्॥ ४८॥

असौ विराड्। ज्ञानेति उपासनेत्यर्थः। नह्यते वध्यते। अद्यत इति पाठे अन्नात्मनासृज्यत इत्यर्थः तच्छब्देन विप्रकृष्टां देवसृष्टिं परामृशति तदिति। तद्देवसर्जनं माहाद्भुतमाश्चर्यकरमित्यर्थः। अनेनातिसृष्टिपदं व्याख्यातम्॥ ४८॥

सृष्ट्वाऽखिलमयं देवमहमस्म्यखिलं जगत् ।
ईदृशो महिमा ज्ञेयः कृतयोर्ज्ञानकर्मणोः ॥ ४९ ॥

"अतिसृष्ट्यां ह्यस्यैतस्यां भवति य एवं वेदे"त्येतद्व्याचष्टे । सृष्ट्वेति । कश्चिदखिलं देवं सृष्ट्वा अखिलं जगदहमस्मीति चिन्तयति विहितं कर्म च करोति तस्य कृतयोर्ज्ञानकर्मणोर्विराड्विभूतिसदृशी विभूतिरित्यर्थः ॥ ४९ ॥

वर्णितोऽयं प्रयत्नेन ज्ञानकर्मफलोर्जितः ।
उपासितुः प्रवृत्त्यर्थं निवृत्त्यर्थं मुमुक्षितुः ॥ ५० ॥

इदानी "मात्मैवेदमग्र आसीदि" त्यादीनां षण्णां कण्डिकानां तात्पर्य वर्णित इत्यादिना पद्यत्रयोदशकेन । अयम्महिमा । ऊर्जित इति अधिक इत्यर्थः । मुमुक्षितुः मुमुक्षोः ॥ ५० ॥

सृष्ट्यैश्वर्ये स्वतन्त्रत्वं तत्कामी बहु मन्यते ।
दोषानेव विवेक्यत्र बहूनुत्प्रेक्षते धिया ॥ ५१ ॥

उक्तार्थमुपपादयति । सृष्ट्यैश्वर्य इति । तत्कामी सृष्ट्यैश्वर्यस्वातन्त्र्यकामी । अत्र सृष्ट्यैश्वर्यादौ । उत्प्रेक्षते उद्भावयति ॥ ५१ ॥

अविद्यापटसंवीतचक्षुषामियदेव हि ।
वैदिकं साधनं ज्ञेयं ज्ञानकर्मस्वभावकम् ॥ ५२ ॥

विवेकिनोऽत्र बहुदोषोत्प्रेक्षणं प्रपञ्चयति । अविद्येत्यादिना द्वादशकेन । अविद्यापटेन संवीतमाच्छादितं चक्षुर्येषां तेषामित्यर्थः ॥ ५२ ॥

तच्च कर्त्रादि सापेक्षं विरञ्च्यन्तफलप्रदम् ।
जन्मादिविक्रियाषट्कयुतं सातिशयं जडम् ॥ ५३ ॥

तच्च वैदिकं साधनं च । जन्मादिविक्रियाषट्कयुतत्वं जडत्वं च फल साधन आरोपितम् ॥ ५३ ॥

दुःखानि च विचित्राणि सन्त्येव बहुजन्मसु ।
अनेकक्लेशयुक्तेन दुर्लभं तपसा विना ॥ ५४ ॥

दुर्लभमिति । अस्य ज्ञानकर्मलक्षणं वैदिकं साधनमिति शेषः ॥ ५४ ॥

कथंचित्साधितेऽप्यस्मिन्परानन्दघनं प्रभुम् ।
अन्तर्भाव्य विराट्पिण्डे स्थातव्यं हि जुगुप्सिते ॥ ५५ ॥

कथञ्चिन्महता कष्टेन तपसेत्यर्थः । साधितेऽप्युत्पादितेऽप्यस्मिन्निरुक्तसाधने । जुगुप्सिते ग्लानिविषये विराट्पिण्डे परानन्दघनं परानन्दैकमूर्तिं प्रभुमन्तर्भाव्यनिरुक्तसाधनवता स्थातव्यमिति योजना ॥ ५५ ॥

न केवलं पिण्डवासस्तादात्म्यं चाभिमानतः ।
ततो भयं भक्षणाय पितुर्मुखविदारणात् ॥ ५६ ॥

केवलं विराट्शरीरे वासो न किन्तु तच्छरीरतादात्म्याभिमानाद्भयश्च भवतीत्याह—नेति । तत्सद्भावे भक्षणफलकं पितृकर्तृकं मुखविदारणं हेतुमाह । भक्षणायेत्यादि । तत इति । अभिमानप्रयुक्ततादात्म्यादित्यर्थः ॥ ५६ ॥

चाण्डालानां तु नेयं भीः किन्तु पन्नगजन्मनः ।
को भेदः स्याद्विराड्जन्मन्युरगात्पुत्रभक्षिणः ॥ ५७ ॥

चाण्डालानान्त्विति । तुशब्दोऽप्यर्थे । इयं भीरिति । भक्षणाद्भयमित्यर्थः । आगामिदुःखोत्प्रेक्षणं भयम् । पन्नगजन्मनः सर्पस्य । पुत्रभक्षिणः पुत्रभक्षकात् ॥ ५७ ॥

कृच्छ्राद्भये प्रशान्तेऽपि जग्राहाथारातिग्रहः ।
क्रियमाणे प्रतीकारे गर्दभादिशरीरता ॥ ५८ ॥

द्वितीयब्राह्मणगतं भक्षणाद्भयं वैराग्योपयोगीति तत्र विवेकिनो दोषोत्प्रेक्षणमभिधाय पुनश्चतुर्थब्राह्मणगतारतौ तस्य तदुत्प्रेक्षणमाह । कृच्छ्रादिति । कष्टादित्यर्थः । प्रतीकारे निवृत्तिहेतौ । गर्दभादिशरीरतेति । अस्य बहुदुःखप्रदा जातेति शेषः ॥ ५८ ॥

एकयोनौ सकृज्जातः क्लेशं सोढुं न शक्नुयात् ।
अनन्तयोनिष्वसकृज्जायमानस्य का कथा ॥ ५९ ॥

इममर्थं स्पष्टयति । एकेति ॥ ५९ ॥

निस्तरेद्विद्यया चेत्किं बकबन्धप्रयासतः ।
अथ विद्यामुपेक्ष्योर्ध्वं किं विद्यां प्रार्थयिष्यते ॥ ६० ॥

विराड् जन्मनि विद्याश्रुतेस्तया मुक्तिर्भविष्यतीति । तत्र तदुपेक्षणं गु...कामित्याशङ्क्य बकबन्धप्रयासन्यायेन परिहरति । निस्तरेदिति । अथ प्रारम्भे वि...मुपेक्ष्योर्ध्वं महता क्लेशेन विराड्जन्मसम्पाद्य विद्यां प्रार्थयिष्यते किं न प्रार्थयि... इत्युत्तरार्द्धार्थः ॥ ६० ॥

क्लेशेन महतोपास्य बहुयोनीः प्रविश्य च ।
विद्यान्वेषणतः श्रेय इदानीमेव वेदनम् ॥ ६१ ॥

एतदेव विशदयति । क्लेशेनेनि । विद्यान्वेषणतो विद्यामार्गणा... इदानीमेव विराड्जन्मसाधनसम्पत्तेः प्रागेव । वेदनं विद्या श्रेय इत्युत्तरार्द्धार्थः ॥...

एवं विचार्य बहुशस्तूर्णमेव मुमुक्षति ।
निवृत्तः सर्ववाह्यार्थात्प्रमेयं मातुमर्हति ॥ ६२ ॥

विवेकिनो निवृत्त्यर्थमित्युक्तमुपपाद्य निगमयति । एवमिति । मुमुक्षति ...थं मुक्तः स्यामितीच्छति । प्रमेयमैक्यम् । मातुं साक्षात्कर्तुम् ॥ ६२ ॥

अधिकारी साधितः स्यादेवं फलविचारतः ।
तेन प्रमातुं यद्योग्यं तदिदानीं निरूप्यते ॥ ६३ ॥

पूर्वोत्तरयोः संगतिंवदन् "तद्धेदंतर्ह्य व्याकृतमासीदि"ति—श्रुतिं ...ख्यातुं भूमिकामारचयति । अधीति । फलेकथिते तत्कामनावानधिकारी सिद्धो ...तीति पूर्वार्द्धार्थः । तेनाधिकारिणा । यत्प्रमातुं योग्यं तदिति योजना ॥ ६३ ॥

उपादेयस्य मेयस्य वाच्या सम्भावना यथा ।
हेयसंसारहेतुश्च वक्तव्यो यत्नतस्ततः ॥ ६४ ॥

मेयस्य जीवब्रह्मैक्यस्य । यथा सम्भावना वाच्या वक्तुमर्हा । तथा ...यः संसारस्तस्याज्ञानरूपो हेतुश्च यत्नतो वक्तव्यो वक्तुमर्हे इति तथा पदा...रेण योजना । ततस्तस्माद्धेतोरिदमुत्तरपद्यान्वयि ॥ ६४ ॥

संसाराख्यमहाव्याधेः किं मूलमिति चिन्त्यते।
तद्ध्वस्तये चिकित्सेयं तदा फलवती भवेत् ॥ ६५ ॥

चिन्त्यते विचार्यते। विचार फलमाह। तद्ध्वस्तये इति। निरुक्तं मूलं तदा परामृष्टम्। इयमुक्तविचारात्मिका। तदा उक्तध्वंस समये। फलवती उक्तध्वंसात्मकफलविशिष्टा ॥ ६५ ॥

स्वत आनन्दयाथात्म्येऽप्यबोधाद्दुःखसंप्लुतिः।
सोऽबोधोऽनर्थहेतुत्वान्निर्देष्टव्यश्चिकित्सितुम् ॥ ६६ ॥

सिद्ध इति सप्तम्यन्तं पदमध्याहृत्य स्वतः सिद्धेऽपीति योजना कार्या। अबोधादज्ञानात्। चिकित्सितुं निवर्तयितुम् ॥ ६६ ॥

अबुद्धमात्मनस्तत्त्वं प्रमातुं योग्यमागमैः।
निर्देष्टव्यं तदप्यत्र संभावयितुमञ्जसा ॥ ६७ ॥

अबुद्धमज्ञानविषयीभूतं। तत्त्वं जीवब्रह्मैक्यरूपम्। आगमैर्वेदवाक्यैः प्रमातुं योग्यमित्यन्वयः। तदपि निरुक्तात्मतत्त्वमपि। अञ्जसा सुखेन सम्भावयितुं निर्देष्टव्यम् अत्रेति चतुर्थब्राह्मण इत्यर्थः ॥ ६७ ॥

तमबोधं तच्च मेय मव्याकृतगिरा श्रुतिः।
निरदिक्षच्छ्रुतिः सा तु न्यायेनात्र विचार्यते ॥ ६८ ॥

तमबोधमात्मतत्त्वविषयकमज्ञानम्। तच्चात्मतत्त्वलक्षणं च। गिरेति—शब्देनेत्यर्थः। श्रुतिः तद्धेदमित्याद्यात्मिका ॥ ६८ ॥

तद्धेदं तर्ह्यविस्पष्टमासीदव्याकृताभिधम्।
इत्येतस्मिन् श्रौतवाक्ये पदार्थस्तावदीर्यते ॥ ६९ ॥

उक्तां विचारणीयां श्रुतिमर्थतः पठन् वाक्यार्थबोधे पदार्थबोधस्य हेतुत्वात् प्रथमं पदार्थं वर्णयितुं प्रतिजानीते तद्धेदमिति ॥ ६९ ॥

अज्ञानात्मन्यशेषेण लीनं बीजस्वरूपधृक्।
तच्छब्देन जगत्प्रोक्तं परोक्षार्थाभिधायिना ॥ ७० ॥

श्रौततत्पदार्थं तावद्वर्णयति । अज्ञानेत्यादिपद्यचतुष्केण । परोक्षार्थाभि-
धायिना तच्छब्देनेति योजना ॥ ७० ॥

अव्याकृतस्य जगतो भूतकालाभिसंगतेः ।
बुभुत्सुं प्रति पारोक्ष्यात्तच्छब्दस्तत्र युज्यते ॥ ७१ ॥

अव्यक्तस्य जगतो भूतकालेन सम्बन्धं बोद्धुमिच्छुं मुमुक्षुं प्रति नि-
जगत्यव्यक्तशब्दप्रयोगो योग्य इत्याह । अव्याकृतेति । भूतकालाभिसंगतिमिति द्वि-
यान्तः पाठो युक्तो न तु षष्ठ्यान्तः षष्ठ्या न लोकाव्ययेति निषेधात् ॥ ७१ ॥

ऐतिह्यार्थे हशब्दः स्यात् सुखेनार्थविबुद्धये ।
तर्केणोक्तौ धियः क्लेशः परमाण्वनुमानवत् ॥ ७२ ॥

ऐतीह्यार्थे प्रयुक्तस्य श्रौतहशब्दस्य सुखेनार्थावगमः प्रयोजनमित्याह। ऐ-
ह्यार्थ इति । एतद्विशदयति । तर्केणोक्ता इत्युत्तरार्द्धेन उक्त इति प्रथमान्त-
पपाठः ॥ ७२ ॥

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः ॥ ७३ ॥

अत्र पौराणिकवाक्यमुपष्टम्भकमाह । अचिन्त्या इति । अचिन्त्यपदार्थ-
तर्केण योजनं निषेधति नेति । उक्तवाक्यस्याशयमाह । नाप्रेत्युत्तरार्द्धेन । यतस्त-
स्याप्रतिष्ठितत्वमतस्तेन गम्भीरार्थस्य निश्चयो न भवतीत्यर्थः । नाप्रतिष्ठितवर्के-
नेन पुराणवचनेन तर्कशब्देन श्रुत्यननुगृहीतस्तर्को विवक्षित इति सूचितम् ॥ ७३ ॥

नामरूपादिविकृतं पराङ्मानेन भासितम् ।
इदंशब्देन निखिलं जगदेतदुदीर्य्यते ॥ ७४ ॥

श्रौतेदंपदार्थमाह । नामेति । पराङ्मानेन बहिर्मानेन वेदान्तभिन्ने-
यावत् ॥ ७४ ॥

सामानाधिकरण्येन तदिदं पदयोः श्रुतम् ।
कार्यकारणयोरैक्यं व्याकृताव्याकृतात्मनोः ॥ ७५ ॥

तदिदं पदयोः सामानाधिकरण्येन व्यक्ताव्यक्तात्मनोः कार्यकारणयो-
श्रुतं बोधितमिति योजना ॥ ७५ ॥

एकस्य जगतोऽवस्थे व्याकृताव्याकृतात्मिके।
अवस्थयोर्विभेदेऽपि तद्धर्मी नहि भिद्यते ॥ ७६ ॥

व्यक्तत्वाव्यक्तत्वरूपावस्थयोर्भेदेऽपि तद्वतो जगत ऐक्यात्तदिदं पदयोः श्रुतं सामानाधिकरण्यं नानुपपन्नमित्याह। एकस्येति ॥ ७६ ॥

बाल्ययौवनभेदेऽपि देवदत्तो न भिद्यते।
ततो जगदभेदेन सामानाधिकरण्यगीः ॥ ७७ ॥

इममर्थं यो बालो देवदत्तः सएव युवेति दृष्टान्तेन विशदयंस्तदिदमिति श्रुतसामानाधिकरण्योपपादनं निगमयति। बाल्येति। ततः इति अवस्थयोर्भेदेऽप्यवस्थावतोरभेदादित्यर्थः। सामानाधिकरण्यगीरिति। एकार्थबोधकत्वविशिष्टातदिदमिति पदद्वयात्मिका श्रुतिरित्यर्थः ॥ ७७ ॥

नामरूपाद्यभिव्यक्तेः प्राक्तनः काल उच्यते।
तर्हीत्यनेन शब्देन स कालो लोककल्पितः ॥ ७८ ॥

श्रौततर्हिपदार्थमाह। नामेति। स नामरूपाभिव्यक्तः प्राक्तनः कालो लोककल्पितो लोककल्पनाविषयो नतु परमार्थः सन् ॥ ७८ ॥

यद्यप्यव्याकृते कालव्यक्तिर्नास्ति तथाप्यमी।
लोकाः प्रलयकालत्वव्यवहारं प्रकुर्वते ॥ ७९ ॥

उक्तकालस्य लोककल्पितत्त्वमाह। यद्यपीति। कल्पितकालं विना प्रलयकाल इति लौकिकव्यवहारो न सम्भवतीतिभावः ॥ ७९ ॥

जगतोऽस्यानभिव्यक्तिरव्याकृतगिरोच्यते।
न जगत्प्रागवस्थायां व्यक्तं गर्भस्थपुत्रवत् ॥ ८० ॥

अव्याकृतपदार्थमाह। जगत इति। अव्याकृतगिरा "तद्धेदंतर्ह्यव्याकृतमासीदि"ति व्याख्येयश्रुतिस्थेनाव्याकृतशब्देन। उक्तमर्थं दृष्टान्तेन विशदयति। नेत्याद्युत्तरार्द्धेन। गर्भस्थपुत्रवदित्यत्र प्रथमान्ताद्वतिः ॥ ८० ॥

आसीदिति च सत्तत्त्वमधिष्ठानतयोदितम्।
तथा च भावरूपत्वाज्जगद्व्याकृतिमर्हति ॥ ८१ ॥

श्रौतासीत्पदार्थमाह आसीदिति। कर्तृप्रत्ययसमभिव्याहृतस्याऽसभुवितिं-

धातोः सद्रूपवस्त्वर्थ इत्याह—सत्तत्त्वमिति । सद्रूपवस्त्वित्यर्थः । असत्कारणवादो ऽयुक्त इति सूचयति तथाचेति । जगदधिष्ठानतया सद्रूपस्य वस्तुनः श्रुत्युक्ते सतीत्यर्थः ॥ ८१ ॥

अव्याकृतिवचस्त्वेवमवतार्यास्य वर्णिताः ।
पदार्था अथ वाक्यार्थो न्यायेनैव निरूप्यते ॥ ८२ ॥

पदार्थवर्णनमुपसंहरन् वाक्यार्थनिरूपणं प्रतिजानीते । अव्याकृतीति । अस्य तद्धेदमित्यादिवचसः पदार्था वर्णिता इति योजना ॥ ८२ ॥

यस्य वेदान्तमेयत्वं कारणं जगतश्च यत् ।
अव्याकृतं तदेवात्र वाक्यार्थो द्विविधं हि तत् ॥ ८३ ॥

वाक्यार्थं निरूपयति । यस्येति । यच्चिद्रूपं वस्तु वेदान्तमेयं यच्चाज्ञानं जगत्कारणं तदेव अव्याकृतशब्दितम् । अत्र तद्धेदमित्यादिवाक्येवाक्यार्थ इति योजनया व्याख्येयम् । तदेवत्येवकारेण माध्वानां केवलचित्कारणवादः सांख्यानां स्वतन्त्रप्रधानकारणवादश्चोक्तश्रुत्यर्थविपरीतार्थकत्वाद्धेय इति दर्शयति । तदुक्तवाक्यार्थभूतमव्याकृतम् ॥ ८३ ॥

चित्प्राधान्यादविद्यायाः प्राधान्याच्च द्विधाऽद्वयम् ।
यच्चिद्वस्तुप्रमेयं तदविद्या तु विकारकृत् ॥ ८४ ॥

द्वैविध्यमाह । चिदित्यादिना द्विधेत्यन्तेन । ननु वेदान्तमेयस्य जगत्कारणस्य चोक्तवाक्यार्थत्वमुक्तं विविच्योभयं नोक्तमिति तथा दर्शनीयमित्याकाङ्क्षायामुभयं तथादर्शयति । अद्वयमित्यादिना । अद्वयंचिद्रूपं यद्वस्तु तत्प्रमेयम् अविद्या तु विकारकृज्जगत्कारणमिति योजनया व्याख्येयम् ॥ ८४ ॥

न चिद्वस्तु विवादार्हं तेन सर्वार्थसिद्धितः ।
अज्ञोहमित्यविद्यापि प्रसिद्धैवानुभूतितः ॥ ८५ ॥

चिदविद्ययोः सर्वार्थसिद्धिं स्वानुभवञ्च प्रमाणयति । नेति । अज्ञोऽहमित्यनुभूतित इत्यन्वयः ॥ ८५ ॥

नासदासीन्नो सदासीत्तम आसीदिति श्रुतिः ।
आसीदिदं तमोभूतमप्रज्ञातमिति स्मृतिः ॥ ८६ ॥

अविद्यायां नासदीयसूक्तवाक्यंस्मृतिं चानुभवातिरिक्तं प्रमाणयति । नासदिति ॥ ८६ ॥

अज्ञानत्वात्प्रमाणेन ज्ञातव्यमिति मेयता ।
अज्ञानस्य विकारित्वात्कारणत्वं च सम्भवेत् ॥ ८७ ॥

तस्यां मेयत्वं कारणत्वं च सम्भावयति । अज्ञानत्वादिति ॥ ८७ ॥

मायां तु प्रकृतिं विद्यादीशो मायीति हि श्रुतिः ।
दैवी ह्येषा गुणमयी मम मायेति च स्मृतिः ॥ ८८ ॥

अविद्यायां मेयत्वं कारणत्वं स्वातन्त्र्याभावञ्च श्रुतिस्मृतिभ्यामाह । मायामिति ॥ ८८ ।

इत्यव्याकृतवाक्यार्थो न्यायेन सुनिरूपितः ।
अथ व्याकृतवाक्यार्थः क्रमात्प्राप्तो निरूप्यते ॥ ८९ ॥

"तन्नामरूपाभ्यामेव व्याक्रियते" त्यादि । 'स एव इह प्रविष्ट आनखाग्रेभ्य" इत्यन्तं व्याचिकीर्षुर्वृत्तवार्तिष्यमाणयोः सङ्गतिं दर्शयन्नुक्तवाक्यार्थं निरूपयितुं प्रतिजानीते । इतीति ॥ ८९ ॥

व्याकृतं द्विविधं देहसृष्टिर्जीवप्रवेशनम् ।
देहादिर्विषयत्वेन प्रवेशात्पूर्वमुच्यते ॥ ९० ॥

उक्त वाक्यार्थं वर्णयति । व्याकृतमित्यादिभिर्द्वाविंशत्यापद्यैः । प्रवेशविषयत्वेन देहादेः प्रवेशात्पूर्वं कथनं प्रतिजानीते देहेत्युत्तरार्द्धेन ॥ ९० ॥

अव्याकृतं यत्पूर्वोक्तमरूपकमनामकम् ।
तदिदं नामरूपाभ्यामेव व्याक्रियते स्वयम् ॥ ९१ ॥

श्रुतिं व्याचक्षाणः प्रतिज्ञातमर्थमाह । अव्याकृतमिति ॥ ९१ ॥

सुषुप्तादुत्थितो राज्ञः स्वयमेव यथा तथा ।
जग्धाशेषजगन्मूर्तेरव्यक्ताद्व्याकृतिर्मुहुः ॥ ९२ ॥

एतदेव दृष्टान्तेन स्पष्टयति । सुषुप्तादिति । सुषुप्ताद्राज्ञः उत्थितो यथा

स्वयमेव राजैव नान्य इति दृष्टान्तभागयोजना । तथेत्युत्तरान्वयि । अशेषं भाषि लीनमिति यावत् । अशेषं जगल्लयायस्यां वा सामूर्तिर्यस्य तस्मादित्यर्थः ॥ ९२ ॥

नामरूपे तु शब्दार्थौ न ताभ्यामतिरिच्यते ।
जगत्किञ्चिद्घटादौ हि द्वयमेव समीक्ष्यते ॥ ९३ ॥

ननु तन्नामरूपाभ्यामेव व्याक्रियत इत्यत्र नामरूपातिरिक्तं जगन्निषिध्यते तन्न युज्यते नामरूपातिरिक्तस्यापि जगतो व्याकरणसम्भवादित्याशङ्क्यां नामरूपपदार्थं कथयन् निरस्यति । नामेति । ताभ्यां नामरूपाभ्यां किञ्चिज्जगन्नातिरिच्यत इत्यन्वयः । तत्र हेतुमाह । घटादावित्यादि ॥ ९३ ॥

प्रक्रियानियमो नात्र पुंव्युत्पत्तिप्रधानतः ।
अतः श्रुतिषु सृष्ट्यादिविगानं बहुधेक्ष्यते ॥ ९४ ॥

वेदान्तेषु सृष्ट्यादिविगानं दृश्यते तथाहि "क्वचित्तत्तेजोऽसृजदित्या" दिना तेजसः सृष्टेः प्राथम्यमुक्तम् । क्वचि "त्तस्माद्वा एतस्मा" दात्मन इत्यादिना आकाशस्य क्वचित्सकर्तृका क्रमवती च सृष्टिरुक्ता । यथा पूर्वत्र । क्वचिदकर्तृका अक्रमा च यथा "नामरूपाभ्यामेव व्याक्रियत" "तत्सर्वमसृजत यत्किञ्चिदि" त्यादौ तत्कथं सङ्गच्छत इत्याशङ्क्यां वेदान्तानामात्मैक्यज्ञानपरत्वेन सृष्टौ तात्पर्याभावान्निरस्यति । प्रक्रियेति ॥ ९४ ॥

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियेह स्यात्साध्वी साचानवस्थिता ॥ ९५ ॥

स्वोक्तार्थं द्रढयितुं वार्तिकमुपन्यस्यति । ययेति ॥ ९५ ॥

विस्पष्टत्वं व्याकुलत्वं शुक्तिकारजतादिवत् ।
स्पष्टमव्याकृतान्मोहान्मिथ्याज्ञानमिदं जगत् ॥ ९६ ॥

विस्पष्टत्वमिति । व्याकुलत्वमविस्पष्टत्वं । शुक्तिकेत्यादि । यथा शुक्तिकाया मविपष्टत्वं तद्रजते विस्पष्टत्वं तथा जगत्कारणेऽविस्पष्टत्वं जगति विस्पष्टत्वमित्यर्थः । एतद्विशदयति । स्पष्टमिति । अव्याकृतादस्पष्टात् मोहादज्ञानात् । स्पष्टमिदं जगदित्यन्वयः । जगतः प्रतिभासमात्रशरीरत्वमाह । मिथ्याज्ञानमिति ॥ ९६ ॥

नामरूपाध्यास एवं व्याकृतः प्रतिपादितः ।
प्रवेश्यस्यात्र जीवस्य प्रवेशः प्रतिपाद्यते ॥ ९७ ॥

एतदेव विशदयन् प्रवेशवाक्यार्थप्रतिपादनं शिष्यावधानाय प्रतिजानीते । नामेति । प्रतिपादित इति अस्य श्रुत्येति शेषः । प्रवेश्यस्येति प्रवेशार्हस्येत्यर्थः । प्रतिपाद्यते इति अस्यापि श्रुत्येतिशेषः ॥ ९७ ॥

सर्वशास्त्रारम्भ एष यदर्थस्तद्विबुद्धये ।
स एष इह देहेषु प्रविष्ट इति गीयते ॥ ९८ ॥

सर्वशास्त्रेति । अस्य बृहदारण्यकोपनिषद्रूपेत्यादिः । गीयते इति । अस्य श्रुत्येति शेषः ॥ ९८ ॥

स एषोऽत्रानखाग्रेभ्यः प्रविष्ट इति वेदगीः ।
व्याख्यायतेऽसौ पदश आदौ मीमांस्यते त्वथ ॥ ९९ ॥

स इत्यनेन शब्देन प्रकृतार्थोऽवमर्शिना ।
अव्याकृताध्यक्ष आत्मा यः पुरोक्तः स उच्यते ॥१००॥

"स एष इह प्रविष्ट आनखाग्रेभ्य" इत्यसौ वेदगीर्वेदवाक्यं पदशो व्याख्यायते इति योजना किन्त्वादौ मीमांस्यते विचार्यत इत्यन्वयः । मीमांसामाह । नन्वर्थकार्थेत्यादिना दुष्करेतीत्यन्तेन ॥ ९९ ॥ १०० ॥

यद्वा विराडधिष्ठानं ब्राह्मणादावुदीरितम् ।
आत्मशब्देन तस्यात्र परामर्शो भविष्यति ॥ १ ॥

ब्राह्मणादौ चतुर्थब्राह्मणस्यादावित्यर्थः । आत्मशब्देनेति "आत्मैवेदमग्र आसीदि"तिवाक्यस्थात्मशब्देनेत्यर्थः । अस्योदीरितमिति पूर्वेण सम्बन्धः । अत्रेति "स एष इहे" ति वाक्य इत्यर्थः ॥ १ ॥

तच्छब्देन परामृष्टः साक्ष्यव्याकृतभासकः ।
एतच्छब्देन कार्यस्थः प्रत्यक्ष उपदिश्यते ॥ २ ॥

तृतीयपरामर्शासम्भवेनोक्तयोरन्यतरस्यैवपरामर्शो वाच्यस्तथा च स एष इति सामानाधिकरण्यमयुक्तं स्यादित्याह । तच्छब्देनेत्यादिना किञ्चिदूनेन पद्यद्विकेन॥२॥

अद्वितीयमधिष्ठानं कार्यस्थः सद्वयस्तयोः ।
स एष इत्यभेदोक्तिर्दुष्करेति न चोद्यताम् ॥ ३ ॥

तयोरिति । प्रथमपक्षे साक्षिकार्यस्थयोरित्यर्थः । द्वितीयकल्पे अद्वितीया-धिष्ठानसद्वयकार्य्यस्थयोरित्यर्थः । पूर्वपक्षस्यानर्हतामाह । न चोद्यतामिति ॥ ३ ॥

अज्ञातवस्तुतत्त्वस्य दुष्करं नास्ति किञ्चन ।
नीलीकृतं नभः पश्येच्चक्षुषा नीलवस्त्रवत् ॥ ४ ॥

तामुपपादयति पद्यद्विकेन ॥ ४ ॥

योग्यायोग्यव्यवस्थेयं मानव्यवहृतौ भवेत् ।
कल्पनामात्रनिष्पत्तेर्नापेक्ष्याऽज्ञानभूमिषु ॥ ५ ॥

अज्ञानविषयेषु काल्पनामात्रेण वस्तुनः सिद्धेरुक्ताव्यवस्था नापेक्षणीये-त्युत्तरार्द्धयोजना । अपेक्ष्येति—कर्मण्यदन्तः । अपेक्षेत्यपपाठः ॥ ५ ॥

इहेत्यनेन सूत्रादिस्थाणुपर्यन्तविग्रहाः ।
उच्यन्ते तेषु जीवोऽयं विस्पष्टमुपलभ्यते ॥ ६ ॥

इहपदार्थमाह । इहेति प्रविष्टपदार्थमाह विस्पष्टमुपलभ्यते इति उपलब्धि-विशेष एवेह प्रवेशो नतु देशविशेषे संयोगविशेष इतिभावः ॥ ६ ॥

प्रविष्ट इति शब्देन चिदाभासतमोन्विता ।
जीवत्वेनोपलब्धिर्या चितः सैषाऽभिधीयते ॥ ७ ॥

उक्तोपलब्धिविशेषं विशदयति । प्रविष्ट इति । चिदाभासतमोभ्यामन्वि-चितो जीवत्वेनोपलब्धिः प्रविष्ट इत्यत्रत्यनिष्ठाप्रकृत्याऽभिधीयते इत्यर्थः ॥ ७ ॥

चिदाभासप्रवेशस्तु प्रत्यङ्मोहे स्वतोऽभवत् ।
तत्कार्येष्वनुवृत्तः स उपाधिश्चित प्रवेशने ॥ ८ ॥

अथवाऽस्तु संयोगविशेष एव औपाधिकोऽत्र प्रवेश इत्याह । चिदिति । प्रत्यङ्मोहे चिद्विषयकाज्ञाने सति चिदाभासस्य जीवस्य स्वतः साक्षाद्देहेषु प्रवेशो-ऽभवत् चितस्तत्र प्रवेशने तत्तद्देहेषु अनुगतः स चिदाभास उपाधिरित्यर्थः ॥ ८ ॥

जपाकुसुमरक्तत्वं स्फटिके कल्प्यते यथा।
चिदाभासप्रवेशोऽयं चित्यध्यारोप्यते तथा॥ ९॥

इममर्थं दृष्टान्तेन विशदयति। जपेति॥ ९॥

सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वात्ममायया।
स्वांभासैकसहायेन स एव प्राविशत्परः॥ ११०॥

सोपपत्ति पदार्थानभिधायाऽधुना वाक्यार्थमाह। सूत्रादीति॥ १०॥

आनखाग्रेभ्य इत्युक्त्या मर्यादास्य प्रवेशने।
उक्ताऽस्यांशेन चैतन्यं नखाग्रावधि लक्ष्यते॥ ११॥

"आनख ग्रेभ्य" इति शेषं व्याचष्टे। आनखेति। इत्युक्त्या इति वाक्येन अस्य परस्य प्रवेशने उपलब्धिरूपे। उक्तेति। अस्य सा युक्ता यत इति शेषः। अस्य। परस्य। चैतन्यमंशेन नखाग्रपर्यन्तं लक्ष्यते उपलभ्यते। उक्ताऽस्यांशेनेति पाठः प्रतिभाति। उक्तास्पर्शेनेति स प्रामादिकः॥ ११॥

सामान्येन विशेषाच्च चिद्देहं व्याप्य वर्तते।
दृष्टान्ताभ्यां द्वयी वृत्तिर्द्विविधाभ्यामिहोच्यते॥ १२॥
दारु कृत्स्नमभिव्याप्य यथाग्निर्दारुणि स्थितः।
संव्याप्य तद्वदखिलं देहमात्मा व्यवस्थितः॥ १३॥
तस्थावसंव्याप्य यथा क्षुरपात्रं क्षुरस्तथा।
श्रोत्रादिनाडिमध्यस्थस्तनुमव्याप्य संस्थितः॥ १४॥
क्षुरपात्रे स्थानभेदाद्विभज्यन्ते यथा क्षुराः।
चैतन्यानि विभिद्यन्ते तथा नाडीविभेदतः॥ १५॥
प्राप्नोति वृत्ती द्वे जीवः स्वप्नजाग्रदवस्थयोः।
सामान्यवृत्तिमेवैकां सुषुप्ते प्रतिपद्यते॥ ११६॥

"यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाय" इति वाक्यं व्याचष्टे। सामान्येनेत्यादिपद्यसप्तकेन॥११२॥११३॥११४॥११५॥११६॥

सामान्यवृत्तिर्या सात्र जीवनायोपपद्यते ।
विशेषवृत्तयो देहे शब्दाद्यालोचनोद्यताः ॥ ११७ ॥

वृत्तिद्वयस्य विभज्योपयोगमाह । सामान्येति ॥ ११७ ॥

प्रवेशवाक्यं पदशस्तात्पर्याच्च स्फुटीकृतम् ॥
तदनुग्राहको न्याय इदानीं प्रविचार्यते ॥ १८ ॥

तदनुग्राहक इति । तदा प्रवेशवाक्यं परामृशति ॥ ११८ ॥

देवदत्तः परिच्छिन्नः सांशश्चाऽतो गृहं विशेत् ।
निरंशः सर्वगश्चात्मा कथं देहे विशेदसौ ॥ १९ ॥

प्रतिज्ञातं विचारं दर्शयति । देवदत्त इति ॥ ११९ ॥

अप्रविष्टस्वभावोऽयं दिग्देशाद्यनभिप्लुतेः ।
कल्पितोऽस्य प्रवेशः स्याज्जलपात्रार्कविम्बवत् ॥ १२० ॥

समाधत्ते । अप्रविष्टेति । अनभिप्लुतिः सम्बन्धाभावः ॥ १२० ॥

विभागाद्यंशवैषम्येऽप्यस्ति साम्यं विवक्षितम् ।
उपाधिस्थोपलब्ध्यादिसाम्यं केन निवार्यते ॥ १२१ ॥

विभागादीत्यादिना परिच्छिन्नत्वादिग्राह्यम् ॥ १२ ॥

उपाधावुपलभ्यत्वमन्यथात्वेन भासनम् ।
वहुत्वभानमित्येतद्दृष्टदार्ष्टान्तयोः समम् ॥ १२२ ॥
तेजोधिकं रवेर्बिम्बमशक्यं द्रष्टुमञ्जसा ।
तथापि जलमध्ये तद्बिम्बं सम्यगवेक्ष्यते ॥ १२३ ॥
स्वयंप्रकाश आत्मैवं नोपलभ्योऽनुपाधिकः ।
जडदेहाद्युपाधौ तु विस्पष्टमुपलभ्यते ॥ १२४ ॥

साम्यं प्रपञ्चयति उपेति । दृष्टदार्ष्टान्तयोर्दृष्टान्तदार्ष्टान्तिकयोः ॥ १२२ ॥ १२३ ॥ १२४ ॥

जीवत्वभ्रान्तिरेषैवं प्रत्यग्बोधोपयोगतः।
जलपात्रार्कसाम्येन प्रवेश इह कल्प्यते ॥ १२५ ॥

जीवत्वेति। एवमुक्तप्रकारेण प्रत्यग्बोधफला एषा जीवत्वभ्रान्तिः प्रवेश इह कल्प्यत इत्यन्वयः। एवंपदार्थमाह। जलपात्रार्कसाम्येनेति। यद्वा एवमित्यस्थाने एवेति पाठः सम्बद्धः प्रतिभाति। तथाच जलपात्रार्कसाम्येन प्रत्यग्बोधोपयोगादेषा जीवत्वभ्रान्तिरेव प्रवेशो न त्वन्यादृश इत्यर्थः॥ १२५ ॥

यथा सृष्ट्यादयः क्लृप्ताः प्रवेशोऽपि तथेक्ष्यताम्।
युक्त्या नैवोपपद्यन्ते सृष्ट्याद्याः कल्पितास्ततः ॥१२६॥

ततो युक्त्योपपाद्यत्वाभावात् कल्पिता इत्यन्वयः॥ १२६ ॥

नन्वेवं पर एवात्र प्रविष्टश्चेत्तदा जनाः।
पश्यन्त्येतं विनाशास्त्रमिति शास्त्रं वृथा भवेत् ॥ १२७ ॥
अहं प्राणिम्यहं वच्मि पश्याम्येतच्छृणोमि तत्।
मन्येऽहमित्यहं बुद्ध्या दृष्ट एवाखिलैः परः ॥ १२८ ॥

शास्त्रवैयर्थ्यं शङ्कते द्वाभ्यां नन्वित्यादिभ्याम् ॥ १२७ ॥ १२८ ॥

उच्यते तन्न पश्यन्ति प्रविविक्तं स्वतो जनाः।
नो श्वासभाषणे दृष्टिश्रुती वा स्तोऽस्य नो मितिः ॥१२९॥

"तन्न पश्यन्ती"ति श्रुत्या परिहरति। उच्यत इति। तत्पदार्थोऽयं स्वतः प्रविविक्तमिति। श्वासेति प्राणनेत्यर्थः। मितिर्मननम् ॥ १२९ ॥

प्रविष्टस्यास्ति चेच्छ्वासभाषणाद्यास्तु तावता।
प्रवेष्टरि किमायात शास्त्रबोध्यः स एव हि ॥ १३० ॥

शास्त्रबोध्य एव स इत्यन्वयः ॥ १३० ॥

प्रविष्टस्याप्रवेष्टुश्च रूपाभेदेऽपि भिन्नताम्।
प्रविष्टत्वाप्रविष्टत्वधर्माभ्यां को निवारयेत् ॥ १३१ ॥

नन्वप्रवेष्टृप्रविष्टयोरभेदेन तद्दर्शनमेव तद्दर्शनमित्याशङ्क्यामौपाधिकभेदेन

परिहरति । प्रविष्टस्येति ॥ १३१ ॥

प्रविष्टं येऽत्र पश्यन्ति नाप्रविष्टममी विदुः ।
व्याधत्वेन प्रपश्यन्तो न विदू राजपुत्रताम् ॥ १३२ ॥

पूर्वार्द्धोक्तार्थे दृष्टान्तमाह । व्याधत्वेनेति । अयं व्याध इति दर्शनं यथा राजपुत्रदर्शनं न भवति तथाहं प्राणिमीत्यादि दर्शनं परदर्शनं न भवतीत्यर्थः ॥ १३२ ॥

व्याधोऽयमित्यसावुक्तिर्योजयेत्प्राणसङ्कटे ।
राजदेवादिकोक्तिस्तु भवेद्बहुफलप्रदा ॥ १३३ ॥

तद्वत्प्रविष्टदृष्टिर्या सा संसारे नियोजयेत् ।
अप्रविष्टात्मदृष्टिस्तु मोचयेत्सर्वसङ्कटात् ॥ १३४ ॥

यथा राजपुत्रेऽयं व्याध इति वाक्यं मारकं तत्र राजायमित्यादि वाक्यं फलदं भवति । तथा प्रविष्टदृष्टिः संसारदा । आत्मदृष्टिर्मोक्षदेत्याह । व्याध इत्यादिभ्याम् ॥ १३३ ॥ १३४ ॥

अतोऽप्रविष्टदृष्ट्यर्थं निंद्यते हि प्रविष्टदृक् ।
प्रविष्टदर्शनं यस्मान्न तद्दर्शनमात्मनः ॥ १३५ ॥

निन्द्यत इति अस्य "तन्न पश्यन्ती" ति श्रुत्येति शेषः । तां निन्दामाह । प्रविष्टेत्यादि ॥ १३५ ॥

स्वतः परोऽपि देहादौ प्रविष्टोऽकात्स्न्र्यदोषतः ।
दूषितो दर्शनं तस्य न भवेत् परदर्शनम् ॥ १३६ ॥

"अकृत्स्नोहि स" इत्येतद्व्याचष्टे । स्वत इति ॥ १३६ ॥

अकृत्स्नत्वं यथाऽस्य स्याद्व्यवहारे तथोच्यते ।
श्वासयोगात्प्राणिता स्याद्वक्ता वदनयोगतः ॥ १३७ ॥

द्रष्टा दर्शनयोगेन श्रोता श्रवणयोगतः ।
मन्ता मननयोगेन स्पृष्ट्रादौ योजयेत्तथा ॥ १३८ ॥

अधुनोक्तशेषं "प्राणन्नेवे" त्यादि "मेकैकेन भवती" त्यन्तं व्याचष्टे । अ

सन्त्वमित्यादिपद्यपञ्चकेन ॥ १३७ ॥ १३८ ॥

एवं चाहं प्राणितेति ज्ञाते वक्त्राद्यसंग्रहः।
वक्ताहमित्यपि ज्ञाते प्राणित्रादेरसंग्रहः॥ १३९ ॥

यथाऽप्रविष्टदर्शनं परदर्शनं न भवति तथा प्राणित्रादिदर्शनं वक्त्रादिदर्शनं वक्त्रादिदर्शनं प्राणित्रादिदर्शनं न भवतीत्याह। एवमिति ॥ १३९ ॥

यतिदीक्षितचोराद्भूमिकां धारयेन्नटः।
तत्र दृष्टे दीक्षितेऽन्ये दृष्टा यत्यादयो नहि॥ १४० ॥

अत्र दृष्टान्तमाह। यतीति ॥ १४० ॥

प्राणनादिकृतां मध्य एकैकं यः समीक्षते।
न स जानात्यकृत्स्नत्वादेतदीक्षितवस्तुनः॥ १४१ ॥

एतदीक्षितवस्तुनोऽकृत्स्नत्वादिति योजना ॥ १४१ ॥

इत्युक्तं व्याकृतं सर्वं जडाजडविभागवत्।
आरोपोऽयं तन्निवृत्त्यै विद्यासूत्रमिहोच्यते॥ १४२ ॥

पूर्वेण सङ्गतिं वदन् व्याख्यातुं विद्यासूत्रमवतारयति इतीति ॥ १४२ ॥

आत्मेत्येवमुपासीतेत्येतत्सूत्रमुदाहृतम्।
उक्त्वा पदार्थं सूत्रानुग्राहको न्याय उच्यते॥ १४३ ॥

"आत्मेत्येवोपासीते"ति विद्यासूत्रस्य पदार्थकथनपूर्वकं तदनुग्राहकं न्यायं कथयितुं प्रतिजानीते ॥ आत्मेति ॥ १४३ ॥

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यश्चास्य संततो भावस्तस्मादात्मेति कथ्यते॥ १४४ ॥

आत्मपदव्याख्यानभूतां स्मृतिं पठति। यच्चेति ॥ १४४ ॥

व्याप्नोत्यनवशेषेण सर्पादीन्स्रगिवाखिलान्।
कल्प्यानधिष्ठानतया प्रत्यङ्ङात्मा भवेत्ततः॥ १४५ ॥

सर्वाधिष्ठानसन्मात्र इत्यशेषजगत्प्रति ।
अधिष्ठानतयाऽवाप्तिं श्रुतिर्ब्रूते सदात्मनः ॥ १४६ ॥

"यच्चाप्नोती"तिस्मृत्यंशं तावद्व्याचष्टे । व्याप्नोतीति द्वाभ्याम् ॥१४५॥१४६॥

स्वचिदाभासमोहेन तदुत्थानाखिलान्यतः ।
आदत्तेऽनात्मनः प्राज्ञस्तत आत्मेति तंविदुः ॥ ४७ ॥

"यच्चादत्ते" इत्यंशं व्याचष्टे । स्वेति । स्वस्मिन्परमार्थस्वरूपे यश्चिदाभास-मोहोऽज्ञानं तेन तदुत्थानज्ञानोत्थान् अखिलाननात्मनो यत आदत्ते संस्थापयति प्रलयसमये स्वस्मिन्प्रविलापयति ततः प्राज्ञः अज्ञानोपहितात्मेत्याद्यर्थः ॥ १४७॥

पर आत्मनि सर्वेऽपि संप्रतिष्ठन्त एकले ।
पृथिव्याद्या अनात्मान इति चाथर्वणे वचः ॥ १४८ ॥

उक्तस्मृत्यर्थे मुण्डकवाक्यमर्थतः पठति । पर इति ॥ १४८ ॥

आत्माभासः पराचीना धीवृत्तिर्विषयोन्मुखा ।
प्रत्यग्गतिर्यतोऽतोऽसावात्मेत्युक्तो मनीषिभिः ॥ १४९॥

स्मृतेर्द्वितीयपादं विवृणोति । आत्माभास इति । नत्वात्मेत्यर्थः । एतदुप-पादयति । पराचीनेति । जीवस्य धीवृत्तिर्यतो बहिर्गमनशीला भवति । क्वचिदात्म-त्वेन व्यवहृताया वैनाशिकैरात्मत्वेनाङ्गीकृताया अपि धीवृत्तेरात्मशब्दवाच्यत्वमुपपा-दयति प्रत्यग्गतिरिति । यतः प्रत्यगानन्दगमनशीला भवतीत्यत आत्मेत्यर्थः॥१४९॥

विश्वो हि स्थूलभुङ्नित्यस्तैजसः प्रविविक्तभुक् ।
आनन्दभुक्तथा प्राज्ञ इति चागमशासनम् ॥ १५० ॥

उक्तस्मृत्यर्थे माण्डूक्योपनिषद्वचोऽर्थतः पठति । विश्व इति ॥ १५० ॥

अव्यावृताननुगतः पूर्णः स्वात्मन्यवस्थितः ।
यतोऽस्य सन्ततो भावस्तस्मादात्मेति शब्द्यते॥ १५१॥

तस्यास्तृतीयपादं विवृणोति । अव्यावृतानिति । अस्य स्वेनेत्यादिः वि-व्यभिचरितानननात्मन इत्यर्थः । अस्य परस्य ॥ १५१ ॥

तद्विष्णोरिति मन्त्रोऽपि तद्विष्णोः परमं पदम् ।
चक्षुर्वदाततं व्योम्नि व्याचष्टे प्रत्यगात्मनि ॥ १५२ ॥

स्वव्याख्यातार्थं द्रढयितुं "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयो दिवीव चक्षुराततं" मिति मन्त्रमर्थत उपन्यस्यति । तद्विष्णोरिति । इतिमन्त्रोऽपि तत्र प्रसिद्धं परममुत्कृष्टं विष्णोः स्वरूपं पदं गमनीयं व्योम्नि चक्षुरिव प्रत्यगात्मनि आततं व्याचष्टे इति योजना ॥ १५२ ॥

चतुर्विधनिरुक्त्याऽत्र चत्वारोऽर्थाः प्रकीर्तिताः ।
अधिष्ठानं कारणत्वं जीवभावो विमुक्तता ॥ ५३ ॥

चतुर्विधनिरुक्त्येति । आप्नोत्याददात्यत्त्यततीत्यादिरूपयेत्यर्थः । अत्र सूत्रे आत्मशब्दस्येति शेषः । तानर्थानाह । अधिष्ठानमित्यादिना ॥ ५३ ॥

यन्मुक्तरूपं साक्षित्वाद्व्याकृतेऽव्याकृतेऽपि तत् ।
अतिरोहितमत्रात्मशब्देनैतद्धि सूत्रितम् ॥ ५४ ॥

प्रकृतवाक्ये आत्मशब्देन चतुर्थस्यार्थस्य ग्रहणमित्याह यन्मुक्तेति ॥५४॥

आत्मशब्दधियोरात्मा विषयो नेति भाषितुम् ।
सूत्रेऽस्मिन्निति शब्दोऽयं यथैतत्स्यात्तथोच्यते ॥ ५५ ॥

यत्रेति परशब्दः स्यात्तत्रोपचरितं वचः ।
ज्येष्ठं पितेति पश्यन्तीत्यादावेवमवेक्षणात् ॥ ५६ ॥

आत्मशब्दस्यात्मेतिबुद्धेश्चात्माविषयो नेति वदितुं विद्यासूत्रे इतिशब्दः प्रयुक्त इत्येतदुपपादनं प्रतिज्ञायोपपादयति आत्मेत्यादिना द्विकेन ॥ ५५ ॥ ५६ ॥

व्याकृताव्याकृते ये द्वे कल्पिते ते विचारतः ।
एते वारयितुं सूत्र एवकारमसूत्रयत् ॥ ५७ ॥

एवशब्दार्थमाह । व्याकृतेति । विचारत इति अस्योत्तरत्रान्वयः ॥ ५७ ॥

उपेतिसामीप्यवाची तन्निष्ठा प्रत्यगात्मनि ।
कार्यकारणरूपाभ्यां प्रत्यङ्हृदि य ईक्ष्यते ॥ ५८ ॥

उपपदार्थमाह । उपेतीति । तत्सामीप्यं प्रत्यगात्मनि निष्ठेति योजना। सप्रमाणमसुमर्थमभिनयति कार्येत्यादिनोच्यत इत्यन्तेन ॥ ५८ ॥

एतस्य ब्रह्मसामीप्यं तत्त्वमस्यादिनोच्यते ।
आसीतेति तुशब्देन कूटस्थत्वमसूत्रयत ॥ ५९ ॥

एतस्येति । कार्यकारणाभ्यां हृदीक्ष्यमाणस्य प्रतीच इत्यर्थः । आसीतपदार्थमाह । आसीतेति ॥ ५९ ॥

व्युत्थाय कारणात्कार्यात्तत्त्वज्ञानवर्त्मना ।
उपेत्य कूटस्थमजमासीतापरिणामवान् ॥ १६० ॥

वाक्यार्थमाह । व्युत्थायेति ॥ १६० ॥

इत्यात्मशब्दे सूत्रार्थो वाक्यार्थश्चोपवर्णितः ।
तदनुग्राहको न्याय आशङ्कापूर्वमुच्यते ॥ ६१ ॥

वृत्तं कथयन् न्यायं वर्णयितुं प्रतिजानीते । इत्यात्मेति ॥ ६१ ॥

व्याकृताव्याकृताभ्यां तद्वस्तुतत्त्वं तिरोहितम् ।
इति यच्छङ्कितं तन्न स्वरूपस्यातिरोहितेः ॥ ६२ ॥

शङ्कते तिरोहितमित्यन्तेन । समाधत्ते इतीत्यादिना ॥ ६२ ॥

स्वस्वरूपं तिरोधातुं नहि केनापि शक्यते ।
विस्फार्यन्तामिहाक्षाणि किमक्षैरपराध्यते ॥ ६३ ॥

विषयग्राहकेन्द्रियैः स्वरूपतिरोधानमाशङ्क्य निषेधति । स्वेति । विस्फार्यन्तामिति । व्यापार्यन्तामित्यर्थः आक्षेपेऽत्रकिंशब्दः । तिरोधानलक्षणोऽत्रापराधः ॥ ६३ ॥

आपादयेयुः शब्दादीन्यद्यक्षाणि तथापि ते ।
काहानिस्तस्य शब्दादेरेव तत्त्वं विबुध्यताम् ॥ ६४ ॥

ननु तैः शब्दादिग्रहणं स्यादित्याशङ्क्य तस्यहानिकरत्वाभावेन निरस्यति । आपेति । तस्य तैर्गृह्यमाणस्य तत्त्वमधिष्ठानस्वरूपम् ॥ ६४ ॥

तैः शब्दादितया भाति तत्त्वरूपतया न तु ।
इति चेदत एवैतद्वेदवाक्येन बुध्यताम् ॥ ६५ ॥

तैरिति । अतिरोहितार्थे शङ्कोत्तरे ॥ ६५ ॥

न परोक्षत्वमाशङ्क्यं स्वस्वरूपत्वहेतुतः ।
शब्दादितत्त्वं यद्बोद्धुः स्वरूपं तन्न चेतरत् ॥ ६६ ॥

स्वस्वरूपत्वलिङ्गेन शब्दादितत्त्वस्य परोक्षत्वं निषेधति । नेति पूर्वार्द्धेन । उत्तरार्द्धेनासिद्धिं परिहरति । शब्देति ॥ ६६ ॥

एकस्याऽप्यत्र चित्तस्य सहकारिविभेदतः ।
क्रमेण ग्रहणं तत्त्वे शब्दादौ च कुतो न हि ॥ ६७ ॥

केवलेन चित्तेन शब्दादेर्ग्रहणं वाक्यजनितसंस्कारसहितेन तेन शब्दादितत्त्वस्य चेत्याह । एकस्येति ॥ ६७ ॥

इति शङ्कोत्तरं प्रोक्तमेतत्सूत्रेण सूचितम् ।
स्वरूपवाच्यात्मशब्दादतिरोधानभासनात् ॥ ६८ ॥

शङ्कोत्तररूपन्यायवर्णनमुपसंहरति । इतीति ॥ ६८ ॥

ननु प्राणादियुक्तात्मबोधोऽकात्स्न्र्येन दूषितः ।
सोऽकात्स्न्र्यदोषः शुद्धात्मबोधे कस्मान्न सम्भवेत् ॥ ६९ ॥
इत्याशङ्कापनुत्त्यर्थमत्रेदं श्रूयते स्फुटम् ।
अत्र ह्येते सर्व एकीभवन्तीति श्रुतेर्वचः ॥ १७० ॥

"अत्र ह्येते सर्व एकीभवन्ती"ति श्रुतिनिरास्यां शङ्कामाह । नन्विति ॥६९॥७०॥

प्राणाद्युपाध्युपहिताः सर्वेऽप्यात्मान ईश्वरे ।
शुद्धात्मन्येकतां यान्ति पुत्रभ्रात्रादयो यथा ॥ १७१ ॥

सदृष्टान्तं श्रुत्यर्थमाह । प्राणादीति ॥ १७१ ॥

पुत्रो भ्राता पितेत्येको भिद्यते प्रतियोगिभिः ।
पुत्रादयस्त एकस्मिंस्तस्मिन्यान्त्येकतां ततः ॥ ७२ ॥

दृष्टान्तं विशदयति । पुत्र इति । एक इति । देवदत्त इत्यर्थः । प्रतियो-
गिभिर्निरूपकैः । ततः । प्रतियोगिकल्पितभेदानन्तरं ते पुत्रादयः एकस्मिन् तस्मिन्
देवदत्ते एकतां यान्तीति योजना ॥ ७२ ॥

आत्मनोऽनवशेषेण सम्बन्धोऽनात्मवस्तुनः ।
रज्जोः सर्पादिवन्नातः प्रतीचः शिष्यते पराक् ॥ ७३ ॥

अनात्मवस्तु प्रत्यगात्मनो न शिष्यतेऽनवशेषेण तत्सम्बद्धत्वाद्रज्जोरनव-
षेण सम्बन्धवान् सर्पधारादिरिवेत्यनुमानप्रयोगमाह । आत्मन इति । रज्जोः [illegible]
त्स्यन सर्पधारादिनासंबन्धस्तु इयं माला अयंसर्पइत्यादौ सर्वत्र इदमंशस्यानु-
तत्वात् ॥ ७३ ॥

सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञात आत्मनि ।
ज्ञाते ज्ञातं च कृत्स्नोऽसौ तावत्त्वात्सर्ववस्तुनः ॥ ७४ ॥

आत्मनः कृत्स्नत्वे हेतुं सर्वमित्यादिना ज्ञातञ्चेत्यन्तेन दर्शयति । सर्वेति ।
नन्वन्यज्ञानेन कथमन्यज्ञानमित्याशङ्कामनन्यत्वेन निरस्यति तावत्त्वात्सर्ववस्तुन इति ।
वस्तुतः सर्ववस्तुन आत्मव्यतिरेकेणाभावादित्यर्थः ॥ ७४ ॥

प्रमाभासत्वमेतेन वाक्येनास्य निवारितम् ।
मात्वं संभाव्यते तस्य पदनीयत्ववाक्यतः ॥ ७५ ॥

"तदेतत्पदनीयमस्य सर्वस्य यदयमात्मेति" वाक्यं व्याख्यातुं भूमिका-
रचयति । प्रेति । अस्य प्रत्यगात्मज्ञानस्य मात्वं प्रमात्वं । तस्य निरुक्तस्य ॥७५॥

अस्य सर्वस्य जगत आत्मेति यदुदीरितम् ।
तदेतत्पदनीयं स्यादिति वाक्यस्य योजना ॥ ७६ ॥

स्वाभिमतोक्तवाक्ययोजनामाह । अस्येति ॥ ७६ ॥

पदनीयेति शब्देन प्रमातुं योग्यतोच्यते ।
अज्ञातत्वात्पुमर्थत्वात्प्रमातुं योग्यताऽऽत्मनः ॥ ७७ ॥

आत्मनः प्रमातुं योग्यतां वचनीयत्वेन पूर्वार्द्धे प्रतिज्ञातामुपपादयति अ-ज्ञातत्वादित्युत्तरार्द्धेन ॥ ७७ ॥

अव्याकृतव्याकृतयोरज्ञातात्मकता यतः ।
अत आत्मातिरेकेण नाऽज्ञाताऽर्थोऽस्ति कश्चन ॥ ७८ ॥

आत्मनोऽज्ञातत्वेन तद्व्यतिरेकेणाज्ञाताव्याकृतव्याकृतयोरभावमाह । अ-व्याकृतेति ॥ ७८ ॥

ज्ञेयार्थानन्दयोर्यस्मात्समाप्तिः प्रत्यगात्मनि ।
परमः पुरुषार्थोऽत आत्मा भवति नेतरः ॥ ७९ ॥

ज्ञेयेति यस्माज्ज्ञेयार्थानन्दयोः प्रत्यगात्मनि समाप्तिरतः परमः पुरुषार्थ-आत्मा भवतीतरो न भवतीति योजना ॥ ७९ ॥

अज्ञातत्वं पुरा प्रोक्तमव्याकृतगिरा यथा ।
ज्ञेयार्थस्य समाप्तत्वं वक्त्यनेनेति वाक्यतः ॥ १८० ॥

ज्ञेयार्थस्य प्रत्यगात्मनि समाप्तिपर"मनेन ह्येतत्सर्वं वेदे"ति वाक्यं व्या-ख्यातुमवतारयति । अज्ञेति ॥ १८० ॥

अनेनैतद्वेद सर्वमित्यात्मज्ञानमात्रतः ।
सार्वज्ञ्यमुक्तमानन्दसमाप्तिस्तु प्रवक्ष्यते ॥ ८१ ॥

प्रवक्ष्यत इति । अस्य "तदेतत्प्रेय" इत्यादि श्रुत्येतिशेषः ॥ ८१ ॥

अन्याज्ञानेन नान्यस्य क्वचिदप्यवबुद्धता ।
आत्मज्ञानेन सर्वस्य ज्ञानं कथमुदीर्यते ॥ ८२ ॥

शङ्कते । अन्येति ॥ ८२ ॥

सत्यमेवं भवेदेतद्यद्यात्माऽप्यन्यः इष्यते ।
आत्मासावन्य इति च नानुन्मत्तस्य गीरियम् ॥ ८३ ॥

समाधत्ते सत्यमित्यादि । आत्मासावन्य इतीयं गीर्वाक्यमनुन्मत्तस्य न भवतीत्युत्तरार्द्धे योजना । अयं भावः । आत्मास्वस्वरूपं तच्च भिन्नं न भवति अत

आत्मासौ भिन्न इत्युन्मत्तवाक्यमिति ॥ ८३ ॥

प्रत्यक्तत्त्वे परिज्ञाते जगत्तत्त्वं प्रबुध्यते ।
इत्यत्र पददृष्टान्तो यथावत् स विविच्यते ॥ ८४ ॥

"यथा ह वै पदेनानुविन्देदेव"मिति दृष्टान्तवाक्यं विवेक्तुं प्रतिजानी-
त्येति ॥ ८४ ॥

एकं पादं यथाश्वस्य दृष्ट्वाऽश्वत्वमशेषतः ।
दृष्टवानेव भवति दृष्टोऽश्व इति वर्णनात् ॥ ८५ ॥

दृष्टान्तमभिनयति । एकमिति । दृष्टवानेव भवतीत्यत्र हेतु दृष्टोऽश्व इ-
वर्णनादिति ॥ ८५ ॥

एवं स्वदेहमात्रस्थे साक्षितत्त्वेऽवलोकिते ।
अशेषजगतस्तत्त्वं लभ्येतैव न संशयः ॥ ८६ ॥

दार्ष्टान्तिकमाह । एवमिति ॥ ८६ ॥

आनन्दस्य समाप्तिर्या प्रत्यगात्मनि साऽधुना ।
प्रदर्श्यतेऽनुभूत्याऽत्र स्पष्टं सर्वजनीनया ॥ ८७ ॥
वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम् ।
इन्द्रियेभ्यः प्रियः प्राण आत्मा प्रियतमस्ततः ॥ ८८ ॥

प्रदर्श्यते इति ! अस्य "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तादि" त्यादि श्रुति-
शेषः । तत इति । प्राणादित्यर्थः ॥ ८७ ॥ ८८ ॥

स्वात्मभोगस्य हेतुत्वात्प्राणादौ प्रीतिरिष्यते ।
न स्वतोऽतो न सा मुख्या वेश्याप्रीतिर्यथा तथा ॥ ८९ ॥

स्वेष्टसाधने प्राणादौ सोपाधिः प्रीतिरतोन मुख्या तत्र सेति सदृष्टान्तमा-
ह । स्वेति ॥ ८९ ॥

प्रतीचि निर्निमित्तैव सर्वावस्थास्वपीष्यते ।
प्रीतिरग्न्युष्णवत्तस्मान्मुख्याऽसाविति गम्यताम् ॥ ९० ॥

आत्मनि मुख्यां तामाह । प्रतीचीति ॥ १९० ॥

सर्वान्तरतरत्वेन युज्यते निर्निमित्तता ।
बाह्येषु सनिमित्तत्वं प्रीतेः स्पष्टं गवादिषु ॥ ९१ ॥

"सर्वस्माद् अन्तरतरं यदयमात्मे" ति वाक्यं प्रतीचि प्रीतेर्निर्निमित्तत्वे हेतुपरत्वेन व्याचष्टे । सर्वान्तरेति पूर्वार्द्धेन ॥ ९१ ॥

व्याध्याद्युपद्रुतो लोको मृतिमप्यभिवाञ्छति ।
निर्निमित्तप्रियत्वे तु देहादेस्तन्न युज्यते ॥ ९२ ॥

बाह्यप्रीतेः सनिमित्तत्वं स्पष्टयति । व्याध्येति देहादेर्निर्निमित्तप्रियत्वे तु तन्मरणवाञ्छनं न युज्यत इति योजना ॥ ९२ ॥

अनात्मा प्रिय इत्येवं यो मुह्यति स पामरः ।
विनाशित्वमुदाहृत्य मूढं तं बोधयेद्बुधः ॥ ९३ ॥

अनात्मा भोगकालेऽस्य सुखं यावत्प्रयच्छति ।
तत्सहस्रगुणं दुःखं नाशकाले प्रयच्छति ॥ ९४ ॥

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
व्युत्थाय विषयेभ्यस्तां प्रतीच्येव निवेशयेत् ॥ ९५ ॥

"स योऽन्यमात्मनः प्रियं ब्रूयादि" त्यादेस्तात्पर्यमाह । अनात्मेति ॥९३॥ मूढं प्रति बोधप्रक्रियामाह । अनात्मेत्यादिद्विकेन । ९४ ॥ ९५ ॥

विषया इव न प्रत्यक्कदाचिदपि नश्यति ।
अतो दुःखप्रदत्वं तु शङ्कितुं न च शक्यते ॥ ९६ ॥

आत्मनो दुःखप्रदत्वशङ्काशक्येत्याह । विषया इति ॥ ९६ ॥

सूत्रार्थज्ञमनुष्याणां मतं विज्ञायते च न ।
मुमुक्षवो गुरुं प्राप्य चोदयन्त्यतिसम्भ्रमात् ॥ ९७ ॥

"तदाहुर्यंद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमुतद् ब्रह्मावे-

द्यस्मात्तत्सर्वमभवदि"ति "ब्रह्मवा इदमग्र आसीत्तदात्मान मेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदि"ति प्रश्नोत्तरवाक्यं व्याचष्टे सूत्रेत्यादिपद्याष्टादशकेन। "आत्मेत्येवोपासीते"ति सूत्रस्यार्थं जानन्ति ये मनुष्यास्तेषां मतं मननविषयीभूतं ब्रह्म चोहेतौ यतोन विज्ञायतेऽतो मुमुक्षवो गुरुं प्राप्यातिसम्भ्रमादादरबोदयन्ति पृच्छन्तीत्यर्थः ॥ ९७ ॥

यद्ब्रह्मविद्यया सर्वभावाप्तिं मन्वते नराः।
तद्ब्रह्म किं विदित्वाभूत्सर्वमित्येतदीर्यताम् ॥ ९८ ॥

प्रश्नमेवाह। यदिति ॥ ९८ ॥

एवं मुमुक्षुभिश्चोद्ये कृते करुणया गुरुः।
अनायासेन तच्चोद्यं परिहर्तुं वचोऽब्रवीत् ॥ ९९ ॥

वचः "ब्रह्मवा इदमग्र" इत्यादि ॥ ९९ ॥

ब्रह्मैवबोधात्प्राग्जीवो भूत्वात्मानमवेत्पुनः।
अहं ब्रह्मेति वद्बोधात्सर्वात्मकमभूत्तदा ॥ २०० ॥

उक्तवाक्यं व्याचष्टे। ब्रह्मेति ॥ २०० ॥

अवेत्सोपाधिरात्मायमात्मानं निरुपाधिकम्।
ज्ञातृज्ञानज्ञेयभेदान्न दोषोऽत्र मनागपि ॥ १ ॥

एकस्मिन् कर्तृकर्मभावादि विरोधमाशङ्क्यौपाधिकभेदमाश्रित्य परिहरति अवेदिति ॥ १ ॥

अविविक्तस्तु देहाद्यैरात्मा भवति वेदिता।
विविक्तात्मा वेदितव्यो धीवृत्तिर्वेदनं भवेत् ॥ २ ॥

ज्ञात्रादिभेदमाह। अविविक्त इति ॥ २ ॥

अविद्यारोपनिह्नुत्यै तदात्मानमवेदिति।
आत्माभिमुखधीवृत्तिरात्मवेदनमुच्यते ॥ ३ ॥

वेदनफलमाह। अविद्येति। अविद्यारोपनिवृत्तिफलकमात्माभिमुख धी

विरूपमात्मवेदनं नतु साक्षिस्वरूपं तस्य तस्याः साधकत्वेन तन्निवर्तकत्वायोगात्तदा-त्मानमेवावेदिति श्रुत्योच्यत इति योजना ॥ ३ ॥

आत्मानमेव तदवेदित्युक्तादेवकारतः ।
निर्माल्यवत्परित्याज्यं देहादीत्यगम्यते ॥ ४ ॥

एवकारं व्याचष्टे । आत्मानमिति ॥ ४ ॥

त्यज्यमाने तु देहादावात्मैवैकोऽवशिष्यते ।
परित्यक्तुमशक्यत्वादात्मानं निह्नुतेऽत्र कः ॥ ५ ॥

आत्मैवेत्येवकारेण देहादिं निरस्यति त्यजमानइति–देहादिवदात्मनोऽपिपरित्या-गमाशङ्क्याशक्यत्वान्निषेधाति । परित्यक्तुमिति ॥ ५ ॥

अहं ब्रह्मास्मि नो जीव इत्यवेद्ब्रह्मरूपताम् ।
शोधितस्याहमर्थस्य युज्यते ब्रह्मरूपता ॥ ६ ॥

अहमर्थस्यात्मनो ब्रह्मभिन्नत्वेन अहं ब्रह्मास्मि नजीवोऽस्मीत्यवेदित्युक्त-मयुक्त मित्याशंक्य सोपाहितस्य तथात्वेऽपि शोधिस्यातथात्वान्नैवमित्याह । अहमि-ति ॥ ६ ॥

ब्रह्मता नात्मनोऽन्यत्र नात्मता ब्रह्मणोऽन्यतः ।
यद्याथात्म्या प्रबोधात्तु तयोरेष विपर्ययः ॥ ७ ॥

अन्यत इति सार्वविभक्तिकस्तासिरन्यत्रेत्यर्थः । तयोर्ब्रह्मात्मनोः याथात्म्या-बोधादज्ञानाद्ब्रह्मात्मयथार्थस्वरूपविषयकादिति यावत् । एष विपर्यय इति । अहम-र्थ आत्मब्रह्माभिन्नः । ब्रह्मताद्भिन्नमित्याकारक इत्यर्थः ॥ ७ ॥

अब्रह्मानात्मताहेतौ प्रत्यग्ध्वान्ते निवर्तिते ।
आत्मानमेव ब्रह्मेति निर्विघ्नं प्रतिपद्यते ॥ ८ ॥

प्रत्यग्ध्वान्ते प्रतीचोऽज्ञाने ॥ ८ ॥

निवर्त्य भेदाद्भिन्नार्थौ ब्रह्माहंपदयोर्भवेत् ।
अब्रह्मानात्मते वार्य्ये एकस्मिन्नेव वस्तुनि ॥ ९ ॥

नतु ब्रह्माहमर्थयोरैक्ये अहंब्रह्मेतिप्रयोगो न युक्तः नहि भवत्येकत्र कलश इत्याशंक्य व्यावर्त्यभेदान्नैवमित्याह । निवर्त्येति । अब्रह्मत्वं ब्रह्मपदव्यावर्त्यम् । अनात्मत्वमात्मार्थकाहंपदव्यावर्त्यमित्याह । अब्रह्मेति ॥ ९ ॥

स्वानुभूत्यवसेयेऽस्मिन्प्रतीच्यब्रह्मतां जनाः ।
आरोप्य शास्त्रगम्येऽस्मिन्ननात्मत्वमकल्पयन् ॥ १० ॥

अब्रह्मत्वानात्मत्वयोः प्रशक्तिं दर्शयति । स्वेति । अस्मिन्निति ब्रह्मणीत्यर्थः ॥ १० ॥

अनुभूत्यवसेयोऽहं ब्रह्म शास्त्रसमर्पितम् ।
अस्मीति बोधादारोपद्वयमत्र निवर्तते ॥ ११ ॥

अनुभूत्यवसेयोऽहं शास्त्रसमर्पितं ब्रह्मास्मीति बोधादिति योजना। आरोपद्वयम् । अहं न ब्रह्म मद्भिन्नमित्याकारकारोपद्वयम् । अत्र प्रतीचि ॥ ११ ॥

अस्मीति वर्तमानोक्तेर्विद्याकालैव मुक्तता ।
सिद्धाऽतोऽसौ न साध्या स्यादग्निहोत्रादिकार्यवत् ॥ १२ ॥

आरोपद्वयनिवृत्तिमेवोक्तबोधः करोति नतु सर्वत्वापत्तिरूपां मुक्तिं तस्याः सिद्धत्वादित्याह । अस्मीति ॥ १२ ॥

तस्मात्तत्सर्वमभवादिति वाक्येन वेदनात् ।
उच्यते सर्वभावाप्तिरसर्वत्वापवादतः ॥ १३ ॥

नतु "तस्मात्तत्सर्वमभवदि"ति वाक्येन तज्जन्यत्वं तत्र प्रतीयत इत्याशङ्क्य तद्वाक्यस्यासर्वत्वनिषेधे तात्पर्यं नतु मुक्तेर्विद्याजन्यत्व इत्याह । तस्मादिति ॥ १३ ॥

स्वतः सर्वात्मकं ब्रह्म भात्यसर्वमिव भ्रमात् ।
विद्यया भ्रान्तिबाधेऽस्य सर्वत्वमवशिष्यते ॥ १४ ॥

उक्तार्थं विशदयति स्वत इति–अस्य प्रत्यगात्मनः ॥ १४ ॥

नन्वसौ सर्वभावाप्तिर्न विद्यामात्रतो भवेत् ।
विनोत्तमत्वानुष्ठानकालदेवाद्यनुग्रहम् ॥ १५ ॥

"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति सइदꣳ सर्वम्भवति तस्यह्नदेवा श्चना भूत्या ईशते आत्मा ह्येषां सभवती"ति वाक्यजातनिरास्पां शङ्कामाह । नन्वित्यादिपद्यषट्केन—उत्तमत्वेति उत्तमत्वं चानुष्ठानञ्च कालश्च देवाद्यनुग्रहश्चैषां समाहर इति विग्रहः ॥ १५ ॥

विप्रस्य फलदो वेदो न शूद्रस्याधमत्वतः ।
देवादेरुत्तमस्यैव तथा विद्या फलप्रदा ॥ १६ ॥

सर्वभावापत्तिहेतुमुत्तमत्वं सदृष्टान्तमाह । विप्रस्येति । अस्य यथेत्यादि उत्तमत्वादिति शेषश्च द्रष्टव्यः । तथेति विप्रस्य वेदवदित्यर्थः ॥ १६ ॥

यागज्ञानमनुष्ठानाद्विना न स्वर्गदं तथा ।
ब्रह्मज्ञानमनुष्ठानाद्विना सर्वाप्तिदं कथम् ॥ १७ ॥

तद्धेतुमनुष्ठानं सदृष्टान्तमाह । यागेति । अस्य यथेत्यादिः तथेत्युत्तरान्वयि १७

गर्भाधानमृतावेव नान्यकालेतथोत्तमे ।
विद्या कृतयुगे सर्वभावं यच्छति नान्यदा ॥ १८ ॥

तद्धेतुं कालं सदृष्टान्तमाह । गर्भेति । अस्य यथेत्यादिः ॥ १८ ॥

राज्ञा कृषिफलं यद्वत्करार्थं प्रतिवध्यते ।
सर्वभावस्तथा देवैर्यागभुग्भिर्निवार्यते ॥ १९ ॥

देवाद्यनुग्रहस्य तद्धेतुत्वं सदृष्टान्तमाह । राज्ञेति ॥ १९ ॥

तस्मादनुत्तमे जन्मन्यननुष्ठायिनः कलौ ।
युगे देवाद्यृणवतो न विद्या सर्वभावदा ॥ २० ॥

पूर्वपक्षं निगमयति । तस्मादिति ॥ २० ॥

इति चोदयितुं येत्र चत्वारश्चोद्यहेतवः ।
तद्यो य इत्यादिवाक्यैश्चतुर्भिस्तान्निरस्यति ॥ २१ ॥

एतत्प्रष्टव्यचतुष्टयहेतुचतुष्टयपरमुक्तवाक्यजातं व्याख्यातुमुपक्रमते इतीति-पद्यैः षोडशभिः । तान् नन्वसौ सर्वभावापत्तिरित्याद्युक्तांश्च गुरो हेतून्—तद्यो य इत्यादिवाक्यैर्निरस्यतीति योजना ॥ २१ ॥

न तावदुत्तमं जन्म सर्वभावप्रयोजकम् ।
उत्तमस्यापि देवादेः सर्वत्वं ब्रह्मबोधतः ॥ २२ ॥

"तद्योय" इत्यादि व्याचक्षाण उत्तमत्वस्य तद्धेतुत्वं निरस्यति-नेति॥२२॥

यो देवानामृषीणां वा मध्ये ब्रह्म विबुध्यते ।
असावसावेव सर्वममून्नान्यस्तु कश्चन ॥ २३ ॥
मनुष्याणां तथा मध्ये ब्रह्मवित्सर्वभावभाक् ।
विद्याविद्ये एव तस्मात्सर्वत्वाल्पत्वकारणे ॥ २४ ॥

अन्य इति ब्रह्मबोधरहित उत्तमजन्मापीत्यर्थः ॥ २३ ॥ २४ ॥

ब्रह्मवा इदमग्रेऽभूदिति विद्याधिकारिता ।
श्रूयते ब्रह्मणो ब्रह्म सर्वजातिषु तत्समम् ॥ २५ ॥

तद्ब्रह्म सर्वजातिषु सममित्यन्वयः ॥ २५ ॥

न पश्वादेः सर्वभावप्रसङ्गो बोधवर्जनात् ।
शूद्रजातिश्च विदुरः सति बोधे विमुच्यते ॥ २६ ॥

ननु सर्वजातिषु ब्रह्मणः समत्वेन तिरश्चोऽपि मुक्तिस्स्यादित्याशङ्क्य बोधराहित्येन तस्य तत्सम्भावनां निषेधन् तत्सत्त्वेन शूद्रस्यापि विदुरस्य तां दर्शयति । नेति ॥ २६ ॥

यागविद्येवात्मविद्या नानुष्ठानमपेक्षते ।
फलदान इति ज्ञेयं वामदेवनिदर्शनात् ॥ २७ ॥

"तद्धैतत्पश्यन्नृषिर्वामदेव" इत्यादि व्याचक्षाणो द्वितीयशङ्कां निरस्यति । यागेति ॥ २७ ॥

ब्रह्मात्मत्वं वामदेवः पश्यन्मन्वादिरूपताम् ।
प्रतिपेदे ह्यनुष्ठानावसरस्तत्र को वद ॥ २८ ॥

गर्भे कर्मानुष्ठानासम्भवेन वामदेवस्य बोधादेव सर्वभावापत्तिरित्याह । ब्रह्मेति ॥ २८ ॥

न चितो वामदेवे वा मनौ वान्येषु वा भिदा ।
तेन मन्वादिचिद्वामदेवेन प्रत्यपद्यत ॥ २९ ॥

तां स्पष्टयति नेति । चितोभिदा वामदेवादिषु न तेनेत्यादियोजना ॥२९॥

यत्तु पुण्ययुगे सर्वभावो न तु कलाविति ।
तदसद्बोधसाध्यस्य पुण्यकालानपेक्षणात् ॥ ३० ॥

"तादिदमप्येतर्हि य एवं वेदे" त्यादि विवृण्वँस्तृतीयां शङ्कामनूद्य दूषयति । यत्त्वित्यादि चतुष्केण ॥ ३० ॥

न सूर्यग्रहणापेक्षो बोधान्निद्राक्षयः क्वचित् ।
तथा न सर्वभावोऽयं कालभेदमपेक्षते ॥ ३१ ॥

पुण्यकालानपेक्षणादित्युक्तमर्थं दृष्टान्तेन विशदयति । नेति ॥ ३१ ॥

य एतर्ह्यपि वेदाहं ब्रह्मास्मीति तदैव सः ।
इदं सर्वं भवत्येव यदिदं जगदीक्ष्यते ॥ ३२ ॥

उक्तमर्थं श्रुत्यारूढं करोति । य इति ॥ ३२ ॥

अविचारितरम्यस्य नामरूपात्मकस्य यत् ।
जगतो वास्तवं रूपं सत्तत्त्वं ब्रह्म तद्भवेत् ॥ ३३ ॥

श्रुत्यर्थमभिनयति । अविचारितेति ॥ ३३ ॥

नराणामल्पधर्मत्वात्सर्वभावं दिवौकसः ।
वारयन्ति हविर्भोक्तुं तैर्दत्तमिति चेन्न तत् ॥ ३४ ॥

निरासितुं चतुर्थीं शङ्कामनुवदति । नराणामिति । पुण्यपुञ्जकृत्त्वेन बलीयांसो देवा अल्पपुण्यकृत्त्वेन दुर्बलानांमनुष्याणां सर्वभावं तैर्दत्तं हविर्भोक्तुं वारयेयुरित्यर्थः । निषेधति न तदिति ॥ ३४ ॥

तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः ।
इन्द्रादयोपि नैवालं सर्वभावाप्तिवारणे ॥ ३५ ॥

"तस्य ह न देवाश्च नाभूत्या ईशत" इत्येतद्व्याचक्षाणो निषेधे हेतुमाह। तस्येति । श्रौततस्येति पदस्य व्याख्या शिष्टं पूर्वार्द्धम् ॥ ३५ ॥

यद्यपीशा नृणां देवास्तथापि ब्रह्मवेदिनः ।
अनीशाः प्रत्युतैतेषामात्मा भवति तत्त्ववित् ॥ ३६ ॥

"आत्मा ह्येषां सभवती" त्येतद्व्याचष्टे । यद्यपीति ॥ ३६ ॥

इत्थमादेयविद्यायाः सूत्रवृत्ती उदाहृते ।
हेयाऽविद्या स्वकार्येण युक्ता सूत्रयति श्रुतिः ॥ ३७ ॥

वृत्तवर्तिष्यमाणयोरुपोद्घातसङ्गतिमाह । इत्थमिति । उपादेयविद्या "आत्मेत्येवोपासीत," ति सूत्रम् तद्वृत्तिस्तु "अत्र ह्येते सर्वे एकं भवन्ती"त्यादि "सऽन्यां देवतामुपास्त" इत्यादितः प्राक्तनो ग्रन्थः । हेयेति । यतः स्वकार्यसहिताऽविद्या हेयाऽतश्च श्रुतिः सूत्रयति सूत्रं कथयतीत्यर्थः ॥ ३७ ॥

स्वस्मादन्यां देवतां य उपास्ते स्वं न वेद सः ।
इति सूत्रमविद्यायाः सकार्यायाः श्रुतीरितम् ॥ ३८ ॥

"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न च वेदे" त्यविद्यासूत्रं श्रुतीरितमर्थतः पठति । स्वस्मादिति ॥ ३८ ॥

अचिन्त्यशक्तिश्चिन्निष्ठा स्वाश्रयं मोहयेत्क्वचित् ।
अविद्या साऽबोधनात्स्याज्जीवत्वभ्रान्तिकारिणी ॥ ३९ ॥

जीवोपाधिभूताऽविद्या स्वरूपतः कार्यतश्च हेयेत्युक्तं तत्राविद्यां भिन्दञ्जीवत्वादिभ्रमादिलक्षणं तत्कार्यं दर्शयति अचिन्त्यशक्तिरिति–अचिन्त्या चिन्तयितुमप्यशक्याश्शक्तयो यस्याः सा तथेत्यर्थः । स्वाश्रयं जीवम् । मोहयेद्भ्रमयेत् । सुषुप्तौ मोहादर्शनात्क्वचिदित्युक्तं जागरादाविति तदर्थः । या मोहयति साऽविद्येत्यन्वयः । आत्मयाथात्म्यबोधप्रतिबन्धनेन तस्या भ्रमकरत्वमाह । अबोधनादिति ॥ ३९ ॥

नाश्चर्यं मोहयेद्याऽसावीश्वरत्वस्य कल्पिका।
वस्तुत्वाभ्रान्तिरेवास्यां हेया सा त्ववतिष्ठते ॥ ४० ॥

इदानीमविद्यातो मायां भेत्तुं स्वीयमोहकरत्वाभावमीश्वरत्वकल्पकत्वञ्च तत्र कथयन् साकार्यतो हेयानस्वरूपत इत्याह। नेति ॥ ४० ॥

सृष्टिप्रकरणे तत्र मायाकारः पुरोदितः।
अव्याकृतगिरा तस्य कार्यं व्याकृतमीरितम् ॥ ४१ ॥

मायायां तत्कार्यविशेषे व्याकृते च "तद्धेदं तर्हीं"त्यादिवाक्यं प्रमाणयति। सृष्टीति। तत्रेति व्याख्यातपूर्वे इत्यर्थः। अव्याकृतगिरेतिपूर्वान्वयी। तस्य मायाकारस्य ॥ ४१ ॥

कर्मिप्रकरणे त्वस्मिन्नविद्याकार ईर्यते।
तस्माद्भिन्ना देवतेति धीरविद्याविजृम्भिता ॥ ४२ ॥

कर्मणोऽविद्वद्विषयत्वं दर्शयितुमारब्धेऽस्मिन् प्रकरणे सा कार्य्याऽविद्या कथ्यत इत्याह। कर्मीति। तत्र "न स वेद" त्यंशेनाविद्या अन्योऽसावन्योऽहमिति भ्रमलक्षणं तत्कार्य्यञ्च दर्शितमित्यर्थः ॥ ४२ ॥

स्वस्य तत्त्वमविज्ञाय यागदानादिकर्मभिः।
स्वतोऽन्या देवताः पाति समृद्धान्वणिजो यथा ॥ ४३ ॥
अपि भूरिपशोः पुंस एकस्मिन्नपि तस्करैः।
ह्रियमाणे पशौ दुःखं किमु सर्वापहारतः ॥ ४४ ॥

इदानीं "यथा पशुरेवं सदेवानां यथा हवैवहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्नप्रियं यदेतन्मनुष्या विद्युः"रित्येतद्व्याचष्टे। स्वस्येत्यादिपद्यचतुष्केण। समृद्धानिति। यथा धनधान्यादि सम्पन्नान् श्रेष्ठिनस्तद्दासादयः पान्तीत्यर्थः ४३।४४

सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोषिणा।
ह्रियमाणे महद्दुःखं सर्वेषाञ्च दिवौकसाम् ॥ ४५ ॥

तस्मादेषां न प्रियं तद्यन्मनुष्या विजानते ।
ब्रह्मात्मत्वमतो देवाः प्रतिबध्नन्ति वेदनम् ॥ ४६ ॥

परिमोषिणेति अस्य ह्रियत इत्युत्तरगतेनान्वयः । ब्रह्मज्ञानलक्षणचौर्य तदर्थः ॥ ४५ ॥ ४६ ॥

स्पष्टीकृतं पारतन्त्र्यं पशुदृष्टान्ततो नृणाम् ।
वर्णाश्रमादि तद्धर्मसृष्टिः कर्मार्थमीरिता ॥ ४७ ॥

वृत्तवर्तिष्यमाणयोः कार्यकारणभावरूपसङ्गतिं दर्शयन् "ब्रह्मवा इदम् आसीदित्यादे" रेताभ्याꣳहि रूपाभ्यां ब्रह्माभवदि" त्यन्तस्य तात्पर्यं दर्शयति। स्पष्टीति । तदिति वर्णाश्रमेत्यर्थः । कर्मेति देवप्रीतिकरज्योतिष्टोमादीत्यर्थः ॥ ४७ ॥

नन्वेवं तस्य मुक्तिश्च स्यादेवात्मधियं विना ।
अज्ञानकर्मणोः श्रुत्या सादरेणोपवर्णनात् ॥ ४८ ॥

शङ्कते । नन्विति—श्रुतितात्पर्यविषयेणाज्ञानेन जानितकर्मणापि ज्ञानमु क्तिस्स्यादित्यर्थः ॥ ४८ ॥

मैवमात्मा किमज्ञातो मुक्तिदः कर्म वा महत् ।
आम्नायकृषिवन्नायमज्ञातात्मा फलप्रदः ॥ ४९ ॥

"अथ यो हवा अस्माल्लोकात्स्वलोकमदृष्ट्वा प्रैतिस एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतं यदि हवा अनेवं विद् महत् पुण्यं कर्म करोति तद्धान्ततः क्षीयत" इत्येतद्व्याचक्षाण उक्तांशङ्कां निरस्यति मैवमित्यादि सप्तकेन ॥ ४९ ॥

अनधीतो यथा वेदो नार्थज्ञानेन पालयेत् ।
अकृता वा कृषिः पाति नाकर्त्तारं फलार्थिनम् ॥ ५० ॥

अज्ञानविशिष्टात्मनो मोक्षदत्त्वमाम्नाय कृषिवदिति दृष्टान्तेन निरस्योक्तदृष्टान्तं स्पष्टयति । अनधीत इति ॥ ५० ॥

तथा स्वात्माऽप्यविज्ञातो मुमुक्षुं मोक्षदानतः ।
न पालयत्यतो मुक्तिरज्ञस्य नहि कस्यचित् ॥ ५१ ॥

दार्ष्टान्तिकमाह । तथेति ॥ ५१ ॥

स्वात्माख्यलोकमज्ञात्वा यो देहाख्यस्वलोकतः ।
प्रैत्यसौ पुनरप्यन्यं देहलोकं व्रजेद्दृढम् ॥ ५२ ॥

अनात्मविन्महत्पुण्यमश्वमेधादिकं यदि ।
कुर्यान्नित्यफलायैतदथाप्यन्ते विनश्यति ॥ ५३ ॥

कृतस्यहि क्षयोऽवश्यं कोष्ठागारादिवद्भवेत् ।
न मोक्षायादरस्तस्माच्छ्रुतावज्ञानकर्मणोः ॥ ५४ ॥

विकल्पितं कर्मणो मोक्षदत्वं निरस्यति । स्वेति ॥ ५२ ॥ ५३ ५४ ॥

किन्तु जीवन्मुक्तिकाले बोधहेयं विवेचितम् ।
मुक्तिस्तु विद्या सूत्रेण सूचिता स्याद्विचारतः ॥ ५५ ॥

ननु तदादरो निष्फल इत्याशङ्कते । किन्त्विति । समाधत्ते जीवन्निति यतो जीवन्मुक्तिकालेऽज्ञानादिद्वयं बोधेन हेयमतः श्रुत्यादरेण विचारितमित्यर्थः । मुक्तिस्तु विद्यैव विद्या सूत्रेण सूचिता सा च विचाराद्भवतीत्याह । मुक्तिरिति॥५५॥

आत्मानमेव निर्द्वैतं स्वप्रभं प्रविचारयेत् ।
विचारयति यस्तस्य फलं न क्षीयते क्वचित् ॥ ५६ ॥

उक्तार्थे "आत्मानमेव लोकमुपासीत सय आत्मानमेव लोकमुपास्तेनहास्य-कर्मक्षीयत" इति व्याख्येयश्रुतिं प्रमाणत्वेनोपन्यस्यति—आत्मानमिति ॥ ५६ ॥

कामी कामयते यद्यत्सुखं स्वर्गादिजं पुमान् ।
अस्मादेवात्मनस्तत्तत् सृजत कर्मपूजितात् ॥ ५७ ॥

"आस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत् सृजत"इत्येतद्व्याचष्टे कामीति॥५७॥

अविनाशोऽखिलानन्दहेतुत्वं चेत्यदो द्वयम् ।
न कर्मणां फले युक्तं युक्तं विद्याफले तु तत् ॥ ५८ ॥

षोडशीं कण्डिकामवतारयितुमुक्तग्रन्थस्य तात्पर्यमाह । अविनाश इत्या-द्यष्टकेन—तदविनाशोऽखिलानन्दहेतुत्वं चेत्येतद्द्वयम् ॥ ५८ ॥

सिद्धस्य व्यञ्जिका विद्या व्यक्तात्मा फलमुच्यते ।
न ह्यात्मनो विनाशोऽस्ति नित्यं विद्याफलं ततः ॥५९॥

अविनाशमाह । सिद्धस्येति ॥ ५९ ॥

सार्वभौमादिगाः प्रोक्ता उत्तरोत्तरवृद्धितः ।
हिरण्यगर्भपर्यन्ता आनन्दा आत्मविन्दवः ॥ ६० ॥

ब्रह्मानन्दस्य भूतानि मात्रां यान्तीत्युदीरणात् ।
तत्तत्कर्मानुसारेण ब्रह्मानन्दः स्फुरेन्नृणाम् ॥ ६१ ॥

आखिलानन्दहेतुत्वमाह । सार्वेत्यादिना षट्केन । प्रोक्ता इति—आनन्द वल्ल्यादाविति शेषः ॥ ६० ॥ ६१ ॥

तत्तद्विषयकामेन चित्तेऽस्मिन्व्याकुलीकृते ।
आनन्द आत्मभूतोपि स तिरोधीयते नृणाम् ॥ ६२ ॥

आनन्दात्मतिरोधाने चित्तव्याकुलत्वं हेतुमाह । तदिति ॥ ६२ ॥

पुण्येन विषये लब्धे चित्ते स्वास्थ्यमुपागते ।
आत्मानन्दः स्फुरेत्तावद्यावन्न व्याकुलान्तरम् ॥ ६३ ॥

आत्मानन्दस्फुरणे हेतुमाह पुण्येनेति ॥ ६३ ॥

एवं च विषयानन्दा ब्रह्मानन्दस्य विन्दवः ।
सर्वानन्दानिधिर्विद्याफलमित्येतदीरितम् ॥ ६४ ॥

आनन्दविन्द्वभिव्यक्तिहेतुकर्मप्रसिद्धये ।
ब्रह्मक्षत्रादिवर्णानां सृष्टिर्यत्नेन वर्णिता ॥ ६५ ॥

आत्मानन्दस्य सर्वानन्दहेतोर्विद्याफलत्वमाह - एवं चेति ॥ ६४ ॥ ६५ ॥

वर्णाश्रमाभिमानी सन्नतत्त्वज्ञः पराङ्मति ।
देवादीनामाश्रयः स्यात्सर्वेषामापिपीलिकम् ॥ ६६ ॥

"अथो अयं वा आत्मा सर्वेषां भूतानां लोक" इत्यादिकां षोडशी कण्डिकां विवृणोति वर्णेत्यादिनाऽष्टकेन । आश्रय इति श्रौतलोकपदव्याख्या ॥ ६६ ॥

देवानां यागहोमाभ्यामृषीणां वेदपाठतः ।
पितॄणां श्राद्धतो नृणां वस्त्रान्नगृहदानतः ॥ ६७ ॥

आश्रयत्वं प्रपञ्चयति । देवानामित्यादिपद्यद्विकेन ॥ ६७ ॥

पशूनां तृणनीराभ्यामुच्छिष्टकणधान्यतः ।
श्वाखुटिट्टिभमुख्यानामेवं सर्वाश्रयो गृही ॥ ६८ ॥

टिट्टिभः पक्षिविशेषः ॥ ६८ ॥

कर्मणा नार्जितो यस्मान्न कश्चिदुपकारकृत् ।
गृही दैवादिभिस्तस्मादर्जितोऽभूत्स्वकर्मभिः ॥ ६९ ॥

यत्कर्मणा यदार्जितं तत्तस्य साक्षात्परम्परया वोपभोगं जनयत्येवेति न्यायमनुसृत्याह । कर्मणेति—यस्मात्कश्चिद्गृही कर्मणा नार्जितो देवादीनामुपकारकृन्न सम्भवति तस्मात्स्वकर्मभिर्दैवादिभिरार्जितः सोऽभूदिति योजना ॥ ६९ ॥

स्वस्वकर्मार्जितत्वेन देवाद्याः स्वस्वदेहवत् ।
अविनाशं सदेच्छन्ति गृहिणः स्वोपकारिणः ॥ ७० ॥

फलितमाह । स्वस्वेति ॥ ७० ॥

तत्त्वं बुध्वाननुष्ठानं नाशोऽयं गृहिणो महान् ।
एष देवादिभिः सर्वैर्न हि शक्यश्चिकित्सितुम् ॥ ७१ ॥

तत्त्वबोधेन गृहिणोऽननुष्ठानं देवादीनामचिकित्स्योव्याधिरित्याह । तत्त्वमिति ॥ ७१ ॥

कर्मणामननुष्ठानं मृतिरोगादिना तु यत् ।
नासाऽवात्यन्तिको नाशो यस्मात्पश्चात्करिष्यति ॥७२॥

मरणादिना तदननुष्ठानं न तेषां महाव्याधिरित्याह । कर्मणामिति ॥७२॥

माभूत्सर्वस्वहानिर्नो ब्रह्मयाथात्म्यविद्यया ।
इति देवादयो विद्यां प्रतिबध्नन्ति यत्नतः ॥ ७३ ॥

सर्वस्वहन्त्री ब्रह्मविद्येत्यभिप्रायेण देवादय स्तां प्रतिबध्नन्तीत्याह । मा-

भूदिति ॥ ७३ ॥

नन्वनर्थकरे केन गृहीत्वायं प्रवर्तितः ।
पारतन्त्र्येऽमृतेनेव धीमानत्र प्रवर्तते ॥ ७४ ॥

सप्तदशीं कण्डिकामवतारयितुं शङ्कते । नन्विति । ननु प्रवृत्तिरसिद्धत्वात्
अमृतेनेवेत्यादि—अत्र फले हेतौ तृतीया अमृतफलेव पारतन्त्र्ये धीमतः प्रवृत्तिर्
भवितव्यं तत्कारणेनेत्यर्थः ॥ ७४ ॥

देवादिपारतन्त्र्यन्तु गृहिणामधिकारिणाम् ।
मिथ्या धीमात्रहेतुत्वान्नाप्यविद्या प्रवर्तिका ॥ ७५ ॥

देवादीनां प्रवर्तकत्वं निरस्यति । देवादीति । अधिकारिणामिति—अम
तु विशिष्टाधिकारानारूढानामिति शेषः । अविद्या मिथ्याधियमेव जनयति ननु प्र
र्वर्तयति चेति नसाप्रवर्तिकेत्याह । मिथ्येत्यादि ॥ ७५ ॥

तर्हि प्रवर्तकं ब्रूमः काम एव प्रवर्तकः ।
काम एष क्रोध एष इत्यादि स्मृतिवाक्यतः ॥ ७६ ॥

समाधत्ते तर्हीति ॥ ७६ ॥

अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित् ।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ ७७ ॥

तत्रैव स्मृतिवाक्यान्तरं पठति । अकामत इति ॥ ७७ ॥

तस्मात्कामयते पूर्वं ब्रह्मचारी चतुष्टयम् ।
जाया मे स्यादथापत्यमथ वित्तमथ क्रिया ॥ ७८ ॥

"आत्मैवेदमग्र आसीदेक एवं सोऽकामयत जाया मे स्यादि" इत्यादिकां स
शीं कण्डिकामवतार्य विवृणोति । तस्मादिति—चतुष्टयमित्युक्तं विशदयति
जायेत्यादिना ॥ ७८ ॥

एतावानेव संसारे कामो मातोऽधिकः क्वचित् ।
लोकान्तरं कर्मफलं कर्मोक्त्यैवेरितं भवेत् ॥ ७९ ॥

ननु लोकान्तरस्य कर्मफलस्याधिकस्य सत्त्वात्कथमेतावानेवेत्यवधारणमित्याशङ्क्यां कर्मोक्त्यैव तत्फलस्योक्तत्वेन निरस्यति । लोकान्तरमित्यादि ॥ ७९ ॥

असम्भवे तु जायादेर्मनोवागादिषु क्रमात् ।
आत्मजायादि सङ्कल्प्य ध्यायेज्जायादिसिद्धये ॥ ८० ॥

अधुना "मन एवास्यात्मे" त्यादिकण्डिकाशेषं व्याचष्टे—असम्भव इति ॥ ८० ॥

एवं कामप्रेरितः सन् याति कर्माधिकारिताम् ।
अवरुन्धन्ति गृहिणं देवाद्या अधिकारिणम् ॥ ८१ ॥

अविद्यासूत्रव्याख्यामुपसंहरति । एवमित्यादि ॥ ८१ ॥

इत्यविद्यासूत्रयुक्तोऽनर्थो यत्नेन विस्तृतः ।
अयं निवर्त्यो विदुषा जीवतेति श्रुतेर्मतिः ॥ ८२ ॥

तत्सूत्रवृत्तितात्पर्यमाह । इतीति । उक्त इति प्रतिपादित इत्यर्थः । विस्तृत इति विस्तरेणवर्णित इत्यर्थः ॥ ८२ ॥

कर्मोपास्तिफलं कण्वः माहात्म्यब्राह्मणे तथा ।
अव्याकृतं व्याकृतं च विद्याविद्ये ह्यतिस्फुटम् ॥ ८३ ॥

तृतीयाध्यायविषयं संक्षेपेण दर्शयति । कर्मेति ॥ ८३ ॥

अथाध्याये चतुर्थे च कण्वः पञ्चमषष्ठयोः ।
उपाख्यानानि बहुधा वक्ष्यत्यात्मावबुद्धये ॥ ८४ ॥

अधुना चतुर्थपञ्चमषष्ठानां तानाह अथेति ॥ ८४ ॥

अजातशत्रुर्मैत्रेयी दध्याङ्ङित्युक्तनामभिः ।
आख्यानान्यंकितानि स्युश्चतुर्थाध्यायगानि हि ॥ ८५ ॥

चतुर्थाध्यायगताख्यानानां तत्तन्नामाङ्कितत्त्वमाह । अजातेति ॥ ८५ ॥

आश्वलश्चार्त्तभागश्च भुज्यूषस्तकहोलकाः ।
गार्ग्युद्दालकशाकल्याः पञ्चमाध्यायगा इमे ॥ ८६ ॥

पञ्चमाध्यायगतानां तेषां, तदाह आश्वल इति ॥ ८६ ॥

आख्यानान्येतदीयानि स्युः षष्ठाध्याय ईरितम् ।
जनकस्य ह्युपाख्यानं संग्रहाद्विस्तरादपि ॥ ८७ ॥

षष्ठाध्यायस्य संक्षेपोक्तविषयं विस्तरेणाह । आख्यानानीति ॥ ८७ ॥

उपाख्यानेषु सर्वेषु प्रत्येकं ब्रह्मवर्णितम् ।
श्रुतैरेतैरुपाख्यानैर्ब्रह्मविद्या दृढा भवेत् ॥ ८८ ॥

सर्वेषामुपाख्यानानां ब्रह्मविद्यादार्ढ्यं फलमाह । उपाख्यानेष्विति ॥ ८८ ॥

यामात्मब्राह्मणे विद्यां कण्वः प्रोवाच सा स्फुटम् ।
व्याख्याता प्रीयतां तेन विद्यातीर्थमहेश्वरः ॥ २८९ ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे बृहदारण्यके कण्व-
विद्याप्रकाशो नाम त्रयोदशोध्यायः ॥ १३ ॥

तेनेति स्पष्टतद्व्याख्यानेनेत्यर्थः ॥ ८९ ॥

इति श्रीकाशीनाथकृतायां मितप्रकाशविवृत्तौ बृहदारण्यकेकण्व
विद्याप्रकाशो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथ चतुर्दशोऽध्यायः ।

अजातशत्रुरध्याये चतुर्थे ब्राह्मणैस्त्रिभिः ।
विद्यां बालाकये प्राह तां विस्पष्टमितो ब्रुवे ॥ १ ॥

चतुर्थाध्यायगतब्राह्मणत्रिकस्य विषयमाह । अजातेति-इत इति-चतुर्दशाध्याये इत्यर्थः ॥ १ ॥

अजातशत्रुर्ब्रह्मात्मवेदनाच्छौर्यतोऽपि च ।
अन्तर्बहिश्च निःशत्रुः काश्यां राजा बभूव सः ॥ २ ॥
गर्गगोत्रजविप्रोऽयं बालाकिर्नैव तत्त्ववित् ।
किन्तु प्राणोपासकोऽयं दर्पेण महता वृतः ॥ ३ ॥

अजातशत्रुब्रह्मेति । ब्रह्मात्मवेदनादन्तर्निःशत्रुः । शौर्यतो बहिर्निःशत्रुरित्यर्थः ॥ २ ॥ ३ ॥

अध्यात्ममधिदैवं च ब्रह्मस्यात्प्राणदेवता ।
समष्टिव्यष्टिरूपाऽसाविति गार्ग्यस्य निश्चयः ॥ ४ ॥

"दृप्तबालाकिर्हे" त्यादिं प्रथमां कण्डिकां त्रिभिर्व्याख्याय चतुर्थेन पद्येन "सहोवाच गार्ग्य" इत्यादिकाः कण्डिका द्वादश व्याचष्टे अध्यात्ममिति—आत्मनि देवेषु च या प्राणलक्षणा देवताऽसौ समष्टिव्यष्टिरूपा ब्रह्मस्यादिति योजना ॥ ४ ॥

रव्याद्या व्यष्टयः प्रोक्ताः समष्टिस्तु विराड्भवेत् ।
न मुख्यब्रह्मतैतेषामिति राज्ञो विनिर्णयः ॥ ५ ॥

"सहो वाचाजातशत्रुरेतावन्नू३" इत्यादिके चतुर्दशीपञ्चदश्यौ कण्डिके व्याचष्टे । रव्याद्या इत्यादिभिरूनविंशत्यापद्यैः । एतेषामिति व्यष्टि लक्षणरव्यादीनां समष्टिशब्दितविराजश्चेत्यर्थः ॥ ५ ॥

तस्मादुपासको गार्ग्यो न मुख्यं ब्रह्म वेत्त्यतः ।
अन्वयव्यतिरेकाभ्यां बोधयामास तं नृपः ॥ ६ ॥

मुख्यम् निर्विशेषम् ॥ ६ ॥

स्याद्विज्ञानमयो भोक्ता न प्राण इति जागरे।
विवेको दुःशको यस्मादत्र द्वावपि सुस्थितौ ॥ ७॥

जागरेऽ विवेच्य सुषुप्तौ विवेचयतो राज्ञोऽभिप्रायमाह । स्यादित्यादि-
भिः—अत्र जागरे—द्वौ प्राणविज्ञानमयौ ॥ ७ ॥

यो विज्ञानमयः सुप्तावसावुपरतिं गतः।
वर्तते पूर्ववत्प्राणो विवेकः सुशकस्तदा ॥ ८ ॥

वर्त्तत इति प्राणो वर्त्तत इत्यन्वयः । तदा सुषुप्तिसमये ॥ ८ ॥

तस्मात्सुषुप्तं पुरुषमामन्त्र्य प्राणनामभिः।
अप्रबोधादभोक्तृत्वं प्राणस्याऽस्पष्टयन्नृपः ॥ ९ ॥

प्राणनामभिर्बृहदित्यादिभिः ॥ ९ ॥

यदि भोक्ता भवेत्प्राणो जाग्रद्वच्छब्दमागतम्।
अश्रोष्यन्नाशृणोत्तस्मान्न स्याद्भोक्तोपलादिवत् ॥ १०॥

एतदेव स्पष्टयति । यदीति ॥ १० ॥

श्रोत्रादीनां मुपाधीनां सुप्तावुपरतत्त्वतः।
यथा जीवो न वेत्त्येवं प्राणोऽपीत्यसदुच्यते ॥ ११ ॥

शङ्कते । श्रोत्रादीति । शिष्यावधानाय शङ्कानिरसनप्रक्रियां कथयित्वा प्र-
तिजानीते—असदिति ॥ ११ ॥

नेन्द्रियाणां भवेत्स्वापो यदि प्राणप्रधानता।
नामात्याः शेरते यस्माद्राज्ञि स्वामिनि जाग्रति ॥ १२॥

यदि संघातः प्राणातिरिक्तभोक्तृप्रधानको न स्यात्तस्यात्तदेन्द्रियाणां स्वापो न स्यात्
इति सदृष्टान्तमाह । नेति ॥ १२ ॥

देवताप्रतिषेधार्थं बोध्यते चन्द्रनामभिः।
तदबोधादभोक्तृत्वं देवतायाः सुनिश्चितम् ॥ १३ ॥

प्राणस्याभोक्तृतां गार्ग्यो व्यबुध्यत ततो नृपः ।
विज्ञानमयबोधाय चक्रे यत्नमुपायतः ॥ १४ ॥

बृहदादिचन्द्रनाम्ना सम्बोधनेन प्राणदेवताचन्द्रस्याभोक्तृत्वं प्रतिपादितमित्याह । देवतेति ॥ १३ ॥ १४ ॥

आपिष्यापिष्य बहुशः सुप्तं राजा व्यबोधयत् ।
आपेषणोत्थसंक्षोभात्ततोऽसौ प्रत्यबुध्यत ॥ १५ ॥

"तं पाणिना पेषं बोधयांचकार सहोत्तस्थौ" वित्येतद्व्याचक्षाणो यत्नं प्राणातिरिक्तभोक्तृबोधफलकमाह । आपिष्येति । असौ सुषुप्तः पुरुषः ॥ १५ ॥

मृतकल्पमिमं देहं सञ्चितावेशयन्निव ।
ज्वलन्निव समुत्तस्थौ यः स भोक्तेति गम्यताम् ॥ १६ ॥

तत्र राजा बालाकिं संघातातिरिक्तं भोक्तारं बोधयति । मृतेति । सञ्चितेति-संचित आवेशो यस्मिंस्तं कुर्वन्निवेत्यर्थः ॥ १६ ॥

विज्ञानमन्तः करणं तस्मिन्नात्मोपलभ्यते ।
राहुश्चन्द्रे यथा तद्वद्विज्ञानमयता ततः ॥ १७ ॥

श्रौत्रविज्ञानमयशब्दप्रवृत्तिनिमित्तं विज्ञानेऽन्तःकरणे उपलभ्यमानत्वमाह । विज्ञानमिति । ततोऽन्तःकरणलक्षणविज्ञाने उपलभ्यमानत्वात् ॥ १७ ॥

स्वाभासवदविद्योत्थबुध्यादिव्याप्तिविभ्रमात् ।
तदात्मत्वाभिमानी सन्नहमित्युपलभ्यते ॥ १८ ॥

विज्ञाने आत्मोपलब्धिं दर्शयति । स्वेत्यादि । स्वाभासवानविद्योत्थो यो बुध्यादिस्तत्सम्बन्धाध्यासेन निरुक्तबुध्यापि तादात्म्याभिमानीसन्नात्माऽहमित्युपलभ्यत इत्यर्थः ॥ १८ ॥

यद्वोपलब्धिमात्रोऽपि विज्ञानाध्यस्तकर्तृताम् ।
प्राप्योपलब्धा स्यात्तेन विज्ञानमय उच्यते ॥ १९ ॥

यद्वा विज्ञानं वृत्तिरूपं ज्ञानं नतु स्वरूपभूतमस्ति यस्मिन् सविज्ञानमय इत्याह यद्वेति । मात्रोऽपीति । अस्यात्मेतिशेषः विज्ञानेऽन्तः करणे यद् वृत्तिरूपज्ञान-

कर्तृत्वं तदात्मन्यारोप्य विज्ञाता स्यादित्यादिरर्थः ॥ १९ ॥

स्फटिको रक्ततां प्राप्य जपाकुसुमकल्पिताम् ।
पद्मरागायते तद्वदुपलब्धृत्वमात्मनः ॥ २० ॥

आत्मनोविज्ञातृत्वं सदृष्टान्तमाह । स्फटिक इति ॥ २० ॥

यद्वोपलभ्यो देहादेर्विज्ञानेन विवेचितः ।
स्याद्विज्ञानमयस्तेन पुरुषः परिपूरणात् ॥ २१ ॥

यद्वा विज्ञानेनान्तःकरणेनोपलभ्यते देहादेर्विविच्यते यत आत्मा
विज्ञानमय इत्याह यद्वेति । पुरुषपदार्थमाह । परिपूरणादिति ॥ २१ ॥

अशेषान् कल्पितानेष विज्ञानादीननात्मनः ।
आत्मा पूरयति प्रत्यक् सर्पादीन्रशना यथा ॥ २२ ॥

पूरकत्वं विशदयति विज्ञानात्मनः—अशेषानिति । विज्ञानादीनिति ।
अन्तःकरणदीनित्यर्थः ॥ २२ ॥

यो विज्ञानमयस्तस्य द्वैतधीः स्वप्नजाग्रतोः ।
अस्ति सुप्तौ तु सा नास्ति स्वभावोऽस्यात्र को भवेत् ॥ २३ ॥
तस्य स्वभावं निर्णेतुं सुप्तौ क्वाभूदयं पुनः ।
कुत आयादिमं देहमित्येतदिह चिन्त्यते ॥ २४ ॥

"सहो वाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः
तदाभूत् कुत एतदागादिति तदुहनमेने गार्ग्य" इत्येतस्योत्तरं दातुमारभते-य इत्या-
दिना—सा द्वैतधीरस्य विज्ञानमयस्य । अत्र सुषुप्तौ ॥ २३ ॥ २४ ॥

बुद्ध्यावक्षेषु चात्माऽयं चिद्रूपः प्रतिविम्बति ।
तादृग्बुद्धीन्द्रियोपाधिर्जागर्त्यात्मेति भण्यते ॥ २५ ॥

आत्मनो जागरावस्थां दर्शयति । बुद्धाविति ॥ २५ ॥

कर्मक्षये बुद्धिरक्षैः सहाज्ञाने विलीयते ।
चैतन्यप्रतिविम्बाश्च लीयन्ते स्वाश्रया ननु ॥ २६ ॥

सप्तदशीमष्टादशीमूनविंशतितमीं तिस्रः कण्डिका विवृण्वन् कैष तदाभूदित्यस्योत्तरं दातुमारभते । कर्मक्षय इत्यादिभिरेकोनत्रिंशतापद्यैः । स्वाश्रया ननु अन्तःकरणलयांत्तरम् ॥ २६ ॥

तदेन्द्रियाणां विज्ञानं धीविज्ञानेन संयुतम् ।
विज्ञानमय आदत्ते इति श्रुत्योपवर्ण्यते ॥ २७ ॥

श्रुत्येति "तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाये" त्याकारयेत्यर्थः॥२७॥

धीविज्ञानोपसंहारे विज्ञानमयताक्षतौ ।
निर्विकारात्मचैतन्यं केवलं परिशिष्यते ॥ २८ ॥

श्रुतेस्तात्पर्यमाह । धीति । विज्ञानमयताया अभावे केवलचैतन्यपरिशेष इत्यर्थः ॥ २८ ॥

एतदेव विवक्षित्वा प्रतिपादयति श्रुतिः ।
य एषोऽन्तर्हृदाकाशस्तस्मिँच्छेते इतीदृशी ॥ २९ ॥

अत्रार्थे "य एषोऽन्तर्हृदय आकाशस्तस्मिंच्छेते" इति वाक्यशेषमनुकूलयति—एतदेवेति ॥ २९ ॥

बुद्धिर्हृदयशब्देन हृन्निष्ठत्वाद्विवक्ष्यते ।
आसमन्तात्काशतेऽयमित्याकाशोऽत्र चिद्वपुः ॥ ३० ॥

हृदयाकाशशब्दौ व्याचष्टे । बुद्धिरिति ॥ ३० ॥

बुद्धेरन्तः प्रतीचोऽन्यो नार्थः संभाव्यते यतः ।
तस्मादाकाशशब्देन प्रत्यगात्मेह गृह्यते ॥ ३१ ॥
प्राणादीनां यतो जन्म वक्ष्यते प्रत्यगात्मनः ।
तस्मादा काशशब्देन ब्रह्मैवात्राभिधीयते ॥ ३२ ॥

आकाशस्य भौतिकत्वं निरस्यति । बुद्धेरित्यादिपद्यद्विकेन ॥ ३१ ॥३२॥

अधिष्ठानत्वमन्तस्त्वमपरिच्छिन्नवस्तुनः ।
अन्तर्बहिर्विभागोयं न मुख्य उपपद्यते ॥ ३३ ॥

अत्र मध्यदेशवृत्तित्वं नान्तः शब्देन विवक्ष्यतेऽसम्भवादित्याह । अ-
ष्ठानत्वमिति ॥ ३३ ॥

पराक्प्रमेयभूमिभ्यो मनसि व्युत्थिते सति ।
अनन्यवेधप्रात्यक्ष्याद्य एष इह भण्यते ॥ ३४ ॥

"य एष" इति श्रुत्या स्वप्रकाशत्वमुक्तमित्याह । परागित्यादि ॥ ३४ ॥

स्वतोऽवगमरूपेऽस्मिन्कूटस्थे निर्द्वयात्मनि ।
कात्स्न्येनावस्थितिर्भोक्तुः शेत इत्यभिधीयते ॥ ३५ ॥

शेते शब्दार्थमाह । स्वत इति । भोक्तुर्जीवस्य ॥ ३५ ॥

घटभङ्गे घटाकाशो महाकाशान्न भिद्यते ।
विज्ञानलोपे विज्ञानमयस्यैवं परात्मता ॥ ३६ ॥

सप्तम्या प्रतीयमानस्याधाराधेयभावस्य कल्पितत्वं परमार्थतोऽभेदश्च
दृष्टान्तमाह । घटभङ्ग इति ॥ ३६ ॥

देहाद्यध्यक्षतां हित्वा सुप्तौ स्वात्मनि वर्त्तते ।
इत्येतत्साध्यते श्रुत्या समाख्यायाश्च युक्तितः ॥ ३७ ॥

"तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नामे"त्यादि व्याचष्टे
देहेति । चोभिन्नक्रमो युक्तित इत्यस्यानन्तरं द्रष्टव्यः ॥ ३७ ॥

सुप्तस्य स्वपितीत्येषा समाख्या सर्वसम्मता ।
निरुक्तिमाहुश्छन्दोगाः स्वमपीत इतीदृशीम् ॥ ३८ ॥

"स्वमपीतो भवती" तिच्छान्दोग्यश्रुत्या स्वपिति समाख्यायाः सर्व-
म्मतत्वमाह । सुप्तस्येति ॥ ३८ ॥

अतः समाख्यया सुप्तौ स्वाभाविक्यात्मनि स्थितिः ।
युक्तिश्चोपाधिसंहारः संसारित्वनिवृत्तये ॥ ३९ ॥

युक्तेश्च स्वाभाविकीमात्मनि स्थितिमाह । युक्तिश्चेत्यादिसार्द्धेन ॥ ३९ ॥

वागाद्युपाधिसम्बन्धात्संसारित्वमिवेक्ष्यते।
ते तूपसंहृताः सर्वे ततोऽसंसारितात्मनः ॥ ४० ॥

ते वागाद्युपाधयः ॥ ४० ॥

सर्वेन्द्रियवियोगेऽपि सुखिदुःखित्वमात्मनः।
स्वप्ने दृष्टमतः सङ्ग आत्मनस्तात्त्विको भवेत् ॥ ४१ ॥

शङ्कते। सर्वेन्द्रियेति—अतः स्वप्ने दृष्टत्वात् सङ्गः सुखादिसंसर्गः ॥४१॥

मैवं मृषात्वात्स्वप्नस्य मनोमात्रविजृम्भणात्।
बाह्येन्द्रियविलोपेऽपि न मनो लुप्यते तदा ॥ ४२ ॥

"स यत्रैतत् स्वप्न्यया चरति तेहास्यलोकास्तदुतेव महाराजो भवती" त्यादिकां कण्डिकां व्याचक्षाणः समाधत्ते। मैवमित्यादिना ॥ ४२ ॥

महाराजादयस्तस्य स्वप्नानुभवगोचाराः।
न वास्तवा इति ज्ञेयाः शयानेभ्यः पृथक्त्वतः ॥ ४३ ॥

तस्य स्वप्नद्रष्टुः—शयानेभ्य इति- अस्य महाराजादिभ्य इति शेषः ॥ ४३ ॥

दृश्यं मिथ्याऽस्तु तद्द्रष्टुर्द्रष्टृता वास्तवी ततः।
दृश्यसापेक्षतेत्येषा शङ्कात्र विनिवार्यते ॥ ४४ ॥

तद्द्रष्टुर्मिथ्याभूतदृश्यद्रष्टुस्ततोदृश्यस्य मिथ्यात्वात् ॥ ४४ ॥

न किञ्चन यदा वेद तदा सुप्त इतीरणात्।
आत्मनो ज्ञानकर्तृत्वं सुप्तौ नास्तीति गम्यते ॥ ४५ ॥
सुप्तौ केन क्रमेणायमुपाधिः प्रविलीयते।
तत्क्रमस्यावबोधाय हृदयादि विविच्यते ॥ ४६ ॥

"अथ सुषुप्तौ भवति यदा न कस्यचन वेदे" त्यादिकामूनविंशतितमीं कण्डिकां व्याचष्टे। नेति ॥ ४५ ॥ ४६ ॥

आनाभितस्तथा कण्ठाद्धृदयं मध्यतः स्थितम्।
सनालं पद्मकोशाभं पञ्चच्छिद्रमधोमुखम् ॥ ४७ ॥

हृदयं विविनक्ति । आनाभित इति ॥ ४७ ॥

कदम्बकुसुमोद्भूतकेसरा इव सर्वतः ।
प्रसृता हृदयान्नाड्यो वह्न्नरसपूरिताः ॥ ४८ ॥

नाड्य इति हितानामिका इत्यर्थः ॥ ४८ ॥

निर्गत्य हृदयाद्बुद्धिस्तासु स्वप्नं प्रपश्यति ।
ताभिर्देहाद्बहिर्गत्वा जागर्त्तीत्यभिधीयते ॥ ४९ ॥

स्वप्नजागरावाह । निर्गत्येति ॥ ४९ ॥

पुनः प्रत्यवसृत्यैषा पुरीतद्वेष्टिते हृदि ।
प्रविश्य लीयते देहं व्याप्य सामान्यवृत्तितः ॥ ५० ॥

"ताभिः प्रत्यवसृत्य पुरीतति शेते" इत्येतद्व्याचक्षाणः सुषुप्तिमाह । पुनरिति । एषा बुद्धिः-सामान्यवृत्तितः प्राणसञ्चारानुकूलव्यापारादितः ॥ ५० ॥

सर्वसंसारदुःखानामत्यन्तोपरमात्तदा ।
आनन्दस्य परा निष्ठा दृष्टान्तैः सोपमीयते ॥ ५१ ॥

"स यथा कुमारो वा महाराजो वे" त्यादि व्याचष्टे । सर्वेति ॥ ५१ ॥

इन्द्रियस्याप्ररूढत्वात्स्वेष्टप्राप्तेर्विवेकतः ।
नीरागाणां बालराजब्राह्मणानां क्रमात्सुखम् ॥ ५२ ॥

क्रमादिति । बालस्येन्द्रियाप्ररूढत्वाद्राज्ञः स्वेष्टप्राप्तेर्महाब्राह्मणस्य विवेकत इत्यर्थः ॥ ५२ ॥

दुःखं रागद्वेषजन्यं तदभावे सुखं स्वतः ।
इति व्याप्तिगृहीत्यर्थं बहुदृष्टान्तवर्णनम् ॥ ५३ ॥
अद्वयानन्दरूपत्वमित्थं सुप्तौ प्रदर्शितम् ।
एतावता स्वभावोऽस्य निर्णीतः प्रत्यगात्मनः ॥ ५४ ॥

बहुदृष्टान्तवर्णनतात्पर्यमाह । दुःखमिति ॥ ५३ ॥ ५४ ॥

कामूदेष इति प्रश्नं निर्णीय कुत आगतः ।
इति प्रश्नं विनिर्णेतुमूर्णनाभ्यादिका श्रुतिः ५५

वृत्तं कथयन् ''स यथोर्णनाभिस्तन्तुनोच्चरेदि'' त्यादिकां कण्डिकां कुत एतदागादित्येतस्योत्तरभूतां व्याचष्टे । केति ॥ ५५ ॥

यः सुप्तौ निश्चितः स्वात्मा तस्य ब्रह्मत्वसिद्धये ।
जगत्सृष्टिर्वर्ण्यते ऽस्मात्सृष्टौ दृष्टान्त उच्यते ॥ ५६ ॥
अचेतनो यथा तन्तुरूर्णनाभेः सचेतनात् ।
जातश्चिदात्मनस्तद्वत्प्राणलोकाद्यचेतनम् ॥ ५७ ॥
विस्फुलिङ्गा यथा चाग्नेर्जायन्तेऽग्निस्वभावतः ।
तथा सुप्तात्मनो जीवा विज्ञानमयनामकाः ॥ ५८ ॥

तस्य सुप्तौ निश्चितस्य स्वात्मनः ॥ ५६ ॥ ५७ ॥ ५८ ॥

स्वरूपतो जन्मतश्च प्राणादिर्भ्रान्तिकल्पितः ।
जीवस्य कल्पितं जन्म स्वरूपं तु न कल्पितम् ॥ ५९ ॥

प्राणादीनां स्वरूपतो जन्मतश्च कल्पितत्वं जीवस्य जन्मनैव कल्पितत्वं न स्वरूपत इत्याह । स्वरूपत इति ॥ ५९ ॥

उद्भूतिस्थितिनाशाः स्युर्जगतो ऽस्य प्रतिक्षणम् ।
अविद्यामात्रहेतुत्वान्नामीषां विद्यते क्रमः ॥ ६० ॥

सृष्टिक्रमविगानमाशङ्क्य तत्र श्रुतितात्पर्याभावेन परिहरति । उदिति॥६०॥

यस्मादविद्ययैवात्मा प्राणक्षेत्रज्ञरूपभाक् ।
स्वतोऽतः सपरं ब्रह्म तस्योपनिषदुच्यते ॥ ६१ ॥

''तस्योपनिषत्सत्यस्य सत्यमिति प्राणावैसत्यं तेषामेष सत्य'' मित्येतद् व्याख्यातुमारभते । यस्मादिति ॥ ६१ ॥

यद्गुह्यं ब्रह्मणो नाम बोधायोपासनाय वा ।
तस्यादुपनिषच्छब्दवाच्यं तच्चात्र बुध्यते ॥ ६२ ॥

उपनिषत्पदार्थमाह । यदिति । तदिति । उपनिषच्छब्दवाच्यमित्यर्थः । बुध्यत इति । बोध्यत इत्यर्थः ॥ ६२ ॥

सत्यस्य सत्यमित्येतन्नाम ब्रह्मावबोधकम् ।
प्राणा आपाततः सत्याः सत्यं ब्रह्मैव वस्तुतः ॥ ६३ ॥

उक्तार्थं प्रपञ्चयति । सत्यस्येति । प्राणा लिङ्गशरीरलक्षणा आपाततो अवि-चारतः ॥ ६३ ॥

असत्यो देह उदित एकजन्मन्युपक्षयात् ।
सत्याः प्राणा लिङ्गरूपा आमोक्षमनपक्षयात् ॥ ६४ ॥

स्थूलशरीरापेक्षया प्राणशब्दितस्य लिङ्गशरीरस्य सत्यत्वमाह । असत्य इति ॥ ६४ ॥

मोक्षेऽप्यक्षीण आत्मातु सत्यसत्य उदाहृतः ।
सत्यस्य सत्यं प्रोवाच ब्रह्म बालाकये नृपः ॥ ६५ ॥

तदपेक्षयापि ब्रह्मणस्तदाह । मोक्ष इति ॥ ६५ ॥

प्राणा वै सत्यमित्युक्तं यत्सत्यं व्यावहारिकम् ।
बालाक्यभिमतं तत्तु द्वितीयब्राह्मणे स्फुटम् ॥ ६६ ॥

द्वितीयेति । "यो ह वै शिशु ँ साधान"मित्यादि शिशुब्राह्मण इत्यर्थः ॥ ६६ ॥

शिशुवद्विषयासङ्गरहितः प्राण इष्यते ।
वागादीनामिव यतो विषयोऽस्य न दृश्यते ॥ ६७ ॥

द्वितीयं ब्राह्मणं विवृणोति । शिशुवदिति । अस्य मुख्यप्राणस्य ॥ ६७ ॥

शरीरमस्याधानं स्याद्देहमापादमस्तकम् ।
सामान्यवृत्त्या संव्याप्य चेष्टयत्यनिशं यतः ॥ ६८ ॥

साधानपदं व्याचष्टे । शरीरमिति । अनिशमिति । अहर्दिवमित्यर्थः ॥ ६८ ॥

प्रत्याधानं शिरोज्ञेयं प्रतिच्छिद्रं व्यवस्थितः ।
प्रसारयति नेत्रादीन्प्राणो मूर्ध्नि व्यवस्थितः ॥ ६९ ॥

प्रत्याधानपदार्थमाह । प्रत्याधानमिति । प्रदेशविशेषेषु प्रतिप्रत्याधीयत इति प्रत्याधानमितिबोध्यम् । प्रतिच्छिद्रमिति । छिद्रे छिद्रे इत्यर्थः ॥ ६९ ॥

प्राणस्य बन्धनस्तम्भः शरीरबलमिष्यते ।
दौर्बल्ये सति देहस्य प्राणोत्क्रान्तिर्हि दृश्यते ॥ ७० ॥

"प्राणस्थूणा" इत्येतद्व्याचष्टे । प्राणस्येति ॥ ७० ॥

बन्धनायास्य दामान्नं वत्सबन्धनरज्जुवत् ।
अन्ने त्रिधा विभक्तेऽस्मिन्भागाभ्यां बध्यते स्वयम् ॥ ७१ ॥

"अन्नं दामे" त्येतद्विवृणोति बन्धनायेत्यादिपद्यत्रिकेण । भागाभ्यामिति । सूक्ष्ममध्यमाभ्यामित्यर्थः ॥ ७१ ॥

स्थूलो भागः पुरीषं स्यान्मध्यमो देहपोषकः ।
प्राणं तर्पयते सूक्ष्म इति बद्धं वपुर्द्वयम् ॥ ७२ ॥

सविनियोगं विभागमाह । स्थूल इति । वपुरिति । स्थूलसूक्ष्मेत्यर्थः ॥ ७२ ॥

एवं विवेचितं प्राणं य उपास्ते रुणद्धि सः ।
भ्रातृव्यान् द्विषतः सप्त मूर्ध्नि च्छिद्रव्यवस्थितान् ॥ ७३ ॥

पदार्थानभिधाय "यो ह वै शिशु" मित्यादे "र्भातृव्यानवरुणद्धी" त्यन्तस्य वाक्यस्यार्थमाह । एवमित्यादिपद्यद्विकेन ॥ ७३ ॥

भ्रातृव्याः स्युः सहोत्पत्तेः शब्दाद्यासङ्गवृत्तयः ।
द्विषन्ति च मुमुक्षुं ताः प्रत्यग्दृष्ट्यपहारतः ॥ ७४ ॥

शब्दाद्यासङ्गवृत्तय इति । शब्दादिविषया ये आसङ्गा रागास्तल्लक्षणा वृत्तय इत्यर्थः ॥ ७४ ॥

सेवन्तेऽक्षिस्थितं प्राणं सप्त रुद्रादिदेवताः ।
अक्षीणा इत्युपास्ते यः सोऽन्नमक्षय्यमश्नुते ॥ ७५ ॥

"तमेताः सप्ताक्षितय" इत्यादिका द्वितीयतृतीयचतुर्थीः कण्डिका व्याचष्टे । सेवन्त इत्यादिपद्यत्रिकेण । रुद्रादीत्यादिना पर्जन्य आदित्योऽग्निरिन्द्रः पृथिवी द्यौरित्येताः षड्ग्राह्याः ॥ ७५ ॥

कर्णादिसप्तछिद्रेषु गोतमाद्यृषिनामकाः ।
स्थिताः प्राणा इति ध्यायेद्वाचं च ब्रह्मवादिनीम् ॥ ७६ ॥

गोतमादीति । उत्तरदक्षिणकर्णौ गोतमभारद्वाजौ विपर्येण वा तथाचक्षुषी विश्वामित्रजमदग्नी । तथा नासिके वशिष्ठकश्यपौ वागेवात्रिरित्येवं नामक इत्यर्थः ॥ ७६ ॥

हिरण्यगर्भरूपेण सर्वभुक् स्यादुपासकः ।
इति गार्ग्यमतं ब्रह्म ब्राह्मणेऽस्मिन्प्रपञ्चितम् ॥ ७७ ॥

अस्मिन्द्वितीये शिशुब्राह्मणे ॥ ७७ ॥

गार्ग्योक्तं ब्रह्म विस्तृत्य तन्निरासाय साम्प्रतम् ।
तृतीयब्राह्मणे प्राह राज्ञोक्तं ब्रह्म विस्तृतम् ॥ ७८ ॥

प्राह कण्वो वेदो वा ॥ ७८ ॥

प्रथमब्राह्मणे राजा ब्रह्म यद्यप्यशेषतः ।
उवाचाथापि सत्यस्य सत्यता नैव विस्तृता ॥ ७९ ॥
सत्यसत्यत्वविस्तारमुखेन प्रतिपाद्यते ।
निष्प्रपञ्चब्रह्मतत्त्वं तृतीयब्राह्मणे स्फुटम् ॥ ८० ॥

प्रथमब्राह्मणेन तृतीयब्राह्मणस्य गतार्थत्वमाशङ्क्य निरस्यति । प्रथमेत्यादिद्विकेन । विस्तृता विस्तरेण प्रतिपादिता ॥ ७९ ॥ ८० ॥

द्वे एव ब्रह्मणो रूपे प्रपञ्चत्वमुपागते ।
मूर्तामूर्तात्मके याभ्यामरूपं ब्रह्म रूप्यते ॥ ८१ ॥

"द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" इत्यादि तृतीयं ब्राह्मणं व्याख्यातुमारभते । द्वे इत्यादिना—रूपपदार्थमाह—याभ्यामित्यादि ॥ ८१ ॥

मूर्तामूर्तं प्रपञ्चश्च वासना चेति वा द्वयम् ।
सवासनमिदं रूपमानिदं चेतिवा द्वयम् ॥ ८२ ॥

"द्वे वाव" इत्यत्र मूर्तममूर्तञ्चेतिद्वयं प्रपञ्चो वासना चेति वा द्वयं सवा

नमिदं रूपं तद्भिन्नञ्चेति वा द्वयं माह्यमित्याह । मूर्तेति ॥ ८२ ॥

सन्निवेशो नेत्रदृश्येयस्य तन्मूर्तमुच्यते ।
क्षित्यम्ब्वग्नित्रयं मूर्तममूर्तमितरद्द्वयम् ॥ ८३ ॥

मूर्तपदार्थमाह । सन्निवेश इति । यस्य सान्निवेशो नेत्रदृश्यस्तन्मूर्तमित्यन्वयः । तन्नाम्ना निर्दिशति । क्षितीति–इतरदिति–वाय्वाकाशरूपमित्यर्थः ॥८३॥

मूर्तं मर्त्यं शीघ्रनाशात्परिच्छेद्यात्स्थितं तथा ।
प्रत्यक्षत्वात्सादित्युक्तममूर्तं तु विपर्ययः ॥ ८४ ॥

"मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्चत्यच्चे" त्यादि व्याचष्टे । मूर्तमित्यादिना ॥ ८४ ॥

तन्नश्यति विलम्बेनेत्यमृतं व्याप्तिमत्त्वतः ।
यत्परोक्षमतस्त्यत्स्यान्मूर्तामूर्तात्मकं जगत् ॥ ८५ ॥

अमूर्तंतु विपर्यय इत्युक्तमर्थं विशदयति । तदिति मूर्तमित्यर्थः । व्याप्तिमत्त्वतोयदित्यन्वयः । यतः परोक्षमतस्त्यदिति योजना ॥ ८५ ॥

अध्यात्ममधिदैवञ्च द्विधा स्वत्यं व्यवस्थितम् ।
प्रसिद्धमुभयत्रापि स्थूलसूक्ष्मवपुर्द्वयम् ॥ ८६ ॥

"तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चे"त्यादि द्वितीयतृतीयचतुर्थीपञ्चमीश्रुतस्त्र: कण्डिका व्याचष्टे । अध्यात्ममित्यादिपद्यचतुष्टयेन । सत्यमिति । क्षित्यम्ब्वग्नित्रयवाय्वाकाशद्वयात्मकमित्यर्थः । उभयत्रापीति । अध्यात्ममधिदैवमपीत्यर्थः । स्थूलसूक्ष्मवपुषोर्द्वयं श्रुत्यादि प्रसिद्धं निरुक्तो भयऽस्मिन्नस्तीत्यर्थः ॥ ८६ ॥

स्थूलसारतया ज्ञेये चक्षुरादित्यमण्डले ।
मूर्तमर्त्यपरिच्छिन्नप्रत्यक्षत्वविशेषिते ॥ ८७ ॥
अमूर्तामृतसंव्याप्तपरोक्षत्वैस्तु संयुतम् ।
उभयत्र स्थितं लिङ्गममूर्तरस उच्यते ॥ ८८ ॥

एतदेवाविशदयति । स्थूलेत्यादिपद्यद्वयेन । स्थूलसारतया मूर्तत्वमर्त्यत्वपरिच्छिन्नत्वप्रत्यक्षत्वधर्मविशिष्टे ज्ञेये चक्षुरादित्यमण्डलादौ उभयत्र अध्यात्माधिदैवरू-

पे स्थितममूर्तत्वामृतत्वसंख्यात्वपरोक्षत्वधर्मविशिष्टं लिङ्गशरीरममूर्तरसः श्रुत्योक्त इति पद्यद्वयार्थः ॥ ८७ ॥ ८८ ॥

सारासारयुते रूपे मूर्तामूर्ते उदीरिते ।
अरूपं ब्रह्मरूपाभ्यां व्यवहारे निरूप्यते ॥ ८९ ॥

सारासारेति । सारोऽमूर्तत्वामृतत्वादिरसारोमूर्तत्वमर्त्यत्वादिस्ताभ्यां विशिष्टे ये मूर्तामूर्ते ब्रह्मणो रूपे कथिते ताभ्यां वस्तुतोऽरूपं ब्रह्मानिरूप्यते इत्यर्थः॥८९॥

मूर्तामूर्तेब्रह्मरूपे इति पक्षो निरूपितः ।
प्रपञ्चतद्वासने द्वे रूपे इत्येव वर्ण्यते ॥ ९० ॥

द्वितीयकल्पमुत्थापयति । मूर्तेति ॥ ९० ॥

प्रपञ्चो नाम पूर्वोक्तं मूर्तामूर्तद्वयं भवेत् ।
तद्वासना विचित्राः स्युरनन्ता लिङ्गमाश्रिताः ॥ ९१ ॥
अनेकवासना चित्रं तल्लिङ्गं पटभित्तिवत् ।
मायेन्द्रजालसदृशं व्यामोहास्पदमात्मनः ॥ ९२ ॥

द्वितीयकल्पं वर्णयन् "तस्य हैतस्य पुरुषस्य रूपं यथा माहारजन"मित्यादि य एवं वेद" इत्यन्तं व्याख्यातुं भूमिकामारचयति । प्रपञ्च इत्यादिपद्यसप्तकेन ॥९१॥९२॥

एतावन्मात्र आत्मेति तत्र भ्रान्ता निरागमाः ।
वौद्धकाणादसांख्याद्यास्तर्कमात्रोपजीविनः ॥ ९३ ॥

आत्मनो मोहास्पदं निरुक्तलिङ्गमित्युक्तं प्रपञ्चयति । एतावन्मात्र इति॥९३॥

एकैकां वासनां तत्र प्रतिक्षणविनश्वरीम् ।
आहुः क्षणिकमात्मानं वौद्धा विज्ञानवादिनः ॥ ९४ ॥

तत्र वौद्धव्यामोहमाह । एकैकामिति ॥ ९४ ॥

आत्मनो द्रव्यभूतस्य गुणा बुद्ध्यादयो नव ।
वासनात्वेन वेदोक्ता इति वैशेषिकादयः ॥ ९५ ॥

वैशेषिकादिमोहमाह । आत्मन इति ॥ ९५ ॥

त्रिगुणं यत्प्रधानं तत्पुरुषार्थेन हेतुना ।
प्रवर्त्तते वासनात्वक्लृप्तिस्तत्रेति कापिलाः ॥ ९६ ॥

सांख्यानां तमाह—त्रिगुणमिति—पुरुषार्थेनेति-भोगापवर्गरूपेणेत्यर्थः । तत्रेति-त्रिगुणेप्रधान इत्यर्थः ॥ ९६ ॥

अनन्तकल्पोपचया अनन्ता एव वासनाः ।
उदाहरणमात्रन्तु दृष्टान्तैरिह वर्ण्यते ॥ ९७ ॥

स्वमतमाह । अनन्तेति । वासना रागादिरूपाः ॥ ९७ ॥

हारिद्रं वसनं यद्वत्संसर्गात्पीततां व्रजेत् ।
तद्वन्नार्य्यादिसंसर्गाल्लिङ्गं रागादिमद्भवेत ॥ ९८ ॥

अवतारितमुक्तवाक्यं व्याचष्टे । हारिद्रमित्यादि पद्यसप्तकेन ॥ ९८ ॥

ईषत्पाण्डुश्च परुषः स्यात्स्वच्छश्वेतकम्बलः ।
तथेषच्छुद्धया युक्तः स्वतो रोषादिभागपि ॥ ९९ ॥

परुषः कठोरः ॥ ९९ ॥

इन्द्रगोपोऽतिरक्तः स्यात्स्वत एव तथा मनः ।
विविक्तदेशस्थस्यापि विषयप्रवणं क्वचित् ॥ १०० ॥

इन्द्रगोपो वार्षिककीटविशेषः ॥ १०० ॥

अग्नेरर्चिर्यथा भास्वद्दहत्यपि तथा क्वचित् ।
वेदशास्त्रविदप्यन्यान्बाधतेर्ष्याद्युपद्रवैः ॥ १ ॥

अर्चिः शिखा । भास्वदप्यग्नेरार्चिर्यथा दहतीति योजना ॥ १ ॥

सिताम्भोजं यथा सौम्यं सुगन्धि मृदु च स्वतः ।
जन्मनैव तथा चित्तं युक्तं शमदमादिभिः ॥ २ ॥
तीव्रविद्युद्यथात्यन्तं घनध्वान्तापनोदकृत् ।
तथा हिरण्यगर्भस्य सर्वज्ञा वासना भवेत् ॥ ३ ॥

सिताम्भोजं श्वेतकमलम् ॥ २ ॥ ३ ॥

तामुपासीन आप्नोति श्रियमत्यन्तमूर्जिताम् ।
रजःसत्त्वतमोयोगाद्वासनानां विचित्रता ॥ ४ ॥

उपासकस्य फलं दर्शयन् रजः सत्त्वतमोयोगेन वासनानां विचित्रता-
ह । तामिति ॥ ४ ॥

प्रपञ्चवासने ब्रह्मरूपे इत्येतदीरितम् ।
तथेदमनिदं रूपे इति पक्षोऽधुनोच्यते ॥ ५ ॥

वृत्तं कथयँस्तृतीयं कल्पं वर्णयितुं प्रतिजानीते । प्रपञ्चेति ॥ ५ ॥

सवासनं जगत्सर्वं तत्रेदंरूपमीरितम् ।
सच्चत्यच्चेति सत्यं तत्प्रोच्यते पाञ्चभौतिकम् ॥ ६ ॥

"अथात आदेशो नेति नेती" त्येतद्व्याचक्षाणस्तं । वर्णयति । सवासन-
ति । तत्र इदमनिदं रूपयोर्मध्ये सवासनं सर्वं जगदिदं रूपमिति शब्देनेरितं पञ्-
चभौतिकं सच्च त्यच्चेति श्रुत्या सत्यं प्रोच्यत इत्यर्थः ॥ ६ ॥

सत्यस्य सत्यमनिदं वक्तव्यं शिष्यते ततः ।
आदेशोऽनन्तरं तस्य क्रियतेऽनन्यमानिनः ॥ ७ ॥

सत्यस्येदं रूपस्य सत्यमाधिष्ठानभूतमनिदं वक्तव्यं ततोऽधिष्ठानत्वात्-
सत्य शिष्यते इति पूर्वार्धार्थः । तस्य सत्यसत्यस्य अनन्यमानिनो मानापेक्षा-
तस्यादेशो निषेधमुखेनोपदेशोऽनन्तरं क्रियते इत्युत्तरार्धार्थः ॥ ७ ॥

आदेशो नेति नेतीति ब्रह्मतत्त्वावबोधकः ।
यथाऽयमुपपद्येत तथा सम्यङ्निरूप्यते ॥ ८ ॥

"अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत् परमस्त्यथ ना-
धेयं सत्यस्य सत्यमिति प्राणा वैसत्यं तेषामेष सत्य" मित्येतद्व्याचष्टे । आदे-
इत्यादिना पद्यद्वादशकेन ॥ ८ ॥

इति शब्देन चिद्भास्यमनूद्य प्रतिषिध्यते ।
नकारेण द्विरुक्तिस्तु वीप्सा कृत्स्ननिषिद्धये ॥ ९ ॥

इदानीमिति शब्दादि व्याचष्ट इतीति ॥ ९ ॥

मूर्तं वा यदिवाऽमूर्तमज्ञानं वासनाऽथवा ।
अध्यात्ममधिदैवं वा तत्सर्वं प्रतिषिध्यते ॥ १० ॥

वाक्यार्थमाह । मूर्तमित्यादिना ॥ १० ॥

अथवाऽत्रेति शब्दौ द्वौ जविशेषोपाधिवाचिनौ ।
नकाराभ्यामुपाधी द्वौ निषिध्य ब्रह्म लक्ष्यते ॥ ११ ॥

प्रकारान्तरेण वाक्यार्थमाह । अथवेति ॥ ११ ॥

यथा मात्रादिसत्तेयं प्रत्यक् संविद्धिसाक्षिका ।
प्रमात्रादेरभावो ऽपि तथाऽतस्तेन लक्ष्यते ॥ १२ ॥

यथा प्रमात्रादिसद्भावः साक्षिसिद्धः तथा तदभावोऽपीत्यतस्तेन प्रमात्राद्य-भावेन ब्रह्म लक्ष्यते इत्यर्थः ॥ १२ ॥

अतिरोहितसंवित्को दृष्टिमात्रात्मकत्वतः ।
विनैव वाचकं शब्दं बोध्यो लक्षणयाप्यतः ॥ १३ ॥

एतदेव विशदयति । अतीति ॥ १३ ॥

अनन्यानुभवेनैव भावाभावात्मभूमिषु ।
प्रत्यक्कूटस्थमात्मानं पश्यन्नास्ते फलात्मना ॥ १४ ॥

अनन्यानुभवेन स्वप्रकाशेन ॥ १४ ॥

अतो मन्त्रादिसम्भेदो यत्र यत्र निवर्तते ।
तत्र तत्रैककः प्रत्यङ्स्वमहिम्नैव सिध्यति ॥ १५ ॥

मन्त्रादिमन्त्रिविज्ञानादीत्यर्थः । मात्रादीति पाठे । प्रमात्रादीत्यर्थः । प्रत्यङिति अस्यात्मेति शेषः ॥ १५ ॥

एतद्वस्तु स्वतः सिद्धं प्रमात्राद्यनपेक्षतः ।
सर्वस्यैव ततः सिद्धेः कथं सिध्येत्तदन्यतः ॥ १६ ॥

स्वमहिम्नैव सिध्यतीत्युक्तं विशदयति । एतदिति ॥ १६ ॥

तदित्थं नेति नेतीतिवाक्यं ब्रह्मात्मबोधकम् ।
जीवेशोपाधिनिह्नुत्या लक्ष्याखण्डावसानतः ॥ १७ ॥

"नेति नेती" ति वाक्यार्थं निगमयति । तदिति ॥ १७ ॥

इत्येवमनिदं रूपं ब्रह्मणः प्रतिपादितम् ।
निर्नाम्नस्तस्य नामैतत्सत्यसत्यमिति श्रुतम् ॥ १८ ॥

सच्च त्यच्चेति सत्याख्याः प्राणास्ते ब्रह्मणात्मना ।
आत्मवन्तास्ततो ब्रह्म सत्यसत्यमितीरितम् ॥ १९ ॥

अजातशत्रुर्यां विद्यां ब्राह्मणैस्त्रिभिरुक्तवान् ।
तद्व्याख्यानेन सन्तुष्याद्विद्यातीर्थमहेश्वरः ॥ १२० ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशेऽजातशत्रु
विद्याप्रकाशो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

वृत्तं कथयन् "अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्य" मित्येतद्व्याचष्टे । इत्येवमित्यादित्रिकेन ॥ १८ ॥ १९ ॥ २० ॥

इति श्रीकाशीनाथकृतौ मितप्रकाशविवृतौ अजातशत्रुविद्याप्रकाशो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

मैत्रेय्यै याज्ञवल्क्यो यां चतुर्थब्राह्मणेऽब्रवीत्।
ससाधनां ब्रह्मविद्यां विस्पष्टं व्याकरोति ताम् ॥ १ ॥

चतुर्थाध्यायस्य चतुर्थब्राह्मणं व्याख्यातुमारभते। मैत्रेय्यायित्यादिना। ससाधनां ससंन्यासां व्याकरोति कण्वः। अत्रोत्तमपुरुषैकवचनान्तः करोमीति पाठो-भाति ॥ १ ॥

वित्तस्य कर्महेतुत्वात्तत्त्यागो ज्ञानसाधनम्।
इति दर्शयितुं प्राह श्रुतिराख्यायिकां शुभाम् ॥ २ ॥

"मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मी"त्याद्या "मैनिदिध्यासस्वे" त्यन्ताश्चतस्रः कण्डिका विवृणोति। वित्तस्येत्यादिपद्यसप्तकेन ॥२॥

एषणात्रयसन्न्यासो वित्तत्यागेन लक्ष्यते।
ज्ञानस्य हेतुः सन्न्यास इति शास्त्रेषु डिण्डिमः ॥ ३ ॥

सन्न्यासस्य ज्ञानहेतुत्वश्रवणादत्र वित्तत्यागेन पुत्रलोकाद्येषणात्रयसंन्या-सो लक्ष्यत इत्याह। एषणेति ॥ ३ ॥

द्विविधः कर्मसन्न्यासः फलसाधनभेदतः।
फलाय ज्ञानिनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये ॥ ४ ॥

जीवन्मुक्तिफलकत्वेन ज्ञानसिद्धिफलकत्वेन च कर्मसन्न्यासस्य द्वैविध्य-माह। द्विविध इति ॥ ४ ॥

ज्ञानित्वाद्याज्ञवल्क्योऽयं जीवन्मुक्तिफलेच्छया।
चित्तविक्षेपबाहुल्यं गार्हस्थ्यन्त्यक्तुमिच्छति ॥ ५ ॥

जीवन्मुक्तिफलको याज्ञवल्क्यस्य संन्यास इत्याह। ज्ञानित्वादिति ॥ ५ ॥

निदिध्यासस्वेति शब्दात्सर्वत्यागफलं जगौ।
न ह्यन्यचिन्तामत्यक्त्वा निदिध्यासितुमर्हति ॥ ६ ॥

"निदिध्यासस्वेति शब्दोक्तं निदिध्यासनं सन्न्यासस्य फल" मित्येतद्व्य-तिरेकेणोपपादयति—निदिध्यासस्वेतीति ॥ ६ ॥

निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात् ।
तन्निदिध्यासनं प्रोक्तं तच्चैकाग्रेण लक्ष्यते ॥ ७ ॥

निदिध्यासनपदार्थं कथयन् तत्कारणमैकाग्र्यमाह । निरन्तरमिति । ल-क्ष्यत इत्यत्र लभ्यत इत्युचितः पाठो भाति ॥ ७ ॥

अनात्मन्यरुचिश्चित्ते रुचिश्चात्मनि चेद्भवेत् ॥
पुण्यपुञ्जेन शुद्धं तच्चित्तमैकाग्र्यमर्हति ॥ ८ ॥

पुण्यपुञ्जेन चित्तस्यानात्मन्यरूचिरात्मनिरुचिश्च भवति एतद्द्वयेन तस्य शुद्धिस्तया च तस्यैकाग्रययोग्यतेत्याह । अनात्मनीति ॥ ८ ॥

शुध्यङ्कुरितमैकाग्र्यं विवेकेनाभिवर्धयेत् ॥
प्रियाप्रियविवेकोऽतो मैत्रेय्या उपदिश्यते ॥ ९ ॥

इदानीं "सहोवाच नवा अरे पत्युः कामायपतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती" त्यादिकां "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्याऽऽत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित" मित्यन्तां पञ्चमीं कण्डिकां व्याचष्टे । शुद्धीत्यादिभिरेकविंशत्या श्लोकैः ॥ ९ ॥

पतिजायादिभोगेषु भोक्तर्य्यात्मनि चेक्ष्यते ।
प्रीतिस्तत्र क्व मुख्येयं कुत्रामुख्येति चिन्त्यताम् ॥ १० ॥

तत्रेति—भोक्तृपतिजायादिभोग्ययोर्मध्ये इत्यर्थः ॥ १० ॥

सदा भूयासमेवाहं मानभूवं कदाचन ।
इत्यनौपाधिकी प्रीतिः प्राणिनामात्मनीक्ष्यते ॥ ११ ॥
स्वसम्बन्धोपाधिनैव भोग्ये प्रीतिर्न तु स्वतः ।
अन्यथा वैरिभोग्येति भोग्यत्वात्प्रीतिरापतेत् ॥ १२ ॥
अविचारेण पुत्रादौ या प्रीतिस्तां विचारतः ।
आत्मन्येवोपसंहृत्य चित्तैकाग्र्यं विवर्धयेत् ॥ १३ ॥

आत्मनि मुख्यामितरास्मिन्नमुख्यां तामाह । सदेत्यादि पद्यत्रिकेन ११ १२ १३

ऐकाग्र्यमचलं कृत्वा निदिध्यासनकारणम् ।
आत्मा द्रष्टव्य इत्येतत्सूत्रं व्याख्यातुमाददे ॥ १४ ॥

वृत्तं कथयन् वर्त्तिष्यमाणमाह । ऐकाग्र्यमिति । अस्य व्याख्यानमचल-मिति-अचलमिति भावनिर्देशः । कृत्वेति वर्णयित्वेत्यर्थः । करोते. क्रियासामान्यवाचित्वात् तथाच निदिध्यासनस्य कारणमचलत्वरूपमैकाग्र्यं वर्णयित्वेत्यादिरर्थः॥१४॥

आहात्मशब्दः प्रत्यञ्चं तथा लोकेऽनुभूतितः ।
अनेनात्रात्मशब्देन प्रमेयं निर्दिदिक्षितम् ॥ १५ ॥

अत्र "आत्मावा अरे द्रष्टव्य" इत्यादिवाक्ये ॥ १५ ॥

द्रष्टव्य इति निर्दिष्टा प्रमितिर्दृशि धातुना ।
अज्ञातज्ञापनं तव्यप्रत्ययेनाभिधीयते ॥ १६ ॥

अज्ञातज्ञापनमिति । नत्वप्रवृत्तप्रवर्तनमित्यर्थः ॥ १६ ॥

अज्ञात आत्मा वेदान्तजन्यज्ञानेन मीयते ।
इत्येष एवं वाक्यार्थो नाप्रवृत्तप्रवर्तनम् ॥ १७ ॥

एतत्प्रपञ्चयति । अज्ञात इति ॥ १७ ॥

नन्वहं प्रत्ययेनात्मा वेदान्तश्रवणात्पुरा ।
विज्ञात इति चेन्मैवं सावार्त्म्यानवबोधनात् ॥ १८ ॥

अज्ञात आत्मा वेदान्तजन्यज्ञानेन मीयत इत्यत्र शङ्कते-नन्विति-समाधत्ते- मैवमिति । अत्र सार्वात्म्यानवबोधनादिति हेतुः सार्वात्म्येन बोधाभावादिति तदर्थः ॥ १८ ॥

लिङ्गदेहपरिच्छिन्नरूपग्राहिण्यहंमतिः ।
सार्वात्म्यमात्मनस्तत्त्वं तदज्ञानमहंधिया ॥ १९ ॥

एतदेव स्पष्टयति । लिङ्गेति ॥ १९ ॥

सर्वासूपनिषत्स्वेतत्सार्वात्म्यं प्रतिपाद्यते ।
कार्यज्ञेयसमाप्तिः स्यात्सार्वात्म्यस्यावबोधतः ॥ २० ॥

न केवलं पुनरत्रैव किन्तु सर्वासूपनिषत्सु एतत्सार्वात्म्यं प्रतिपाद्यते तत्फलं कार्यज्ञानसमाप्तिरित्याह । सर्वास्विति ॥ २० ॥

आत्मा द्रष्टव्य इत्युक्त्या तत्त्वधीरुपदर्शिता ।
श्रोतव्य इत्यादिना तु विचार उपदर्श्यते ॥ २१ ॥

इदानीं "श्रोतव्य" इत्यस्य तात्पर्यमाह । आत्मेति ॥ २१ ॥

श्रुत्यर्थाविष्कृतेर्हेतुः शब्दशक्तिविवेककृत् ।
श्रुतिलिङ्गादिको न्यायः प्रोक्तः श्रोतव्य इत्यतः ॥२२॥

एतदेव स्पष्टयति । श्रुत्यर्थेति । शब्दशक्तिविवेककृत् श्रुतिलिङ्गादिको न्यायः श्रोतव्य इत्यनेन प्रोक्त इत्यर्थः ॥ २१ ॥

अर्थासम्भावनोच्छेदी तर्को मननमीरितम् ।
वेदशास्त्राविरोध्यत्र तर्को ग्राह्यो न चेतरः ॥ २३ ॥

मन्तव्य इत्यस्य तात्पर्यमाह । अर्थेति ॥ २३ ॥

अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ।
ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेत्युदीरणात् ॥ २४ ॥

अत्र निदिध्यासनपदार्थः अपराधीनबोधो न ध्यानं विज्ञानेनेदं सर्वं विदितमितिवाक्यादित्याह । अपरायत्तेति ॥ २४ ॥

द्रष्टव्य इति विज्ञानमुद्दिश्य श्रवणं तथा ।
मननं च विधायाथ विज्ञानमवधिं जगौ ॥ २५ ॥

एतत्प्रपञ्चयति । द्रष्टव्य इति ॥ २५ ॥

नन्वनात्मान विज्ञात आत्मदर्शनमात्रतः ।
ततोऽकृत्स्नत्वदोषश्चेन्नैवं सर्वस्य वेदनात् ॥ २६ ॥

शङ्कते—नन्विति । तत इति —आत्मदर्शनमात्रादित्यर्थः । निषेधति—मैवमिति । तत्रहेतुः—सर्वस्य वेदनादिति ॥ २६ ॥

आत्मनो दर्शनेनेदं दृष्टं स्यादखिलं जगत् ।
प्रत्यङ्मात्रैकयाथात्म्यात्कार्यकारणवस्तुनः ॥ २७ ॥

हेतुं विशदयति । आत्मन इति । अनेनोत्तरपद्याभ्याञ्च "आत्मनो वा अरे दर्शनेन श्रवणेन मत्याविज्ञानेनेदं सर्वं विदित" मिति व्याख्यायते इति बोध्यम् । कार्यकारणस्वरूपस्ववस्तुन आत्मस्वरूपत्वात्तद्दर्शनेन निखिलं कार्यकारणरूपं जगद्दृष्टमित्यर्थः ॥ २७ ॥

कार्यात्मा कारणात्मा च द्वावात्मानौ परात्मनः ।
प्रत्यग्याथात्म्यमोहोत्थौ मोहे नष्टे विनश्यतः ॥ २८ ॥

एतदेव विशदयति । कार्यात्मेति । कार्यस्वरूपं वस्तु इत्यर्थः । कारणात्मेति-कारणरूपंवास्त्वित्यर्थः ॥ २८ ॥

मोहतत्कार्ययोर्बाधे प्रत्यक्सर्वमितीर्यते ।
अतः प्रतीचि विज्ञाते सुलभं सर्ववेदनम् ॥ २९ ॥

फलितमाह । मोहेति ॥ २९ ॥

तत्रैवं सति यो मूढः समस्तव्यस्तरूपताम् ।
ज्ञातव्यां मनुते तां तु वेद एव निषेधति ॥ ३० ॥
यो विप्रजातिश्चैतन्यादन्यद्वस्त्विति मन्यते ।
कैवल्यात्तं पराकुर्याद्विप्रजातिः पराङ्मुखम् ॥ ३१ ॥

इदानीं "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्मवेदे" त्यादिकांषष्ठीं कण्डिकां व्याचष्टे । तत्रेत्यादिपद्याष्टकेन ॥ ३० ॥ ३१ ॥

ब्राह्मणोऽहमिति भ्रान्त्या बृहस्पतिसवादिषु ।
प्रवृत्तो लभते जन्मेत्येषैवास्य पराक्रिया ॥ ३२ ॥

सवादिष्विति—यज्ञादिष्वित्यर्थः ॥ ३२ ॥

विप्रत्ववत्क्षत्रलोकदेवभूतादिकं जगत् ।
स्वस्माद्भेदेन पश्यन्तं क्लेशयेदपराधिनम् ॥ ३३ ॥

इदं व्याख्यानमन्यपर्यायेष्वतिदिशति—विप्रत्ववदिति ॥ ३३ ॥

यदस्ति तन्न जानाति यन्नेहास्ति तदीक्षते ।
इत्येवमपराधोऽस्य विद्यते भेददर्शिनः ॥ ३४ ॥

भेदवादिनोऽपराधं दर्शयति । यदिति ॥ ३४ ॥

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपादयेत् ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ३५ ॥

अत्रैव स्मृतिंप्रमाणयति । य इति ॥ ३५ ॥

अपोहितत्वाज्जात्यादिदर्शनस्येह किं पुनः ।
द्रष्टव्यमित्यतो वक्ति सर्वाखण्डत्वदर्शनम् ॥ ३६ ॥

जात्यादिदर्शनस्य अपोहितत्वाद्बाधितत्वात् इह न किमपि द्रष्टव्यं
अतः सर्वाखण्डत्वदर्शने श्रुतेस्तात्पर्यमित्याह—अपोहितत्वादिति ॥ ३६ ॥

प्रत्यक्त्वेन य आभाति प्रत्यग्बुद्धिप्रमाणकः ।
तावन्मात्रैकयाथात्म्यमुक्तजात्यादि दृश्यताम् ॥ ३७ ॥

एतदेव स्पष्टयति । प्रत्यक्त्वेनेति ॥ ३७ ॥

एवं श्रोतव्य आत्मायं समाप्तः श्रवणे विधिः ।
कथं मन्तव्य इत्यत्र दुन्दुभ्यादिनिदर्शनम् ॥ ३८ ॥

इदानीं "स यथा दुन्दुभेर्हन्यमानस्ये" त्यादिकाः षट्कण्डिका व्याख्येया
वृत्तं कथयन्नवतारयति । एवमिति ॥ ३८ ॥

स्थितौ जनौ लयेऽप्येतज्जगदात्मातिरेकतः ।
नास्तीत्येतत्क्रमेणात्र दृष्टान्तैः प्रतिपाद्यते ॥ ३९ ॥

यथा दुन्दुभिशब्दत्वसामान्याद्दुत्थितान्पृथक् ।
नादातुं शक्नुयात्कश्चिद्विशेषानसिकोशवत् ॥ ४० ॥

ता व्याचष्टे। स्थिताविति। इत्यादिपद्यैरेकचत्वारिंशता ॥ ३९ ॥ ४० ॥

तद्वदात्मातिरेकेण नात्मीयोर्थो मनागपि।
यतः समीक्षितुं शक्यस्तेनासौ रज्जुसर्पवत् ॥ ४१ ॥

दार्ष्टान्तिकमाह। तद्वदिति। तेनेति — निरुक्तार्थस्य समीक्षितुमशक्यत्वेनेत्यर्थः। असाविति—अनात्मेत्यर्थः ॥ ४१ ॥

सामान्यं तद्विशेषश्च तद्विशेषा इति त्रयः।
दुन्दुभिस्तस्य चाघातः शब्दश्चैत्येभिरीरिताः ॥ ४२ ॥

तद्विशेष इति—सामान्यविशेष इत्यर्थः। तद्विशेषा इति—सामान्यविशेषविशेषा इत्यर्थः। तान्येव क्रमेणाह। दुन्दुभिरित्यादि। एभिरिति—श्रुतिस्थदुन्दुभ्यादिपदैरित्यर्थः ॥ ४२ ॥

सामान्यं दौन्दुभः शब्दो वीरादिरससंयुतः।
विशेषस्तद्विशेषास्तु नीचोच्चादिविभेदिनः ॥ ४३ ॥

एतदेव विशदयति। सामान्यमिति। वीरादिरससंयुतःविशेष इति। विरादिरससंयुतो दुन्दुभिशब्दाविशेष इत्यर्थः। तदिति—दुन्दुभिशब्दविशेष इत्यर्थ ४३

नीचादिभेदिनः शब्दा वीरादिरससंयुते।
अन्तर्भवन्ति सोऽप्यन्तर्भूतः स्याद्दौन्दुभध्वनौ ॥ ४४ ॥

विशेषस्य सामान्येऽन्तर्भावमाह। नीचादिति ॥ ४४ ॥

एवं शङ्खेऽपिवीणायां योजयित्वा पुनः पुनः।
शङ्खदुन्दुभिवीणाख्यध्वनीनन्यत्र योजयेत् ॥ ४५ ॥

उक्तमर्थमन्यत्राप्यातिदिशति। एवमिति ॥ ४५ ॥

ध्वनित्रयं महाशब्दसामान्येन्तर्भवेदिति।
विवक्षया शङ्खभेरीवीणास्तिस्र उदीरिताः ॥ ४६ ॥

महाशब्दसामान्ये ध्वनित्रयस्यान्तर्भावे शङ्खभेरीवीणादृष्टान्तानां तात्पर्यमाह। ध्वनीति ॥ ४६ ॥

यथा विशेषसामान्यतत्सामान्यपरम्परा ।
शब्दे स्थिता तथा सर्वमुपलब्धिस्थमीक्षते ॥ ४७ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति । यथेति ॥ ४७ ॥

उपलब्धोस्ति सन्कुम्भो लम्बोष्ठो देशकालवान् ।
पूर्वपूर्वातिरेकेण नोत्तरोऽर्थोऽनुभूयते ॥ ४८ ॥

सर्वमुपलब्धिस्थमीक्षते इत्युक्तमर्थमुपपादयति । उपलब्ध इति । उपलब्धे र्व्यतिरेकेण कुम्भो नानुभूयते तद्व्यतिरेकेण लम्बोष्ठादिस्तद्व्यतिरेकेण देशस्तद्व्यतिरेके ण काल इत्याह । पूर्वपूर्वेति ॥ ४८ ॥

एवं चिदन्वयात्सर्वं चिदध्यस्तं तथा सति ।
चिदात्मैवास्य सर्वस्य तात्त्विकं रूपमीक्ष्यताम् ॥ ४९ ॥

"आत्माभिन्नं सर्वं चिदध्यस्तं चिदन्वितत्वाद्यद्यदन्वितं तत्तदध्यस्तं यथे मिर्पधारादि तथा चेदं तस्मात्तथे"त्यनुमानप्रयोगं दर्शयन् स्थितिकाले सर्वस्य ता त्त्विक रूपमात्मेति दर्शयति । एवमिति ॥ ४९ ॥

स्थितिकाले यथैकात्म्यं शक्यते ज्ञातुमञ्जसा ।
यथोक्तन्यायतस्तद्वदुत्पत्तावपि शक्यते ॥ ५० ॥

वृत्तं कथयन्वर्त्तिष्यमाणमाह—स्थितीति । तद्वदिति स्थितिकालवदित्यर्थः । उत्पत्ताविति—उत्पत्तिसमय इत्यर्थः ॥ ५० ॥

धूमार्चिर्विस्फुलिङ्गादि विभागजननात्पुरा ।
अग्निरेव न धूमाद्यास्तथैकात्म्यं जनेः पुरा ॥ ५१ ॥

"स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्ती" त्यादिं दर्शयि ण्डिकामुत्पत्तिकाले ऐकात्म्यपरतया व्याचष्टे । धूमेत्यादिपद्यपञ्चकेन ॥ ५१ ॥

स्वार्थसाधनयत्नादीननपेक्ष्य यथा सृजेत् ।
धूमादीन्हुतभुक्तद्वदृगादीन्प्रत्यगीश्वरः ॥ ५२ ॥

"अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गि रस इतिहासः पुराणं विद्या उपनिषदः सूत्राण्यनुव्याख्यानान्यस्यैवैतानि

ति: श्वसितानि" इति दशम्याभागं दार्ष्टान्तिकपरतया व्याचष्टे । स्वार्थेत्यादिसार्ध-त्रिकेण—प्रत्यगीश्वर इति—प्रत्यगात्मेत्यर्थः ॥ ५२ ॥

नार्थं बुध्वा वाक्यसृष्टिः कालिदासादिवाक्यवत् ।
किन्तु श्वास इवायत्नात्स्यादतोऽपौरुषेयता ॥ ५३ ॥

निःश्वसितमित्येतस्य वेदापौरुषेयतायां तात्पर्यमाह । नार्थमिति ॥ ५३ ॥

मन्त्राश्चतुर्विधा ज्ञेया ऋग्वेदादिगिरोदिताः ।
ब्राह्मणं चेतिहासादिरूपमष्टविधं भवेत् ॥ ५४ ॥

ऋग्वेदादिगिरा ऋग्वेदो यजुर्वेद इत्यादिशब्देनोक्ताश्चतुर्विधा मन्त्रा-स्तेनैवशब्देनोक्तंचतुर्विधं ब्राह्मणं च भवेत् इतिहासः पुराणमित्यादि शब्देनोक्तं मष्टविधमितिहासादिरूपं च भवेदित्याह । मन्त्रा इति ॥ ५४ ॥

प्रसिद्धाश्चेति हासाद्या ऋग्वेदाद्युपबृंहकाः ।
निखिलापि जगत्सृष्टिः शब्दसृष्ट्योपलक्ष्यते ॥ ५५ ॥

प्रसिद्धा इति । अस्य भाष्ये इत्यादिः । अस्य महतो भूतस्येति वाक्यस्य निखिलजगत्सृष्टौ तात्पर्यमाह ॥ ५५ ॥

प्रज्ञानव्यतिरेकेण यथैव स्थितिसर्गयोः ।
वस्त्वन्तरं न सम्भाव्यं प्रलयेपि तथोच्यते ॥ ५६ ॥

स्वाभाविकात्यन्तिकौ द्वौ प्रलयौ जगतस्तयोः ।
स्वाभाविकः स्यात्कल्पान्ते बोधादात्यन्तिको मतः ॥५७॥

दृष्टान्तविधया वृत्तं कथयन् प्रलयेऽपि आत्मनो व्यतिरिक्तस्य वस्तुनोऽस-म्भाव्यत्वं दर्शयितुं प्रतिजानीते । प्रज्ञानेत्यादिना ॥ ५६ ॥ ५७ ॥

समुद्रखिल्यौ दृष्टान्तौ क्रमात्प्रलययोर्मतौ ।
लीयतेऽब्धौ जलं यद्वत्तथा ब्रह्मणि तज्जगत ॥ ५८ ॥

"स यथा सर्वासामपां समुद्र एकायन" मित्यादिमेकादशीं "स यथा सै-न्धवखिल्य उदके प्रास्त" इत्यादिं द्वादशींचकण्डिकां प्रतिज्ञातार्थपरत्वेन व्याचष्टे । समुद्रखिल्या इत्यादिपद्यैर्द्वाविंशत्या ॥ ५८ ॥

साक्षाद्वाथ प्रनाड्या वा जलमब्धौ प्रलीयते ॥
साक्षाद्गङ्गादिका नद्यस्तत्प्रनाड्या जलान्तरम् ॥ ५९ ॥

समुद्रदृष्टान्तं विशदयति । साक्षादिति ॥ ५९ ॥

तथैव कारणं वस्तु साक्षाद्ब्रह्मणि लीयते ।
कार्यं तु कारणद्वारे त्येतदत्र विवक्षितम् ॥ ६० ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति । तथैवेति । कारणंमाया ॥ ६० ॥

विषयप्रलयेनाक्षप्रलयस्योदितत्वतः ।
लयः सर्वस्य जगतो ब्रह्मणीत्यत्र सुस्थितम् ॥ ६१ ॥

न्यूनतां परिहरति । विषयेति । अत्रेति । एकादश्यांकण्डिकायामित्यर्थः ॥ ६१ ॥

एवं मन्तव्य आत्मायमर्थासम्भवनुत्तये ।
दुन्दुभ्याद्युक्तदृष्टान्तन्यायमार्गेण यत्नतः ॥ ६२ ॥

अर्थासम्भवेति—श्रुतार्थस्यासम्भावनेत्यर्थः । उत्तरार्द्धस्य मन्तव्य इत्यत्रान्वयः ॥ ६२ ॥

अपरायत्तबोधाख्यनिदिध्यासनसिद्धये ।
आत्यन्तिकलयं वक्तुं खिल्यदृष्टान्त उच्यते ॥ ६३ ॥

अपराधीनबोधसिद्ध्यर्थमात्यन्तिकलयं दृष्टान्तेन वक्तुं प्रतिजानीते । अपरेति ॥ ६३ ॥

सामुद्रमम्भो लवणक्षेत्रे भानुविपाकतः ।
लवणोपलतां प्राप्य सैन्धवः खिल्य उच्यते ॥ ६४ ॥

सैन्धवखिल्य इत्यस्यार्थमाह । सामुद्रमिति ॥ ६४ ॥

सखिल्य उदधौ क्षिप्तस्तापशान्तौ विलीयते ॥
अशक्यः पुनरुद्धर्तुं खिल्यरूपेण पूर्ववत् ॥ ६५ ॥

खिल्योद्धृत्यै नीरमध्यावाददीत यतो यतः ।
तत्र तत्र रसो लभ्यः खिल्यस्त्वेष न कुत्रचित् ॥ ६६ ॥

"उदके प्रास्त उदकमेवानुविलीयेते" त्यादि व्याचष्टे । स खिल्य इत्यादिना किञ्चिदधिकद्वयेन ॥ ६५ ॥ ६६ ॥

सामुद्रस्याम्भसस्तापात्खिल्यतैवं परात्मनः ।
आब्रह्मस्तम्बपर्यन्तं जीवता स्यादविद्यया ॥ ६७ ॥
महद्भूतमनन्तं स्यादपारं चिद्घनं स्वतः ।
देहेन्द्रियाख्यभूतेभ्यो जीवत्वेन समुत्थितम् ॥ ६८ ॥

"एवं वा अरे महद्भूतमनन्तमपारं विज्ञानघनमेवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञाऽस्ती" ति दार्ष्टान्तिकपरतया व्याचष्टे एवं परात्मन इत्यादिना ॥ ६७ ॥ ६८ ॥

महत्त्वं सर्वगत्वं स्याद्भूतत्वं नित्यसिद्धता ।
अनन्तापारशब्दाभ्यां व्याप्तिनित्यत्वसाधनम् ॥ ६९ ॥

महत्त्वभूतत्वानन्तत्वापारत्वानिनिर्वक्ति—महत्त्वमित्यादि ॥ ६९ ॥

कार्यकारणराहित्यं यदि वेहोपलक्ष्यताम् ।
अनन्तत्वमकार्यत्वमपारत्वमहेतुता ॥ ७० ॥

अनन्तत्वापारत्वे अन्यथानिर्वक्ति—कार्येति । पूर्वार्धोक्तं वि दयति । अनन्तत्वमित्यादि ॥ ७० ॥

विज्ञानघन एवेति जात्यन्तरनिषेधनम् ।
तदिदं वस्तुनस्तत्त्वं मायिकी सा समुत्थितिः ॥ ७१ ॥

"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाये" त्येतद्व्याचष्टे । विज्ञान घन इति । जात्यन्तरनिषेधनामिति - सजातीयविजातीयस्वगतवस्तुनिषेधस्याधिष्ठानरूपत्वात् । वस्तुनस्तत्त्वंनिषेधाधिष्ठानभूतं विज्ञानरसैकात्मकं वस्त्वित्यर्थः । तदाह । तदिदमिति ॥ ७१ ॥

अब्धिस्थानीयमैकात्म्यं जलस्थानं तु साक्षिचित् ।
क्षेत्रस्थानं शरीरादि तापस्थानं तु विभ्रमः ॥ ७२ ॥

मायिकी सा समुत्थितिरित्युक्तमर्थं विशदयति । अब्धिस्थानीयेत्यादिभिः पञ्चभिश्चतुर्भिः पद्यैः । ७२ ॥

खिल्यस्थानं चिदाभासो योगात्कर्तृत्वभोक्तृते ।
द्रष्टा श्रोता द्विजो गौरो धनी गोमान्भवेत्ततः ॥ ७३ ॥

योगादिति—तादात्म्याद्यध्यासादित्यर्थः । कर्तृत्वभोक्तृत्वेति—अस्य भवत इतिशेषः । ततः कर्तृत्वभोक्तृत्वाद्यध्यासात् द्रष्टादिरूपो भवेदित्यन्वयः ॥ ७३ ॥

प्रत्यगात्मैव सद्ब्रह्म परोक्षमभवत्तदा ।
ब्रह्मैव सन्नयं चात्मा संसारित्वमवाप्तवान् ॥ ७४ ॥

एतद्विशदयति । प्रत्यगिति ॥ ७४ ॥

इत्येवं परवस्त्वेव पञ्चभूताख्यमायया ।
जीवत्वेन समुत्थाय स्वतः शास्त्रेण बुध्यते ॥ ७५ ॥

समुत्थितिवर्णनं पादत्रयेणोपसंहरँ "स्तान्येवानुविनश्यती" त्येतद्व्याख्यातुमुपक्रमते । इत्येवमिति । स्वत इति—निर्विशेषरूपेणेत्यर्थः । शास्त्रेणेति "तस्मात्तत्सर्वमभव" दित्यादिवाक्येनेत्यर्थः ॥ ७५ ॥

सर्वमात्मैव सम्यग्धीजन्मनैवाखिले भ्रमे ।
नष्टे नश्यति जीवत्वं जले प्रक्षिप्तखिल्यवत् ॥ ७६ ॥

बुध्यते इत्युक्तबुद्धिमभिनयस्तदुत्पत्त्याखिलभ्रमनाशे जीवत्वं नश्यतीति सदृष्टान्तमाह । सर्वमिति—सर्वमात्मैवेत्याकारायाथार्थाधीस्तज्जन्मनैवेत्यर्थः ॥ ७६ ॥

क्षेत्रतेश्वरभेदेन पुनः संज्ञा न विद्यते ।
तद्धेतोस्तमसो ध्वंसात्खिल्यानुद्धरणं यथा ॥ ७७ ॥

"न प्रेत्यसंज्ञास्ती" त्येतद्व्याचष्टे । क्षेत्रेति । तदिति—क्षेत्रज्ञेश्वरभेदसंज्ञेत्यर्थः ॥ ७७ ॥

दृष्टिमात्रात्मयाथात्म्यात्कार्यकारणवस्तुनः।
नाज्ञातं किञ्चिदप्यस्ति नानपास्तं तथा तमः ॥ ७८ ॥

आत्मयाथात्म्यदर्शनमात्रेण कार्यकारणवस्तुमध्ये किञ्चिदज्ञातं नास्ति अज्ञानञ्चानाशितं नास्तीत्याह। दृष्टेति ॥ ७८ ॥

आत्यन्तिकोयं प्रलयः पुनर्जन्मविवर्जनात्
स्वाभाविके लये शक्तिशेषादस्ति पुनर्जनिः ॥ ७९ ॥

व्याख्यातमहाप्रलये पुनर्नजन्म स्वाभाविके तस्मिन् शक्तिशेषादस्ति तदित्याह। आत्यन्तिक इति ॥ ७९ ॥

विज्ञानैकघनस्यास्य संज्ञा नास्तीतियद्वचः।
तद्व्याहतिर्न शक्यात्र तयोर्विषयभेदतः ॥ ८० ॥

"सा होवाच मैत्रेय्यत्रैव मे"त्यादिं त्रयोदशींकण्डिकां व्याचष्टे। विज्ञानैकेति ॥ ८० ॥

विज्ञानैकघनोक्त्याऽस्य कृत्स्नैकात्म्यं पुरोदितम्।
संज्ञानास्तीति चाविद्याजन्या बुद्धिर्निषिध्यते ॥ ८१ ॥

विषयभेदेन इत्युक्तमर्थं विशदयति। विज्ञानैकघनोक्त्येति। "विज्ञान घन एवे" त्यादि वाक्येनेत्यर्थः ॥ अस्य प्रत्यगात्मनः। नास्तीति—अस्य वाक्येनेति शेषः ॥ ८१ ॥

कार्यकारणताशेषि स्वतः सिद्धमनन्यगम्।
यद्वस्तु तदलं स्वात्मसंवित्त्यै निरपेक्षतः ॥ ८२ ॥

ननु न प्रेत्य संज्ञास्तीत्युक्त मयुक्तं तदानीमप्यात्मनो ज्ञानरूपायाः संज्ञायाः सम्भवादित्याशङ्क्यां सपराधीनप्रकाशोऽपराधीनप्रकाशो वेति विकल्प्याद्यस्यात्मनो जडत्वाद्यापादकत्वेनासम्भवाद्द्वितीयं परिशेषयन् परिहरति। कार्येति ॥ ८२ ॥

ऐकात्म्यं यदविज्ञातं तद्वैतमिव विभ्रमात्।
स्याद्यत्र तत्र पुंसोऽसौ कर्तृकर्मादिभेदधीः ॥ ८३ ॥

"यत्र हि द्वैतमिव भवतितदितर इतरं जिघ्रति तदिदर इतरं पश्यतीं" त्यज्ञानावस्थायां सर्वव्यवहारं दर्शयन् वाक्यमष्टभिः पद्यैर्व्याचक्षाणस्तयोर्भिन्न भेदत इत्युक्तमेवार्थं विशदयति । ऐकात्म्यमिति ॥ ८३ ॥

ननु द्वैतमिवेत्येतदुपमानं कथं तव ।
उपमेयद्वैतवस्तुराहित्यादिति चेच्छृणु ॥ ८४ ॥

शङ्कते नन्विति—समाधातुं प्रतिजानीते । शृण्विति ॥ ८४ ॥

रामरावणयोर्युद्धं रामरावणयोरिव ।
इत्यादावुपमा दृष्टा स्वस्य स्वेन तथेष्यताम् ॥ ८५ ॥

अत्र कल्पित उपमानोपमेयभाव इति सदृष्टान्तमाह । रामेति ॥ ८५ ॥

यद्वल्लोके चन्द्रभेदः कल्पितत्वेन सम्मतः ।
जगद्भेदोपमा सा स्यान्मिथ्यात्वं तेन सिध्यति ॥ ८६ ॥
समस्तव्यस्तरूपत्वं यो वक्तीहात्मनः श्रुतेः ।
तत्पक्षस्य निषेधाय द्वैतमिथ्यात्ववर्णनम् ॥ ८७ ॥

कल्पितोपमानत्वेन जगन्मिथ्यात्वासिद्ध्या श्रुतिमवलम्ब्यात्मनस्समस्तव्यस्त रूपत्वं वदतः स्वयूथ्यस्य पक्षनिरास इत्याह । यद्वदित्यादिपद्यद्विकेन ॥८६॥८७॥

ज्ञातृज्ञानज्ञेयरूपं प्राप्य स्वप्ने यथा मृषा ।
एको व्यवहरत्येवमज्ञो व्यवहरेन्मृषा ॥ ८८ ॥

एतदेवविशदयति । ज्ञात्रिति ॥ ८८ ॥

यस्यामविद्यावस्थायां भेदभ्रान्तिस्तदा पुमान् ।
घ्रातृघ्रेयघ्राणसंज्ञामाप्नोत्यन्यां तथा त्रिधा ॥ ८९ ॥

"यत्र हि द्वैतमिवे" त्याद्युक्तश्रुतेर्व्याख्यामुपसंहरति । यस्यामिति॥८९॥

अविद्यायां विनष्टायां घ्रातृघ्राणादिभेदधीः ।
विनश्यतीत्यभिप्रेत्य संज्ञा नास्तीति वर्णितम् ॥ ९० ॥

उक्तश्रुतिव्याख्यानफलं "न प्रेत्य संज्ञास्ती"ति श्रुत्यर्थोपपात्तिरित्याह । अविद्यायामिति ॥ ९० ॥

अभिज्ञोप्यज्ञवद्भेदं प्रातृघ्राणादिलक्षणम् ।
विजानातीति चेन्मैवं विद्यायां तदसम्भवात् ॥ ९१ ॥

शङ्कते अभिज्ञ इति । निषेधति—मैवमिति । निषेधे हेतुमाह—विद्यायां-तदसम्भवादिति । अविद्यादशायां तत्सत्वेपि विद्यावस्थायां तया तस्या निवर्त्तितत्वे-नोक्तभेदज्ञानासम्भवादित्यर्थः ॥ ९१ ॥

यस्यां तु विद्यावस्थायामात्मैवास्याभवज्जगत् ।
तदा कः केन किञ्जिघ्रेदद्वैते परवस्तुवि ॥ ९२ ॥

उक्तमर्थं श्रुत्यारूढं कर्तुं "यत्र वा अस्य सर्वमात्मैवाभूदि"त्यादि व्याचष्टे—यस्यामित्यादिपद्यषट्केन ॥ ९२ ॥

दृष्टगोचरवत्सर्वं कार्यकारणवज्जगत् ।
ध्वस्तात्मान्ध्यस्य विदुषः सम्यग्ज्ञानोदयो भवेत् ॥ ९३ ॥

दृष्टेति—यथार्थज्ञानोदये सति निवर्त्तितात्माज्ञानस्य विदुषः कार्यकारण-विशिष्टं सर्वं जगत्प्रत्यक्षविषय इव भवेदिति योजनया व्याख्येयम् ॥ ९३ ॥

ग्राहकादिविभागोत्र नास्ति तद्धेत्वसम्भवात् ।
चिन्मात्रस्य स्वतः सिद्धेर्विज्ञानघनतेरिता ॥ ९४ ॥

अत्रेति—विद्यायां सत्यामित्यर्थः । तद्धेत्विति—उक्तविभागहेत्वविद्येत्यर्थः॥९४॥

मुक्तस्य व्यवहारस्तु भ्रान्तिवासनया कृतः ।
भ्रान्तिनाशेपि संस्कारानुवृत्तिर्दृश्यते खलु ॥ ९५ ॥

भ्रान्तिनाशेऽपि तज्जन्यवासनया जीवन्मुक्तस्य व्यवहारो भवतीत्याह । मुक्तस्येति ॥ ९५ ॥

वासनामात्रसंज्ञा तु देहे सति न वार्यते ।
वस्तुत्वभ्रान्तिसंज्ञैत्र प्रबुद्धस्यात्र वार्यते ॥ ९६ ॥

नन्विदमयुक्तं "न प्रेत्यसंज्ञास्ती"तिवाक्येन वासनानिषेधादित्याशङ्क्य न वस्तुत्वभ्रान्तिनिषेधेऽपि वासनानिषेधाभावान्मैवमित्याह । वासनेति । अत्रेति । उक्तवाक्ये इत्यर्थः ॥ ९६ ॥

ज्ञातृज्ञानज्ञेयरूपा न संज्ञा विषये यथा ।
प्रतीच्यपि तथा संज्ञा प्रबुद्धस्य न विद्यते ॥ ९७ ॥

उक्तसंज्ञावारणं स्पष्टयति । ज्ञात्रित्यादि । ज्ञात्रादिभिर्निरूप्यमाणा ज्ञातेदंज्ञानमिदज्ञेयमित्येवमाकारा संज्ञाज्ञानं यथाऽस्मदादिदृष्ट्याविषये घटादौ नास्ति तथा प्रबुद्धदृष्ट्या प्रतीच्यपि सा नास्तीत्यर्थः ॥ ९७ ॥

ज्ञानोत्पत्तौ न संज्ञास्तीत्यास्तां तावदिहात्मनि ।
अपिसत्यामविद्यायांन संज्ञास्त्यात्मनीदृशी ॥ ९८ ॥

"येनेदꣳसर्वं जानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीया-दित्येतद्व्याख्यातुमुपक्रमते । ज्ञानोत्पत्ताविति । ईदृशीति । उक्त त्रिपुटीरूपे-त्यर्थः ॥ ९८ ॥

ग्राहकादि जगत्सर्वं येन कूटस्थसाक्षिणा ।
लोकः सर्वो विजानाति जानीयात्केनतं वद ॥ ९९ ॥

उक्तवाक्यं व्याचष्टे । ग्राहकादीति ॥ ९९ ॥

बोद्धृत्वाल्लोचनेनापि न संज्ञा प्रत्यगात्मनि ।
न बोद्धा गृह्यतेऽनेन बोधेन विषयेण वा ॥ १०० ॥

उक्तमर्थं विशदयति । बोद्धृत्वादिति । अन्येन बोधेन स्वातिरिक्त बोधेन न गृह्यतेऽनवस्थादिदोषापत्तेरित्यर्थः । विषयेणेति । घटादेर्विषयस्य जडत्वेन ग्राह-कत्वासम्भवात्तेन न गृह्यत इत्यर्थः ॥ १०० ॥

व्यावहारिकसंज्ञाऽसौ संसारिण्यपि दुर्लभा ।
किमु निः शेषविध्वस्तसंसारार्णवकारणे ॥ १०१ ॥

कैमुत्यन्यायेन प्रतीचिनिरुक्तसंज्ञाया अभावमाह । व्यावहारिकेति ॥ १०१ ॥

इत्येवमपरायत्तबोधनात्यन्तिको लयः ।
निदिध्यासनरूपोऽत्र फलभूतः प्रकीर्तितः ॥ १०२ ॥

लय इति—अस्य भवतीति शेषः । स च बोधो निदिध्यासनरूपः श्रवणादिफलभूतोऽत्र पूर्वत्र मया कीर्तितो वर्णित इत्युत्तरार्द्धार्थः ॥ १०२ ॥

याज्ञवल्क्योऽत्र मैत्रेयीमन्वगृह्णाद्यथा तथा ।
मुमुक्षुमनुगृह्णातु विद्यातीर्थमहेश्वरः ॥ १०३ ॥

इति श्रीविद्यारण्यमुनिविरचितेऽनुभूतिप्रकाशे बृहदारण्यकोपनिषदि मैत्रेयीविद्याप्रकाशो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

मुमुक्षुं प्रति विद्यातीर्थमहेश्वरानुग्रहं सोदाहरणं प्रार्थयते । याज्ञवल्क्य इति ॥ १०३ ॥

इति श्रीमत्पण्डितरामटहलतनूजोविठीगर्भजकाशीनाथकृतौ मितप्रकाशविवृतौ बृहदारण्यकोपनिषदि मैत्रेयीविद्याप्रकाशो नाम पञ्चदशोऽध्यायः ॥ १५ ॥



## अथ षोडशोऽध्यायः ।

पञ्चमे ब्राह्मणे दध्यङ्ङाथर्वण उवाच याम् ।
अश्विनोर्मधुविद्यां तामत्र स्पष्टीकरोम्यहम् ॥ १ ॥

पञ्चमं ब्राह्मणं व्याख्यातुमुपक्रमते । पञ्चम इत्यादि ॥ १ ॥

परस्परोपकारित्वं पृथिव्याः प्राणिनामपि ।
यत्तन्मधुत्वं विज्ञेयमुपकारस्तु सर्जनम् ॥ २ ॥

"इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चा-
यमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषोयश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः
पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व"मित्येतद्व्याचष्टे । परस्परोपकारि-
त्वमित्यादिपद्यत्रयोदशकेन । परस्परोपकारित्वम्मधुत्वमुपकारस्तु सृष्टिरित्यर्थः ॥ २ ॥

जन्तुभिः पृथिवी सृष्टा स्वकर्मफलभुक्तये ।
पृथिव्याऽप्यात्मभोगार्थं सृष्टाः सर्वेऽपि जन्तवः ॥ ३ ॥

एतद्विशदयति । जन्तुभिरिति ॥ ३ ॥

पार्थिवाणि शरीराणि भुज्यन्ते जन्तुभिस्तथा ।
पृथिव्याऽपि धरित्रीत्वं भुज्यते जन्तुधारणात् ॥ ४ ॥

स्वकर्मफलभूतं परस्परोपभोगं दर्शयति । पृथिव्येति । पृथिवीनाम्न्या
तदभिमानिन्या चेतनयेत्यर्थः ॥ ४ ॥

अस्यां पृथिव्यां यो भास्वानामोक्षमविनश्वरः ।
लिङ्गात्मा मध्वसौ सर्वभूतानां तानि तस्य च ॥ ५ ॥

" यश्चायमस्या " मित्यादि व्याचष्टे । अस्यामिति । तेजोमय इत्यस्य
व्याख्यानं भास्वानिति । असाविति । निरुक्तलिङ्गात्मेत्यर्थः । तानीति । सर्वभूतानी-
त्यर्थः । तस्येति । निरुक्तलिङ्गात्मन इत्यर्थः ॥ ५ ॥

अध्यात्मं यश्च शारीरो लिङ्गात्मा पार्थिवांशजः ।
स चापि मधु सर्वेषां सर्वभूतानि तस्य च ॥ ६ ॥

"यश्चायमध्यात्मं शारीर" इत्यादिव्याचष्टे। अध्यात्ममिति। स इति। निरुक्तलिङ्गात्मेत्यर्थः। सर्वेषामिति। अस्य भूतानामिति शेषः। तस्येति। शारीर-लिङ्गात्मन इत्यर्थः॥ ६॥

अध्यात्मं साधिदैवञ्च साधिभूतमिदंजगत्।
एकैकस्यात्मनः कृत्स्नं भोग्यत्वेनावतिष्ठते॥ ७॥

सर्वं सर्वस्य भोग्यं सर्वं सर्वस्य भोजकं सर्वं सर्वस्य कार्यं सर्वं सर्वस्य कारणमित्येतदर्थजातं मधुविद्यया प्रकाश्यत इति वैषम्याभावात्सा क्लेशहारिणीत्याह। अध्यात्ममित्यादिपद्यद्विकेन॥ ७॥

सर्वं सर्वस्य कार्यं स्यात्सर्वः सर्वस्य भोजकः।
इत्येषा मधुविद्याऽत्रावैषम्यात्क्लेशहारिणी॥ ८॥

सर्वं सर्वस्य कार्यं स्यादित्युपलक्षणं सर्वं सर्वस्य कारणं स्यादित्यस्यापि॥ ८॥

भूतानि भूमिर्दे लिङ्गे इत्युक्तं यच्चतुर्विधम्।
मध्वविद्याकृतं तस्य वस्तुतत्त्वमथोच्यते॥ ९॥

वृत्तेन सङ्गतिं वदन् "अयमेव स" इत्युत्तरवाक्यं वर्णयितुं प्रतिजानीते। भूतानीति—तस्येति। अविद्याकृतस्य चतुर्विधस्य मधुन इत्यर्थः॥ ९॥

अयमेव स इत्यत्र मधुरूपश्चतुर्विधः
प्रपञ्चोयमिति प्रोक्तः स इत्यात्मोच्यते परः॥ १०॥

व्याख्येयवाक्यगतयोरयं स इति पदयोरर्थमाह। अयमिति। परआत्मेत्यन्वयः॥ १०॥

अयमेव स इत्युक्त्या सामानाधिकरण्यतः।
प्रत्यङ्मात्रैकयाथात्म्यं प्रपञ्चस्यावबोध्यते॥ ११॥

उक्तवाक्यार्थमाह। अयमिति॥ ११॥

स इत्यनेन निर्देष्टुमतीतग्रन्थवर्णितः।
योऽयमित्यादिभिर्वाक्यैश्चतुर्भिस्स्मार्यते परः॥ १२॥

"योयमात्मेदममृतमिदं ब्रह्मेदं सर्व"मित्युत्तरवाक्यप्रयोजनमाह । स इति अतीतग्रन्थवर्णितः परस्स इत्यनेन निर्देष्टुं योयमित्यादिभिश्चतुर्भिर्वाक्यैः इति योजना ॥ १२ ॥

आत्मा द्रष्टव्य इत्युक्तममृतत्वेन वर्णनम् ।
नेति नेत्युदितं ब्रह्म तत्सर्वमभवत्त्विति ॥ १३ ॥

अतीतग्रन्थेन परमात्मनो वर्णनमेवाह । आत्मेति ॥ १३ ॥

आत्माऽमृतब्रह्मसर्वशब्दैः प्राक्प्रतिपादितम् ।
वस्त्वस्य मधुनस्तत्त्वमिति वाक्यार्थ ईरितः ॥ १४ ॥

"अयमेव स" इत्येतद्वाक्यार्थमुपसंहरति । आत्मेति ॥ १४ ॥

उत्तरेष्वपि वाक्येषु मधुरूपमिदं जगत् ।
ब्रह्मापि मधुनस्तत्त्वं योजयेदुक्तवर्त्मना ॥ १५ ॥

उक्तयोजनाम् "इमा आपः सर्वेषाम्भूतानाम्मध्वि" त्यादिषु त्रयोदशसु पर्यायेष्वतिदिशति । उत्तरेष्विति ॥ १५ ॥

साधारणविशेषाभ्यां धर्मो भोगप्रदो द्विधा ।
अधिदैवं तथाऽध्यात्ममित्यत्रासौ विभज्यते ॥ १६ ॥

"अयं धर्मः सर्वेषाम्भूतानां मधु" इत्याद्येकादशस्य पर्यायस्य तात्पर्यमाह । साधारणेति । धर्मः सामान्यरूपेणाधिदैवं पृथिव्यादीनां प्रयोक्ता विशेषरूपेण चाध्यात्मं कार्य्यकरणसङ्घातस्य प्रयोक्ता सम्भोगप्रदो भवतीति पादत्रयार्थः । एतदर्थं दर्शनफलकमुभयत्र तस्य विभागमाह । इतीति । अत्रेति । अध्यात्ममाधिदैवतमित्यर्थः । असाविति । धर्म इत्यर्थः ॥ १६ ॥

सत्यमानुषयोरेवं विभागं योजयेद्द्विधा ।
पृथिव्याद्या मानुषान्ता विराडंशा उदीरिताः ॥ १७ ॥

धर्मपर्यायोक्तं न्याय"मिदं सत्यं सर्वेषां भूतानामि"त्यादि । "इदं मानुषं सर्वेषां भूतानामित्यादि" पर्याययोरतिदिशति । सत्यमानुषयोरेवमिति । धर्म एव कार्यत्वेन रूपेण सत्यं भवति । मानुषं मनुष्यत्वं, पृथिव्यादिमानुषान्तपर्यायेषु पृथिव्यादि

मातुषान्तानां विराडंशत्वे श्रुतितात्पर्यमाह । पृथिव्याद्या इत्युत्तरार्द्धेन ॥ १७ ॥

अयमात्मेति निर्देशो विराजोऽभिमतोंऽशिनः ।
हिरण्यगर्भस्तत्रत्यः प्रोक्तस्तेजोमयोक्तितः ॥ १८ ॥

"अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चाय-मस्मिन्नात्मनि तेजोमयो ऽमृतमय" इत्यादेश्चतुर्दशस्य पर्यायस्य तात्पर्यमाह । अय-मिति । अंशिनो विराजोऽयमिति निर्देशोऽभिमत इत्यन्वयः । योऽशीं विराट् तत्र-भवोहिरण्यगर्भो "यश्चायमस्मिन्नात्मनी" त्यनेन प्रोक्तस्तत्र हेतुस्तेजोमयोक्तित इत्युत्तरार्धयोजना ॥ १८ ॥

विराड्ढिरण्यगर्भाख्यस्थूलसूक्ष्मशरीरगः ।
चिदाभासोऽत्र यश्चायमात्मेत्युक्त्याऽभिधीयते ॥ १९ ॥

हिरण्यगर्भशब्देन सूक्ष्मशरीरगतचिदाभासस्य ग्रहणं मामूदित्यनुशयवाना-ह । विराडिति । विराड्ढिरण्यगर्भाख्ये क्रमेण ये स्थूलसूक्ष्मशरीरे तद्गतश्चिदाभासो "यश्चायमात्मे" त्युक्त्याभिधीयत इति योजना ॥ १९ ॥

अपूर्वानपरामध्यप्रत्यग्याथात्म्यवित्तये ।
स वा इत्यादिको ग्रन्थः सदृष्टान्तोभिधीयते ॥ २० ॥

"स वा अयमात्मा सर्वेषाम्भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौचाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिता" इत्येतां कण्डिकाम-पूर्वेत्यादिपद्यसप्तकेन व्याख्यातुमुपक्रमते । अपूर्वेत्यादि ॥ २० ॥

ननूक्तं मधुनस्तत्त्वमयमेव स इत्यतः ।
वचनाद्बहुपर्यायैर्भूयोऽप्येतद्दृढीकृतम् ॥ २१ ॥

सवाऽप्रयमात्मेत्यादेःपुनरुक्तिं शङ्कते । नन्विति । अयमेव स इत्यतो वचना-दित्यन्वयः ॥ २१ ॥

बाढमेतावता वस्तुसार्वात्म्यं स्यात्प्रपञ्चितम् ।
तदेवाभिव्यज्यतेऽथ विदुषः फलरूपतः ॥ २२ ॥

समाधत्ते । बाढमिति । तदिति । वस्तुसार्वात्म्यमित्यर्थः ॥ २२ ॥

स एव मधुतत्त्वाख्य आत्मायं तत्त्वविन्मतः ।
आधिपत्यं च राजत्वं वैदुष्यं विदुषोऽधिकम् ॥ २३ ॥

यद्यपि विद्वदविदुषोर्मधुतत्त्वाख्य आत्मा समानस्तथापि विदुष आधि[illegible]
राजत्ववैदुष्याण्यधिकानीत्याहोत्तरार्धेनाधिपत्यमित्यादिना ॥ २३ ॥

अत्राधिपत्यशब्देन स्वातन्त्र्यमभिधीयते ।
स्वार्थः प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मनः ॥ २४ ॥

अधिपतिपदार्थमाह । अत्रेति । अधिपतिशब्देन स्वातन्त्र्याभिधाने हे[illegible]
माह स्वार्थ इति । स्वस्या अधिपतिशब्दरूपायाः प्रकृतेरर्थोऽभिधेयः प्रत्यक् चैत[illegible]
सकारणस्य जगत्स्वरूपस्य तदर्थत्वादित्यर्थः ॥ २४ ॥

राजत्वं राजनाद्भास्वदविलुप्तात्मदर्शनात् ।
ब्रह्मास्मीति परिज्ञानध्वस्तध्वान्तत्वकारणात् ॥ २५ ॥

राजपदार्थमाह । राजत्वमिति । अविलुप्तात्मदर्शने हेतुमाह । ब्रह्मेत्या[illegible]
दिना ॥ २५ ॥

योऽसावविद्यया देही संसारी वाप्यभूत्पुरा ।
स एव विद्यया ब्रह्मेत्यतोऽस्मिञ्जगदर्पितम् ॥ २६ ॥

आत्मनि सर्वभूतार्पणं ब्रह्मात्मतया सम्भावयति य इति ॥ २६ ॥

चक्रस्यारा यथा सर्वे नाभिनेम्योः समर्पिताः ।
सजीवा निखिला देहा ब्रह्मविद्यर्पितास्तथा ॥ २७ ॥

ब्रह्मणि जगदर्पणं सदृष्टान्तं "तद्यथा रथनाभौ चे" त्यादिश्रुत्या दर्शित-
मित्याह । चक्रस्येति ॥ २७ ॥

समाप्ता ब्रह्मविद्येयं कैवल्यावाप्तयेऽखिला ।
यथोक्तब्रह्मविद्यायाः स्तुत्यर्थाख्यायिकोच्यते ॥ २८ ॥

वृत्तं कथयन् वर्तिष्यमाणाख्यायिकाप्रयोजनमाह । समाप्तेति ॥ २८ ॥

दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच द्विविधं मधु ।
प्रवर्ग्याङ्गरविध्यानं ब्रह्मज्ञानमिति द्वयम् ॥ २९ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोच" दित्येतमेतदानुपूर्वीकं वक्ष्यमाणञ्च पर्य्यायत्रयं व्याख्यानलाघवायैकत्रैव व्याचष्टे । दध्यङ्ङित्यादिश्लोकद्विकेन । द्वैविध्यमाहोत्तरार्द्धेन । प्रवर्ग्येति । प्रवर्ग्याख्यकर्मविशेषस्याङ्गभूतमादित्योपासनमित्यर्थः । प्रथमां विधामुक्त्वा द्वितीयां तामाह । ब्रह्मज्ञानमिति ॥ २९ ॥

तं वृत्तान्तमृषिः पश्यन्प्राब्रवीदश्विनौ प्रति ।
वृत्तान्तमब्रवीदृग्भ्यामृग्भ्यां च ब्रह्मवेदनम् ॥ ३० ॥

ऋषिरिति । मन्त्र इत्यर्थः तद्द्रष्टा वा । ऋग्भ्यामिति । "तद्वाँनरासनयेदᳬ स" इत्याद्यया "आथर्वणायाश्विनादधीच"इत्याद्यया चेत्यर्थः । ऋग्भ्याञ्च ब्रह्मवेदनमिति । "पुरश्चक्रे द्विपद" इत्याद्यया "रूपं रूपम्प्रतिरूपो वभूवे"त्याद्यया चर्ग्भ्यां ब्रह्मविद्यां प्राब्रवीदित्यर्थः ॥ ३० ॥

अश्विनोर्युवयोरुग्रं लाभाय गुरुमारणम् ।
आविष्करोमि लोकेऽस्मिन्मेघो वृष्टिं यथा तथा ॥ ३१ ॥
दध्यङ्ङाथर्वणोऽश्वस्य शिरसा युवयोर्मधु ।
यत्प्रोवाच तदप्यत्र जानन्नाविष्करोम्यहम् ॥ ३२ ॥
छित्त्वा गुरोः शिरोऽन्यत्र निक्षिप्याश्वस्य यच्छिरः ।
तदाहृत्य गुरोः स्कन्धे प्रातिष्ठापयतं युवाम् ॥ ३३ ॥
सत्यप्रतिज्ञः स गुरुः सोढ्वाप्येतादृशीं व्यथाम् ।
मधुद्वयमुवाचेति कथितोऽर्थ ऋचोर्द्वयोः ॥ ३४ ॥

"तद्वानरासनयेदᳬ सउग्रमाविष्कृणोमि तन्यतुर्नवृष्टिं दध्यङ्हयन्मध्वाथर्वणो वा मश्वस्य शीर्ष्णा प्रयदीमुवाचे" ति । आथर्वणायाश्विनादधीचेऽश्व्यᳬ शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायन् त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वा"मिति चर्ग्द्वयं व्याचष्टे । अश्विनोरित्यादिपद्यचतुष्टयेन ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

ईशो मनुष्यपश्वादिदेहाँश्चक्रे पुरा ततः ।
स पक्षी लिङ्गरूपेण भूत्वा तान्प्राविशत्प्रभुः ॥ ३५ ॥

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशदित्येतामृचं व्याचष्टे । ईश इति । ततो मनुष्यादिदेहकरणात् पुरा स ईश्वरो लिङ्गरूपेण पक्षी भूत्वेति योजनया व्याख्येयम् ॥ ३५ ॥

योऽयं पुरुषशब्दोऽस्मिन्मन्त्रे तस्य निरुक्तितः ।
जीवब्रह्मैक्यतात्पर्यं मन्त्रस्यास्योपवर्ण्यते ॥ ३६ ॥
पुरि शेते यतस्तस्मात्पुरुषो जीव उच्यते ।
सर्वं पूरयतीत्येवं पुरुषो ब्रह्म भण्यते ॥ ३७ ॥
अनेन ब्रह्मणा किञ्चिद्बहिर्नानावृतं क्वचित् ।
नास्त्यसंवृतमन्तश्च पूरणात्पुरुषस्तथा ॥ ३८ ॥

उक्तर्क्स्थपुरुषपदार्थनिर्वचनपरं जीवब्रह्मैक्यपरं च " स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृत"मिति वाक्यजातं व्याचष्टे । य इत्यादिश्लोकत्रयेण । तस्य । पुरुषशब्दस्य । अस्य पुरश्चक्रे द्विपद इत्यादेः ॥ ३६ ॥ ३७ ॥ ३८ ॥

रूपं रूपं प्रविष्टोऽयं प्रतिबिम्बो भवत्ययम् ।
तदस्य प्रतिबिम्बत्वं प्रत्यग्याथात्म्यवित्तये ॥ ३९ ॥

"रूपं रूपं प्रतिरूपो बभूव तदस्य रूपम्प्रतिचक्षणायइन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादशे"त्येतामृचं व्याचष्टे । रूपमित्यादिपद्यचतुष्केण । तदस्येत्यादि। ईशस्य तद्रूपं रूपंप्रति प्रवेशरूपं प्रतिबिम्बत्वमात्मयाथात्म्यज्ञानफलकमित्यर्थः ॥ ३९ ॥

चैतन्यात्मादयः शब्दा व्युत्पन्नाः प्रतिबिम्बके ।
लक्षयन्ति चिदात्मानं तेन याथात्म्यवेदनम् ॥ ४० ॥

उक्तार्थं विशदयति । चैतन्येति ॥ ४० ॥

मिथ्याभिमानैः साभासबुद्ध्यादिपरिकल्पितैः ।
द्रष्टा श्रोताहमित्यादिबहुरूपो विचेष्टते ॥ ४१ ॥

"पुरुरूप ईयत" इत्येतद्विवृणोति । मिथ्येति ॥ ४१ ॥

सन्त्यस्य हरयोऽक्षाख्या हरणाद्विषयान्प्रति ।
प्राणिभेदादनन्तास्ते तैस्तु संसरतीश्वरः ॥ ४२ ॥

मन्त्रस्थस्य "युक्ता ह्यस्य हरय" इत्यादेस्तात्पर्यमाह । सन्त्यस्येति॥४२॥

मन्त्रोक्ता हरयोऽध्यस्तास्तत्संख्या च प्रकल्पिता ।
एतेषां तत्त्वमात्मैवेत्याह ब्राह्मणमादरात् ॥ ४३ ॥

"अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि चे" ति ब्राह्मणस्य तात्पर्यमाह । मन्त्रोक्ता इति ॥ ४३ ॥

निश्शेषमधुकाण्डस्य तदेतदितिवाक्यतः ।
सारः संक्षिप्यते साक्षात्करविन्यस्तबिल्ववत् ॥ ४४ ॥

"तदेतद्ब्रह्मापूर्वमनपर मनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासन" मित्येतद्व्याचष्टे । निश्शेषमित्यादिषट्केन ॥ ४४ ॥

अज्ञातं संशयज्ञातं मिथ्याज्ञातमिदं जगत् ।
तदेतदित्यनूद्यास्य तत्त्वं ब्रह्मेति बोध्यते ॥ ४५ ॥

तदेतद्ब्रह्मेति व्याचष्टे । अज्ञातमिति ॥ ४५ ॥

निष्कारणं तन्निष्कार्यं निश्छिद्रं बाह्यवर्जितम् ।
परोक्षप्रतिषेधार्थमात्मा ब्रह्मेति भण्यते ॥ ४६ ॥

अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्मेत्येतमंशं विवृणोति । निष्कारणमिति ॥ ४६ ॥

सर्वानुभव एवायं यतः सर्वानुभूस्ततः ।
कात्स्न्यात्सर्वो भवेदेष चिन्मात्रत्वात्तथानुभूः ॥ ४७ ॥

"सर्वानुभू" रित्यंशं व्याचष्टे । सर्वानुभव इति ॥ ४७ ॥

कर्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ।
अस्यातिलङ्घने दोषः संसारानर्थसङ्गतिः ॥ ४८ ॥

इत्यनुशासनमित्यस्य तात्पर्यमाह । कर्तव्यमिति । अस्योक्तवेदानुशासनस्य ॥ ४८ ॥

कुर्वतस्तु महाँल्लाभः स्वात्मनः कृतकृत्यता ।
मधुकाण्डार्थसर्वस्वमित्थं श्रुत्योपसंहृतम् ॥ ४९ ॥

कुर्वत इति । अस्योक्तवेदानुशासनमित्यादिः । मधुकाण्डव्याख्यामुपसंहरति । मधुकाण्डार्थेति ॥ ४९ ॥

विद्यावंशजपाद्विद्याविघ्नः सर्वो निवार्यते ।
मुमुक्षुमनुगृह्णातु विद्यातीर्थमहेश्वरः ॥ ५० ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे बृहदारण्यके
मधुविद्याप्रकाशो नाम षोडशोऽध्यायः ॥ १६ ॥

वंशपाठतात्पर्यमाह । विद्येति । मुमुक्षुं प्रति विद्यातीर्थमहेश्वरानुग्रहं प्रार्थयते । मुमुक्षुमिति ॥ ५० ॥

इति श्रीमत्पण्डितरामटहलतनूजोविठीदेवीगर्भजकाशीनाथकृतौ मित-
प्रकाशविवृतौ बृहदारण्यके मधुविद्याप्रकाशो नाम
षोडशोऽध्यायः ॥ १६ ॥



## अथ सप्तदशोऽध्यायः।

याज्ञवल्क्योऽश्वलादिभ्यो विजिगीषुकथामुखात्।
उक्तवान्पञ्चमेऽध्याये तत्त्वविद्यामनेकधा॥ १॥

पञ्चमाध्यायं व्याख्यातुमुपक्रमते। याज्ञवल्क्य इति॥ १॥

अध्यात्ममधिभूतञ्च यजमानर्त्विगादिषु।
स्वाभाविकः परिच्छेदो मृत्युर्मर्त्यफलार्जनात्॥ २॥

"याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्युनाप्त" मित्यादिकाः "स मुक्तिः साऽतिमुक्ति" रित्यन्ताश्चतस्रः कण्डिका व्याचष्टे। अध्यात्ममित्यादिपञ्चकेन। परिच्छेदः परिच्छिन्नत्वं। मर्त्यफलेति—मर्त्यं नश्वरं यत्फलं तदर्जनादित्यर्थः॥ २॥

कालोऽपि मृत्युः कर्त्रादिमारणात्स्यात्स च द्विधा।
सौरोऽहोरात्ररूपेण चान्द्रः पक्षादिरूपतः॥ ३॥

द्वैविध्यमाह। सौर इति॥ ३॥

जेतुं मृत्युत्रयं ब्रह्मलोकं प्राप्तुं च साधनम्।
प्रश्नैश्चतुर्भिः पप्रच्छ देवध्यानं तदुत्तरम्॥ ४॥

मृत्युत्रयमिति। अध्यात्ममधिभूतञ्च यजमानर्त्विगादिष्वित्यादिनोक्तस्वरूपं तत्त्रयमित्यर्थः। तदुत्तरमिति। प्रश्नचतुष्टयसमाधानमित्यर्थः॥ ४॥

यजमानस्य वागादेर्होत्रादेश्चाधिदैविके।
अग्न्यादावेकतां ध्यात्वा मुच्यते चातिमुच्यते॥ ५॥

उक्तोत्तररूपं ध्यानं मुक्त्यतिमुक्तिद्वयफलकमित्याह। यजमानस्येति॥५॥

मुक्तिस्त्यक्त्वाऽऽसुरं भावं देवभावस्य चिन्तनम्।
ब्रह्मलोकोऽतिमुक्तिः स्यान्न कैवल्यमुपासनात्॥ ६॥

मुक्तिपदार्थमाह। मुक्तिरिति। आसुरमिति। कामक्रोधादिकमित्यर्थः। अतिमुक्तिपदार्थमाह। ब्रह्मलोक इति। तत्प्राप्तिरित्यर्थः। नन्वतिमुक्तिः कैवल्यं किं-

नस्यादित्याशङ्क्योपासनाजन्यत्वेन तस्यास्तद्रूपत्वासम्भवान्नैवमित्याह । नेत्यादि ॥६॥

अथ सम्पद उच्यन्ते स्वल्पे कर्मणि कर्मणः ।
महतश्चिन्तनं सम्पत्तया प्राप्यं महत्फलम् ॥ ७ ॥

" याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होतास्मिन् यज्ञे करिष्यति" त्याद्या "स्ततोह होताऽश्वल उपरराम" इत्यन्ताः पञ्च कण्डिका व्याख्यातुमुपक्रमते । अथेत्यादिषट्केन । सम्पत्पदार्थमाह । स्वल्प इत्यादि । स्वल्पे कर्मणि महतः कर्मण उपासनं सम्पदित्यर्थः । तस्याः फलमाह । तयेत्यादि ॥ ७ ॥

होतृप्रयुक्त ऋग्जातित्रये सम्पादयेदमून् ।
लोकांस्त्रैलोक्यमाप्नोति समत्वात् त्रित्वसंख्यया ॥ ८ ॥

ऋग्जातित्रय इति–पुरोनुवाक्यायाज्याशस्यालक्षणगृर्जातित्रय इत्यर्थः । अमून् भूप्रभृतींस्त्रीन्लोकानित्यन्वयः । सम्पदाकारस्तु पुरोऽनुवाक्यादयो भूप्रभृतिलोका इति । तस्याः फलमाह । त्रैलोक्यमित्यादि । तत्प्रयोजकं त्रित्वसंख्यासाम्यम् ॥८॥

समिन्मांसाज्यमुख्यानामुज्ज्वलत्वादिसाम्यतः ।
देवलोकादिसम्पत्त्या देवलोकादिमाप्नुयात् ॥ ९ ॥

" याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुताउज्ज्वलन्ती" त्याद्याया अष्टम्यास्तात्पर्यमाह । समिदित्यादि ॥ ९ ॥

ब्रह्मणो मनसो वृत्तिष्वनन्तास्वन्तवर्जितान् ।
विश्वान्सम्पादयन्देवानन्तँल्लोकमाप्नुयात् ॥ १० ॥

"याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मे" त्यादेर्नवम्यास्तात्पर्यमाह । ब्रह्मण इति ॥ १० ॥

उक्तास्वृग्जातिषूद्गात्रा गीयमानासु सम्पदा ।
लोकत्रस्य प्राणादेरपि लोकत्रयं व्रजेत् ॥ ११ ॥

दशम्यास्तात्पर्यमाह । उक्तास्विति ॥ ११ ॥

गया भूर्ब्राह्मणो विष्णुरन्नं ब्रह्मेति सम्पदा ।
श्राद्धे फलस्य बाहुल्यं मत्वा सम्पादयन्ति हि ॥ १२ ॥

कर्मणि सम्पदा फलबाहुल्यमित्यत्र दृष्टान्तन्दर्शयति । गया भूरिति ॥ १२ ॥

बन्धाख्यमृत्युस्तन्मृत्युर्विदुषोऽनुक्रमस्तथा ।
प्रयोजकस्तयोर्मृत्य्वोः प्रेरकं चात्र पृच्छयते ॥ १३ ॥

"अथ हैनं जारत्कारव" इत्युपक्रम्य "कति ग्रहाः कत्यतिग्रहाः" इत्यादिका "अष्टौ ग्रहा अष्टावतिग्रहा" इत्यन्ता द्वितीयब्राह्मणस्य नवकण्डिका व्याख्यातुमुपक्रमते । बन्धाख्येत्यादिपद्यद्वादशकेन । तन्मृत्युरिति । बन्धाख्यमृत्युमृत्युरित्यर्थः । अनुक्रम इति । अनुक्रामति क्रमेण प्रवर्तते विद्वान् येन स इत्यर्थः । तथा बन्धाख्यमृत्युरिव तन्मृत्युरिव च विदुषोऽनुक्रमरूपः प्रयोजकः मृत्युद्वयप्रेरकश्चात्र पृच्छयते इति योजना । तयोर्मृत्य्वोरिति—बन्धाख्यमृत्युतन्मृत्य्वोरित्यर्थः । अत्रेति "कति ग्रहाः कत्यतिग्रहा" इत्यादिवाक्य इत्यर्थः ॥ १३ ॥

अधिभूताधियज्ञादिपरिच्छेदः फलात्मकः ।
मोहासङ्गात्मको मृत्युर्ग्रहातिग्रहबन्धवान् ॥ १४ ॥

मृत्युपदार्थं कथयति । आधिभूतेति । अतिमृत्युपदार्थो वक्ष्यते ॥ १४ ॥

ग्रहा प्राणादयो ज्ञेया गृह्णन्ति विषयान्यतः ।
घ्राणादिप्रेरकत्वेन गन्धाद्याः स्युरतिग्रहाः ॥ १५ ॥

ग्रहातिग्रहपदार्थावाह । ग्रहा इति ॥ १५ ॥

पूर्वब्राह्मणसम्प्रोक्तध्यानसंयुक्तकर्मभिः ।
परिच्छेदविनाशेऽपि मृत्योः सर्वस्य न क्षयः ॥ १६ ॥
हिरण्यगर्भरूपेऽपि श्रूयन्ते हि क्षुधादयः ।
अतो मृत्योरशेषस्य मृत्युरन्योऽत्र पृच्छयते ॥ १७ ॥

ननु पूर्वब्राह्मणप्रोक्तध्यानयुक्तकर्मभिः परिच्छेदविनाशे सर्वस्य मृत्योः क्षयात् तन्मृत्युरित्युक्तमयुक्तमित्याशङ्क्य सर्वस्य मृत्योः क्षयाभावेन परिहरति । पूर्वेत्यादिद्विकेन ॥ १६ ॥ १७ ॥

निर्णेयौ मृत्युतन्मृत्यू बन्धमोक्षावबुद्धये ।
दुर्वचौ च ग्रहादीनां लोकेऽत्यन्ताप्रसिद्धितः ॥ १८॥

बन्धमोक्षज्ञानफलको मृत्युद्वयनिर्णय इत्याह । निर्णेयाविति । शङ्कते । दुर्वचाविति । अस्य यद्यपीत्यादिः । ग्रहातिग्रहशब्दयोरर्थविशेषे लोके प्रसिद्ध्यभावाद् ग्रहादिप्रयोज्यौ मृत्यू दुर्वचावित्यर्थः ॥ १८ ॥

ग्रहातिग्रहवद्बन्धो देहेऽप्येष तथाप्यसौ ।
जन्मान्तरेऽपि सञ्चारान्नाप्रसिद्धो न दुर्वचः ॥ १९॥

ग्रहातिग्रहवन्मोहासङ्गात्मको वन्धोपि वर्तमानदेहे दुर्वच इत्याह । ग्रहेति । समाधत्ते—तथापीति । अयम्भावः । यथा लोकेग्रहादीनामप्रसिद्धत्वेपिश्रुतिप्रसिद्धत्वात्तन्निरूपितौ मृत्युतन्मृत्यू सुवचौ तथा तन्निरूपितवन्धोऽपि सुवच इति ॥ बन्धस्य प्रसिद्धत्वसुवचत्वे प्रकारान्तरेणाह । असाविति । असौ बन्धो जन्मान्तरेपि । अपि शब्दादिह जन्मनि इन्द्रियस्य सञ्चारात्सम्बन्धात् तत्प्रयोज्यः सन् नाप्रसिद्धो न दुर्वच इत्यर्थः ॥ १९ ॥

एकमेव मनः सर्वजन्मगामीति तार्किकाः ।
अक्षान्तराण्यपीत्यन्ये तेन संख्यात्र दुर्वचा ॥ २० ॥

"कति ग्रहाः कत्यतिग्रहा इति प्रश्नस्य संख्याया दुर्वचत्वेन संख्याभावं वर्णयन् जन्मान्तरसञ्चारं दर्शयति । अक्षान्तराणीति । मनोऽतिरिक्तचक्षुरादीनीत्यर्थः । अन्ये इति–सांख्या इत्यर्थः । तेनेति–विप्रतिपन्नत्वेनेत्यर्थः । अत्रेति । इह इत्यर्थः ॥ २० ॥

मनोन्यायः समोऽन्येषु तेनादोषविवक्षया ।
पर्यग्रहीदष्टसंख्यामन्यान्तर्भाव ऊह्यताम् ॥ २१ ॥

इदानीमुत्तरभूत "मष्टौ ग्रहा अष्टावतिग्रहा" इति वाक्यं व्याचष्टे— इति । मनोन्याय इति । चक्षुरादिकं सर्वजन्मगामि इन्द्रियत्वात् उपलब्धिसाधनत्वाद्वा मनोवदितिन्याय इत्यर्थः । अन्येष्विति । चक्षुरादिष्वित्यर्थः । तेन न्यायेन दोषाभावं वक्तुमष्टत्वसंख्यां पर्यग्रहीदित्यन्वयः । ननु पादादेरधिकस्येन्द्रियस्य

सद्भावात्कथं दोषाभाव इत्याशङ्क्याह अन्यान्तरिति । ज्ञानेन्द्रियपञ्चकं वाक्पाणी मनश्चेत्यष्टौ सर्वेन्द्रियोपलक्षणमित्यर्थः ॥ २१ ॥

यस्येन्द्रियस्य योऽर्थोऽस्मिन् जन्मन्यन्यत्र तत्तथा ।
उतान्यथेति सन्देहात्संख्येयं पृच्छयते पुनः ॥ २२ ॥

"ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त" इत्येतद्वाक्यं संख्येयस्वरूपपरत्वेन व्याचष्टे । यस्येति ॥ २२ ॥

दृष्टानुसार्यदृष्टन्तु कल्पनीयमितीदृशात् ।
न्यायात्प्राह यथा दृष्टामिन्द्रियार्थव्यवस्थितिम् ॥ २३ ॥

"प्राणो वै ग्रह" इत्यादीनां "त्वचा हि स्पर्शान्वेद" इत्यन्तानामष्टानां पर्यायाणां संक्षेपतस्तात्पर्यन्दर्शयति । दृष्टेत्यादिद्विकेन । जन्मान्तरीयचक्षुरादिकं प्रतिनियतस्वस्वविषयकं चक्षुरादित्वात् सम्प्रतिपन्नवदिति न्यायः ॥ २३ ॥

बन्धत्वं विशदीकर्तुं ग्रहातिग्रहकल्पनम् ।
मोचनीयो ग्रहग्रस्तस्तथैवाक्षार्थबन्धनात् ॥ २४ ॥

अक्षार्थबन्धनादिति । इन्द्रियार्थप्रयुक्तबन्धादित्यर्थः ॥ २४ ॥

ग्रस्तं हिरण्यगर्भान्तं मृत्युना सकलं जगत् ।
ग्रहातिग्रहरूपेण मृत्युस्तस्यास्ति वा न वा ॥ २५ ॥

"याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्न मप पुनर्मृत्युञ्जयति" इति दशमीं कण्डिकां पञ्चभिः पद्यैर्व्याख्यातुमुपक्रमते । ग्रस्तमित्यादि । तस्येति । ग्रहातिग्रहरूपस्य मृत्योरित्यर्थः ॥ २५ ॥

अस्तिचेदनवस्था स्यादनिर्मोक्षोऽन्यथा भवेत् ।
इत्यसौ दुर्वचः प्रश्नो दृष्टान्तेनापनुद्यते ॥ २६ ॥

प्रश्नस्य दुर्वचत्वं दर्शयन् "अग्निर्वै मृत्युः सोऽपामन्नमि" त्येतद्दृष्टान्तपरत्वेन व्याख्यातुमुपक्रमते अस्तीत्यादिना ॥ २६ ॥

वह्नेः सर्वाशिनो मृत्योर्यथा मृत्युर्जलं महत् ।
बन्धमृत्योस्तथा मृत्युरज्ञानं बन्धहृल्लये ॥ २७ ॥

दृष्टान्तमाह । वह्निरिति । दार्ष्टान्तिकमाह । बन्धेत्यादि । तथा बन्धमृत्योः ज्ञानं मृत्युर्यतः प्रलये तम्बन्धं हरतीत्यर्थः ॥ २७ ॥

अज्ञानमृत्योर्विज्ञानं मृत्युस्तस्यापि तत्तथा ।
तत्कातकरजोन्यायान्नानवस्थामिहानयेत् ॥ २८ ॥

अज्ञानमृत्योर्विज्ञानं ब्रह्मसाक्षात्कारो मृत्युस्तस्यापि ब्रह्मसाक्षात्कारात्मक विज्ञानस्यापि तत्तदात्मकविज्ञानं तथा मृत्युरिति पूर्वार्द्धार्थः । स्वस्यापि स्वं मृत्युरित्यङ्गीकृतमनवस्थापरिहाराय तदुपपादयति दृष्टान्तेन तत्कातकेत्यादि ॥ २८ ॥

प्राक्तनान्यपि जन्मानि सम्यग्ज्ञानमपह्नुते ।
अपह्नुते स्वमित्यस्मिन्नर्थे नैषा चमत्कृतिः ॥ २९ ॥

ज्ञानस्य स्वनाशकत्वं कैमुतिकन्यायेनाह । प्रागित्यादि । प्राक्तनान्यपि चिरन्तनान्यपि जन्मानि अविद्याकामकर्मादिजन्मसाधनानि । सम्यग्ज्ञानं यथार्थब्रह्मसाक्षात्करोऽपह्नुते नाशयति । तात्कालिकं स्वमात्मानमपह्नुते नाशयतीत्यत्राश्चर्यं नास्तीत्यर्थः ॥ २९ ॥

अथ तत्त्वविदः प्राणा उत्क्रामन्त्यथवा न हि
स्यात्पुनर्जनिरुत्क्रान्तावनुत्क्रान्तौ मृतिः कथम् ॥ ३० ॥

"यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो ३ नेती" त्येतच्छ्रुतिवाक्यं साभिप्रायं व्याचष्टे । अथेति ॥ ३० ॥

नोत्क्रामन्ति न तिष्ठन्ति किन्तु निर्वातदीपवत् ।
न कारणं शिष्यतेऽत्र तस्य ज्ञानेन निह्नुतेः ॥ ३१ ॥

नेति होवाचेत्युक्तवाक्यं व्याचष्टे - नेत्यादिपद्यत्रिकेण । तस्येति - स्थित्युत्क्रान्तिकारणस्येत्यर्थः ॥ ३१ ॥

अनारब्धफलं कर्म तदुत्क्रान्तेः प्रयोजकम् ।
स्थितेर्निमित्तमारब्धं ते नष्टे ज्ञानभोगतः ॥ ३२ ॥

निह्नवमेवाह । अनारब्धेति ॥ ३२ ॥

उपादाननिमित्ताभ्यां हीनानामुत्क्रमः कथम्।
कथं वात्र स्थितिस्तस्माद्युक्त आत्यन्तिको लयः॥ ३३॥

"अत्रैव समवनीयन्ते" इत्येतद्व्याचष्टे। उपादानेति स्थितिनिमित्तप्रारब्धकर्मरूपोपादानानारब्धकर्मरूपोत्क्रान्तिनिमित्ताभ्यां रहितानामित्यर्थः॥ ३३॥

प्राणत्यागेन देहोऽयं म्रियते बाह्यवायुना।
आपूर्णःस्थौल्यमापन्नो निश्चेष्टो दृश्यते यतः॥ ३४॥

"स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इत्येतद्व्याचष्टे। प्राणेत्यादि अयंविदुषोदेहः प्राणत्यागेन स्वोपादाने प्राणलयेन म्रियते नतूत्क्रान्त्या। तल्लयेहेतुमाहबाह्येत्यादिना॥ ३४॥

प्राणा एव विलीयन्ते किं वा सर्वं प्रयोजकम्।
आद्ये प्राणजनिर्भूयो द्वितीये नाम तत्कथम्॥ ३५॥

"यत्राऽयं पुरुषो म्रियते किमेनं न जहाती" त्येतत्प्रश्नवाक्यं साभिप्रायं व्याचष्टे। प्राणा इत्यादि। एवकारेणाविद्याकामकर्मादि निरस्यते। सर्वमिति। अविद्याकामकर्मादीत्यर्थः। नामेत्यादि। तद्देवदत्तादिविदुषो नाम कथं शिष्यत इत्यन्वयः॥ ३५॥

अप्रयोजकनामैव शिष्यते न प्रयोजकम्।
अविद्याकामकर्मादि नोक्तदोषद्वयं ततः॥ ३६॥

नामेत्युत्तरभूतं वाक्यं व्याचष्टे। अप्रयोजकेति। प्रयोजकमविद्याकामकर्मादि न शिष्यत इत्यन्वयः॥ ३६॥

परवाचाभिनिष्पत्तेर्विदुषो बन्धनं प्रति।
नामा प्रयोजकं युक्तस्तच्छेषः परदेहवत्॥ ३७॥

अप्रयोजकनामैव शिष्यत इत्यत्रोक्तं विदुषो बन्धनं प्रतिनाम्नोऽप्रयोजकत्वमुपपादयंस्तच्छेषस्य युक्तत्वं दर्शयति। परेति। व्यवहर्तृवाचाविद्वन्नाम्नोऽभिनिष्पत्तेस्तत्तद्बन्धनं प्रत्यप्रयोजकमित्यतो व्यवहर्तृदेहादिशेषवत्तच्छेषो युक्तइत्यर्थः॥ ३७॥

मुक्तावप्यवशिष्टत्वान्नम्नोऽनन्तत्वसाम्यतः ।
विश्वान्सम्पादयन्देवाननन्तं लोकमश्नुते ॥ ३८ ॥

"अनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेवसतेन लोकं जयती" ते
व्याचष्टे । मुक्काविति ॥ ३८ ॥

ग्रहातिग्रहबन्धाख्यमृत्योर्यत्स्यात्प्रयोजकम् ।
कालकर्मेश्वरादीनां मध्ये तत्किमितीर्यते ॥ ३९ ॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्य" मित्यादि
"क्वायं तदा पुरुषो भवती" त्यन्तं त्रयोदश्या भागं व्याख्यातुमुपक्रमते । ग्रहे
त्यादि । कालकर्मेश्वरादीनां मध्ये यद्ग्रहातिग्रहबन्ध्याख्यमृत्योः प्रयोजकं स्या
त्तत्किमितीर्यते पृच्छयत इत्यर्थः ॥ ३९ ॥

अविद्वद्विषयः प्रश्नो विदुषो बन्धसंक्षयात् ।
आतत्त्वबोधमज्ञानी बध्यतेऽनन्तजन्मभिः ॥ ४० ॥

अविदुषो बन्धसत्त्वेन तद्विषयो ऽयमार्तभागप्रश्न इत्याह । अविद्वदिति ॥ ४०

अनुगृह्णन्ति वागादीन्स्वांशैरग्न्यादिदेवताः ।
भोगक्षये मृतौ स्वांशान्संहरन्ति यथा तथा ॥ ४१ ॥

उक्तश्रुतेस्तात्पर्यमुक्त्वा तदक्षराणि व्याचष्टे । अन्विति । तथेत्यु
रान्वयी ॥ ४१ ॥

भूयो देहग्रहे भूयो देहस्थानेषु देवताः ।
अंशं निदधति स्वं स्वं न देहग्रहणात्पुरा ॥ ४२ ॥

भूयो देहग्रहे पुनर्देहग्रहे देवताअग्न्यादिदेवता देहस्थानेषु स्वं स्वमंशं
भूयो निदधति देहग्रहणात् पुरा न निदधतीति योजना ॥ ४२ ॥

अधिष्ठातृवियोगेन न्यस्तदात्रोपमैर्युतः ।
वागादिभिरसौ किंस्वित्प्रयोजकमुपाश्रयेत् ॥ ४३ ॥

"क्वायंतदापुरुषोभवती" त्यंशंव्याचक्षाणो जन्ममरणयोरन्तराले अग्न्यादिदेवता

रूपाधिष्ठानाद् वियोगेन तक्ष्णा त्यक्तदात्रोपमैर्वागादिभिर्युतोऽसावविद्वान् किं प्रयोजकमाश्रयेदिति पृच्छतीत्याह । अधीति ॥ ४३ ॥

किंकारणात्मतामेति किंवा स्वेन चिदात्मना ।
अवतिष्ठत एवायं किंवा कर्मैव संश्रितः ॥ ४४ ॥

उक्तं प्रश्नं प्रपञ्चयति किमित्यादि । कारणात्मतामिति । कारणीभूताविद्योपहितचिदात्मतामित्यर्थः । किं वा आत्मनः केनचिद्रूपेणायं जीवः पृथगेवावतिष्ठते न कुत्रचिल्लीयत इति केनाचिदित्यादेरर्थः । किंवेति । अथवा कर्मैवाश्रयतीत्यर्थः ॥ ४४ ॥

गुणान्वा यदि वेशानं कालं वा दैवमेववा ।
यदृच्छां सन्ततिं शून्यं विनाशं वेति भण्यताम् ॥ ४५ ॥

गुणानिति । गुणानित्यादिद्वितीयान्तानां संश्रित इति पूर्वेणान्वयः । ईशान ईश्वरः सन्ततिः क्षणिकविज्ञानसन्तानः शून्यमभावो विनाशः प्रध्वंसाभावः ॥४५॥

प्रश्नेन तुष्टः सन्त्यज्य विजिगीषां सहामुना ।
निर्गतौ विजिगीषुभ्यो मिथो निर्णयमूचतुः ॥ ४६ ॥

- "आहरसोम्यहस्त" मित्यादे "मन्त्रयाञ्चक्राते" इत्यन्तस्य वाक्यस्य तात्पर्यमाह । प्रश्नेनेत्यादिना । अमुना आर्तभागेन ॥ ४६ ॥

संसारभूमिवर्तित्वान्नैवायं कारणाश्रयः ।
कर्मादिपरतन्त्रत्वात्स्वाश्रयोऽयं न चेष्यते ॥ ४७ ॥

"तौहयदूचतुः कर्महैवतदूचतुरथयत्प्रशशंसतुः कर्महैवतत्प्रशशंसतु" रिति वाक्यस्यतात्पर्यंवक्तुं भूमिकामारचयन् पूर्वोक्तकारणात्मत्वादिनाऽवस्थीतिं निराकरोतिसंसारेत्यादिनासार्धश्लोकद्वयेन । कारणात्मतां निषेधति । संसारेति । स्वेन चिदात्मनाऽयमवतिष्ठते वेति स्वाश्रयत्वपरं द्वितीयपक्षं निषेधति कर्मेति । स्वाश्रय इति । स्वमात्मस्वरूपमाश्रयो यस्य जीवस्य स तथेत्यर्थः ॥ ४७ ॥

जडत्वाद्गुणकालादिर्न जीवं नेतुमर्हति ।
हठो यदृच्छाशून्यं तु मानहीनं तथेतरत् ॥ ४८ ॥

गुणकालदैवानि न नेतॄणीत्याह । जडत्वादिति । यदृच्छां निषेधति । हठ इति । हठेन स्वीक्रियमाणत्वात् यदृच्छा हठः स्वभावोऽतर्कितोपनतं वा यदृच्छा । प्रमाणरहितत्वाच्छून्यमाश्रय इति पक्षं निरस्यति शून्यमिति । विनाशस्य तत्त्वं निषेधति तथेति । मानहीनं विनशनमित्यर्थः ॥ ४८ ॥

जीवेश्वरौ स्वतन्त्रौ चेद्विधिशास्त्रमनर्थकम् ।
अतोऽसाधारणो जन्महेतुः कर्मैव शिष्यते ॥ ४९ ॥

जीववदीशस्य स्वतन्त्रत्वाभावे युक्तिमाह । जीवेश्वराविति । विधिर्विधिः यजेज्जुहुयाद्दद्यादुपासीदित्यादीत्यर्थः । गुणादीनां साधारणत्वेन जीवस्य प्रयोजकस्वरूपमाश्रयत्वं तेषां निषिध्यासाधारणत्वेन कर्मणस्तद्वर्णयन् "तौ हयदूचतुः कर्म हैवतदूचतु" रित्याद्यवतारितवाक्यस्य तात्पर्यं वक्ति अत इति ॥ ४९ ॥

सति कर्मणि वैचित्र्यं देहानामुपपद्यते ।
दैवेशानुगृहीतत्वाज्जाड्यदोषो न कर्मणः ॥ ५० ॥

"पुण्योवै पुण्येन कर्मणा भवति पापः पापेनेती"ति श्रुतिं व्याचक्षाणः कर्मणोऽसाधारणत्वमुपपादयन् दैवेश्वरयोः साधारणकारणत्वमाह सतीति । दैवेशानुगृहीतत्वे कर्मणो जीवप्रयोजकत्वप्रतिबन्धकं जाड्यदोषं निरस्यति । दैवेशेति ॥ ५० ॥

तृतीयब्राह्मणे पुण्यफलावधिरुदीर्यते ।
अश्वमेधः परं पुण्यं ब्रह्मलोकफलावधि ॥ ५१ ॥
प्रत्यक्षस्थावरत्वाख्यः स्पष्टः पापफलावधिः ।
विज्ञायतेऽद्वयज्ञानादियत्ता हेयसंसृतेः ॥ ५२ ॥

भुज्युब्राह्मणं व्याचक्षाणस्तत्तात्पर्यमाह । तृतीयेत्यादि ॥ ५१ ॥ ५२ ॥

अश्वमेधादि यत्पुण्यं महोपासनया युतम् ।
तत्फलं संसृतिस्तस्य भुज्युना पृच्छ्यतेऽवधिः ॥ ५३ ॥

हेयसंसृतेरित्युक्तं तत्र संसृतिपदार्थं दर्शयंस्तदवधिप्रश्ने भुज्योस्तात्पर्यमाह । अश्वेत्यादि । तस्येति । संसृतिरूपफलस्येत्यर्थः ॥ ५३ ॥

ब्रह्माण्डाद्बहिरन्तश्च समष्टिव्यष्टिरूपिणः ।
व्याप्तिर्हिरण्यगर्भस्य संसारस्यावधिर्मतः ॥ ५४ ॥

समष्टिव्यष्टिरूपस्य संसारभूतस्य हिरण्यगर्भस्य प्राप्तिर्महोपासनायुक्ताश्वमेधादिपुण्यफलस्यावधिरिति भुज्युप्रश्नोत्तरमित्याह । ब्रह्मेति ॥ ५४ ॥

आगमैकाधिगम्योऽयमर्थ इत्युपदर्शयन् ।
गन्धर्वाख्यायिकामाह गन्धर्वस्तद्गुरुस्ततः ॥ ५५ ॥

"अथ हैनं भुज्युर्लाह्यायनि" रित्याद्युपक्रमा "मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैमतस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छामे"त्यादिकां 'क्पारिक्षिता अभवन्नि" तीत्यन्तां प्रथमकण्डिकां व्याचक्षाणो गन्धर्वाख्यायिकायाः प्रयोजनं प्रष्टव्यार्थस्य शास्त्राचार्यैकगम्यत्वप्रदर्शनमित्याह । आगमैकेति । गन्धर्वेत्यादि । गन्धर्वाख्यायिकाकथनाद्गन्धर्वो भुज्युगुरुः सिद्ध इत्यर्थः ॥ ५५ ॥

लोकाँस्तानपि गन्धर्वादश्वमेधकृतां फलम् ।
श्रुत्वा पारिक्षितोक्त्यात्र वादिनं तं व्यमोहयत् ॥ ५६ ॥

अश्वमेधकृतां फलभूतांस्तांल्लोकान् गन्धर्वाच्छ्रुत्वापि प्रश्नवाक्ये पारिक्षितशब्देन याज्ञवल्क्यं व्यामोहयद्भुज्युरित्याह । लोकानिति ॥ ५६ ॥

अश्वमेधकृतो वक्ति भुज्युः पारिक्षिता इति ।
परितः क्षितिमावेष्ट्य स्थिता इति विवक्षया ॥ ५७ ॥

पारिक्षितशब्दो योगवृत्त्याऽश्वमेधकर्तॄन्वदतीत्याह । अश्वेति । योगमाह । परित इति । परितः पृथिवीमावेष्ट्यक्षिताः । क्षिनिवासे । क्विप् । ततःस्वार्थिकोऽण् ॥ ५७ ॥

ह्रियाज्ञवल्क्यमुद्दिश्य प्रश्नोक्तिस्त्रासजन्मने ।
अत्रस्तोऽतीन्द्रियज्ञानं दर्शयन्निदमुक्तवान् ॥ ५८ ॥

" क्व पारिक्षिता अभवन् क्व पारिक्षिता अभवन्निति " याज्ञवल्क्यमुद्दिश्य गन्धर्वं प्रति ह्रिः प्रश्नोक्तिस्त्रासजननिफलिकेत्याह । ह्रिरिति । न सत्रस्तः किन्तु " सहोवाचोवाच वैसोऽगच्छन्वैतेतद्यत्राश्वमेधयाजिनो गच्छन्ती " त्युत्तरमाह ।

अत्रस्त इति । अतीन्द्रियज्ञानमिति । नैजमतीन्द्रियज्ञानं भुज्युं दर्शयन्निदं वक्ष्य-माणमुवाचेत्यर्थः ॥ ५८ ॥

गन्धर्वेण गतिः प्रोक्ता अश्वमेधकृतामिति ।
भूयः पृष्टः स्वयं वक्तुं प्राह लोकस्य विस्तृतिम् ॥ ५९ ॥

"उक्तवाक्यं व्याचष्टे । गन्धर्वेणेति । "भूयः पृष्ट इति । "क न्वश्वमेधया-जिनो गच्छन्ती"त्येवं पुनः पृष्ट इत्यर्थः । स्वयमित्यादि । गन्धर्वं प्रत्यकृतस्योक्त-प्रश्नस्योत्तरं स्वयं वक्तुं नतु गन्धर्वेण प्रोक्तमुत्तरं लोकस्य प्राणिभोगसाधनस्य वि-स्तारं याज्ञवल्क्यः प्राहेत्यर्थः ॥ ५९ ॥

आदित्यरथगत्याध्वामितो यावानहर्निशम् ।
द्वात्रिंशद्गुणितस्तावान्व्याप्तो भानुगभस्तिभिः ॥ ६० ॥

" द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्येति तां समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति " इत्येतमुत्तरवाक्यांशं व्याचष्टे । आ-दित्येति । अहर्निशमादित्यरथगत्यामितोऽध्वा द्वात्रिंशद्गुणितो यावान् प्रदेशस्ता-वान् सूर्यकिरणैर्व्याप्तो निरुक्तलोक इत्यर्थः । सार्धतिस्रः कोट्यः सप्तलक्षाणि चतु-र्दशसहस्राणि सार्द्धद्विशतं त्रयश्चत्वारिंशल्लोकविस्तार इति यावत् ॥ ६० ॥

इयानेव प्राणिभोगसिद्ध्यै लोक इष्यते ।
इतः परस्तात्तद्द्विगुणा पृथिव्यालोकवर्जिता ॥ ६१ ॥

इत इत्यादि । निरुक्तलोकात् परस्तात्तद्द्विगुणाऽऽलोकवर्जिता पृथिवीति योजना ॥ ६१ ॥

अन्तरालोकयुक्तः सन्बहिरालोकवर्जितः ।
लोकालोकगिरिर्मध्ये पृथिव्योरनयोः स्थितः ॥ ६२ ॥

द्वयोः पृथिव्योर्मध्ये लोकालोकगिरिरस्ति । तत्र लोकालोक पदार्थमाह । अन्तरेति पूर्वार्द्धेन ॥ ६२ ॥

समुद्रो द्विगुणो भूमेर्घनोदाख्यो बहिः स्थितः ।
अण्डाद्बहिर्घनोदोऽयमिति पौराणिका जगुः ॥ ६३ ॥

"तां समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येती"त्येतद्व्याचष्टे । समुद्र इति । द्विगुणो भूमेरालोकवर्जिताया बहिःस्थितो घनोदाख्यः समुद्र इत्यन्वयः । पौराणिकमतं खण्डयितुमाह । अण्डादिति ॥ ६३ ॥

पुराणं बाध्यते श्रुत्या ध्यानार्था वै श्रुतिर्मता ।
सर्वथाप्यण्डरूपोऽयं वैराजो देह इष्यताम् ॥ ६४ ॥

निरस्यति पुराणमिति । श्रुतेर्बाधकत्वमुपपादयति ध्यानार्थेत्यादि । यतः श्रुतिर्ध्यानार्थैवातो बाधकत्वेनेष्टा इत्यर्थः । यदि ध्यानार्थेवेति पाठः स्यात्तदा ध्यानार्थत्वेन श्रुतेः सावकाशत्वान्निरवकाशपुराणबाधो नोचित इत्यर्थः स्यात् । मतद्वयेप्यण्डस्य विराड्देहत्वमेष्टव्यामित्याह । सर्वथेति ॥ ६४ ॥

योऽण्डाद्बहिः स्थितो वायुः सूत्रात्मेति श्रुतीरितः ।
एषोऽश्वमेधकृत्पुण्य परिपाको न चाऽपरः ॥ ६५ ॥

" तद्यावतीक्षुरस्यधारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वे " त्यादि " य एवं वेदे " त्यन्तं तृतीयब्राह्मणं व्याख्यातुमारभते । य इत्यादि । अण्डाद्बहिःस्थितो यो वायुः श्रुत्या सूत्रात्मेति कथितः एष एवाश्वमेधपुण्यफलं नत्वपर इत्यर्थः ॥ ६५ ॥

क्षुरधाराद्युपमितः संधिर्योण्डकपालयोः ।
तेन बाह्ये नयत्येतानश्वमेधस्य देवता ॥ ६६ ॥

एतानिति । अश्वमेधयाजिन इत्यर्थः । श्रौतेन्द्रपदार्थमाह । अश्वेत्यादि । अश्वमेधसम्बन्धिनी इन्दतीति व्युत्पत्त्या परमैश्वर्यवती अश्वमेधे चिताग्निरूपादेवेत्यर्थः ॥ ६६ ॥

ते वायुभावमापन्नाः समष्टिव्यष्टिरूपतः ।
अण्डाद्बहिस्तदन्तश्च तिष्ठन्त्यखिलरूपिणः ॥ ६७ ॥

तेऽश्वमेधयाजिनस्तदन्तरण्डमध्ये ॥ ६७ ॥

अध्यात्मादिविभागेन व्याप्तिर्व्यष्टिरितीरिता ।
समस्तत्वेन संव्याप्तिः समष्टिरिति कीर्तिता ॥ ६८ ॥

समष्टिव्यष्टिरूपत इत्युक्तं तत्र व्यष्टिसमष्टिपदार्थौ क्रमेणाह । पूर्वार्धोत्तरार्धाभ्याम् । अध्यात्मादीति ॥ ६८ ॥

समष्टिव्यष्टिरूपं य उपास्तेऽसौ सकृन्मृतः ।
हिरण्यगर्भो भूत्वाऽथ मुच्यते म्रियते न तु ॥ ६९ ॥

आत्मत्वेन समष्टिव्यष्टिरूपमुपासीनस्य हिरण्यगर्भपदप्राप्तिद्वारा क्रममुक्तिमाह । समष्टीति ॥ ६९ ॥

संसारोत्कर्षसीमेत्थं वर्णिता ज्ञानकर्मजा ।
इतो विरक्तिमालक्ष्य वर्ण्यते स्वात्मनिर्णयः ॥ ७० ॥

तृतीयेन भुज्युब्राह्मणेन चतुर्थस्योषस्तब्राह्मणस्य हेतुहेतुमद्भावसङ्गतिं दर्शयति संसारेति । ज्ञानमुपासना कर्माश्वमेधादि । इत इति । संसारोत्कर्षसीमत इत्यर्थः ॥ ७० ॥

चतुर्थब्राह्मणे मोक्षयोग्यः कर्तृत्ववर्जितः ।
विषयो ब्रह्मविद्याया अस्त्यात्मेति निरूप्यते ॥ ७१ ॥

मोक्षयोग्यः कर्तृत्वादिरहित आत्मा ब्रह्मविद्याया विषयोऽस्तीति निरूपणमुषस्तब्राह्मणप्रयोजनमित्याह । चतुर्थेति ॥ ७१ ॥

अहंधीकर्मशास्त्राभ्यां दृष्टेर्द्रष्टा न सिध्यति ।
किन्तु दृष्ट्यादिसंयुक्तेर्ब्रह्मताऽस्य विरुध्यते ॥ ७२ ॥

"अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व" इत्युषस्तप्रश्नं व्याचष्टे चतुर्दशभिरहंधीत्यादि पद्यैः । अहमित्यादि । अहं धिया कर्मकाण्डेन च दृष्टेश्चित्स्वरूपज्ञानस्य द्रष्टा भासकः प्रत्यगात्मा न सिध्यति प्रत्युताहंदृष्ट्यादिसम्बन्धादस्य प्रतीचो ब्रह्मता विरुध्यत इत्यर्थः । अहंधीकर्मकाण्डे न प्रत्यगात्मसाधके इति भावः ॥ ७२ ॥

अतोऽब्रह्मत्वयोग्यस्य प्रतीचोऽत्र बुभुत्सया ।
अनूद्य ब्रह्मतामादौ तद्दृहे परिपृच्छति ॥ ७३ ॥

अत इत्यादि । अत उक्तविरोधाद् ब्रह्मत्वयोग्यस्य प्रतीचो बुभुत्सयाऽत्रोषस्तब्राह्मणे आदौ ब्रह्मतामनूद्य तदर्हं ब्रह्मत्वयोग्यपदार्थमुषस्तः पृच्छतीत्यन्वयः ॥ ७३ ॥

यत्साक्षादपरोक्षं स्याद्ब्रह्म तद्रूपतामयम् ।
अर्हेत्सर्वान्तरस्तादृग् य आत्मा ब्रूहि तं मुने ॥ ७४ ॥

यदित्यादि । यद्ब्रह्म साक्षादपरोक्षं स्यात्तद्रूपतामयं सर्वान्तरोऽर्हेत्तादृग्ब्रह्मत्वयोग्यो य आत्मा तं हे मुने ब्रूहीत्यर्थः ॥ ७४ ॥

साक्षादिति पदेनात्र व्यवधानं निवार्यते ।
स्वर्गलोकादिवद्ब्रह्म नातो देशान्तरादिगम् ॥ ७५ ॥

साक्षात्पदकृत्यमाह । साक्षादितीत्यादि । अत इति । व्यवधानाभावादित्यर्थः ॥ ७५ ॥

अगौणताऽपरोक्षोक्त्या ब्रह्मत्वस्य विवक्षिता ।
नामादेरिव नो गौणं ब्रह्मत्वं प्रत्यगात्मनः ॥ ७६ ॥

अपरोक्षपदकृत्यमाह । अगौणतेति । अपरोक्षशब्देन ब्रह्मत्वस्यागौणता विवक्षिता ननु "नामब्रह्मेत्युपासीते"त्यादौ नामादेरिव सा गौणीत्यर्थः ॥ ७६ ॥

आविर्भावोऽपरोक्षत्वं तच्चास्त्यव्यवधानतः ।
स्वप्रकाशस्वभावत्वादिति वार्थः पदद्वये ॥ ७७ ॥

उक्तपदद्वयस्य कृत्यान्तरमाह । आविरित्यादि । अपरोक्षत्वमाविर्भावः । तदाविर्भावरूपमपरोक्षत्वं ब्रह्मण्यस्ति । तत्रहेतुः । अव्यवधानत इति । साक्षात्पदवाच्यादावरणाभावादित्यर्थः । तत्र स्वप्रकाशस्वभावत्वहेतुमाह । स्वप्रकाशेत्यादि ॥ ७७ ॥

अव्यावृत्तानुगतं वस्तु ब्रह्मागिरोच्यते ।
अकारणमकार्यं तदित्यनेनोदितं भवेत् ॥ ७८ ॥

ब्रह्मपदार्थमाह । अव्यावृत्तानिति । स्वस्माद्व्यावृत्तिरहितानाकाशादीन् विवर्ततया स्वाभिन्नानिति यावत् । यद्वस्त्वनुगतन्तद्ब्रह्मशब्देनोच्यते इत्यर्थः। फलितमाह—अकारणमित्यादि । तदिति । वस्त्वित्यर्थः । अनेन ब्रह्मशब्देन स्व- विवर्ततयाऽऽकाशादीनामभावे नतत्कारणत्वमाकाशादिरूपेण कार्यत्वञ्चब्रह्मणः सम्- वतीति भावः ॥ ७८ ॥

अपुमर्थमिदं प्राप्तं न चेदात्मैव तद्भवेत् ।
यतोऽत आत्मरूपार्थं य आत्मेति विशेष्यते ॥ ७९ ॥

इदानीं य आत्मेत्यनेन ब्रह्मणो विशेष्यतायाः प्रयोजनमाह । अपुमर्थेति । तदिति । ब्रह्मशब्दवाच्यमित्यर्थः । यत इति पूर्वान्वयि । आत्मरूपार्थमि- ति । ब्रह्मण आत्मरूपत्वसिद्ध्यर्थमित्यर्थः । यतस्तद्ब्रह्मात्मैवनचेद्भवेत् तदा इदं ब्रह्म अपुमर्थं पुरुषैरप्रार्थ्यंस्यादिति प्राप्तमत आत्मरूपार्थं य आत्मेति ब्रह्म विशेष्यते इति योजना ॥ ७९ ॥

सजातीयविजातीयद्वितीयार्थ निवृत्तये ।
सर्वान्तर इतिप्राह सार्वात्म्यं तेन सिद्ध्यति ॥ ८० ॥

" सर्वान्तर " इत्येतद्व्याचष्टे । सजातीयेत्यादि । सजातीयविजातीय- यरूपो यो द्वितीयोऽर्थस्तन्निवृत्तिफलकं सर्वान्तर इति कथनमित्यर्थः । तेनेति कथनेनात्मनः सार्वात्म्यं सिध्यतीति सार्वात्म्यमित्यादेरर्थः ॥ ८० ॥

सार्वात्म्यं ब्रह्मणो योग्यं तच्च जीवात्मनीरितम् ।
मुख्यापरोक्ष्यं जीवस्य योग्यं ब्रह्मणिवर्णितम् ॥ ८१ ॥
अभेदो वास्तवो जीवब्रह्मणोर्व्यत्ययादतः ।
विवक्षितस्तत्त्वमसङ्गाद्यादिव्यामोह आर्थिकः ॥ ८२ ॥

सार्वात्म्यमित्यादि । ब्रह्मणो योग्यं सार्वात्म्यं जीवात्मनि सर्वान्तर इतिपदे- नोक्तं जीवस्य योग्यं मुख्यापरोक्ष्यं ब्रह्मणि साक्षात्पदेनवर्णितमित्यतो व्यत्ययाज्जी- वब्रह्मणोर्वास्तवोऽभेदो विवक्षितः । तत्प्रसङ्गाद्याज्ञवल्क्यव्यामोह आर्थिक इत्-

स्योत्तरस्य च पद्यस्यार्थः ॥ ८१ ॥ ८२ ॥

आत्मनो ब्रह्मता मुख्या ब्रह्मणोऽप्यात्मता तथा।
प्रत्यग्दृष्ट्या पराग्दृष्ट्या मिथो ब्रह्मात्मनोर्भिदा ॥ ८३ ॥

जीवब्रह्मणोर्वास्तवोऽभेद इत्युक्तमुपसंहरँस्तयोरौपाधिक भेदमाह। आत्मन इति। तथेति। मुख्येत्यर्थः। प्रत्यग्दृष्ट्येति पूर्वान्वयि। पराग्दृष्ट्येति। बाह्योपाधिदृष्ट्येत्यर्थः ॥ ८३ ॥

ब्रह्मत्वमात्मनो रूपं तमसा तत्तिरोहितम्।
आत्मत्वं ब्रह्मणोऽप्येवं ततो जीवेशभेदधीः ॥ ८४ ॥

उक्तमर्थमुपपादयति। ब्रह्मत्वमित्यादि। तमसाऽज्ञानेन। तद्ब्रह्मत्वम्। एवमिति। तमसातिरोहितमित्यर्थः। तत इति। उक्तद्वयस्य यदुक्तरूपद्वयं तस्य तिरोहितत्वादित्यर्थः ॥ ८४ ॥

तमसो बोधविध्वंसादब्रह्मानात्मताहतेः।
प्रत्यङ्मात्रावशेषत्वात्स्यामपूर्वादिमानहम् ॥ ८५ ॥

प्रश्नवाक्यस्य व्याख्यानमुपसंहरति। तमस इत्यादि। अज्ञानस्य प्रत्यगभिन्नब्रह्मसाक्षात्कारेण विध्वंसादब्रह्मत्वानात्मत्वयोर्विनाशे प्रत्यङ्मात्रावशिष्टत्वेनाहमपूर्वादिमान्कार्याभावकारणाभावादिमान् स्यांसम्भवामीत्यर्थः ॥ ८५ ॥

अमूढो याज्ञवल्क्योऽत्र प्रत्यग्दृष्ट्या परामृशन्।
प्रत्याहैष त आत्मेति तं सर्वान्तरमद्वयम् ॥ ८६ ॥

"एषत आत्मा सर्वान्तर" इत्युत्तरभूतं वाक्यं व्याचष्टे। अमूढ इत्यादिभिर्दशभिः पद्यैः। अमूढ इत्यादि। अत्र प्रष्टव्यविषयेऽमूढो याज्ञवल्क्यः प्रत्यग्दृष्ट्याजीव ब्रह्मणोरभेदं परामृश "ह्येष त आत्मा" इति वाक्येन सर्वान्तरमद्वयं तं प्रत्याहेति योजना ॥ ८६ ॥

मुख्योऽपरोक्षो यः प्रत्यक्स्वप्रकशो विभासते ।
एतच्छब्देन तं प्राह विस्पष्टत्वविवक्षया ॥ ८७ ॥

एषपदार्थमाह । मुख्य इत्यादि । यो मुख्योऽपरोक्षः प्रत्यक्प्रकाशो विभासते । तं साक्षिणं विस्पष्टत्वविवक्षया एष इति शब्देन याज्ञवल्क्यः प्राहेति योजना ॥ ८७ ॥

अन्तर्मुखस्य विस्पष्टो नायं सन्देहगोचरः ।
इत्यभिप्रेत्य तत्प्रश्ने बहुमानं तु नाकरोत् ॥ ८८ ॥

उषस्तप्रश्ने बह्वादराभावे विस्पष्टत्वेन सन्देहविषयत्वाभावं हेतुमाह । अन्तरित्यादि ॥ ८८ ॥

षष्ठ्यन्तस्य त इत्यस्य युष्मद्बुध्युपलक्षितम् ।
देहादिसर्वमाव्योम्नो दृश्यमर्थो विवक्षितः ॥ ८९ ॥

ते इत्यस्यार्थमाह । षष्ठ्यन्तस्येति ॥ ८९ ॥

आत्मेत्यव्यभिचारेण स्वरूपं यत्तदुच्यते ।
प्रमात्राद्यागमापाय साक्षित्वात्तत्स्वरूपता ॥ ९० ॥

आत्मपदार्थमाह । आत्मेत्यादि । अव्यभिचारि यत्स्वरूपं तदात्मेति शब्देनोच्यते । साक्षिणोऽव्यभिचारिस्वरूपत्वे हेतुः प्रमात्रादीति । प्रमातृप्रमाणप्रमेयाणां यावागमापायौ तद्भासकत्वादित्यर्थः ॥ ९० ॥

यद्यस्ति व्यभिचार्येतत्तत्स्वरूपं न कुत्रचित् ।
कुण्डलित्वं यथा पुंसः साक्षित्वाव्यभिचारवान् ॥ ९१ ॥

अव्यभिचारि स्वरूपत्वमुपपादयति । यदीत्यादि । यदि एतत्स्वरूपं कुत्रचिन्नव्यभिचारि व्यतिरेकदृष्टान्तो यथा पुंसः कुण्डलित्वमिति । तर्हि प्रत्यगात्मासाक्षित्वाव्यभिचारवान्भवतीति सिद्धमित्यर्थः ॥ ९१ ॥

व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः।
साक्षिणो व्यभिचारस्तु तथा किंसाक्षिको भवेत् ॥ ९२ ॥

साक्षित्वाव्यभिचारं द्रढयति। व्यभिचार इत्यादि। प्रमात्रादेर्मिथो व्यभिचारो यथा स्वसाक्षिकः साक्षिसाक्षिकस्तथा साक्षिणो व्यंभिचारो न तत्साक्षिणोऽसम्भवादित्यतोऽसाक्षिकः साक्षिव्यभिचारो न सिध्येदित्यर्थः ॥ ९२ ॥

आत्मात्मवत्त्वसम्बन्धः षष्ठ्योक्तो जगदात्मनोः।
स्वतो निरात्मकं दृश्यमात्मना सात्मतां व्रजेत् ॥ ९३ ॥

इदानीं त इत्यत्र षष्ठ्या जगदात्मनोरात्मात्मवत्त्वसम्बन्धः स्वरूपेण निरात्मकस्य दृश्यस्यात्मरूपेण सात्मतां सम्भावयितुमुक्तइत्याह। आत्मेत्यादि॥९३॥

आत्मा सर्वस्वरूपत्वात्सर्वान्तरगिरोदितः।
सर्पधारादिकल्प्येषु रज्जोरान्तरता यथा ॥ ९४ ॥

स्वरूपेण निरात्मकं वियदादिदृश्यमित्युक्तमर्थमुपपादयति। आत्मेत्यादिपद्यद्विकेन। आत्मेत्यादि। यथा कल्पितेषु सर्पधारादिषु रज्जोरान्तरता तथात्मनसर्वस्वरूपत्वात्स सर्वान्तरशब्देनोक्त इत्यर्थः ॥ ९४ ॥

आत्मनोऽनवशेषेण तदन्यार्थाभिसङ्गतेः।
प्रत्यङ्मात्रतयैवान्यद्बोधादात्मनि लीयते ॥ ९५ ॥

तदन्येति। आत्मभिन्नेत्यर्थः। आत्मनोऽनवशेषेणकार्त्स्न्येन तदन्यार्थाभिसंगतेः प्रत्यङ्मात्रतयैवहेतुना बोधात्स्वरूपसाक्षात्कारादन्यद् आत्मनिलीयते इति योजना ॥ ९६ ॥

इत्थं स्वानुभवाद्याज्ञवल्क्यः सर्वान्तरं जगौ।
अन्यः संशयमापाद्य जिगीषुः परिपृच्छति ॥ ९६ ॥

इदानीं "कतमो याज्ञवल्क्य सर्वान्तर" इति प्रश्नवाक्यं व्याचष्टे। इत्थ-

मित्यादिपद्यत्रिकेण । अन्य उषस्तः । संशयामित्यादि । यतो विजिगीषुरतः संशयमारोप्य पृच्छतीत्यर्थः ॥ ९६ ॥

तवात्मेत्युत्तरं दत्तं ममात्मेति त्रिधेक्ष्यते ।
देहो लिङ्गं च साक्षीति तेषु सर्वान्तरश्च कः ॥ ९७ ॥

आरोपितसंशयमेवाह । तवेत्यादि । त आत्मेत्युत्तरं ममोषस्तस्यदत्तं । तत्रात्मेति त्रिधा संदिह्यते । त्रिधेक्षणमेवाह । देह इत्यादि । तेषु सर्वान्तरत्वमाक्षिपति । तेष्वित्यादि । अत्र किं शब्दः क्षेपे ॥ ९७ ॥

सर्वान्तरत्वं दुःसाध्यमल्पयोर्देहलिङ्गयोः ।
सद्भावेऽन्यस्य किं मानमप्रमेयस्य साक्षिणः ॥ ९८ ॥

क्षेपमुपपादयति । सर्वान्तरत्वमिति ॥ ९८ ॥

एवं पृष्टः स्वानुभूतौ वादिनोऽनधिकारिताम् ।
मत्वाऽनुमानतः सत्तामात्मनः प्रत्यपादयत् ॥ ९९ ॥

" यः प्राणेन प्राणिति सत आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तरो य उदानेनोदानीति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तर" इति याज्ञवल्क्योत्तरवाक्यं व्याचष्टे। एवमित्यादिभिर्दशभिः पद्यैः । एवमित्यादि । उक्तप्रकारेण पृष्टो याज्ञवल्क्यो वादिनः स्वानुभवेऽनधिकारितां मत्वा तं विहायात्मसद्भावेऽनुमानं तं प्रत्युक्तवानित्यर्थः ॥ ९९ ॥

स्वप्रभे माननैष्फल्यादप्रमेयत्वमिष्यते ।
वादिभ्रान्तिनिवृत्त्यर्थं मानोक्तौ ह्रियतेऽत्र किम् ॥१००॥

स्वप्रकाशे प्रमाणवैफल्येऽपि वादिभ्रमनिवृत्तये तत्र तदुक्तौ न क्वापि हानिरित्याह । स्वप्रभ इति ॥ १०० ॥

प्राणादिकरणैश्चेष्टा कर्तृपूर्वा क्रियात्वतः ।
छिदिक्रियावत्कर्तृत्वं न युक्तं देहलिङ्गयोः ॥ १ ॥

अनुमानमुपन्यस्यति । प्राणादीति । प्राणादिकरणिका चेष्टा पक्षः कर्तृजन्यत्वं साध्यं क्रियात्वं हेतुः छिदिक्रियादृष्टान्त इतिस्पष्टं । देहेन्द्रियादिसङ्घातस्य तत्कर्तृत्वमाशङ्क्य निषेधति । कर्तृत्वं नेति ॥ १ ॥

करणप्रेरकः कर्त्ता करणैः प्रेर्यते वपुः ।
लिङ्गन्तु करणात्मत्वान्नैव कर्तृत्वमर्हति ॥ २ ॥

तत्कर्तृत्वनिषेधेऽनुमानप्रयोगमुपन्यस्यति । करणेति । करणस्य लिङ्गादेः प्रेरकःकर्ता भवति । करणैः शरीरं प्रेर्यते । इति पूर्वार्धार्थः । लिङ्गं न कर्तृभवितुमर्हति करणत्वात् । कुठारादिवदित्यनुमानमाहोत्तरार्द्धेन लिङ्गमित्यादिना ॥ २ ॥

मुखसंचारिणा जाग्रद्यः प्राणेनानितीक्षिता ।
सर्वप्रत्यक्तमः सोऽयमात्मा सर्वान्तरावधिः ॥ ३ ॥

" यः प्राणेन प्राणिति सत आत्मा सर्वान्तर " इत्येतद्व्याचष्टे । मुखेति प्राणितीत्यस्य प्राणचेष्टां करोतीत्यर्थः ।

सुप्तेऽस्मिन्करणग्रामे .योऽसुप्तोऽलुप्तदृष्टिकः ।
अथ सर्वान्नामरूपान्पश्यन्प्राणिति वायुना ॥ ४ ॥

प्राणेनानितीक्षितेत्त्युक्तमर्थं विशदयति । सुप्त इति । अथेति । स्वप्नावस्थायामित्यर्थः । अत्र अर्थान्. सवासनारूपानश्नन् प्राणिति वायुना इति वा पाठः ॥ ४ ॥

स्पष्टेषु बहुलिङ्गेषु मानाभावमचूचुदः ।
इत्युपालब्धये लिङ्गान्यपानादीन्युदाहरत् ॥ ५ ॥

योऽपानेत्यादिपर्यायात्रिकस्योषस्तोपालम्भं प्रयोजनमाह । स्पष्टेनेति ॥५॥

एकादशेन्द्रियोत्पन्नचेष्टानामुपलक्षणम् ।
प्राणाद्युदाहृतिस्तेन लिङ्गानां बहुता स्फुटा ॥ ६ ॥

एकादशेन्द्रियोत्पन्नचेष्टाः पक्षीकृत्यात्मासाध्य इत्याह । एकेति ॥ ६ ॥

प्राणादिकार्यकरणैः स्वतोऽसंहत एकलः ।
अकुर्वन् कुरुते चेष्टामयस्कान्तो मणिर्यथा ॥ ७ ॥

अयस्कान्तवत् सन्निधानेनैवायं तत्तच्चेष्टां कुरुते न नैजेन व्यापारे-
त्याह । प्राणादीति ॥ ७ ॥

रथादौ नियता चेष्टा चेतनेनानधिष्ठिते ।
न दृष्टा चेतनस्तेन प्राणादीनां प्रवर्तकः ॥ ८ ॥

प्राणादिचेष्टाकर्तुर्जडत्वं वारयति । रथादाविति । अयमत्र प्रयोगः ।
प्राणादिक्रियाचेतनजन्यानियतक्रियात्वाद्रथादिक्रियावदिति ॥ ८ ॥

ससूत्रदारुयन्त्रेण सदृशं लिङ्गवद्वपुः ।
यः प्रेरयत्यसावात्मेत्युक्तेऽन्योऽपजहास तम् ॥ ९ ॥
यथा गां दर्शयेत्युक्ते लिङ्गं मूढो वदेत्तथा ।
आपरोक्ष्यमनुक्त्वा त्वं लिङ्गेनावेदयस्यहो ॥ १० ॥

"सहोवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्य-
पदिष्टं भवती"ति याज्ञवल्क्यं प्रत्युषस्तोपालम्भवाक्यं व्याचष्टे पद्यद्विकेन ससूत्रे-
त्यादिना । लिङ्गं सूत्रस्थानीयं स्थूलशरीरं यन्त्रस्थानीयम् ॥ ९ ॥ १० ॥

लिङ्गं वाच्यं परोक्षेऽर्थे न त्वात्मनि परोक्षता।
इति मत्वाऽऽहैवकारं परोक्षस्य निवर्तकम् ॥ ११ ॥

उपहासपरं वचनं व्याख्याय "यदेवसाक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तंमेव्याचक्ष्वे"ति प्रश्नवाक्यं व्याचष्टे लिङ्गमिति। आहेति। अस्योषस्त इतिशेषः। एवकार एवशब्दः ॥ ११ ॥

मुख्यापरोक्षमुक्तं त इति दर्शयितुं पुनः।
प्रत्यग्दृष्टिपरं वाक्यमुत्तरत्वेन वक्त्यसौ ॥ १२ ॥

"एष त आत्मा सर्वान्तर" इति याज्ञवल्क्यस्योत्तरवचनं विवृणेति। मुख्येति। असौ याज्ञवक्यः ॥ १२ ॥

विद्वद्भाषामबुद्ध्वाऽन्यः स्वरूपादिष्विवात्मनि।
अक्षजन्यापरोक्षत्वं मत्वाऽपृच्छत्पुरेव तम् ॥ १३ ॥

"कतमो याज्ञवल्क्य सर्वान्तर" इत्युषस्त प्रश्नं व्याचष्टे। विद्वदिति। विदुषो याज्ञवल्क्यस्येत्यर्थः। अन्य इति—उषस्त इत्यर्थः। स्वरूपादिष्विति। स्वं घटादितद्रूपादिष्वित्यर्थः। यद्वा स्वं घटादि च रूपं च ते आदी येषां ते तथा तेषु घटादिषु तद्रूपादिषु चेत्यर्थः। तं याज्ञवल्क्यम् ॥ १३ ॥

दृष्टश्रुतमतज्ञातेष्वेषु सर्वान्तरस्तु कः।
दृष्ट्याद्यगोचरः प्रत्यङ्ङिति प्रश्नमपाकरोत् ॥ १४ ॥
वेद्मीति यद्बलाद्वक्ति न वेद्मीति च यद्बलात्।
योगिनोऽनुभवन्त्येतमगोचरतयैव हि ॥ १५ ॥
उक्तवर्त्मातिरेकेण नात्मवस्तु घटादिवत्।
शक्यते प्रतिनिर्देष्टुं प्रमाणाऽगोचरत्वतः ॥ १६ ॥

"न दृष्टेर्द्रष्टारं पश्ये र्नश्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञाते र्विज्ञातारं विजानीया एषत आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम"इत्येतद्व्याचष्टे। दृष्टेत्यादिभिस्त्रिभिर्विंशत्याद्यैः। दृष्टेत्यादिपादत्रयं प्रश्नाभिलापकम् ॥ १४ ॥ १६ ॥

द्रष्टृदर्शनदृश्यानां साक्षिणः स्वप्रभस्य तत् ।
प्रमाणागोचरत्वं तु वस्तुस्वाभाव्यतो भवेत् ॥ १७ ॥

प्रमाणागोचरत्वत इत्युक्तमर्थं वस्तुस्वाभाव्येन साधयति द्रष्टृति ॥ १७ ॥

दृष्टेर्न पश्येद्द्रष्टारमिति प्रत्युत्तरं वचः ।
वक्त्यगोचरतामेतद्वाक्यं विव्रियते स्फुटम् ॥ १८ ॥

उक्तमुत्तरवाक्यं व्याख्यातुं प्रतिजानीते । दृष्टेरिति ॥ १८ ॥

चक्षुर्जन्यमनोवृत्तिश्चिद्युक्ता रूपभासिका ।
दृष्टिरित्युच्यते द्रष्टा दृष्टेःकर्तेति लौकिकैः ॥ १९ ॥

दृष्टिपदार्थमाह । चक्षुरिति । द्रष्टृपदार्थमाह । दृष्टेः कर्तेति । लौकिकैः दृष्टेः कर्ताद्रष्टेत्युच्यते । वस्तुतस्तु दृष्टिपदार्थो नित्यादृष्टिः साक्षिरूपेति भावः ॥१९॥

अतो दृष्टिद्वयं वाक्ये भाति षष्ठ्यन्तशब्दतः ।
एका दृष्टिस्तृजन्तेन धातुनाऽन्येति तद्द्वयम् ॥ १२० ॥

अत इत्यादि षष्ठ्यन्तदृष्टिशब्दद्वितीयान्तद्रष्टृशब्दयोर्वाक्ये सत्त्वाद्दृष्टिद्वयं भाति कथमिति चेच्छृणु षष्ठ्यन्तदृष्टिशब्दादेका दृशिधातुनातृजन्तद्रष्टृशब्दाद् द्वितीयातद्धातुनेत्याह । अत इति ॥ १२० ॥

प्रमातुर्ज्ञायते वृत्तिश्चक्षुषा रूपरञ्जिता ।
द्रष्टव्यं तु तया रूपं न साक्षी दृश्यते तया ॥ २१ ॥

चक्षुर्जन्या रूपाद्याकारा प्रमातृसम्बन्धिनीवृत्तिः साक्षिभास्या भवति जडत्वात् । साक्षीद्धया तया रूपादि भास्यं भवति नतुपराधीनप्रकाशः साक्षीत्याह प्रमातुरिति ॥ १२१ ॥

दृष्टेर्द्रष्टारमात्मानं दृष्ट्या पश्येन्न दृश्यया ।
इतिवाक्यं मुनिर्वक्ति वर्णितन्यायगर्भितम् ॥ २२ ॥

दृष्टिरात्मावभासिका न भवति दृश्यत्वाद्घटादिवदिति न्यायगर्भितत्वं "न दृष्टेर्द्रष्टारं पश्ये"दिति वाक्यास्याह । दृष्टेरिति । मुनिर्याज्ञवल्क्यः । वर्णितेति । उक्त वर्णितन्यायो गर्भे गर्भो वा कृतो यस्य वाक्यस्य तत्तथेत्यर्थः ॥ २२ ॥

येन चक्षुरिदं दृष्टं चक्षुषा यन्न पश्यति ।
ब्रह्म विद्धि तदेव त्वामीति श्रुत्यन्तरे स्फुटम् ॥ २३ ॥

एतमेवार्थं द्रढयितुमर्थतः केनश्रुतिं पठति । येनेति ॥ २३ ॥

श्रुतिः श्रोत्रजधीवृत्तिस्तस्याः श्रोताऽवभासकः ।
श्रुत्या शब्दावगाहिन्या श्रोतारं शृणुयान्न तम् ॥ २४ ॥

उक्तरीत्या न श्रुतेरिति पर्यायं विवृणोति । श्रुतिरिति ॥ २४ ॥

ऊहापोहात्मधीवृत्तिर्मतिस्तस्याःप्रकाशकम् ।
अनूह्यमनपोह्यं तं न मन्वीथास्त्वमेतया ॥ २५ ॥

नमतेरितिपर्यायं विवृण्वन्मतिपदार्थमाह । ऊहेति । तस्यानिरुक्ताया वृत्तेः वमात्मानमेतया निरुक्तया वृत्त्या ॥ १२५ ॥

अस्पष्ट ऊह्य आत्मा तु विस्पष्टो भानरूपतः ।
अनपोह्योऽनपायित्वादात्मा नापैति कर्हिचित् ॥ २६ ॥

अनूह्यमित्युक्तमात्मनोऽतर्क्यत्वमुपपादयति । अस्पष्ट इत्यादि । अनपोह्यमित्युक्तमात्मनोऽत्यक्तव्यत्वमुपपादयति । अनपोह्य इति । तत्र हेतुरनपायित्वम् । तत्रहेतुरात्मत्वमिति बोध्यम् । आत्मेत्यादि । यत आत्माऽतो नापैतीति योजना यतोऽत इति पदद्वयाध्याहारेण कर्तव्या ॥ २६ ॥

निश्चयात्मकधीवृत्तिर्विज्ञातिस्तद्विभासकम् ।
असन्दिग्धं तया वृत्त्या न विज्ञातुं त्वमर्हसि ॥ २७ ॥

"न विज्ञाते र्विज्ञातार" मिति पर्यायं विज्ञातिपदार्थं कथयन् विवृणोति । निश्चयेति । यतस्तद्विभासकमसन्दिग्धं चातस्तया दृश्ययेति योजना ॥ २७ ॥

दृष्टश्रुतमतज्ञातेष्वित्थमात्मा न कश्चन ।
किं तर्ह्येष तवात्मेति प्रोक्तः सर्वान्तरः पुरा ॥ २८ ॥

"एष त आत्मा सर्वान्तर" इति व्याचिख्यासितवाक्यनिरास्यां शङ्कामाह । दृष्टेत्यादिदृष्टश्रुतमतेषु देहेन्द्रियादिषु यदि कश्चिदात्मा नास्ति तर्हि "एष त

आत्मा सर्वान्तर" इति वाक्येन पूर्वं त्वया कः प्रोक्त इति योजना ॥ २८ ॥

य: सर्वं विषयी कुर्वन् विषयी क्रियते नहि ।
किन्तु भाति स्वयं सोऽयं सर्वान्तर इतीरितः ॥ २९ ॥

उक्तवाक्यतात्पर्यं दर्शयन् शङ्कां निरस्यति । य इति । भातिस्वयमिति। अपराधीन प्रकाश इत्यर्थः ॥ २९ ॥

सर्वान्तरत्वं सार्वात्म्यमन्यस्मिन्सति तत्कुतः ।
न चेदन्यत्तदा सर्वशब्दार्थो नेति शङ्किते ॥ २९ ॥

—"अतोन्यदार्त" मिति व्याख्यातुमारभते । सर्वान्तरत्वमिति । तत्सार्वात्म्यरूपं सर्वान्तरत्वं कुत इति अन्यसद्भावे कुतोऽपि हेतोस्तन्न सम्भवतीति भावः । नेति । अस्य सम्भवतीति शेषः ॥ ३० ॥

अतोऽन्यदार्तमित्याह दोषद्वयानिवृत्तये ।
आर्तं मायामयं तस्य तत्त्वज्ञानेन पीडनात् ॥ ३१ ॥

उक्तदोषद्वयनिवृत्तिपरत्वेन तद्वाक्यं व्यचष्टे । आर्तमित्यादि ॥ ३१ ॥

सर्पादीनां कल्पितानां रज्जुरात्मा यथा तथा ।
मायामयस्य सर्वस्य चिद्वस्त्वात्मेति सुस्थितम् ॥ ३२ ॥

दृष्टान्तेन सार्वात्म्यरूपं सर्वान्तरत्वमात्मनो विशदयति। सर्पादीनामिति॥३२॥

पञ्चमब्राह्मणे पूर्वमुक्तस्य प्रत्यगात्मनः ।
ब्रह्मत्वसाधनं बोधो मुक्तलक्ष्म च वर्ण्यते ॥ ३३ ॥

"अथ ह कहोलः कौषीतकेयः पप्रच्छे" त्यादि "उपरराम" त्यन्तं कहोलब्राह्मणं व्याचिख्यासुस्तद्विषयं दर्शयति । पञ्चमेति ॥ ३२ ॥

उषस्तपृष्टादन्यत्वं निवर्तयितुमात्मनः ।
यदेव साक्षादित्युक्तावेवकारः प्रयुज्यते ॥ ३४ ॥

"यदेवसाक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे" तिवा

त्ववचनमुषस्तपृष्टादात्मनोऽन्यात्मपरंनेति दर्शयति । उषस्तेति । इत्युक्ताविति-इति वाक्य इत्यर्थः ॥ ३४ ॥

उपदेशस्य विषयस्त्वमर्थः शोधितः पुरा ।
न ब्रह्मत्वं सम्यगुक्तमिति पृच्छति तत्पुनः ॥ ३५ ॥

पुनरुक्तिमाशङ्क्य पूर्वत्रसम्यग्ब्रह्मत्वानुक्त्या परिहरति । उपदेशस्येति । तदिति । उषस्तपृष्ट वस्त्वित्यर्थः ॥ २५ ॥

अशनायादिरहितब्रह्मताया अभाषणे ।
न स्यात्सर्वान्तरत्वादि संसारिणि चिदात्मनि ॥ ३६ ॥

उषस्त पृष्टानुवादेन प्रवृत्तकहोलप्रश्नतात्पर्यमाह । अशनायेत्यादिपद्यद्वि-केन । इदं पद्यमुत्तरान्वयि ॥ ३६ ॥

इत्यभिप्रेत्य तेनोक्तं साक्षादित्यादिकं पुनः ।
अनूद्य सर्वं पप्रच्छ कहोलो ब्रह्मरूपताम् ॥ ३७ ॥

तेनेत्यादि—उषस्तेनोक्तं यत्साक्षादित्यादिकं सर्वमनूद्य कहोलो ब्रह्मरूप-तां पप्रच्छेत्यन्वयः ॥ ३७ ॥

त्वमर्थाच्छोधितान्नान्यद्ब्रह्मेत्येतद्विवक्षया ।
उक्तमेवोत्तरं भूय एष इत्याद्यवोचत् ॥ ३८ ॥

"एष त आत्मा सर्वान्तर" इत्युत्तरवचनं व्याचष्टे । त्वमिति । उक्तमि-त्यादि । एषत आत्मेत्याद्युक्तमेवोत्तरमवोचादित्यन्वयः ॥ ३८ ॥

क्षुत्पिपासे शोकमोहौ जरामृत्यू इतीदृशैः ।
त्रिभिर्युग्मैर्विशिष्टानां मध्येऽसौ कतमो वद ॥ ३९ ॥

"कतमो याज्ञवल्क्य सर्वान्तर" इति कहोलप्रश्नं व्याचष्टे । क्षुदित्यादि-पद्यद्विकेन ॥ ३९ ॥

यद्यन्यतम एतेषां तस्य न ब्रह्मता तदा ।
एतेष्वनन्तर्भूतस्तु न कोऽप्यात्मा जनैर्मतः ॥ १४० ॥

उक्तं प्रश्नं विशदयति । यदीति य इत्यध्याहार्यम् ॥ ४० ॥

विद्वज्जनानुभूत्यैष क्षुधादेरवभासकः ।
प्रसिद्ध इत्यभिप्रेत्य ब्रह्मत्वेन तमुक्तवान् ॥ ४१ ॥
अत्येति योऽशनायादीन्विचारेण निरूपणे ।
क्षुधादि-साक्षी तस्यास्य ब्रह्मत्वं केन वार्यते ॥ ४२ ॥

"योऽशनायापिपासे शोकं मोहं जरां मृत्यु"मित्येतद्विद्वदित्यादिभिः द्वाभ्यां पद्यैर्व्याचक्षाण उत्तरयति । विद्वदित्यादि । तमात्मानम् ॥४१॥४२॥

नन्वेक आत्मा मूढानां विदुषां चेति ते मतम् ।
उक्तोर्मिषट्कातीतत्वं तद्वत्त्वं चास्य तत्कथम् ॥ ४३ ॥

शङ्कते—नन्विति । ते तव याज्ञवल्क्यस्य तद्वत्त्वम् उक्तोर्मिषट्कवत्त्वम् । अस्येति । विदुषां मूढानाञ्चैकत्वेन तवाभिमतस्यात्मन इत्यर्थः । तत्कथमिति एकस्मिन्नुक्तविरुद्धधर्मवत्त्वं न सम्भवतीति भावः ॥ ४३ ॥

अविचारविचाराभ्यां यथा सर्पत्वरज्जुते ।
तथात्मन्यपि संसारभावाभावावितीक्षताम् ॥ ४४ ॥

अविद्यावस्थायामुक्तधर्मवत्त्वं विद्यावस्थायां तदभाव इति समाधत्ते । अविचारेति ॥ ४४ ॥

क्षुत्पिपासे प्राणधर्मौ शोकमोहौ तु मानसौ ।
जरामृत्यू देहधर्मावात्मधर्मो न कश्चन ॥ ४५ ॥

उक्तोर्मिषट्कस्य प्राणादिधर्मत्वमात्मनि भ्रान्त्या व्योम्नि नैल्यवत्कल्पितत्वञ्चाह । क्षुदित्यादिपद्यचतुष्केण ॥ ४५ ॥

प्राणसञ्चारबाहुल्याद्गमनादिश्रमे सति ।
क्षुत्पिपासाजनिस्तेन प्राणधर्मत्वमेतयोः ॥ ४६ ॥

क्षुत्पिपासयोः प्राणधर्मत्वमुपपादयति । प्राणेति ॥ ४६ ॥

इष्टस्य वस्तुनोऽसिद्धौ चेतसो याऽनवस्थितिः ।
स शोको मनसो धर्मो मोहश्च विषयभ्रमः ॥ ४७ ॥

मनोधर्मयोः शोकमोहयोः स्वरूपमाह । इष्टस्येति । मोह इत्यादि—विषयभ्रान्तिरूपो मोहश्च मनसो धर्म इति योजना ॥ ४७ ॥

जरा देहस्य शैथिल्यं मृत्युः प्राणवियुक्तता ।
ते सर्वेऽप्यात्मनि भ्रान्त्या कल्पिता व्योम्नि नैल्यवत् ॥ ४८ ॥

स्थूलदेहधर्मयोर्मृत्युजरयोः पूर्वार्द्धेन स्वरूपमाह । जरेति ॥ ४८ ॥

यः स्वकारणसंसर्गः क्षुधादेः प्रलये मतः ।
अनात्यन्तिकरूपत्वात्सोऽत्ययोऽत्र न गृह्यते ॥ ४९ ॥

अत्येति क्रियापदं व्याचष्टे । य इति । प्रलयदशायां मायायां यः क्षुदादेरनात्यन्तिकः प्रलयः सोऽत्रात्येति पदेन न ग्राह्य इत्यर्थः ॥ ४९ ॥

तत्कारणनिषेधो यः स्वमहिम्न्येव वस्तुनः ।
तमत्ययं मोक्षविधौ तद्विद्वांसः प्रचक्षते ॥ ५० ॥

अत्रत्यात्येतिपदस्यात्यन्तिको लयोऽर्थ इत्याह । तदित्यादि । तेषां क्षुत्पिपासेत्यादिद्वन्द्वत्रिकाणां यानि कारणानि मायासूत्रविराजस्तेषां य आत्मवस्तुनः स्वरूपभूते महिम्नि निषेधस्तं निषेधमत्ययमत्येतिपदार्थत्वेन मोक्षप्रक्रियायां तद्विद्वांसो मोक्षं जानन्तः प्रचक्षते कथयन्तीत्यर्थः ॥ ५० ॥

प्राणहेतुस्तमः प्राणधर्माभ्यामुपलक्ष्यते ।
सूत्रात्मा शोकमोहाभ्यां जरया मृत्युना विराट् ॥ ५१ ॥

तत्कारणनिषेधमित्यत्रोक्ततत्कारणपदार्थमाह । प्राणेत्यादि । प्राणधर्माभ्यां क्षुत्पिपासाभ्यां प्राणहेतुरविद्योपलक्ष्यते । मनोधर्माभ्यां शोकमोहाभ्यां सूत्रात्मा । देहधर्माभ्यां मृत्युजराभ्यां विराडित्यर्थः ॥ ५१ ॥

तमः सूत्रं विराजं च योऽत्येत्यात्मा स्वभावतः ।
असङ्गस्तत्परं ब्रह्म साक्षादित्यादिलक्षणम् ॥ ५२ ॥

अत्येतिपदार्थं विशदयति । तम इति । स्वभावत इत्यस्यासङ्ग इत्यु-रत्रान्वयः ॥ ५२ ॥

यथा विशुद्धमाकाशं सति वाऽसति वा मले ।
नीहारादौ तथैवात्मा कार्यकारणवस्तुनि ॥ ५३ ॥

व्योम्नि नैवल्यवदित्युक्तं दृष्टान्तं विशदय्य दार्ष्टान्तिके योजयति । यथेति ॥ ५३ ॥

परमात्मस्वभावोऽयं कहोलाय प्रपञ्चितः ।
तद्बोधसाधनं त्याग एतमित्यादिनोच्यते ॥ ५४ ॥

"एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथभिक्षाचर्य्यं चरन्ती" त्येतद्याज्ञवल्क्यवचनं वृत्तं कथयन् व्याचष्टे । परमात्मेत्यादिपद्यसप्तदशकेन । तदिति आत्मेत्यर्थः । त्यागः सन्न्यासः॥५४॥

उत्पन्नसम्यग्ज्ञानस्य संन्यासो लक्षणं यतः ।
साधनं च तदुत्पत्तौ संन्यासोऽतोऽत्र गम्यताम् ॥ ५५ ॥

यत उत्पन्नात्मसाक्षात्कारस्य सन्न्यासो लक्षणमनुत्पन्नात्मसाक्षात्कारस्यात्मसाक्षात्कारहेतुरित्यतोऽत्र स ज्ञेय इत्याह । उत्पन्नेति ॥ ५५ ॥

ब्रह्मात्मनोर्यदेकत्वं ब्राह्मणद्वयनिश्चितम् ।
एतंतमितिशब्दाभ्यां तदैकात्म्यमनूद्यते ॥ ५६ ॥

एतंतमितिशब्दद्वयं व्याचष्टे । ब्रह्मेति ॥ ५६ ॥

अत्येति योऽशनायादीनेतं सर्वान्तरं पुरा ।
उदितं तं विदित्वाथ व्युत्तिष्ठत्येषणात्रयात् ॥ ५७ ॥

पदार्थमुक्त्वा वाक्यार्थमाह । अत्येति ॥ ५७ ॥

ब्रह्मप्रश्नेन पृष्टे ते तद्बोधफलसाधने ।
इतिमत्वोत्तरत्वेन व्युत्थानद्वयमुच्यते ॥ ५८ ॥

ननु नापृष्टं कस्यचिद्ब्रूयादिति न्यायविरुद्धं विद्वद्विविदिषासंन्यासद्वय-

वचनमित्याशङ्क्य ब्रह्मप्रश्नेन तद्द्वयस्य पृष्टत्वान्नैवमित्याह । ब्रह्मेति । तदित्यादि तस्य ब्रह्मणो यो बोधस्तत्फलात्मकमेकं व्युत्थानं तद्बोधसाधनं चापरमित्यर्थः॥५८॥

पूर्वं विदित्वा पश्चात्तु व्युत्थायेत्यन्वयाच्छ्रुतात्।
विद्वत्संन्यास आभाति ब्रह्मविद्याफलात्मकः ॥ ५९ ॥

यथा श्रुतयोजनया विद्याफलात्मको ब्रह्मविद्यायाः फलं कार्यमात्मास्वरूपंयस्य स विद्वत्संन्यासः श्रुत्यर्थ इत्याह । पूर्वमिति ॥ ५९ ॥

व्युत्थायाथ विदित्वेति व्यत्ययेनार्थिकान्वयात्।
सिद्धो विविदिषात्यागः स्पष्टः श्रुत्यन्तरेष्वसौ ॥ ६० ॥

विविदिषासंन्यासस्य श्रुत्यन्तरे श्रुतत्वाद्विपरीतयोजनया श्रुतेस्तत्रापि तात्पर्यमाह । व्युत्थायेति ॥ ६० ॥

स्वात्मलोकं समिच्छन्तः प्रव्रजन्तीति वक्ष्यति ।
त्यागेनैकेऽमृतत्वं तु प्राप्ता इत्यपरा श्रुतिः ॥ ६१ ॥

श्रुत्यन्तरेष्वसावित्युक्तं तत्र श्रुत्यन्तरद्वयमर्थतः पठति । स्वात्मेति ॥६१॥

ब्राह्मणग्रहणं श्रुत्वा विप्राणामेव भाष्यकृत्।
संन्यासेऽधिकृतिं प्राह चतुर्थाश्रमरूप्यसौ ॥ ६२ ॥

ब्राह्मणानामेवाधिकारो व्युत्थानेऽतो ब्राह्मणग्रहणमिति भाष्यस्य विविदिषासंन्यासे तात्पर्यमाह । ब्राह्मणेति । चतुर्थेति । चतुर्थाश्रमरूपोऽसौ विविदिषासंन्यासो विद्याङ्गं विद्यासाधनमित्युत्तरपद्यगतेनान्वयः ॥ ६२ ॥

विद्याङ्गं तत्फलात्मानं गार्गीविदुरयोरपि ।
स्त्रीशूद्रयोर्भाष्यकारः संन्यासमनुमन्यते ॥ ६३ ॥

तदित्यादि । विद्यायाः फलभूतं विद्वत्संन्यासमनाश्रमलक्षणं भाष्यकृत्स्त्रीशूद्रयोरपि गार्गीविदुरयोरनुमन्यत इत्यर्थः । तदनुमतिश्चाप्रतिषिद्धश्चानुमतं भवतीति न्यायसिद्धा ॥ ६३ ॥

पुत्रैषणेति पुत्रार्थं दारस्वीकारवाञ्छनम्।
कर्मणां साधने वित्ते तृष्णा वित्तैषणा मता ॥ ६४ ॥

पुत्रैषणा वित्तैषणा पदद्वयार्थमाह । पुत्रैषेति ॥ ६४ ॥

लोकैषणेति देवादिलोकार्थोपासना श्रुता ।
न कश्चिदन्यः संसार उक्तादस्त्येषणात्रयात् ॥ ६५ ॥

लोकैषणापदार्थं कथयन्नुक्ता एषणा एव संसार इत्याह ॥ ६५ ॥

मनुष्यलोकः पुत्रेण पितृलोकस्तु कर्मणा ।
विद्यया देवलोकश्चेत्यब्रवीत्संग्रहश्रुतिः ॥ ६६ ॥

न कश्चिदन्यः संसार इत्युक्तमर्थं द्रढयितुं सूत्रभूतां श्रुतिमर्थतः पठ
मनुष्येति ॥ ६६ ॥

न्याय्यां वृत्तिं समुल्लङ्घ्य तद्विरुद्धतया स्थितिः ।
व्युत्थानमुदितं राज्ञः सामन्तो व्युत्थितो यथा ॥ ६७

व्युत्थानपदार्थं सदृष्टान्तमाह । न्याय्यामिति । राज्ञः सार्वभौमस्य
सामन्तो माण्डलिकः ॥ ६७ ॥

भिक्षया लक्ष्यते चर्या परिग्रहविवर्जिता ।
किं भोग्यं परिगृह्णीयात्सर्वभोग्येषु दोषकृत् ॥ ६८ ॥

लोकत्रयार्थैषणाभ्यो व्युत्थानं चापरिग्रहः ।
द्वयं बोधमहिम्नैव विदुषां नतु यत्नतः ६९ ॥

लक्ष्यं भिक्षेरर्थमाह । भिक्षयेति ॥ ६८॥ ६९ ॥

आनन्दैकस्वभावं स्वमात्मानं पश्यतः कुतः ।
कामः परिग्रहो वा स्याद्योऽकाम इति वक्ष्यति ॥ ७० ॥

उक्तमर्थं विशदयति । आनन्दैकेति ॥ ७० ॥

एषणात्रय एतस्मिन्समाना बन्धहेतुता ।
इतिमत्वैकतां तासां त्याज्यैवेत्यब्रवीच्छ्रुतिः ॥ ७१ ॥

"या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवत" इत्येतद्व्याचष्टे । एषणेति । एतस्मिन्साध्यसाधनैषणारूपे एषणात्रये बन्धकारणता तुल्येत्यतः सकला त्याज्यैवेति मत्वाऽभिप्रेत्य श्रुतिस्तासामेकतामब्रवीदित्यन्वयः ॥ ७१ ॥

कर्मण्येवाधिकारस्ते मा फलेष्विति शास्त्रतः।
एषणात्वात् फलं त्याज्यं न तु कर्मादिसाधनम् ॥ ७२ ॥
इति भ्रमं व्युदसितुं प्राब्रवीत्साध्यसाधने।
उभे अप्येषणे एवेत्यतस्त्यागस्तयोर्द्वयोः ॥ ७३ ॥

फलसाधनयोरेकतरवचनेनैवोभयैषणानिरासे सिद्धे कर्मण्येवाधिकारस्ते इत्यादि शास्त्रात्फलस्यैवैषणत्वाच्च फलमेव त्याज्यं न तु तत्साधनं कर्मोपासनादीति भ्रमं निरसितुमुभयवचनमित्याह । कर्मण्येवेत्यादिपद्यद्विकेन । कर्मादीति । कर्मविहितं नित्यनैमित्तिकादि आदिना दैववित्तमुपासनादिग्राह्यम् ॥ ७२ ॥ ७३ ॥

अविशुद्धधियः कर्मण्यधिकारेऽपि शुद्धधीः।
सत्यां विविदिषोत्पत्तौ तदर्थं कर्म सन्त्यजेत् ॥ ७४ ॥

कर्मण्येवाधिकारस्त इत्यादिशास्त्रं रागिविषयं न तु शुद्धधीविषयमित्याह । अविशुद्धेति । शुद्धधीरपि विविदिषा सत्त्वे एव कर्मसंन्यासं कुर्यान्नतु तदसत्त्व इत्याह । शुद्धधीरित्यादि । तदर्थमिति । ज्ञानफलकमित्यर्थः । अस्य कर्म संन्यासेऽन्वयो नतु कर्माणि । तथा च ज्ञानाय कर्माणि त्याज्यानीत्यर्थः । यद्वा तच्छब्देन विविदिषां परामृश्य कर्मण्येवान्वयः । विविदिषाफलानि कर्माणि त्याज्यानीति ॥ ७४ ॥

तस्माद्ब्रह्मविदः पूर्वे फलसंन्यासमाप्नुवन्।
तस्माद्विविदिषुः कुर्यात्पाण्डित्यं फलसिद्धये ॥ ७५ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मण" इत्येतद्व्याचष्टे । तस्मादित्यादिपद्यसप्तकेन । तस्मादित्यादि । तस्मादात्मवेदनात् फलसंन्यासो विद्याफलभूतोऽनाश्रमरूपो विद्वत्संन्यासः । यस्तु न ब्रह्मवित्किन्तु तद्विविदिषुः स तस्मात्कर्मसंन्या-

सात्फलसिद्धये ब्रह्मसाक्षात्कारसिद्धये पाण्डित्यं कुर्य्यादित्याह । तस्माद्विविदुरित्यादि ॥ ७५ ॥

पाण्डित्यबाल्यमौनानि श्रवणादीनि तैरयम् ।
भवति ब्राह्मणस्तत्र ब्राह्मण्यं ब्रह्मरूपता ॥ ७६ ॥

पाण्डित्यं श्रवणं बाल्यं मननं मौनं निदिध्यासनं तैर्युक्तो ब्राह्मणो ब्रह्मस्वरूपो भवतीत्याह । पाण्डित्येति ॥ ७६ ॥

पण्डेति बुद्धेर्नामैतत्सा जाता यस्य नामतः ।
स पण्डितस्तस्य कर्म पाण्डित्यं श्रवणं तु तत् ॥ ७७ ॥

पण्डाबुद्धिस्तद्वान्नामतः पण्डितस्तस्य कर्म पाण्डित्यं तदेव श्रोतव्य इत्यादौ श्रवणमित्याह । पण्डेतीति ॥ ७७ ॥

आचार्याच्चागमाच्छ्रुत्वा निश्शेषं वेदनं ततः ।
बालभावेन तिष्ठासेत्युक्त्या मननतत्परः ॥ ७८ ॥

"पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे" दित्येतद्व्याचष्टे । आचार्यादिति । तत इति श्रवणजनितवेदनादित्यर्थः । अस्य बालभावेनेत्यत्रान्वयः । मननतत्पर इति अस्य भवेदिति शेषः ॥ ७८ ॥

श्रवणं शास्त्रतात्पर्यं निश्चयो मननं पुनः ।
अर्थासम्भावनोच्छित्तियुक्तीनामनुचिन्तनम् ॥ ७९ ॥

श्रवणमननयोः स्वरूपं मननस्यार्थासम्भावनोच्छेदरूपं फलञ्चाह । श्रवणमिति । अर्थासम्भावनेच्छित्तियुक्तीनामिति । अर्थासम्भावनाया उच्छित्तिरुच्छेदो यामिस्तासां युक्तीनामित्यर्थः ॥ ७९ ॥

पाण्डित्येन विदित्वाऽथ च्छित्त्वा बाल्येन संशयम् ।
मुनिर्ध्यानसमाधिभ्यां भवेद्धीवृत्तिशान्तये ॥ ८० ॥

श्रौतमुनिपदार्थं श्रवणादीनां क्रमञ्चाह । पाण्डित्येनेति । बाल्यस्यार्थासम्भावनोच्छेदवत्तत्संशयोच्छेदोऽपि फलमित्याह । च्छित्त्वेत्यादि । मुनित्वं ध्यानसमाधी तयोः फलं धीवृत्तिशान्तिरित्याह । मुनिरित्यादि ॥ ८० ॥

प्रशान्तवृत्तिके चित्ते परमानन्ददीपके ।
कृतकृत्यो ब्रह्मभावं गतो ब्राह्मण उच्यते ॥ ८१ ॥

"निर्विद्याथ ब्राह्मण" इत्यत्रत्य ब्राह्मणपदार्थमाह । प्रशान्तेति ॥ ८१ ॥

केनेति लक्षणप्रश्नो येनेदृक्तेन लक्ष्यताम् ।
इत्युत्तरवचो योज्यं तस्यार्थः प्रविविच्यते ॥ ८२ ॥

"स ब्राह्मणः केनस्या" दितिवचनं जीवन्मुक्तलक्षणप्रश्नपरत्वेन व्याख्याय "येन स्याचेनेदृश एवे" त्युत्तरवचनं संयोज्य तस्यार्थं प्रविवेक्तुं प्रतिजानीते । केनेतीति ॥ ८२ ॥

गीतायां कुत्रचित्प्रोक्तं स्थितप्रज्ञस्य लक्षणम् ।
अन्यत्र विष्णुभक्तस्य गुणातीतस्य च क्वचित् ॥ ८३ ॥

उक्तवाक्यार्थं यथाप्रतिज्ञं प्रविविनक्ति । गीतायामित्यादिपद्यत्रिकेण । गीतायामित्यादि । तत्र क्वचित्प्रदेशे स्थितप्रज्ञस्य क्वचित्प्रदेशे विष्णुभक्तस्य क्वचित्प्रदेशे गुणातीतस्य च लक्षणं प्रोक्तमित्यर्थः ॥ ८३ ॥

येन चिह्नेन तत्रायमिदृगेव निरेषणः ।
उपलक्षयितुं शक्यस्तदेवाऽस्त्यस्य लक्षणम् ॥ ८४ ॥

येनेत्यादि । तत्र गीतायां येन चिह्नेनायं जीवन्मुक्त इदृगेवेत्यस्य व्याख्यानं निरेषण इति । निरेषण एव उपलक्षयितुं शक्यः तदेवास्य जीवन्मुक्तस्य लक्षणमित्यन्वयः ॥ ८४ ॥

ब्रह्म यादृक्तादृगेव भवेद्विद्वान्विबोधतः ।
बोधोऽतो लक्षणं तस्य बोधश्च स्वात्मसाक्षिकः ॥ ८५ ॥

ब्रह्मेत्यादि । यादृग्ब्रह्म तादृगेव बोधाद्विद्वान्भवतीत्यतो बोधस्तस्य जीवन्मुक्तस्य लक्षणं बोधस्तु स्वप्रकाशो न तु पराधीनप्रकाश इत्यर्थः ॥ ८५ ॥

अतोऽन्यदार्त्तमित्येष व्यतिरेकस्त्रिधोच्यते ।
प्रतीचो ब्रह्मतेहोक्ता भेद आर्तस्ततस्तयोः ८६ ॥

"अतोऽन्यदार्त" मित्येतद्वचनं व्याचष्टे। अत इति। व्यतिरेकोऽनात्मनः प्रत्यक् प्रतियोगिको भेदः त्रिधेत्युक्तं तत्र प्रथमप्रकारमाह। प्रतीच इति। तत्र प्रतीचो ब्रह्मत्वेनोक्तत्वात्तयोः प्रत्यग्ब्रह्मणोर्भेद आर्तः॥ ८६॥

निरेषणत्वं विद्याया हेतुरार्ता इहैषणाः।
विदुषो लक्षणं बोध आर्तन्तल्लक्षणान्तरम्॥ ८७॥

द्वितीयतृतीयौ प्रकारावाह। निरित्यादि। पूर्वार्द्धेन द्वितीयं प्रकारमभिधाय तृतीयं तमाह। विदुष इति। आर्तन्तल्लक्षणान्तरमिति। विदुषः स्वरूपभूताद्बोधादन्यल्लक्षणमार्तमित्यर्थः॥ ८७॥

षष्ठेऽस्मिन्ब्राह्मणे ब्रह्मकार्यं सर्वं विविच्यते।
सर्वान्तरत्वं सुज्ञेयं ब्रह्मणः सर्वनिर्णयात्॥ ८८॥

"अथ हैनं गार्गी वाचक्नवी प्रच्छपे" त्यादि "ततो ह गार्गी वाचक्नवी उपरराम" त्यन्तं वाचक्नवी ब्राह्मणं व्याचिख्यासुः सप्रयोजनं तद्विषयं दर्शयति। षष्ठ इति। ब्रह्मणः सर्वान्तरत्वं सर्वं निर्णयात्सुज्ञेयमित्युत्तरार्द्धे योजना सुज्ञानमिति पाठ्यः॥ ८८॥

यद्यत्कार्यं कारणेन व्याप्तमन्तर्बहिश्च तत्।
इति तर्केण पप्रच्छ कारणस्य परम्पराम्॥ ८९॥

"यदिदं सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नुखल्वाप ओताश्च प्रोताश्चेति। वायौ गार्गीति। कस्मिन्नुखलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नुखल्वन्तरिक्षलोका ओताश्च पोताश्चेति गन्धर्वलोकेषु गार्गीती" त्यादिकान् "कस्मिन्नु खलु प्रजापति लोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीती" त्यन्तान् पर्यायान् व्याचष्टे। यद्यदित्यदिपद्यनवकेन। कारणपरम्पराप्रश्ने हेतुं तर्कं पूर्वार्द्धेन यद्यदित्यादिनाह॥ ८९॥

पार्थिवं कठिनं सर्वमोतं प्रोतं द्रवे जले।
दधिपिण्ड इव क्षीरे जलं कुत्र तथा स्थितम्॥ ९०॥

प्रथमद्वितीयौ पर्यायौ व्याचष्टे। पार्थिवमित्यादिपद्यत्रिकेण॥ ९०॥

दीर्घतन्तुवदोतत्वं तिर्यक्तन्तोरिवेतरत् ।
यद्वान्तर्व्याप्तिरोतत्वं प्रोतत्वं तु बहिःस्थितिः ॥ ९१ ॥

ओतत्वप्रोतत्वे उभयथा निर्वक्ति । दीर्घेत्यादि ॥ ९१ ॥

जलस्य कारणं तेजस्तेजसो वायुराश्रयः ।
श्रुत्यन्तरादिदं ज्ञेयं वायोस्तु वियदाश्रयः ॥ ९२ ॥

श्रुत्यन्तरावष्टम्भेन जलस्य तेजसि तस्य च वायावोतप्रोतत्वे प्रदर्श्य वायो र्वियति ते दर्शयति । जलस्येति ॥ ९२ ॥

भूम्यादिवियदन्तानां भूतानामुत्तरोत्तरम् ।
सूक्ष्मताव्यापिते दृष्टे ताभ्यां कारणतेक्ष्यताम् ॥ ९३ ॥

भूम्यादि वियदन्तानां पूर्वस्य पूर्वस्य स्थूलत्वपरिच्छिन्नत्वाभ्यां कार्यत्वमुत्तरोत्तरस्य सूक्ष्मत्वव्यापित्वाभ्यां कारणत्वं द्रष्टव्यमित्याह । भूम्यादीति ॥९३॥

पञ्चभूतेभ्य उत्पन्ना अस्मद्देहादयोऽखिलाः ।
ब्रह्माण्डान्ता इमे देहा भोग्यत्वाल्लोकसंज्ञकाः ॥ ९४ ॥
यथैकस्मादिक्षुरसादुत्तरोत्तरपाकतः ।
गुडादीनि बहूनि स्युर्भूतेभ्योऽण्डादयस्तथा ॥ ९५ ॥

"अन्तरिक्षलोकेषु गार्गी" त्यादिपर्यायेषु प्रयुक्तलोकपदार्थं सदृष्टान्तमाह पञ्चेत्यादिद्विकेन ॥ ९४ ॥ ९५ ॥

नरगन्धर्वमार्तण्डचन्द्रनक्षत्रदेवताः ।
इन्द्रो विराट् तदण्डं चेत्येता भूतदशाः स्मृताः ॥ ९६ ॥

"कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गी"त्येव सर्वेषुपर्यायेषु आयोज्यम् । तथाहि । "अन्तरिक्षलोका गन्धर्वलोकेषु गन्धर्वलोकाआदित्यलोकेषु आदित्यलोकाश्चन्द्रलोकेषु चन्द्रलोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका इन्द्रलोकेषु इन्द्रलोकाः प्रजापतिलोकेषु प्रजापतिलोकाब्रह्मलोके"ष्विति । सुगमत्वादुक्तां योजनामुपेक्ष्यान्तरिक्षशब्देन नराकारेण परिणमनशीला गन्धर्वादिशब्दैस्तत्तदाकारैः परिणमनशीलाभूतावस्था आह्ना इत्याह । नरेति ॥ ९६ ॥

तत्र देहारम्भदशास्तत्तन्नाम्ना समीरिताः ।
स्थूलसूक्ष्मदशास्तासु कार्यकारणता क्रमात् ॥ ९७ ॥

तत्तन्नाम्नेति । नरगन्धर्वादिशब्देनेत्यर्थः । स्थूलेत्यादि । याः स्थूलसूक्ष्मदशास्तासु क्रमात् कार्यत्वं कारणत्वञ्च बोध्यमित्यर्थः ॥ ९७ ॥

पञ्चीकृतानां भूतानां सूक्ष्मताण्डे समाप्यते ।
एतावदेव तर्केण गम्यं नतु ततः परम् ॥ ९८ ॥

"कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति सहोवाच गार्गिमाति प्राक्षीर्मातेमूर्धाव्यपप्त" दित्यादिव्याचष्टे । पञ्चीत्यादिचतुष्केण । एतावदेवेति । अण्डपर्यन्तमेवेत्यर्थः । एवकारव्यावर्त्यमाह । नेत्यादि । ततोऽण्डात्परं समनन्तरपद्येन वक्ष्यमाणं सूत्रं न तर्केण गम्यं किन्त्वागमेनैवेत्यर्थः ॥ ८९ ॥

अण्डारम्भकभूतानामपञ्चीकृतभूतजम् ।
सूत्रं कारणमित्येतदागमेनैव गम्यते ॥ ९९ ॥

उक्तमेवार्थं प्रपञ्चयति । अण्डेति ॥ ९९ ॥

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
सूत्रान्तर्याम्यक्षराणि तार्किका नानुमन्वते ॥ २०० ॥

अतर्क्यपदार्थेषु तर्को न योजनीय इत्यत्र पौराणिकसम्मतिमाह । अचिन्त्या इति पुराणवचन युक्तिमदित्याह । सूत्रेत्यादि ॥ २०० ॥

तर्काभासो भवेत्तेषु हेतुदृष्टान्तवर्जनात् ।
अन्यथा प्रतिपत्त्याऽतो मूर्धपातं मुनिर्जगौ ॥ १ ॥

उक्तमर्थं विशयदयति । तर्केत्यादि । तेष्वचिन्त्येषु भावेषु तर्काभासो भवति तत्र हेतुरन्यथा प्रतिपत्त्येति । भ्रमज्ञानजनकत्वेनेत्यर्थः । तत्र हेतुः । हेत्विति । हेतुदृष्टान्तराहित्यादितितदर्थः ॥ १ ॥

सप्तमब्राह्मणे तर्कं सन्त्यज्यागमभागतः ।
ब्रह्माण्डकारणं सूत्रमन्तर्यामी च वर्ण्यते ॥ २ ॥

"अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाचे" त्युपक्रमम् "एषत आत्माऽन्तर्याम्यमृतोऽतोन्यदार्त" मित्यन्तं सप्तममुद्दालकब्राह्मणं सप्तमेत्यादिभिस्त्रयस्त्रिंशतापद्यैर्व्याचष्टे । तत्र तावत्सप्तमब्राह्मणविषयं दर्शयति । सप्तमेत्यादि॥२॥

सूत्रान्तर्यामिणौ ज्ञातौ गन्धर्वस्योपदेशतः ।
तर्कज्ञेति विवक्षित्वा कथां भुज्युवदुक्तवान् ॥ ३ ॥

आख्यायिकातात्पर्यमाह । सूत्रेति । भुज्युवदिति प्रथमान्ताद्वैच्छिकोवतिः । भुज्युरिवोद्दालकः कथां कथितवानित्यन्वयः ॥ ३ ॥

सूत्रबद्धं दारुयन्त्रं पुरुषो नर्तयेद्यथा ।
सूत्रबद्धं जगत्तद्वदन्तर्यामी नियच्छति ॥ ४ ॥

"यो वै तत्काप्यसूत्रं विद्यात्तञ्चान्तर्यामिणमितिसब्रह्मवित्सदेववित्स वेदवित्स भूत वित्स आत्मवित्स सर्वविदिती" त्येतद्व्याचष्टे । सूत्रेत्यादिद्विकेन । दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति । तद्वदित्यादि ॥ ४ ॥

सूत्रान्तर्यामिणौ सर्वजगत्यनुगतावतः ।
तौ विद्वानखिलं वेत्तीत्यतो ज्ञातव्यता तयोः ॥ ५ ॥

अतः सर्वजगदनुगतत्वात् इत्यतः स्वोपासकस्य निखिलज्ञानवत्त्वप्रयोजकत्वात् तयोरिति सूत्रान्तर्यामिणोरित्यर्थः ॥ ५ ॥

समष्टिव्यष्टिरूपेण भुज्युं प्रति य ईरितः ।
स एव वायुः सूत्रात्मा तेन सर्वं जगद्धृतम् ॥ ६ ॥

उद्दालकेन पृष्टयोः सूत्रान्तर्यामिणोर्मध्ये सूत्रं याज्ञवल्क्यो वर्णयति । "सहोवाच वायुर्वै गौतमतत्सूत्र" मित्यादिना "संदृब्धानि भवन्ती" त्यन्तेनेत्याह । समष्टीत्यादिपद्यपञ्चकेन ॥ ६ ॥

ब्रह्मादिस्तम्बपर्यन्तं प्राणिकर्मपुराकृतम् ।
बाह्यात्मना परिणतं वर्तते कारणात्मनि ॥ ७ ॥

तेन सर्वं जगद्धृतमित्युक्तमर्थं विशदयति । ब्रह्मेति—प्राणीत्यादिद्वितीयः पादः एकं पदं प्राणिकर्मभिः पुरा सृष्ट्यादौ कृतमुत्पादितं । बाह्यात्मना न तु सूत्र

तदान्तरात्मना परिणतं ब्रह्मादिस्तम्बपर्यन्तं करणात्मनि सूत्राख्ये वर्तते इत्यर्थः ॥ ७ ॥

मूर्तामूर्तब्रह्मणोक्तवासना एतमाश्रिताः ।
तदात्मकमिदं लिङ्गं यत्सप्तदशमुच्यते ॥ ८ ॥

उक्तकारणात्मानमभिनीय दर्शयति । मूर्तेति । एतमुक्तकारणात्मानम् । तदात्मकमिति । स कारणात्माऽऽत्मास्वरूपं यस्य स तथा तमित्यर्थः । सप्तदश-मिति । सप्तदशपरिमाणमस्येति विग्रहः ॥ ८ ॥

विष्टब्धो वायुना देह इत्येतन्मरणे सति ।
अवायोर्वपुषः कर्मायोग्यत्वादवसीयताम् ॥ ९ ॥

"तस्माद्वै गौतमपुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानी" त्येतद्व्याचष्टे । विष्टब्ध इति । अत्रेयं योजना । इति यतो मरणे सति एतद्विष्टम्भनमवसीयतामवसानगतत्वेनाभावप्रतियोगित्वेनानुज्ञातमतो ऽवायोर्वपुषोमृतशरीरस्य कर्मायोग्यत्वाच्च वायुना देहो विष्टब्धो विधृत इति । अत्रायं प्रयोगो जीवद्देहो वायुना विधृतः कर्मक्षमत्वाद्यन्नैवं तन्नैवं यथा मृतशरीरं न चायं तथा तस्मान्न तथेति ॥ ९ ॥

अपञ्चीकृतभूतानां कार्यं सूत्रमुदाहृतम् ।
अण्डारम्भकभूतानि प्रोतान्योतानि चात्रहि ॥ १० ॥

"वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्ति" इति निगमनस्थानीयं वाक्यं व्याचष्टे । अपञ्चीकृतेति । अत्रेति । अपञ्चीकृतभूतकार्यलक्षणे सूत्र इत्यर्थः ॥ १० ॥

सूत्रादप्यान्तरं तत्त्वमन्तर्याम्याख्यमुच्यते ।
कार्यकारणभावोऽयमस्मिन्नुक्ते समाप्यते ॥ ११ ॥

उद्दालकेन "याज्ञवल्क्यान्तर्यामिणं ब्रूही" ति पृष्टमन्तर्यामिणं "यः पृथिव्यां तिष्ठन्नि" त्यादिना "ऽतो ऽन्यदार्त" मित्यन्तेन वक्तियाज्ञवल्क्यस्तद्व्याचष्टे । सूत्रादित्यादिभिश्चतुर्विंशत्यापद्यैः । तत्र ताव "द्यः पृथिव्यामि" त्यादिपर्यायाणां तात्पर्य्यमाह । सूत्रादिति । "यः पृथिव्यामित्यादिभिः पर्यायैः सूत्रादप्यान्तरस्यान्तर्य्याम्याख्यस्य तत्त्वस्य कथने कार्यकारणभावजिज्ञासासमाप्तिः फलमित्यर्थः ॥ ११ ॥

भूमिष्ठोऽभ्यन्तरो भूमेर्भूम्यज्ञातश्च भूवपुः।
नियच्छति भुवं योऽन्तः स आत्माऽन्यस्य तेऽपि मे ॥१२॥

इत्थं सर्वपर्य्यायतात्पर्यार्थमभिधाय "यः पृथिव्यांतिष्ठन् पृथिव्या अन्तरोयंपृथिवी नवेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृत" इत्येतं पर्य्यायमक्षरशो व्याचष्टे भूमिष्ठइत्यादिभिरष्टभिः पद्यैः। भूमिशब्देनभूमिदेवता विवक्षिता-अन्यस्येति-त्वत्तो मत्तोपिभिन्नस्येत्यर्थः-तेऽपि म इति-तव मम चेत्यर्थः॥ १२ ॥

लोकं धत्तेस्वयंभूमिः स्वांतर्यामिस्वयंततः॥
इतिस्वभाववादोऽयं भूमिष्ठत्वेन वार्यते ॥ १३ ॥

"यः पृथिव्यांतिष्ठन्नि" त्यस्य स्वभाववादनिरासे तात्पर्यमाह लोकमिति-स्वभाववादं पूर्वार्द्धेन दर्शयति लोकं धत्त इत्यादिना-तत इति लोकस्य-निरपेक्षधारणादित्यर्थः॥ १३ ॥

अन्तरत्वेन भूमिष्ठपर्वतादि निवर्त्यते।
भूदेवतानिवृत्तिः स्याद्यन्न जानाति भूरिति ॥ १४ ॥

"यः पृथिव्या अन्तर" इत्यस्य तात्पर्य्यमाह अन्तरत्वेनेति पूर्वार्द्धेन-निवर्त्यते इति—पर्वतादेर्भूमौ बहिस्थितत्वेनान्तरत्वाभावात् तन्नि वृत्तिरिति भावः "यं पृथिवीनवेदेत्यस्य" भूदेवताया अन्तर्यामित्वनिवृत्तिःफलमित्याह भूदेवतेत्युत्तरार्धेन ॥ १४ ॥

नान्तर्यामिविदेहत्वे साधनानामसंभवात्।
देहितातुनदृष्टेति न दोषो भूवपुष्मतः॥ १५ ॥

पृथिवीदेवताभिन्नस्य नियन्तृत्वं नयुक्तमित्याह नेति-निषेधेहेतुमाह असंत्यादि-तद्भिन्नस्य नियन्तुर्देहेन्द्रियरहितत्वस्वीकारे नियमसाधनदेहेन्द्रियाभावेन नियमनासंभवः तस्य देहेन्द्रियादिमत्त्वं च श्रुतिषुन दृष्टं येन तद्वत्ता स्वीकारस्स्यादित्यर्थः "यस्य पृथिवी शरीर" मित्येतद् विवृण्वन्नुक्तदोषं परिहरति नेति चतुर्थपादेन ॥ १५ ॥

भूदेवताया यो देहो देहोऽन्तर्यामिणोऽपि सः ॥
देवस्य कर्मणेशस्य मायया चार्जितोयतः ॥ १६ ॥

तस्य पृथिवी देवता शरीरकत्वं विशदयति भूदेवेति—नन्वेकदेहस्यो-भयस्वामिकत्वं कथं घटत इत्याशङ्क्य निरस्यति देवस्येत्यादि—देवतायाः कर्मणा ईशस्य मायया चार्जितत्वादेकस्योभयस्वामिकत्वं युज्यत इति भावः ॥ १६ ॥

न चैकदेहयोगेऽपि यन्तृयन्तव्यसंकरः ॥
बहिष्ठां देवतां भूमिमंतस्थेशो नियच्छति ॥ १७ ॥

एक देहसम्बन्धेऽपीश्वरदेवतयो र्नियम्यनियामकसांकर्य्यं वारयति नेति ॥ १७ ॥

कार्योपाधिर्बहिष्ठः स्यात्कारणोपाधिरान्तरः ।
उपाधिमात्रतोभेदो वस्तुतस्तु न भिद्यते ॥ १८ ॥

'पूर्वत्र देवताया नियम्यत्वेवहिष्ठत्वमीश्वरस्य नियामकत्वे आन्तरत्वं प्रयोजकमुक्तमयुक्तमुक्तप्रयोजकद्वयवैपरीत्यस्यापि संभवादित्याशङ्कां जीवरूपस्य देवस्य बहिष्ठत्वे कार्योपाधित्वस्य प्रयोजकस्य श्रुतिसिद्धस्येश्वरस्यान्तरत्वे तत्सिद्धस्यकारणोपाहितस्य च तस्य सद्भावादुक्तवैपरीत्यासंभवेन निरस्यन् वस्तुत उक्तोपाध्यो र्भेदो नतूपाधिमतोरिशदेवतयोरित्याह । कार्य्योपाधिरिति ॥ १८ ॥

अतस्ते मेऽखिलस्यापि सोऽतर्याम्यात्मतां गतः ।
अमृतत्वान्न जीवत्वमात्मत्वेऽप्यस्य शंक्यते ॥ १९ ॥

एवं "यः पृथिवी मन्तरो यमयती" त्येतद् व्याख्याय "एषते आत्मा न्तर्य्याम्यमृत" इत्येतद् व्याचष्टे अत इति । अस्यान्तर्य्यामिण आत्मत्वेऽपि जीवत्वशङ्का नामृत्वादस्येत्युत्तरार्द्धार्थः ॥ १९ ॥

सार्वात्म्यं वक्तुमस्यैष बहूपाधिषु वर्णितः ।
सर्वात्मा शक्ति युक्तो यः सोऽन्तर्य्यामीति गम्यताम् ॥२०॥

उत्तरपर्य्याणां पौनरुक्त्याशङ्कां तेषांसार्वात्म्यप्रतिपादनेन निरस्यति सार्वात्म्यमिति । वर्णित इति । अस्य "योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापोन विदुर्यस्यापः शरीरं योऽपामन्तरोयमयत्येषत आत्मा न्तर्याम्यमृतः ॥३॥ योऽग्नौ ॥४॥

योऽन्तरिक्षे ॥ ५ ॥ योवायौ ॥ ६ ॥ योदिवि ॥ ७ ॥ य आदित्ये ॥ ८ ॥ योदिक्षु ॥ ९ ॥ यश्चन्द्रतारके ॥ १० ॥ य आकाशे ॥ ११ ॥ यस्तमसि॥१२॥ यस्तेजसि ॥ १३ ॥ यः सर्वेषु भूतेषु ॥ १४ ॥ इत्यधि भूतम् ॥ अथाध्यात्मम् ॥ यः प्राणेतिष्ठन् ॥ १५ ॥ यो वाचि ॥ १६ ॥ यश्चक्षुषि ॥ १७ ॥ यः श्रोत्रे ॥ १८ ॥ यो मनसि ॥ १९ ॥ यस्त्वचि ॥ २० ॥ योविज्ञाने ॥ २१ ॥ योरेतसि २२ इत्येतैः पर्य्यायैरिति शेषः ॥ २० ॥

**प्रत्यग् ध्वान्तं चिदाभासं स्वकार्यनियमात्मकम् ।**
**तदुपाधि र्नियन्तैष परः प्रोक्तो न तु स्वतः ॥ २१ ॥**

ईश्वरस्य नियामकत्वं कारणपदवाच्यमायालक्षणोपाधिद्वारैव नतु स्वरूपेणेत्याह । प्रत्यगिति । चित आभासो यस्मिंस्तत्तथा चित्प्रतिबिम्बविशिष्टं प्रतीचि ब्रह्मणि स्थितं ध्वान्तमज्ञानम् । स्वकार्यस्य पृथ्व्यादेर्नियमो धर्मधर्मिणो रभेदादात्मास्वरूपं स्वभावो वा यस्य तत् तथावोध्यम् ॥ तदुक्तविशेषण विशिष्टमज्ञानमुपाधि र्यस्य असति वाधके सर्वं वाक्यं सावधारणमिति न्यायेन स एव एष परः । अत्र श्रुतौ नियन्ता प्रोक्तो नतु स्वत इति योजना ॥ २१ ॥

**सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः ।**
**जगज्जन्मस्थितिध्वंसहेतुरेष महेश्वरः ॥ २२ ॥**

सर्वज्ञत्वादिकमप्युपाहित एव नतु शुद्धे इत्याह सर्वज्ञ इति । एष इति निरुक्तोपाधिक इत्यर्थः ॥ २२ ॥

**नारायणाभिधोमन्त्र एतस्यैवाभिधायकः ।**
**पञ्चाक्षरेण मन्त्रेण शिव इत्येष गीयते ॥ २३ ॥**

नारायणमन्त्रोऽप्यस्यैव बोधक इत्याह । नारायणेति । एष निरुक्तोपाधिक एव पञ्चाक्षरेण मन्त्रेण शिव इति गीयते इत्युत्तरार्धे योजना ॥ २३ ॥

**हिरण्यगर्भं हैरण्यगर्भीया एनं मूचिरे ।**
**व्यासस्तत्तत्पुराणेषु तत्तद्रूपतयोचिवान् ॥ २४ ॥**

हिरण्यगर्भोपासका एनमन्तर्यामिणमेव हिरण्यगर्भशब्देनोक्तवन्त इति पूर्वार्द्धार्थः । तत्तद्रूपतयेति–गणेश दिनेश दुर्गा काली प्रभृतिरूपतयेत्यर्थः । उ-

चिवानिति । अत्रैनमित्यस्यानुषङ्गो द्रष्टव्यः ॥ २४ ॥

भूम्यादिदेवताः कस्मान्न स्वान्तर्यामिणं विदुः ।
अदृष्टोऽश्रुत इत्याह कारणं तदवेदने ॥ २५ ॥

"अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाते" त्येतत् शङ्का निरासपरत्वेन व्याचष्टे । भूम्यादीत्यादिश्लोकपञ्चकेन । तच्छब्देनान्तर्यामिणं परामृशति ॥ २५ ॥

दृष्टिश्रुतिमतिज्ञातिविषयत्वं चिदात्मनः ।
उषस्तब्राह्मणे पूर्वं युक्त्या सम्यङ्निवारितम् ॥ २६ ॥

उषस्त ब्राह्मणे युक्त्या दर्शनादि विषयता निरस्ताऽत्र तु श्रुत्येति नतेन पौनरुक्त्यं शङ्क्यमित्याह दृष्टीति ॥ २६ ॥

मा गोचरातिवर्तित्वान्मातृमातादिसाक्षिणः ।
द्रष्टुरन्यस्य चाभावान्न तं पश्यन्ति देवताः ॥ २७ ॥

देवतानामन्तर्याम्यदर्शनेऽत्रत्य श्रुत्युक्तं हेतुं दर्शयंस्तासां तददर्शने समनन्तर श्रुत्या वक्ष्यमाणं ततो भिन्नस्यद्रष्टुरभावं हेतुमाह । मेति । तं देवता नपश्यन्तीत्यत्र प्रमात्रादिभासकस्य ज्ञानविषयत्वाऽक्रान्तत्वं ततो भिन्नस्य द्रष्टुरभावश्चेति हेतुद्वयम् ॥ २७ ॥

अदृष्टत्वाऽश्रुतत्वादि प्रत्यग्ध्वान्तेऽपि संभवेत् ।
तन्निवृत्त्यै श्रुतिर्द्रष्टा श्रोतामन्तेत्यभाषत ॥ २८ ॥

अधुना श्रुत्युक्तस्य द्रष्टृत्वादिविशेषणस्य फलमाह । अदृष्टत्वेति ॥ २८ ॥

द्रष्टृत्वश्रोतृताद्यस्य दृष्टिश्रुत्यादिसाक्षिता ।
अलुप्तचित्स्वभावत्वान्न विकारो मनागपि ॥ २९ ॥

नन्वेवं दर्शनादिक्रिया कर्तृत्वरूपविकार स्तत्रस्यादित्याशङ्कां नित्यचित्स्वरूपस्य द्रष्टृशब्दार्थत्वेन परिहरति द्रष्टृत्वश्रोतृत्वादीति । इदं सामान्ये नपुंसकम् ॥ २९ ॥

लोकसिद्धा नियम्यस्य जीवस्य द्रष्टृतातथा ।
अन्तर्य्याम्यपि चेद्द्रष्टा देहे भासेत तद्द्वयम् ॥ ३० ॥

"नान्योऽतोऽस्ति द्रष्टानान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैषत आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम" इत्ये तदपि शङ्कानिरासपरत्वेन व्याचष्टे । लोकेत्यादि पद्यपञ्चकेन ॥ ३० ॥

इतिशङ्कानिवृत्त्यर्थं नान्योऽतोऽस्तीतिभण्यते ।
लोके जीवतया मूढैरन्तर्य्याम्येव भाव्यते ॥ ३१ ॥

मूढै जीवतयाऽसाधारणकर्तृत्वादिरूपेणान्तर्य्याम्येव नतुतद्भिन्नो जीवो भाव्यत इत्युत्तरार्द्धे योजना ॥ ३१ ॥

साधारणो यथा सूर्यो मां प्रत्येवेति पामरैः ।
असाधारणरूपेण भाव्यतेजीवता तथा ॥ ३२ ॥

अत्र दृष्टान्तमाह—साधारणइति—इतीति । अस्य भाव्यते इत्यत्रान्वयः । दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति ॥ असाधारणेति ॥ ३२ ॥

बुद्धिस्थः पर एवात्मा जीवात्मेतिनिगद्यते ।
बुद्ध्यागमापायसाक्षी नियन्तेत्युच्यतेपरः ॥ ३३ ॥

बुद्ध्युपहितः पर एव जीव इति श्रुत्यादिषु कथ्यते बुद्ध्युत्पत्तिविनाशसाक्षी परस्तत्र नियन्तेत्युच्यतेइत्याह बुद्धीति ॥ ३३ ॥

सूत्रान्तर्यामिणौ शास्त्रगम्यत्वेन प्रतिष्ठितौ ।
अप्रतिष्ठिततर्केण गम्यमार्तमतोऽपरम् ॥ ३४ ॥

"अतोऽन्यदार्तमि" त्येतद् व्याचष्टे । सूत्रेति । अतः सूत्रान्तर्यामिभ्यामपरं भिन्नं यतोऽप्रतिष्ठिततर्केण गम्यमत आर्तमित्युत्तरार्द्धे योजना अतः परमिति पाठः प्रतिभाति ॥ ३४ ॥

अष्टमब्राह्मणे ब्रह्मतत्त्वं सम्यङ्निरूपितम् ।
सूत्रमन्तर्यामिता च यत्रोतप्रोततां व्रजेत् ॥ ३५ ॥

"अथह वाचक्न व्युवाचे" त्यादि "ततोह वाचक्न्युपरराम" त्यन्तं

ब्राह्मणं व्याचष्टे अष्टमेत्यादिभिः षट्चत्वारिंशता श्लोकैः—तत्र तावद् सप्ताष्टमयो ब्राह्मणयो विषयविभागमाह अष्टमेत्यादिद्विकेन ॥ ३५ ॥

पूर्वत्र गौतमोऽपृच्छत्सूत्रांतर्यामिवस्तुनी ।
ओतप्रोतात्मतां गार्गी तयोरेवात्र पृच्छति ॥ ३६ ॥

तयोः सूत्रान्तर्यामिणोः ॥ ३६ ॥

अण्डोर्ध्वाऽधोमध्यदेशान्कालं च व्याप्य तिष्ठति ॥
सूत्रमित्याहुराचार्या ओतं प्रोतं च कुत्रचित् ॥ ३७ ॥

"अथहवाचक्नव्युवाच ब्राह्मणा भगवन्त" इत्यादिकां "पृच्छ गार्गीत्यन्तां प्रथमां" "साहोवाचाहंवैत्वा याज्ञवल्क्ये"त्युपक्रमां "पृच्छ गार्गी" त्यन्तां द्वितीयां च कण्डिकां सुगम तयोज्झित्वा "साहोवाच यदूर्ध्वं वै याज्ञवल्क्यदिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतंच भवच्च भविष्यच्चेत्याचक्षतेकस्मिंस्तदोतंच प्रोतं चे ती"ति तृतीयां विवृणोति । अण्डोर्ध्वेत्यादिपद्य त्रिकेण आचक्षते इत्येतदाहु राचार्य्या इत्येतेन व्याख्यातम् ॥ ३७ ॥

अण्डारम्भकभूतानां न पृष्टा सूत्र ओतता।
सूत्रेण विधृतं पूर्वमिति पूर्वत्र निर्णयात् ॥ ३८ ॥

नन्वण्डारम्भकभूतानां सूत्रे ओतता प्रोतताच पृष्टा वाचक्नव्या न ते सूत्रस्यान्यत्रेति शङ्कां पूर्वत्र सूत्रेण विधृतमित्यनेन तेषां तत्र तयोर्निर्णयेन परिहरति अण्डेति ॥ ३८ ॥

तार्किकत्वनिवृत्त्यर्थमाचार्योक्तिमुदाहरत् ।
निःशेषदेशकालोक्त्या सूत्रे सर्वात्मतोदिता ॥ ३९ ॥

आचक्षत इत्यस्य फलं दर्शयन् सर्वदेश कालोक्तेः सूत्रे सर्वात्मसिद्धिं फलमाह । तार्किकत्वेति ॥ ३९ ॥

व्यक्तं सर्वं सूत्ररूपमव्यक्ते व्योमसञ्ज्ञके ।
ओतं प्रोतंच विद्धीति प्राह पृष्टमनूद्य सः ॥ ४० ॥

गार्ग्या पृष्ट मनूद्य "काशे तदोतंच प्रोतंचे" ति याज्ञवल्क्योत्तरवचनं

व्याचष्टे। व्यक्तमिति। सूत्राकाशपदे व्याचक्षाणो वाक्यार्थमाह व्यक्तमित्यादि। वाचक्नव्या पृष्टमनूद्य सयाज्ञवल्क्य इति प्राहेति योजना ॥ ४० ॥

देशकालौच सूत्रेऽन्तर्भूतौ देशात्मकं ततः।
वियन्नाकाशमत्रोति सूचनायानुवादगीः ॥ ४१ ॥

अनुवादफलमाह। देशेति। ततः तत्रान्तर्भूतत्वाद्देशात्मकं वियन्नात्रो त्तरवाक्य" इति योजना ॥ ४१ ॥

बोद्धुं बोधयितुं चैतदव्यक्तं दुः शकंत्विति ॥
विस्मिता प्रणनामासौ तमव्याकृतवादिनम् ॥ ४२ ॥

"सहो वाच नमस्तेऽस्तु याज्ञवल्क्ये" त्यादिकां पञ्चमीं कण्डिकां व्याचष्टे। बोद्धुमिति ॥ ४२ ॥

भूयोऽपि पृष्टमप्राक्षीत्प्रधानादिषु शङ्कया।
प्रधानादीन् जगद्धेतून्वादिनः स्थापयन्तिहि ॥ ४३ ॥

पञ्चम्या कण्डिकया पृष्टस्यैव "सहोवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या" इत्याद्यया षष्ठ्यातया पुनः प्रश्ने तात्पर्यमाह भूय इति। उक्तशङ्कायां बीजं प्रधानादि स्थापनामाहोत्तरार्द्धेन प्रधानादिति ॥ ४३ ॥

सावधारणमाकाशमेवेत्यन्यनिवृत्तये।
आहोत्तरं मूर्धपातं सूचयंस्तर्कनिर्णये ॥ ४४ ॥

"सहो वाच यदूर्ध्वं गार्गि दिव "इत्युप क्रमाम् आकाश एव तदोतं च प्रोतं चे"त्यन्ता मुत्तर भूतां सप्तमीं व्याचष्टे सावधारणमिति। अन्येति-प्रधानादीत्यर्थः-सूचयन्निति। अस्यायम्भावः आचक्षतेइतिवचनस्य-आचिन्त्य पदार्थस्या गमैनैव निर्णयः सम्पादनीयो नतु तर्केण तेन निर्णये मूर्धपातो भवतीति ॥ ४४ ॥

यद्वा तन्तुष्विव पटः सूत्रं बहुषु संस्थितम् ॥
इत्याशङ्क्य पुनः प्रश्न एवकारो बहुत्वनुत् ॥ ४५ ॥

आकाश विधान्तरेणोक्तकण्डिकामवतारयति। यद्वेति। एवकारइति।

एवेति श्रुतिस्थ एव शब्द इत्यर्थः आकाश एवनतु तद्भिन्नेषु वहुष्विति तद्वाक्यार्थः ॥ ४५ ॥

कस्मिन्खल्वयमाकाश ओतः प्रोतश्च ईर्यताम् ।
अनोतत्वे स्वतन्त्रत्वात्प्रधानत्वं प्रसज्जते ॥ ४६ ॥

"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे" तिप्रश्नवाक्यं व्याचष्टे । कस्मिन्नित्यादि पद्यत्रिकेण—पृच्छन्त्या गार्ग्या स्तात्पर्यमाह । अनोतत्त्वइत्यादिना सुपादद्विकेन ॥ ४६ ॥

सूक्ष्मत्वाद्दुर्वचः सूत्रं व्योम सूक्ष्मतरं ततः ।
व्योमाश्रयः सूक्ष्मतमो न वाग्गोचरमेत्यतः ॥ ४७ ॥

तत इति—सूक्ष्मतर व्योम्न इत्यर्थः । अत इति वागविषयत्वार्थकमुत्तरान्वयि ॥ ४७ ॥

वक्ति चेन्निग्रहस्थान मवाच्यस्योक्तितो भवेत् ॥
अनुक्तौ वादिता हानिरिति गार्ग्या विवक्षितम् ॥ ४८ ॥

निग्रहस्थानमिति—निग्रहस्थानविभाजकसूत्रस्थेनानुक्तसमुच्चयार्थेन च कारेण परिगृहीतंनैयायिकसमयप्रसिद्धमवाच्य वचननामकमित्यर्थः ॥ वादिता हानिरिति—सतेनाननुभाषणाज्ञानाप्रतिभानामन्यतनामकन्तत्समयप्रसिद्धं निग्रहस्थानं दर्शितम् ॥ ४८ ॥

उक्तदोषद्वयास्पृष्टं प्रत्युत्तरमभाषत ।
एतद्वा अक्षरं गार्गि प्राहुस्तद्ब्राह्मणा इति ॥ ४९ ॥

एतदुत्तरं ददत् "सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभि वदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगन्ध मचक्षुष्कमश्रोत्र मवागमनोऽतेजस्कमप्राण ममुख ममात्र मनन्तर मवाह्यं नतदश्नाति किंचन न तदश्नातिकश्चने "त्येतद् वाक्यजातमुक्तत्यादिभिरेकादशभिः पद्यैर्व्याचष्टे ॥ ४९ ॥

एतच्छब्देन तस्याह प्रत्यक्त्वात्साक्षितामसौ ।
प्रत्यक्तया तदैकात्म्यं स्वयमेव प्रतीयताम् ॥ ५० ॥

एतत्पदार्थमाह—तदिति—तस्याक्षरस्य—तदैकात्म्यमिति—प्रत्यगभेद इत्यर्थः अस्याक्षर इत्यादिः । स्वयमेवेत्येवकारेण पराधीन प्रकाशत्वं वारयति ॥ ५० ॥

नव्यावृत्तं विशेषेभ्यो नानुवृत्तंच गोत्ववत् ।
अव्यावृत्ताननुगतं चैतन्यं केनवीक्ष्यताम् ॥ ५१ ॥

एतदेवोपपादयति । नेति ॥ ५१ ॥

यस्मात्प्रसिद्धमस्त्यन्यत् प्रसिद्धं यन्न कस्यचित् ।
स्वप्रभत्वादसंगत्वाद्वैशब्द स्तत्प्रसिद्धये ॥ ५२ ॥

वैशब्दफलमाह यस्मादिति—यस्मादिति अक्षरादित्यर्थः । अन्यत् प्रत्यगभिन्नं यदक्षरम् तदिति स्वाभिन्नप्रकाशकत्व विशिष्टापराधनिप्रकाशे त्यर्थः ॥ ५२ ॥

साक्षादित्यादिना पूर्वं योऽशनायादिनातथा ।
यत्नादभिहितः प्रत्यङ्तच्छब्देन सगृह्यते ॥ ५३ ॥

तत्पदार्थं माह साक्षादिति ॥ ५३ ॥

क्षराद्विरुद्ध धर्मत्वादक्षरं ब्रह्म भण्यते ।
कार्यकारण रूपंतु नश्वरं क्षरमुच्यते ॥ ५४ ॥

प्रतियोगिक्षरं दर्शयन्नक्षरपदार्थं ब्रह्माह । क्षरादिति ॥ ५४ ॥

ध्वस्तात्माऽज्ञानतत्कार्याः प्रत्यग्याथात्म्यबोधतः ।
त्यक्तसर्वैषणा अत्र ब्राह्मणा इति कीर्तिताः ॥ ५५ ॥

अत्रत्य ब्राह्मण पदार्थमाह ध्वस्तेति । ध्वस्तमज्ञानं तत्कार्यं कर्तृत्वादि च येषां तेत्यक्तसर्वैषणा इत्यन्वयः ॥ ५५ ॥

शास्त्रैक गम्यतासिद्ध्यै वदंतीत्यभिधीयते ।
ब्राह्मणास्तदवन्तीति स्वापराधनिषेधगीः ॥ ५६ ॥

वदन्तीत्यभिधानस्य शास्त्रैकगम्यतां साधयतः स्वनिगृहीतिनिषेधः फलमित्याह शास्त्रैकेति ॥ ५६ ॥

नावाच्यं वच्म्यहं किन्तु वदन्ति गुरवोऽखिलाः ।
इतिवच्मि वचस्तेन वादिताऽपि न हीयते ॥ ५७ ॥

एतदेवाह नेति ॥ ५७ ॥

गुरवोऽपि कथं प्राहुरवाच्यमिति चेच्छृणु ।
स्थूलादीनां निषेधेन लक्षयन्त्यक्षरं बुधाः ॥ ५८ ॥

तर्ह्यवाच्यवचनेन निग्रहस्थानं गुरवःप्राप्ताः इत्याशङ्क्या "स्थूलमनण्वह्रस्वमदीर्घमि" त्यादि श्रुतिमवष्टभ्य परिहरति गुरव इति । स्थूलादीनामित्यादि-स्थूलादींस्ते निषिध्याक्षरं लक्षयंति नतु साक्षादक्षरं कथयन्तीत्यर्थः ॥ ५८ ॥

अभावशेषो नाशङ्क्यो निषेधावधिशेषणात् ॥
नाभावनिष्ठो लोकेऽपि निषेधः किमुताक्षरे ॥ ५९ ॥

शून्यवाद्यभिमतामभावशेषतां निषेधस्य साधिष्ठानत्वेन वारयति । अभावेति ॥ ५९ ॥

अन्तर्यामिणि बुद्धेऽथ सुशकं बोध्दुमक्षरम् ।
प्रशासनेन लिङ्गेन सोऽन्तर्याम्येव बुध्यताम् ॥ ६० ॥

अन्तर्यामिसद्भावनिश्चयेनाक्षरसद्भावनिश्चयइत्यतेतत्परम्—"एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौतिष्ठतः" एवं "द्यावा पृथिव्यौ विधृतेतिष्ठतः निमेषामूहूर्ता अहो रात्राण्यर्धमासा ऋतवः संवत्सरा विधृतास्तिष्ठन्तियजमानं देवा दर्वीं पितरोऽन्वायताः योवातदक्षरं गार्ग्य विदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यंतवदेवास्य तद्भवती"त्येतद् व्याचष्टे । अन्तरित्यादिभिस्त्रयोदशभिःपद्यैः ॥ ६० ॥

ईशितव्यार्थसंबंधादंतर्याम्येतदक्षरम् ।
चैतन्याभासमोहाख्य वर्त्मनैव नतुस्वतः ॥ ६१ ॥

अन्तर्यामिनिश्चयेनाक्षरनिश्चयं तयोरौपाधिकभेदेऽपि स्वतोऽभेदादुपपादयति ॥ ईशितव्येति । चित्प्रतिबिम्बविशिष्टाज्ञानद्वारैवैतदक्षरमन्तर्य्यामि भवति नतु स्वरूपेणेति योजना ॥ ६१ ॥

एतस्य वा अक्षरस्य शासने सत्यदो जगत् ।
स्याद्व्यवस्थितमर्यादं सूर्य चंद्रादिलक्षणम् ॥ ६२ ॥

"एतस्य वा अक्षरस्य प्रशासने सूर्य्याचन्द्रमसा"वित्यादीन् "नद्यः स्यन्दन्ते" इत्यन्तान् पर्य्यायान् व्याचष्टे एतस्येत्यादि पद्यत्रिकेण ॥ ६२ ॥

विवादगोचरापन्नायन्तृपूर्वाजगत्स्थितिः ।
व्यवस्थितत्वाल्लोकस्य राजपूर्वास्थितिर्यथा ॥ ६३ ॥

अनुमान प्रयोगमाह–विवादेति ॥ ६३ ॥

सूर्यचन्द्रौद्युभूलोकौ कालोनद्यो यथायथम् ।
नियमेन प्रवर्तन्ते सा प्रवृत्तिर्व्यवस्थितिः ॥ ६४ ॥

व्यवस्थितिपदार्थ माह । सूर्येति । सानियतेत्यर्थः ॥ ६४ ॥

धने दानेन नष्टेऽपि तत्फल प्रद ईश्वरः ।
यतोऽस्ति तेन दातारं तं प्रशंसति वैदिकाः ॥ ६५ ॥

"ददतो मनुष्याः प्रशंसन्ती" त्येतदीश्वर लिङ्ग परत्वेन व्याचष्टे। धन इत्यादि पद्यत्रिकेण ॥ ६५ ॥

नापूर्वं फलदं तस्मिन्मानाभावा त्फलं पुनः ।
ईशादप्युपपन्नत्वान्नैवा पूर्वस्य कल्पकम् ॥ ६६ ॥

अपूर्वस्य फलदत्वं ब्रुवत ईश्वरप्रद्वेषिणोऽध्वरमीमांसकान् तत्र मानाभावेन प्रत्याह नेति । दानादौ श्रुतफलान्यथा नुपपत्त्या तत्कल्पनमीशेनान्यथोपपत्त्या दूषयति । ईशादिति ॥ ६६ ॥

सेव्याद्राज्ञः फलप्राप्तिर्दृश्यतेनत्वपूर्वतः ।
दानादि क्रियया सेव्यादीशातद्वत्फलं भवेत् ॥ ६७ ॥

लोकेऽपूर्वं विनाराज्ञ स्तत्प्रदत्वदर्शनेनेश एव कल्पनीय इत्याह सेव्यादिति ॥ ६७ ॥

देवतायागकर्तारं पितरः श्राद्धकारिणम् ।
नाप्नुयुर्व्यवहारेऽस्मिन्यादि न स्यात्प्रशासिता ॥ ६८ ॥

होमयाग तपांस्यज्ञैर्बहुकृत्वः कृतान्यपि ।
विनाशफल दानीति शासनं तत्प्रशासितुः ॥ ६९ ॥
अज्ञान मात्रतो बन्धो ज्ञानमात्रेणमुक्तता ।
इत्याश्चर्य्याणि सर्वाणि कथयन्तीश्वरास्तिताम् ॥ ७० ॥

"यजमानं देवा दर्वीं पितरोऽन्वायत्ताः योवा तदक्षरंगार्ग्यविदित्वा ऽस्मिँल्लोके जुहोति यजते तपस्त प्यते बहूनि वर्ष सहस्राण्यन्तवदेवास्य तद्भवती" त्येतद्देवपितृसद्भावे लिङ्ग परत्वेन व्याचष्टे । देवता । इत्यादिभिस्त्रिभिः पद्यैः—अस्मिन्निति—यागादि रूप इत्यर्थः ॥ ६८ ॥ ६९ ॥ ७० ॥

विवादशंकापीशेऽस्मिन्नसंभाव्योति दर्शयन् ।
प्रशासनं लिंगरूपं प्रपंचितमनेकशः ॥ ७१ ॥

अनेकधालिङ्गरूपप्रशासनप्रपञ्चने फल माह । पूर्वार्धेन विवादेत्यादिना ॥ ७१ ॥

यदप्रबोधात्कार्पण्यं ब्राह्मण्यंयत्प्रबोधतः ।
तदक्षरं प्रबोद्धव्यं यथोक्तेश्वरवर्त्मना ॥ ७२ ॥

"योवा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोका त्प्रैति । सकृपणोऽथ य एतदक्षरं विदित्वाऽस्मा ल्लोका त्प्रैति । स ब्राह्मण" इत्येत द्विवृणोति यदिति ॥ ७२ ॥

अक्षरस्य प्रशास्तृत्वं स्वमोहाभासकल्पितम् ।
न स्वाभाविक मित्येतद्वक्त्यदृष्टादि वाक्यतः ॥ ७३ ॥

"तद्वा एतदक्षरं गार्ग्य दृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्य दतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृनान्य दतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रे तस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे" तीत्येतद् व्याचष्टे । अक्षरस्येत्यादि पद्याष्टकेन । तत्र तावत् अदृष्टाश्रुतादि पदतात्पर्य माह । अक्षरस्यादि । स्वमोहाभासेति चित्प्रतिबिम्बविशिष्टाज्ञानेत्यर्थः ॥ ७३ ॥

मागोचराति वर्तित्वाददृष्टं स्यात्तदक्षरम् ।
अभावत्वनिषेधार्थं द्रष्टृक्षरमितीर्यते ॥ ७४ ॥

ज्ञानविषयत्वा भावेना दृष्टत्वादिकमुपपादयन् द्रष्टृश्रोत्रादि पदकृत्यमाह मेति। माज्ञानम् ॥ ७४ ॥

कूटस्थ दृक्त्वं द्रष्टृत्वं न दृश्येर्दृष्टिकर्तृता।
ओतप्रोतगिराशेष दृश्यवस्तुनिराकृतेः ॥ ७५ ॥

अक्षरे नित्य चिद्रूपत्वं द्रष्टृत्वं नदृश्याविषयकज्ञानजनकत्व मोत. इत्यादि वाक्येना शेषदृश्यनिषेधा त्तेननाक्षरे विकारशङ्केत्याह. कूटस्थेति। दृश्येदृष्टीति। दृश्यविषयकज्ञानेत्यर्थः ॥ ७५ ॥

उक्तद्रष्ट्राति रेकेण दृश्यंनास्ति यथा तथा।
जीवद्रष्टृनिषेधार्थं नान्यदित्याद्युदरिणम् ॥ ७६ ॥

"नान्य दतोऽस्ती"त्यादि सोदाहरणं व्याचष्टे उक्तेति। तथेत्युत्तरान्वयि ७६

विजातीयसजातीयवस्त्वन्तरनिषेधतः।
कूटस्थमेकं चैतन्यं सिद्धं वस्त्वक्षरंपरम् ॥ ७७ ॥

फलितमाह विजातीयेति ॥ ७७ ॥

एतस्मिन्नक्षरे गार्गि स्त्रजि क्लृप्तफणीन्द्रवत्।
ओतः प्रोतश्च निःशेष आकाशः कारणात्मकः ॥ ७८ ॥

"एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"ति व्याचष्टे। एतस्मिन्निति। निशेषाकाशस्याक्षरे ओतत्वप्रोतत्वयो र्हेतुमाह कारणात्मक इति ॥ ७८ ॥

अक्षरं स्वात्मसंमोहात् कारणत्वंनिगच्छति।
तथा कार्यत्वमप्येतन्निरवद्यं तदेकलम् ॥ ७९ ॥

एतदेवोपाधिद्वारा तस्मिन्कारणत्वकार्यत्व प्रदर्शनेन निरुपहिते तस्मिंस्तदभावप्रदर्शनेन स्फुटयति। अक्षरमिति। कार्यत्वमपीत्यस्य निगच्छतीत्यन्वयः। एतदित्यादि। तत् तस्मात् एकलमुपाधिरहितमेतदक्षरं निरवद्य सर्वदोषशून्यमिति योजना एतदित्यस्य तथा कार्यत्वमपीति पूर्वत्रान्वयाभ्युपगमे तादित्यस्याक्षरमित्यर्थः ॥ ७९ ॥

सर्वस्याक्षरमात्रत्वात् कृत्स्नेज्ञेय समाप्तितः ।
नज्ञेयं विद्यते किंचिन्नाप्यध्यस्तं तथा तमः ॥ ८० ॥

सजातीयविजातीयवस्त्वन्तरनिषेधत इत्यादिनोपपादितं चिदेकत्व मु- संहरति । सर्वस्येति–तमसोऽज्ञानस्य विद्यमानत्वमाशङ्क्याध्यस्तत्वेन वारयति नापीत्यादि ॥ ८० ॥

नवमेब्राह्मणे देवनिर्णय स्तदुपासनम् ।
अष्टधापंचधाचोपनिषदश्चोच्यतेक्रमात् ॥ ८१ ॥

"अथहैनं विदग्ध:शाकल्य" इत्यादि "राति र्दातुः परायणं तिष्ठमानस्य तद्विद" इत्येतदन्तं नवमं शाकल्यब्राह्मणं व्याचिकीर्षु स्तद्विषयाँ स्तावदाह न- वमेति । अत्र ब्राह्मणे क्रमात् देव निर्णय उच्यते देवोपासनं चोच्यते अष्टधोपनि- षद उपासना उच्यन्ते पञ्चधाचता उच्यन्त इति वचन विपारिणामेनान्वयः ॥८१॥

सूर्यचन्द्रादयो देवाः शासितव्या उदीरिताः ।
तेषां विस्तार आनन्त्यं संक्षेपस्त्वेकदेवता ॥ ८२ ॥

"अथ हैनं विदग्धः शाकल्यः पप्रच्छ कतिदेवा याज्ञवल्क्येति सहै तयैव निविदा प्रतिपेदे यावन्तोवैश्वदेवस्य निविद्युच्यन्ते । त्रयश्च त्रीच शतात्रयश्च त्री- च सहस्रे" त्यादिकाः "कतम एको देव इति प्राण इति सब्रह्म त्यदित्या चक्षते" इत्यन्ता नवकण्डिका विवृणोति सूर्येत्यादि पद्यत्रिकेण । तेषामि त्यादि । सूर्यादीनां त्रयश्च त्रीच शतेत्यादिनोक्तो विस्तार आनन्त्यरूपः तेषां "कत्येव देवा याज्ञयक्ल्येत्येक इति कतम एकोदेव इति प्राण इती"ति प्रश्नोत्तराभ्यां- भ्यामुक्तः संक्षेपस्तु एकदेवता एक देवस्यभाव एकदेवात्मकत्वमित्यर्थः ॥ ८२ ॥

त्रयश्चे त्यादिभिर्लक्ष्या बहुशब्दैरनन्तता ।
सुषुप्तिप्रलयावस्थः कारणात्मैकदेवता ॥ ८३ ॥

एतदेव स्फुटयति–त्रय इति । त्रयश्चेत्यादिभिर्बहुशब्दै रनन्तता लक्ष्या- लक्षणया बोध्येति पूर्वार्द्धे योजना ॥ ८३ ॥

नानात्वैकत्वरूपाभ्यां तिष्ठति प्राणदेवता ।
नियन्तव्य नियन्तृत्व संबन्धस्य प्रसिद्धये ॥ ८४ ॥

नानारूपेणैकरूपेण च प्राणदेवतायाः स्थितेः प्रयोजनं नियम्यत्वनियामकत्वरूपसंबन्धसिद्धिमाह नानात्वेति ॥ ८४ ॥

**पृथिव्येवेत्यादिवाक्यादष्टधोपासनेरिता ।**
**किं देवेत्यादिवाक्येन पञ्चधोपासनं श्रुतम् ॥ ८५ ॥**

"पृथिव्येव यस्यायतनमित्यादिभिः प्रजापतिरिति होवाचे" त्यन्तैरष्टभिः पर्य्यायैरुक्ताया उपासनायास्तथा "शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳस्विदिमे ब्राह्मणा" इत्याद्युपक्रमैः "किं देवतोऽस्यां प्राच्यांदिश्यसी" इत्यादिभिः "कस्मिन्नुवाक् प्रतिष्ठितेति हृदय" इतीत्यन्तैः किंचिन्न्यूनैः पञ्चभिश्चतैरुक्तायास्तस्या मायिकत्वमाह पृथिव्येवेत्यादिसार्धपद्येन ॥ ८५ ॥

**एतावदेव शाकल्यो वेत्ति माया मयं तुतत् ।**
**याज्ञवल्क्यः स इत्यादि वस्त्वनुद्याऽथपृष्टवान् ॥ ८६ ॥**

"कस्मिन्नुहृदयं प्रतिष्ठितमि""त्यादिकस्मिन्नुदानः प्रतिष्ठित इति समान इती" त्येतदन्तं ग्रन्थं सुगमत्वादिनोपेक्ष्य "स एषनेति नेती"त्यादि "तं त्वौपनिषदं पुरुषं पृच्छमी" त्यन्तंव्याख्यातुमुपक्रमते याज्ञवल्क्य इत्यादिभिरर्धाधिकैर्द्वादशभिः पद्यैः । स इत्यादीति । एतच्च द्वितीयान्तामनुवादक्रियायामभेदेनान्वयि । स इति आदिर्यस्मिन्ननुवादलक्षणे कर्मणि तत्तथेति । बहुव्रीहिस्तत्रबोध्यः । वस्त्विति ॥ ब्रह्मेत्यर्थः ॥ ८६ ॥

**देवविस्तार संक्षेपावष्टधा पञ्चधाचयत् ।**
**उपास्यमुक्तं तत्सर्वं नेति नेतीत्यपोह्यते ॥ ८७ ॥**

"स एषनेति नेत्यात्मेति" वाक्यं व्याचष्टे देवेत्यादि पद्यचतुष्केण अपोह्यते इति निषिध्यत इत्यर्थः ॥ ८७ ॥

**इतिशब्देन निर्दिष्टे दृश्ये तस्मिन्नपोहिते ।**
**योऽवशिष्टः स आत्मास्य दृश्यस्यात्मवतो मतः ॥ ८८ ॥**

अधुना "नेति नेत्यात्मेत्ये" तद्वाक्यार्थमाह । इतीत्यादि-पद्यत्रिकेण ॥ ८८ ॥

आत्मात्मवत्त्वसंबन्धो नान्योदृग्दृश्ययोरिति ।
मत्वात्मशब्दो दृग्वस्तुन्यवाच्येऽपि प्रयुज्यते ॥ ८९ ॥

आत्मेत्यादि । दृग्दृश्ययोस्तादात्म्यलक्षण आत्मात्मवत्त्वसम्बन्धएवाविवक्षः नान्यः स्वस्वामिभावादिरितिमत्वाशब्दाबोध्येऽपि दृग्वस्तुन्यात्मशब्दः प्रयुज्यत इतियोजना ॥ ८९ ॥

ननु ब्रह्माधिकारेऽस्मिन्कथमात्मेति वर्ण्यते ।
नैष दोषोऽतिरेकेण नात्मनो ब्रह्मतायतः ॥ ९० ॥

शङ्कते नन्विति । जीवपर आत्मशब्दः कथं ब्रह्माभिदध्यादिति शङ्कार्थः । जीवब्रह्मणोर्वस्तुतोऽभेदमाश्रित्यपरिहरति । नैष इति ॥ ९० ॥

ग्राह्यत्वं शीर्णता सङ्गो बन्धो भीतिश्च हिंसनम् ।
जाड्याज्जडस्य धर्माः स्युर्नते सन्त्यात्मवस्तुनि ॥ ९१ ॥

"अगृह्यो नहि गृह्यतेऽशीर्य्यो नहि शीर्यतेऽसङ्गो नहिसज्यतेऽसितो न व्यथते न रिष्यती" त्येतद्व्याचक्षाणोधात्वर्थान् पूर्वार्द्धेन दर्शयन्नुत्तरार्द्धेन तानात्मनि निषेधति । ग्राह्यत्वमिति ॥ ९१ ॥

कार्यधर्मानतीत्यैताँस्तद्धेत्वज्ञाननिह्नुतेः ।
अपूर्वानपरः पूर्णआत्मा स्वात्मन्यवस्थितः ॥ ९२ ॥

"एतान्यष्टावायतनान्यष्टौ लोका अष्टौदेवा अष्टौ पुरुषा" इत्युपक्रम्य "स यस्तान् पुरुषान् निरुह्य प्रत्युह्यात्याक्रामत् तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्द्धा ते विपतिष्यती" त्येतद् व्याचक्षाणो यदुक्तं याज्ञवल्क्यः स इत्यादि वस्त्वनूद्याथपृष्टवानितितत्स्फुटयति । कार्य्येत्यादि पद्यद्विकेन । एतान् ग्राह्यत्वादीन् । तदिति । ग्राह्यत्वादीत्यर्थः । अपूर्वानपरः कार्य्यकारणरहितइत्यर्थः ॥ ९२ ॥

इति तत्त्वमनूद्यास्य सृष्टिसंहारहेतुताम् ।
तथैवोपनिषद्वेद्यमसङ्गत्वं च पृष्टवान् ॥ ९३ ॥

इतीति पूर्वपद्योक्तं तत्त्वमनूद्यास्य सृष्टिसंहारहेतुतां पृष्टवान् तथोपनिषद्वेद्यासंगत्वं च पृष्टवानिति योजना ॥ ९३ ॥

आत्मानिरूह्य प्रत्यूह्य पुरुषान्योऽत्यवर्तत ।
तमौपनिषदं ब्रूहि मूर्ध पातस्तुतेऽन्यथा ॥ ९४ ॥

अवतारित वाक्यं विवृणोति आत्मेति ॥ ९४ ॥

योऽनूदितो नेति नेति सच्चिन्मात्रो ह्यविक्रियः ।
उक्तौ पुरुषनिर्वाहप्रतिवाहौ तु मायिकौ ॥ ९५ ॥

य इति पूर्वार्द्धेन तामिति तच्छब्दस्य यच्छब्दाऽकाङ्क्षां शमयतियोऽनूदित्त इति सृष्टिसंहारे हेतुत्वस्यात्मनो निर्विशेषत्वसिद्धये मायिकतामाह उक्ताविति ॥९५॥

सृष्टिरष्टविधोपास्यरूपानिर्वाह उच्यते ।
प्रतिवाहस्तु संहारो दिग्देवद्वारतो हृदि ॥ ९६ ॥

निर्वाहप्रतिवाहपदार्थावाह । सृष्टिरिति । दिग्देवेत्युपलक्षणमभिदे वादेः ॥ ९६ ॥

वस्तुवृत्तेन निःशेषकार्यकारणवर्जनम् ।
तस्यातिक्रान्तिरुद्दिष्टा सचोपनिषदिश्रुतः ॥ ९७ ॥

औपाधिककार्यकारणभावेऽपि स्वरूपेण तद्राहित्यमतिक्रान्तिपदार्थमाह । वस्तु वृत्तेनेति । वस्तुस्वाभाव्येनेत्यर्थः । स निर्विशेषः । उपनिषदि । उपनिषद्येव नतुकर्मकाण्डे, तेनौपनिषदत्वं तस्य विशेषणमुपपन्नमितिभावः ॥ ९७ ॥

कर्मकाण्डविरोधित्वान्नैवायं श्रूयते क्वचित् ।
ऐकात्म्यवस्तु विज्ञानं कर्मभिर्हि विरुध्यते ॥ ९८ ॥

ननु स कर्मकाण्डेऽपि श्रूयेतेत्याशङ्क्य निषेधति कर्मेति विरोधमेव दर्शयति ऐकेति ॥ ९८ ॥

य औपनिषदस्तस्य विज्ञानानन्दरूपता ।
दातृता भोगमुक्त्योश्च वक्तव्येत्युत्तरा श्रुतिः ॥ ९९ ॥

उत्तरब्राह्मणविषयमौपनिषदपुरुषस्य विज्ञानानन्दरूपतालक्षणं भोगमोक्षदत्वरूपं चाह यइति ॥ ९९ ॥

महाप्रलयसम्पत्तौ जगतः पुनरुद्भवे ।
कारणं पृच्छ्यते वृक्षसर्वसाधर्म्यपूर्वकम् ॥ ३०० ॥

"अथहोवाच ब्राह्मणाभगवन्तो यो वः कामयते समा पृच्छतु सर्वे वा मा पृच्छतयोवः कामयते तं वः पृच्छामिसर्वान् वा वः पृच्छामीति तेह ब्राह्मणानदधृषु" रित्युपक्रमान् "यथा वृक्ष" इत्यादीन् "कोन्वेनं जनयेत् पुन"रित्यन्तान् सार्द्धषट्संख्याकान् याज्ञवल्क्यप्रश्नश्लोकान्व्याख्यातुमुपक्रमते । महेति । वृक्षसर्वसाधर्म्येति । तत्सादृश्यप्रतिपादकाः "यथा वृक्षोवनस्पतिस्तथैव पुरुषोऽमृषा तस्य लोमानि पर्णानित्वगस्योत्पाटिकाबहिः" उत्पाटिकावल्कलम् ॥ १ ॥ त्वचएवास्य रुधिरं प्रस्यन्दित्वच उत्पटः ॥ तस्मात्तदा तृण्णात्प्रैति रसोवृक्षादिवाऽऽहतात् ॥ २ ॥ मांसान्यस्य शकराणि किनाटं स्नावतात्स्थिरम् । अस्थीन्यन्तरतो दारूणिमज्जा मज्जोपमा कृता ॥ ३ ॥ इत्येते श्लोकाः ॥ ३०० ॥

वृक्षः काण्डरुहो बीजरुहश्चेति द्विधातयोः ।
समः काण्डरुहेणैष रेतसो योऽभिजायते ॥ १ ॥

वृक्षोद्विविधः काण्डरुहोवटशिंशपादिर्बीजरुहश्चाम्रादिस्तत्रवटशिंशपादिना रेतसोजायमानस्य साम्यं बोध्यमित्याहवृक्ष इति ॥ १ ॥

नपृच्छ्यतेऽतिस्पष्टत्वात्तदवान्तरकारणम् ।
किन्त्वस्पष्टमशेषस्य पृच्छ्यते मूलकारणम् ॥ २ ॥
अन्वयव्यतिरेकाभ्यांबीजाख्यान्मूलकारणात् ।
दृष्टावृक्षजनिस्तद्वत्कस्मान्मूलाज्जगज्जनिः ॥ ३ ॥

"यद् वृक्षो वृक्णोरोहति मूलान्नवतरः पुनः । मर्त्यः स्विन्मृत्युनावृक्णः कस्मान्मूलात्प्ररोहति ॥ ४ ॥ रेतस इति मावोचतजीवंतस्तत्प्रजायते । धानारुह इववै वृक्षोऽञ्जसात्प्रेत्यसम्भवः ॥ ५ ॥ यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ ६ ॥ जात एवन जायते कोन्वेनं जनयेत्पुनरि"त्येतान् श्लोकान् व्याचष्टे । नेत्यादिपद्यचतुष्केण । अवान्तरकारणमिति । रेत इत्यादिकमित्यर्थः । अशेषस्येत्यस्य जगत इतिशेषः ॥ २ ॥ ३ ॥

नित्यजातस्वभावत्वं न मन्तव्यं यतोमृतः ।
पुनः पुनर्जायते स्यात् कृतनाशादिरन्यथा ॥ ४ ॥
कोन्वेनं जनयेन्मर्त्यमित्युक्ता न विदुर्द्विजाः ।
जित्वातान् याज्ञवल्क्यस्तु गोसहस्रं गृहीतवान् ॥ ५ ॥

"जात एवन जायतेकोन्वेनं जनयेत् पुनरि"त्येतद् व्याचष्टे नित्येत्यादिपद्यद्विकेन । स्यादिति । अन्यथा नित्यजातस्वभावत्वेकृतहान्यकृताभ्यागमदोषः स्यादितियोजना ॥ ४ ॥ ५ ॥

मुनिपृष्टं जगन्मूलं मुमुक्ष्वनुजिघृक्षया ।
आह विज्ञानमानन्दं ब्रह्मेति श्रुतिरादरात ॥ ६ ॥

"विज्ञानमानन्दंब्रह्मरातिर्दातुः परायणं तिष्ठमानस्यतद्विद" इत्येतत्समाधानरूपं श्रुतेर्वचोविवृणोतिमुनीत्यादिसार्धं पद्यचतुष्केण ॥ ६ ॥

विज्ञानमिति चैतन्यं न क्रिया नापितत्फलम् ।
न कारकं नचाभावः क्रियादेः किन्तुभासकम् ॥ ७ ॥

विज्ञानपदंव्याचष्टे । विज्ञानमिति । तदिति । क्रियाया इत्यर्थः । नचाभावः शून्यम् । क्रियादेरिति भासकमित्यनेनान्वयि ॥ ७ ॥

निर्धूताशेषदुःखौघहेतुत्वात्सुखमेव तत ।
अथैष परमानन्दो योवै भूमेति शास्त्रतः ॥ ८ ॥

आनन्दपदं व्याचष्टेनिरिति । निर्धूताशेषदुःखौघत्वात् "एषएवानन्दयाती"ति श्रुत्युक्तसातिशयानन्दहेतुत्वाच्चतच्चैतन्यं सुखमेवनतुतद्भिन्नमितियोजना । अत्रार्थेश्रुतिं पठति । अथैष इति ॥ ८ ॥

अव्यावृत्ताननुगत भास्वद्विज्ञानमात्रतः ।
निरवद्यान्वयित्वात्तत्साक्षाद्ब्रह्मेति भण्यते ॥ ९ ॥

ब्रह्मपदं व्याचष्टे अव्यावृत्तेति । अव्यावृत्तं पूर्णमननुगतं नतु गवादिष्वेव गोत्वादिवत् प्रत्येकपरिसमाप्तं यद्भास्वद् विज्ञानं तन्मात्रतस्तन्मात्रत्वात् निरवद्यान्वयित्वात् निर्दोषत्वात् सर्वत्रानुस्यूतत्वाच्चैतन्यं साक्षात् ब्रह्मेतिकथ्यत इतियोजना॥९॥

तदेवाविद्यया शक्त्या भोगमोक्षप्रदात् हि ।
अनुगृह्णातुतद्भूयो विद्यातीर्थमहेश्वरः ॥ १० ॥

इति श्रीमद्विद्यारण्यमुनिविरचितेऽनुभूति प्रकाश आश्वला-
यनादि मुनिबोधाख्यो नामसप्तदशोऽध्यायः ॥ १७ ॥

"रातिर्दातुः परायणन्तिष्ठमानस्यतद्विद" इत्येतद् व्याचष्ट । तदितिपूर्वार्धेनतन्निरुक्तं ब्रह्म विद्यातीर्थमहेश्वरो भूयोऽधिकमनुगृह्णात्विति प्रार्थनायां लोट् तदनुग्रहं प्रार्थये इत्यर्थः ॥ १० ॥

इति श्रीमद्रामटहलपण्डिततनूजो विठीदेवीगर्भजकाशीनाथकृतौमितप्रकाशविवृतावाश्वलायनादिमुनिबोधाख्योनामसप्तदशोऽध्यायः ॥ १७ ॥



## अथाष्टादशोऽध्यायः.

**षष्ठाध्याये याज्ञवल्क्यो जनकायोपदिष्टवान्।**
**उपास्तिं तत्त्वविद्यां तु संग्रहाद्विस्तरादपि॥ १॥**

षष्ठाध्यायं व्याचिख्यासुस्तद् विषयउपासनातत्त्वविद्याचेत्याह। षष्ठेति। उपास्तिमुपदिष्टवान्। तत्त्वविद्यांतुसंग्रहात् संक्षेपतो विस्तरात् प्रपञ्चतोऽप्युपदिष्टवानिति योजना॥ १॥

**ध्यानादिहैव देवः सन्मृत्वा तद्देवताऽत्यये।**
**प्रथमब्राह्मणे प्रोक्तं चतुष्पाद्ब्रह्मचिन्तनम्॥ २॥**

उपासनाफलमुपास्यदेवात्मकत्वमाहध्यानादिति पूर्वार्धेन। मृत्वेत्यस्यैवव्याख्यानमत्ययइति मरणोत्तरकाल इति तदर्थः। तद्देवतेति। सोपास्याचासौ देवता चेतिविग्रहः। अस्य भवतीति शेषः। तथाऽसत्युपासक इहैव जीवद्दशायामेव देवस्सन् मृत्वाऽत्ययेमरणोत्तरदशायां तद्देवताभवतीति वाक्यार्थः। "जनको हवैदेह आसाञ्चक्रेऽथहयाज्ञवल्क्य आवव्राजे" त्युपक्रमकस्य "पितामेऽमन्यतनाननुशिष्य हरेते"त्यन्तस्य षट्पर्यायात्मकस्य प्रथमब्राह्मणस्य चतुष्पदो ब्रह्मणउपासनां विषयमाह—प्रथमेति॥ २॥

**वागाद्या देवतास्तासामाधारस्तत्तदिन्द्रियम्।**
**अव्याकृतं च नामेति पादाश्चत्वार ईरिताः॥ ३॥**

तस्यकल्पितान् चतुरः पादान् दर्शयति वागाद्या इति तासामिति वागाद्यानां देवतानामित्यर्थः। तत्तदिति वागादीत्यर्थः अव्याकृतमिति अविद्येत्यर्थः नामेति रहस्यभूताः प्रज्ञाप्रियसत्यानन्तानन्दादिसंज्ञाइत्यर्थः॥ ३॥

**असमाप्तेः पुमर्थस्य न मुख्यमनुशासनम्।**
**तद्दत्तां याज्ञवल्क्योऽतो नाग्रहीद्गुरुदक्षिणाम्॥ ४॥**

ननु "नाननुशिष्यहरेतेत्ये" तदयुक्तं तेन तस्यानुशिष्टत्वादित्याशङ्क्य परमपुरुषार्थसाधनं मुख्यमनुशासनं कृत्वा दक्षिणां गृह्णीयान्नामुख्यानुशासनमिदं चासुख्यमित्यभिप्रायवर्णनेन परिहरति असमाप्तेरिति तद्दत्तामिति जनकेन दत्तामित्यर्थः॥४॥

द्वितीये ब्राह्मणे जाग्रत्स्वप्नसुप्तिमुखान्निजम् ।
आत्मानं शास्त्यतो राजा यथा विध्युपसन्नवान् ॥ ५ ॥

"जनकोह" इत्यादि "इमे विदेहा अयमह" मित्यन्तं द्वितीयं ब्राह्मणं व्याचिकीर्षु "जनकोह वैदेहः कूर्चादुपाव सर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु माशाधीतिसहोवाच यथावैसम्राण्महान्तमध्वानमेष्यन् रथंवानावंवासमाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारकआढ्यः सन्नधीत वेदउक्तोपनिषत्कइतोविमुच्यमानः क्वगमिष्यसीतिनाहंतद्भगवन्वेद यत्र गमिष्यामीत्यथवैतेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिती"ति प्रथमकण्डिकाया द्वितीयब्राह्मणगतस्य जाग्रत्स्वप्नसुषुप्तिद्वारा निजात्मानुशासनस्य द्वितीयब्राह्मणान्तर्गतेन कूर्चादुपाव सर्पन्नित्यादि ग्रन्थेन प्रतिपादितं यद्राज्ञो यथाविध्युपसदनं सहेतुरित्यत्र तात्पर्यमाह—द्वितीयइति शास्त्यत इत्यत्र लोट्प्रथमपुरुषैकवचनान्तघटितः शास्त्वत इति वा पाठ्यः ॥ ५ ॥

उक्तोपासनतः प्राप्यो देवभावः पुरोदितः ।
देवत्वान्मुच्यमानेन प्राप्यं पृच्छत्यसौ मुनिः ॥ ६ ॥

एवं तात्पर्यार्थमभिधाय तस्याक्षरार्थं वर्णयितुमुपक्रमते उक्तोपासनतइति॥६॥

गन्तव्यं तु न जानामीत्यविद्यां स्वात्मनि स्थिताम् ।
प्रकटीकुर्वतो राज्ञ इन्धतत्त्वमुपादिशत ॥ ७ ॥

गन्तव्यामित्यादि प्रथमपादोऽविद्याकाराभिलापरूपः प्रथमपादाभिलप्यां स्वात्मनिस्थितामविद्यां प्रकटी कुर्वतो राज्ञो याज्ञवल्क्य इन्धतत्त्वमुपादिशदिति योजना इन्धेत्यादिना "इन्धोहवैनामैषयोऽयंदक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इवहिदेवा प्रत्यक्ष द्विष" इति द्वितीयाजाग्रदवस्थपराकण्डिकाऽवतारिता ॥ ७ ॥

इन्धतेऽहर्निशं यस्मादिन्धनामा ततः पुमान् ।
वीर्यवद्दक्षिणं चक्षुः श्रोतौ वातिशयोऽत्रहि ॥ ८ ॥

तत्रेन्धपदं यौगिकत्वेन परमेश्वरपरमाह इन्धत इति पूर्वार्द्धेन ततोऽहर्निशे-

न्धनादिन्धनामापुरुष इति योजना ॥ जाग्रदवस्थायां तस्य दक्षिणेऽक्षणि स्थितौ तस्य वीर्यवत्त्वं श्रुतिबोधितातिशयवत्त्वं वा हेतुरित्याह वीर्यवदित्य दि । अत्रेति दक्षिणे चक्षुषीत्यर्थः ॥ ८ ॥

परोक्षनामव्याजेन परमैश्वर्यवाचिनम् ।
इन्धशब्दंप्रयुञ्जान इन्धस्याहेश्वरात्मताम् ॥ ९ ॥

इन्धशब्दस्य परमात्माभिधायकत्वमुपपादयति परोक्षेति ॥ ९ ॥

दक्षिणाक्षणि चैतन्यं पुरुषो वामचक्षुषि ।
चैतन्यं स्त्रीति भेदोऽयं कल्प्यते सुखबुद्धये ॥ १० ॥

"अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नीविराडि" त्यन्तं व्याचक्षाणो दक्षिणवामनेत्रगतयोश्चैतन्ययोः पुंस्त्वस्त्रीत्वकल्पनायाः फलं सुखावबोध इत्याह दक्षिणेति ॥ १० ॥

उक्ता जाग्रदवस्थैव मिन्द्रियव्यवहारकृत् ।
दम्पत्योः सङ्गमः स्वप्नो हार्दाकाशोऽथ भण्यते ॥ ११ ॥

"तयोरेषसंस्तावोयएषोऽन्तर्हृदयआकाशोऽथैनयोरेतदन्नं यएषोऽन्तर्हृदये लोहितपिडोऽथैनयोरेतत् प्रावरणं यदे तदन्तर्हृदये जालकमिवाऽथैनयोरेषासृतिः संचरणी येषा हृदयादूर्ध्वानाड्युच्चरति यथा केशः सहस्रधाभिन्नएवमस्यैताहितानाम नाड्योन्तर्हृदये प्रतिष्ठिताभवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेषप्रविविक्ताहारतर इवैव भवत्यस्मा च्छारीरादात्मन" इत्येतत् स्वप्नद्वाराऽत्मान मनुशासद्वाक्यजातं संक्षेपतोविवृणोति उक्तेत्यादिग्रचतुष्केण । दम्पत्योरित्यादि । अथजाग्रदवस्थानन्तरं दम्पत्योः तदवस्थायां दक्षिणवामनेत्रगतयोश्चैतन्ययोः संगमोमेलनात्मकः स्वप्नः यएषोन्तर्हृदय आकाशइत्यत्राकाशब्देनभण्यत उच्यते इत्यन्वयः ॥ ११ ॥

सम्भूय स्तुतिरत्रेति संस्तवो हृदये सुषिः ।
अनिष्टान्नरसो रक्तपिंडो यः सोऽन्नमेतयोः ॥ १२ ॥

संस्तावपदार्थयोगंदर्शयन्नाह संभूयेति । अन्नपदार्थमाह अनिष्टान्नेति । एतयोरिति । निरुक्तदंपत्योरित्यर्थः ॥ १२ ॥

हृद्यन्तः शतनाडीनां पुंजं प्रावरणं विदुः ।
स्वप्नाज्जागरणप्राप्त्यै मार्गो नाड्यूर्ध्वगामिनी ॥ १३ ॥

प्रावरणपदंव्याचष्टे हृद्यन्तरिति । सृतिपदं मार्गपरत्वेन संचरणीपदं हृद्याज्जागरणप्राप्तिसाधनपरत्वेन विवृणोति स्वप्नादिति ॥ १३ ॥

यस्मादन्नरसः केशसहस्रांशेन संमितैः ।
नाडीभेदैः स्वप्नदृशं याति सूक्ष्मतरस्ततः ॥ १४ ॥

यस्मादन्नरसोऽत्यन्तसूक्ष्मैर्नाडीभेदैः स्वप्नदृशं तैजसोपाधिमूर्तंलिङ्गदेहं याति ततस्तस्माद्धेतोस्ततः अन्नरसमयस्थूलशरीरोपहिताद् वैश्वानरात् तैजसः सूक्ष्मतर इत्यन्वयः । तत इति पदं तन्त्रादिनोक्तार्थद्वयं बोधयतीति बोध्यम् ॥१४॥

स्वप्नावस्था समाप्ताऽथ तस्य प्राचीति वाक्यतः ।
सुषुप्तिरुच्यते तत्र युक्ता सर्वदिगात्मता ॥ १५ ॥

"तस्य प्राची दिक् प्राञ्चः प्राणा" इत्यादि "सर्वादिशः सर्वेप्राणा" इत्यन्तं सुषुप्तिद्वारात्मानमनुशासच्छास्त्रं वृत्तकथनपूर्वकंव्याचष्टे—स्वप्नेत्यादि पद्यद्विकेन ॥ १५ ॥

साश्रयैः करणैर्हीनो ग्रस्ताध्यात्माधिदैवतः ।
सुषुप्तावेक एवास्ते प्रज्ञानघनविग्रहः ॥ १६ ॥

उक्तसर्वदिगात्मत्वं साधयति साश्रैयरिति । तत्तद्गोलकदेवतादिसहितैरित्यर्थः ॥ १६ ॥

इन्धतैजससौषुप्तैर्विराट्सूत्रेश्वरा अपि ।
संलक्षिता अथैतेषां तत्त्वमात्मोपदिश्यते ॥ १७ ॥

वृत्तग्रन्थस्य लक्षितार्थपरत्वमपीति दर्शयन्नुत्तरग्रन्थस्य वैश्वानरादीनां यत्त्वमात्मातत्परत्वं दर्शयति इन्धेत्यादि । अयम्भावः जाग्रदभिमानी इन्धो वैश्वानरः । स्वप्नाभिमानी तैजसाख्यः । सुषुप्त्यभिमानी प्राज्ञः तैर्यथाक्रमं विराट्

सूत्रेश्वरा अपिलक्षिता अनन्तरमेतेषां तत्त्वमात्मोपदिश्यते ॥ १७ ॥

विराडिन्धादिभिर्भेदैरभिन्नो योऽवभासते ।
स एष नेति नेत्यात्मा न कार्यं नापि कारणम् ॥ १८ ॥

तेनैव ज्ञात्मनाऽशेषं ध्वान्तजं तत्तथा जगत् ।
जग्ध्वा नेत्यात्मना विद्वान् पूर्णदृष्ट्याऽवशिष्यते ॥ १९ ॥

"स एषनेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्य्योनहि शीर्य्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते नरिष्यत्यभयं वै जनक प्राप्तोसी" त्युत्तरग्रन्थं व्याचष्टे विराडित्यादिपद्यत्रिकेण ॥ १८ ॥ १९ ॥

गन्तव्यमुपदिश्यैवं प्राप्तोऽस्यभयमित्यृषिः ।
ऊचे बोधस्ततः प्राप्तः प्राप्स्यसीत्यन्यथा वदेत् ॥ २० ॥

गन्तव्यमिति–इत्यृषिरूचे, ततोऽसीति वर्तमानापदेशात् जनकस्य बोधः प्राप्तः । अन्यथा बोधस्य प्राप्स्यमानत्वे ऋषिः प्राप्स्यसीति वदेत्—नैवमुवाचेति योजना ॥ २० ॥

ज्ञानेन सदृशीमन्यामपश्यन् गुरुदक्षिणाम् ।
अभयं त्वेति वचसा दक्षिणामाशिषं ददौ ॥ २१ ॥

"सहोवाचजनकोवैदेहोऽभयंत्वागच्छतात् याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मी" त्येतद्व्याचष्टे–ज्ञानेनेत्यादिपद्यद्विकेन ॥ २१ ॥

उत्तमा दक्षिणैषाशीर्मध्यमा तु नमस्क्रिया ।
स्वभूमिवपुषोर्दानं वित्तशाठ्यनिवृत्तये ॥ २२ ॥

"अभयं त्वागच्छता" दित्युक्ताभयदानरूपदक्षिणाया उत्तमत्वं, "नमस्तेऽस्त्विमे" इत्युक्तनमस्काररूपायास्तस्यामध्यमत्वम् "इमेविदेहा अयमहमस्मि" इत्युक्तगोभूहिरण्यादेः शरीरस्य च दानरूपायास्तस्यावित्तशाठ्यनिवृत्तिनिश्चयफलकत्वंचाह–उत्तमेति ॥ २२ ॥

तृतीयब्राह्मणे स्वप्नसुषुप्त्योरतिविस्तृतिः ।
क्रियतेऽतोहि दृष्टान्तौ परलोकविमोक्षयोः ॥ २३ ॥

तृतीयं ब्राह्मणं व्याख्यातुमुपक्रमते तृतीयेति । हि यतः परलोकविमोक्षयोः दृष्टान्तौ स्वप्नसुषुप्ती अतोऽत्र ब्राह्मणे तयोर्विस्तारः क्रियत इति योजना॥ २३॥

देहादिव्यतिरिक्तत्वं स्वप्रभत्वमसङ्गता ।
स्वप्नप्रसङ्गतस्त्वेतत् त्रयमत्र प्रपञ्च्यते ॥ २४ ॥
अद्वैतत्वं दृष्ट्यलोप आनन्दैकस्वभावता ।
इदं त्रयं सुषुप्तस्य प्रसङ्गेनोपपाद्यते ॥ २५ ॥

अत्र देहादिव्यतिरिक्तत्वादित्रयस्य प्रपञ्चनं स्वप्नप्रसङ्गागतम् । अद्वैतत्वादित्रयस्योपपादनंसुषुप्तिप्रसङ्गेन नतु स्वप्नसुषुप्त्योरतिविस्तारवत्प्राधान्येनेत्याह देहादीत्यादिपद्यद्विकेन ॥ २४ ॥ २५ ॥

वरदानेन संवादमिच्छन्तं तमशङ्कया ।
आदौ राजेष्टमप्राक्षीत्प्रत्यग् ज्योतिर्बुभुत्सया ॥ २६ ॥

"जनकꣳहवैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्यइत्यथ ह जनकश्च वैदेहोयाज्ञवल्क्यश्चाग्निहोत्रेसमुदातेतस्मैहयाज्ञवल्क्यो वरं ददौसह कामप्रश्नमेव वव्रे तꣳहास्मैददौतꣳहसम्राडेवपूर्वपप्रच्छे"त्युपक्रम्य "याज्ञवल्क्यकिंज्योतिरयं पुरुष इति आदित्यज्योतिः सम्राडितिहोवाचादित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतत्याज्ञल्वक्ये"ति प्रथमपर्य्यायम् "अस्तमितआदित्येयाज्ञवल्क्यकिंज्योतिरयंपुरुषइतिचन्द्रमाएवास्यज्योतिर्भवती" त्यादिद्वितीयपर्य्यायम् । अस्तमित आदित्येयाज्ञवल्क्य चन्द्रमस्यस्तमित्ते किं ज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवती" त्यादितृतीयम् "अस्तमित आदित्ये याज्ञवल्क्यचन्द्रमस्यस्तमितेशान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्यज्योतिर्भवती" त्यादि चतुर्थपर्य्यायम् "अस्तमित्त आदित्ये याज्ञवल्क्यचन्द्रमस्यस्तमिते शान्तेऽग्नौशान्तायां वाचिकिंज्योतिरेवायं पुरुष इति आत्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येती" त्यादिपञ्चमंचपर्य्यायं व्याचक्षाणः "कतम

आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौलो-कावनुसंचरति ध्यायतीव लेलायतीव सहिस्वप्नोभूत्वेमंलोकमतिक्रामतिमृत्योरूपाणी" तिसप्तमींकण्डिकां व्याचष्टे-वरदानेनेत्यादिपद्यैर्द्वाषष्ट्या-तं याज्ञवल्क्यम्। राजाजनकः। बुभुत्सया जिज्ञासयेष्टं प्रत्यग्रूपं ज्योतिरप्राक्षीत किं ज्योतिरयं पुरुषइति ॥ २६ ॥

देहेन्द्रियादिसंघातः पुमान् किं ज्योतिरुच्यताम्।
उपवेशनगत्यादि न युक्तं ज्योतिषाविना ॥ २७ ॥

देहेन्द्रियेति-स्वप्नावस्थायां देहात्मकः पुरुषः किंज्योतिर्यस्य स किंज्योतिर्भवतीत्युच्यताम्। ननु तदवस्थायां माभूज्ज्योतिरित्याशङ्क्यनिषेधति उपेत्यादिना ॥ २७ ॥

किं संघातगतं ज्योतिः किं वा संघातिरेकि तत्।
अतिरिक्तत्वमादत्ते आदित्यादेरुदाहृतेः ॥ २८ ॥

उक्तप्रश्नं विशदयति। किमिति। संघातातिरेकि संघातातिरिक्तम्। आदित्याद्युदाहरणात्स्वप्ने ज्योतिषोऽतिरिक्तत्वं याज्ञवल्क्य आदत्ते गृह्णातीत्युत्तरार्द्धे योजना ॥ २८ ॥

रविसोमाग्निशब्दादिज्योतींष्युक्तानि जागरे।
निदर्शनतया ज्योतिस्तैः स्वप्नेऽप्यनुमीयताम् ॥ २९ ॥

रवीति। सूर्यादिनिदर्शनेन जागरे रव्यादिज्योतींष्युक्तानि स्वप्नेपि तैर्ज्योतिरनुमीयतामिति योजना ॥ २९ ॥

स्वाप्नदेहव्यवहृति भिन्नज्योतिः पुरःसरा।
व्यवहारत्वतो जाग्रद्व्यवहारो यथा तथा ॥ ३० ॥

अनुमीयतामित्युक्तानुमानप्रयोगमाह-स्वाप्नेति ॥ ३० ॥

सुप्तौ च पुनरुत्थानव्यवहारस्य कारणम्।
अस्ति ज्योतिरिति ज्ञात्वा व्यवहारं स पृष्टवान् ॥ ३१ ॥

ननुसुषुप्तौव्यवहाराभावेन तत्र तत्कारणज्योतिषोऽज्ञानात् किं ज्योतिरेवायं पुरुष इति जनकीयः प्रश्नः स्वप्नमात्रविषयो ननु सुषुप्तिविषयोऽपीत्याशङ्क्य तत्र पुनरुत्थानरूपव्यहारसम्भावेन तेन तत्र सङ्घातातिरिक्तज्योतिषोऽनुमानमेवमिति परिहरति सुप्ताविति । सुषुप्ताविति तदर्थः चेन स्वप्नंसमुच्चिनोति, अनुमानप्रयोगस्तु सुषुप्तौ पुनरुत्थानरूपो व्यवहारोऽतिरिक्तज्योतिःपूर्वकोव्यवहारत्वात् जाग्रदादिव्यवहारवदित्यर्थः ॥ ३१ ॥

**स्वप्रकाशस्वरूपत्वाद्व्यवहारो ह्यतिस्फुटः ।**
**तथाप्यविद्ययाछन्नः सोऽस्पष्ट इव वर्तते ॥ ३२ ॥**

"आत्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽस्ते पल्ययते कर्म कुरुते विपल्येः" त्युत्तरभूतां स्वप्नविषयां श्रुतिं व्याख्यातुं भूमिकामारचयति—स्वप्न प्रकाशेति । व्यवहारस्त्रिविधो ज्ञानात्मकः शब्दप्रयोगलक्षण आनयनादिक्रियास्वरूपश्चेति तत्र ज्ञानात्मकव्यवहारमाश्रित्याह—स्वप्रकाशेत्यादि अयमस्यार्थः व्यहारस्य स्वप्रकाशत्वेनातिस्फुटत्वेपि अविद्ययाछन्नत्वादस्फुष्टत्वेनेव वृत्तिरिति ॥ ३२ ॥

**एतादृश्या अविद्याया विचारेण निवृत्तये ।**
**आत्मैव ज्योतिरस्येति प्राह स्वप्नावभासकम् ॥ ३३ ॥**

स्वप्रकाशचैतन्याच्छादिकाया अविद्याया निवृत्तिर्विचारस्य फलमित्यभिप्रेत्यावतारितश्रुतिःस्वाप्नावभासकं स्वप्रकाशं चैतन्यं प्राहेत्याह—एतादृश्या इति ॥ ३३ ॥

**भास्यं स्वप्नसुषुप्त्यादि यस्मिन् भाने प्रकल्पितम् ।**
**तद्भानं तत्स्वरूपत्वादात्मशब्देन भण्यते ॥ ३४ ॥**

श्रुतिस्थात्मशब्दं व्याचष्टे भास्यमिति—तद्भानमिति—यस्मिन् भाने दृश्यं प्रकल्पितम् तद्भानमात्मशब्देन भण्यत इत्यन्वयः—तत्स्वरूपत्वादिति—दृश्यकल्पनाधिष्ठानभूतभानात्मकत्वादित्यर्थः । तथाच दृश्यात्मकत्वं ज्योतिष उपपन्नमिति भावः ॥ ३४ ॥

आत्माऽविद्यां तदुत्थं वा पराग्धीरवगाहते।
प्रत्यग्बुध्यावगाह्योऽत आत्माऽहं भामि केवलः॥ ३५॥

"पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् मनसैवेदमाप्तव्यमि" त्यादि श्रुतिमवष्टभ्य कल्पनाधिष्ठानं भानमन्तर्मुखबुद्धिग्राह्यम् तद्भिन्नं बहिर्मुखतद्ग्राह्यमित्याह—आत्माऽविद्यामिति—यतो बहिर्मुखाधीरविद्यादिकं विषयीकरोत्यतोऽन्तर्मुखबुद्धिपरिणतिरूपवृत्तिज्ञानेन भग्नावरणको वस्तुतो बुद्धिवृत्तेरनुपदं निरासिष्यमाणत्वाद्बुद्धिनिष्ठचिदाभासेन भग्नावरणः केवल आत्माहं भामीति योजना॥ ३५॥

आत्मैवेत्येवकारेण स्वप्नदृश्येष्वनात्मसु।
ज्योतिष्ट्वशङ्का व्यावृत्ता वासनामयवस्तुषु॥ ३६॥

एवकारव्यावर्त्यमाह—आत्मैवेत्येवकारेणेति—एवशब्देन श्रुत्यावासनामयवस्तुष्वनात्मसु स्वप्नदृश्येषु ज्योतिष्ट्वशङ्का व्यावृत्ता निराकृतेति योजना॥ ३६॥

अस्येति वासनारूपो दृश्यो देहादिरुच्यते।
भास्यभासकसंवन्धः षष्ठ्योक्तो वासनात्मनोः॥ ३७॥

अस्येति प्रकृतिप्रत्ययौ व्याचष्टे—अस्येतीति—प्रकृत्या वासनारूपो देहादि रुच्यते षष्ठीप्रत्ययेन देहादिचैतन्ययोर्भास्यभासकभावसंवन्ध उक्तइत्यर्थः॥ ३७॥

ज्योतिष्ट्वं भासकत्वं स्याच्चिदाभासमुखेन तत्।
उपपन्नमसंगस्य भान्वादिवदनुग्रहात्॥ ३८॥

ननु भासकत्वरूपज्योतिष्ट्वमसङ्गत्वेनात्मनोऽसंभवेनानुपपन्नमित्याशङ्क्य भान्वादिवत्तस्यानुग्राहकत्वेन चिदाभासद्वारकं तत्तस्योपपन्नमित्याह। ज्योतिष्ट्वमिति॥ ३८॥

भान्वादयः प्रभाद्वारा चक्षुराद्येनुगृह्णते।
तथैवात्मानुगृह्णीते चिदाभासेन शेमुषीम्॥ ३९॥

भान्वादिवदनुग्रहादित्युक्तं प्रपञ्चयति—भान्वादय इति—शेमुषीमिति शेमुषी

वृद्धिः ॥ ३९ ॥

अविद्याऽन्वयवद्बुद्धेश्चिदाभासान्वयस्तथा ।
अस्तितद्व्यतिरेकेण बुद्धेः परिणतिर्वृथा ॥ ४० ॥

ननु बुद्धौ चिदाभासासत्त्वात्तद्द्वारकं ज्योतिष्ट्वमसङ्गात्मनोऽनुपपन्नमित्याशङ्क्याविद्यायामिव बुद्धावपि तत्सत्त्वेन चिदाभासातिरिक्ताया विषयाकारज्ञानवृत्तिरूपायास्तत्परिणतेर्निष्प्रयोजनत्वेन कल्पनाया अयुक्तत्वादिति परिहरति । अविद्येति॥४०

चिदाभासविहीनस्य चित्तस्य परिणामतः ।
न किंचिद्भासते वस्तु साभासा धीस्ततः सदा ॥ ४१ ॥

बुद्धौ चिदाभासं जगदान्ध्यप्रसङ्गेनाङ्गीकारयति—चिदाभासेति । चित्तस्य जडत्वेन तत्परिणतेरपि तत्त्वात् तत्स्वीकारेऽपि चिदाभासं विना किंचिद्वस्तु नाभासेत तत उक्तबाधकात्सदासाभासाबुद्धिरुपगन्तव्येत्यर्थः ॥ ४२ ॥

साभासपरिणामेन दुःख्यस्मीत्यपि धीर्भवेत् ।
तथा साभासमज्ञानं न वेद्मीत्यनुभूयते ॥ ४२ ॥

सुखदुःखादीनां प्रमाणाभावेनाज्ञातसत्तानास्तीत्यौपनिषदैः स्वीक्रियते विषयाकारबुद्धिपरिणामेन भानस्वीकारे तेषां सापि स्यादिति तैर्बुद्धिपरिणतिर्ज्ञानलक्षणा सुखदुःखाकारावृत्तिर्नोपेयेत्याह । साभासेति—आभासविशिष्टोयो दुःखरूपो बुद्धिपरिणामस्तेनैव नतु तदतिरिक्तेन वृत्तिज्ञानरूपेण तत्परिणामेनाहं दुःख्यस्मीतिधीरनुभवो भवेदित्यर्थः । अभेदे तृतीया । उक्तमर्थमन्यत्रातिदिशति । तथेति ॥ नवेद्मीत्यनुभवोऽज्ञाने यश्चिदाभासस्तत्स्वरूपो नत्वविद्यावृत्तिरूप इत्यर्थः ॥ ४२ ॥

अन्यथात्मनि कौटस्थ्याद्बुद्धौ चैतन्यवर्जनात् ।
सर्वोऽपिव्यवहारः स्यादंधकारप्रवृत्तवत् ॥ ४३ ॥

चिदाभासस्य बुद्धावनङ्गीकारे बाधकं निगमयति—अन्यथेति ॥ ४३ ॥

चिदाभासानुग्रहोऽत्र ज्योतिष्ट्वं भानुवन्मतम् ।
नतुरव्यादिवच्चक्षुर्ग्राह्यभास्वररूपता ॥ ४४ ॥

सूर्यादिदृष्टान्तेन चक्षुर्ग्राह्यभास्वररूपरूपं ज्योतिष्ट्वमात्मनि न विवक्षितमनात्मत्वप्रसङ्गात् किन्तु चिदाभासेन बुद्धेरनुग्राहकत्वरूपमित्याह चिदाभासेति ॥४४॥

**आदित्यादिरनात्माऽस्य सिध्यत्यक्षादिमानतः ।**
**मात्रादिसिद्धिदस्यास्य स्वतः सिद्धेर्न मेयता ॥ ४५ ॥**

आत्मनो बुद्ध्यनुग्राहकत्वोपपादनेन तस्य तदविषयत्वं यदर्थादुक्तं तत्कण्ठत आह आदित्यादिरिति अस्य विश्वस्यानात्माऽऽदित्यादिः प्रत्यक्षादिप्रमाणतः सिद्ध्यतीति रव्यादेः प्रमेयत्वमिष्टमिति भावः मात्रादीति प्रमात्रादीत्यर्थः आदिना प्रमितिः प्रमेयं च ग्राह्यम् अस्य चिदात्मनः स्वतः सिद्धेर्हेतोः प्रमेयतानेत्यर्थः ॥ ४५ ॥

**नाप्रमेयत्वमात्रेण शशशृङ्गादितुल्यता ।**
**अनन्यानुभवेनास्य विशदं स्फुरणं यतः ॥ ४६ ॥**

अप्रमेयत्वेनात्मनः शशशृङ्गादितुल्यत्वमाशङ्क्य स्वाभिन्नानुभवरूपविशदस्फुरणात्मकत्वेन वैधर्म्यात्तत्तुल्यत्वाभावेन परिहरति नेति ॥ ४६ ॥

**स्यात् स्वप्नव्यवहारोऽयमात्मना ज्योतिषा दृशा ।**
**देहादिव्यतिरिक्तत्वमेवं सिद्धं चिदात्मनः ॥ ४७ ॥**

ज्योतिषात्मना स्वप्नव्यवहारसिद्धिवत् तस्य देहादिव्यतिरिक्तत्वमपि सिद्धमित्याह स्यादिति ॥ ४७ ॥

**आत्मैवास्येति देहादेः स्वरूपत्वेन चिच्छ्रुता ।**
**चितो देहादिभेदोऽपि भान्वादिवदुदीरितः ॥ ४८ ॥**

"कतमआत्मेति"जनकीयं प्रश्नवचनं व्याख्यातुमवतारयन् भूमिकामारचयति आत्मैवेत्यादि, । "आत्मैवास्य ज्योतिर्भवतीतिश्रुतिमवष्टभ्य चितो देहाद्यभिन्नत्वं पूर्वार्द्धेनोत्तरार्द्धेन च तस्य तद्भिन्नत्वं प्रश्नबीजं दर्शितम् आत्मैवाऽस्येति श्रुतेः अस्य कार्यकरणसंघातस्य आत्मैव स्वरूपमेव ज्योतिरित्यर्थमभिप्रेत्य पूर्वार्धः प्रवृत्तः । कार्यकरणसंघातावभासकस्य तत् स्वरूपत्वमनुपपन्नमिति सूर्यादिदृष्टान्तं पुरस्कृत्य उत्तरार्धः प्रवृत्तः ॥ ४८ ॥

पूर्वोत्तरविरुद्धार्थं मत्वा पप्रच्छ भूपतिः ।
बहवोऽर्थाः समीक्ष्यन्त आत्माऽत्र कतमो वद ॥ ४९ ॥

अवतारितां श्रुतिं पूर्वपद्यप्रदर्शितविरुद्धार्थनिश्चयं हेतुं कृत्वा व्याचष्टे पूर्वोत्तरेति ॥ ४९ ॥

पिण्डस्तावदिहैकोऽर्थो द्वितीयो लिङ्गसंज्ञकः ।
चिद्बिम्बताऽवधिश्चान्यश्चतुर्थो नेतिनेति यः ॥ ५० ॥

तानर्थानाह पिण्ड इति चिद्बिम्बताऽवधिः चिन्निष्ठबिम्बत्वनिरूपिका साभासा बुद्धिरित्यर्थः । अन्यस्तृतीयोऽर्थ इति तृतीय पादार्थः । प्रतिबिम्बत्वादिधर्मराहितस्य "एषनेति नेत्यात्मे"त्यादिश्रुत्या प्रतिपादितो निर्विशेषश्चतुर्थोऽर्थ इति चतुर्थपादार्थः । तेषां मध्ये क आत्मा वदेति भावः ॥ ५० ॥

देहादिभेदमाश्रित्य योऽयमित्युत्तरं जगौ ।
अधिष्ठानारोप्यभाव आत्माऽस्येति विवक्षितः ॥ ५१ ॥

इदानीं "योऽयं विज्ञानमयः प्राणेषु हृद्यन्त र्ज्योतिः पुरुष" इति याज्ञवल्क्योत्तरवाक्यं विवृणोति देहादिभेदमित्यादिभिः षड्विंशत्या पद्यैः श्रुतयोर्भेदाभेदयोर्भेदमवलम्ब्य योऽयं विज्ञानमय इत्यादि मुन्युत्तरमिति पूर्वार्द्धार्थः भेदाभेदश्रुत्योरविरोधमुपपादयति अधिष्ठानेत्यादिसार्द्धेन आत्माऽऽस्येति आत्मैवास्य ज्योतिरिति वाक्येनेत्यर्थः ॥ ५१ ॥

विचारदृष्ट्याधिष्ठानमेवास्या ध्यस्तवस्तुनः ।
तथापि जाड्यचैतन्यभेदोऽप्यस्तीह लौकिकः ॥ ५२ ॥

अधिष्ठानमेवेति विचारेणाध्यस्तस्याधिष्ठानातिरिक्तत्वानुपपत्त्याऽध्यस्तदृश्याधिष्ठानभूतात्मनोरभेद इति भावः । भान्वादिवाक्यबोधितोऽविचारितोऽचेतनत्वजडत्वाभ्यां भेद इत्याह तथापीति ॥ ५२ ॥

एवं सत्यविरोधः स्याद्भेदाभेदार्थवाक्ययोः ।
योऽयंमित्युत्तरे शब्दद्वयमेवं विविच्यताम् ॥ ५३ ॥

फलितमाह एवमिति योऽयमिति श्रुतिस्थपदद्वयस्य विवेचनं प्रति जानीते योऽयमिति ॥ ५३ ॥

य: पृष्टः स्वपरागृवृत्तिप्रमामेयातिलङ्घितः ।
प्रत्यङ्मुखेन मानेन त्वयमित्युपदिश्यते ॥ ५४ ॥

प्रतिज्ञातं शब्दद्वयविवेचनं करोति य इत्यादि पद्यद्विकेन स्वेत्यादि प्रतीचो ये पराञ्चोऽनात्मानस्तद्वृत्तयो याः प्रमाः प्रमाणानि ताभिर्यत् प्रमेयं तत् प्रयोज्य प्रमेयत्वमिति यावत् तदतिलङ्घितस्तद्रहितः प्रत्यङ्मुखेन अन्तर्मुखबुद्धिनिष्ठचिदाभासेन मानेन अयमितिशब्देनोपदिश्यते याज्ञवल्क्येनेत्यर्थः ॥ ५४ ॥

पराञ्चीति च मन्त्रोक्तिः साक्षादात्मेति च श्रुतिः ।
पराङ्मानप्रमेयत्वमात्मनो विन्यवारयत् ॥ ५५ ॥

पराचामेव बहिर्मान मेयत्वं न त्वात्मन इत्याह श्रुतिद्वयावष्टम्भेन पराञ्चीति "पराञ्चि खानी"ति मन्त्रः "यः साक्षादपरोक्षाद्‌ब्रह्मे"ति ब्राह्मणम् ॥५५॥

कुम्भकारेण कुम्भार्थो यथा प्रत्यक्ष ईक्ष्यते ।
ध्याकारेण तथा प्रत्यङ्ङात्माकारेण गृह्यते ॥ ५६ ॥

ध्याकारेणेति इदं पूर्वान्वयि बुद्ध्याकारेणेति तदर्थः तथाऽऽत्मा प्रत्यङ् निर्विशेषचित्स्वरूप आत्माकारेण गृह्यत इति योजना ॥ ५६ ॥

अयमित्यभिधायोग्यो लोके देहोऽपि वीक्ष्यते ।
विज्ञानमय इत्युक्त्या स्थूलदेहो निवर्त्यते ॥ ५७ ॥

श्रुतिस्थविज्ञानमयपदस्य कृत्यमाह । अयमिति ॥ ५७ ॥

विज्ञायतेऽनेन सर्वमिति विज्ञानशब्दतः ।
धीरुक्ता तन्मयत्वन्तु तत्प्राचुर्यं विवक्षितम् ॥ ५८ ॥

विज्ञानमयशब्दगतप्रकृतिप्रत्ययौ व्याचष्टे विज्ञायत इति प्रकृत्यर्थो बुद्धिः प्रत्ययार्थस्तत्प्रायत्वमित्यर्थः ॥ ५८ ॥

आचख्युर्मयटं केचिद्विकारार्थे न तच्छुतम् ।
अनिर्मोक्षो विकारार्थे प्रायोऽर्थस्तूपपद्यते ॥ ५९ ॥

विज्ञानमयपदे मयटो विकारार्थकत्वं तत्र श्रुतितात्पर्याभावादनिर्मोक्षाप-

तेश्च वारयंस्तस्य प्राचुर्य्यार्थत्वं दर्शयति आचख्युरिति ॥ ५९ ॥

बुद्धिविज्ञानसंपृक्तश्चन्द्रंसंसक्तराहुवत् ।
प्रमीयते ततः प्रत्यङ्विज्ञानमय उच्यते ॥ ६० ॥

बुद्धिर्विज्ञानं तत्स्थचिदाभासो वा तत्संयुक्तत्वेन प्रमीयमाणत्वात् प्रतीचो विज्ञानप्राचुर्य्यापरपर्यायविज्ञानप्रायत्वरूपं विज्ञानमयत्वमित्याह बुद्धीति ॥ ६० ॥

द्रष्टृत्वाद्यभिसंबन्धः कारकस्यापि सर्वदा ।
धीविज्ञानकृतोऽतोऽपि विज्ञानमय उच्यते ॥ ६१ ॥

विज्ञानमयत्वमन्यथानिर्वक्ति द्रष्टृत्वादीति । यतो धीविज्ञानरूपोपाधिप्रयोज्यो द्रष्टृत्वादिरूपः संबन्धः कारकस्य द्रष्टुरपि सर्वदाऽतोऽपि विज्ञानमयत्वं प्रतीचः श्रुत्योच्यत इत्यर्थः ॥ ६१ ॥

सर्वार्थकरणं बुद्धिर्द्वारमात्रं ततोऽपरम् ।
धीर्विज्ञानमयस्तस्माच्चिदाभासैकवर्त्मना ॥ ६२ ॥

यद्वा चिदाभासो विज्ञानं तत्प्रायत्वाद्बुद्धिर्विज्ञानमय इत्याह सर्वार्थकरणं बुद्धिरिति अस्यात्मन इतिशेषः । ततो बुद्धेरपरं भिन्नं बुद्धिनिष्ठचिदाभासरूपं वस्तु द्वारमात्रं द्वारमेव तस्माच्चिदाभासैकवर्त्मना धीर्बुद्धिर्विज्ञानमयपदार्थ इति योजना॥६२॥

प्राणा बुद्ध्यविनाभूता इति प्राणमयोऽप्यतः ।
प्राणात्मवादः संप्राप्तः प्राणेष्विति निवार्य्यते ॥ ६३ ॥

"प्राणेषु हृद्यन्तर्ज्योतिः पुरुष"इत्येतद्व्याचष्टे प्राणा इत्यादिश्लोकपञ्चदशकेन । बुद्ध्यविनाभूताः समनन्तरवक्ष्यमाणाः प्राणा इतिहेतोरुक्तधीरूपविज्ञानमयः प्राणमयोऽपि । अतः प्राणात्मवादः प्रसिद्धः प्राणेष्वित्यनेन श्रुत्या निवार्य्यत इतियोजना॥६३॥

दशेन्द्रियाणि मरुतः पञ्च च प्राणशब्दिताः ।
प्राणेषु योऽर्थोऽनुगतः सआत्मेत्यवधार्य्यताम् ॥ ६४ ॥

प्राणपदार्थं कथयन्वाक्यार्थमाह—दशेन्द्रियाणीति ॥ ६४ ॥

धीरेवात्मेत्यपाकर्त्तुं हृदीति श्रुतिरभ्यधात् ।
स्वार्थबुद्धौ य आभाति स आत्माबुद्धिवृत्तिदृक् ॥ ६५ ॥

बुद्धिं हृत्पदार्थत्वेन ब्रुवन् हृदिपदकृत्यं च दर्शयन् वाक्यार्थमाह–धीरेवेति ६५

हृदीत्याधारनिर्देशाद्धीस्थवृत्तिषु चात्मता ।
प्रसक्ता तन्निवृत्त्यर्थमन्तरित्युपदिश्यते ॥ ६६ ॥
परागर्थानुसारिण्यो यतो धीवृत्तयस्ततः
प्रत्यक्त्ववाचकेनान्तःशब्देनैता निवर्त्तिताः ॥ ६७ ॥

कृत्यं दर्शयन्नन्तरित्यव्ययस्यात्र शक्तिमत्परत्वेनादन्तानव्ययान्तरशब्दसमानार्थकत्वमाह–हृदीत्यादि पद्यद्विकेन ॥ ६६ ॥ ६७ ॥

जाड्यमात्मन इच्छन्ति कणभुङ्मतजीविनः
तेषां विप्रतिषेधार्थं ज्योतिरित्यभिधीयते ॥ ६८ ॥

अधुना तत्रत्यं ज्योतिःपदं व्याचष्टे–जाड्यमित्यादिभिः सप्तभिः पद्यैः॥६८॥

जडबुद्ध्याद्युपादानं तमस्तस्यावभासकम् ।
सकृद्विभातं चिन्मात्रं ज्योतिरात्मेति भण्यते ॥ ६९ ॥

तमोऽज्ञानम् ॥ ६९ ॥

अचेतनोऽपि बुद्ध्यादिश्चेतनावान्निवेक्ष्यते ।
यस्य सन्निधितस्तस्य चिज्ज्योतिष्ट्वमतिस्फुटम् ॥ ७० ॥

ज्योतिष्ट्वमात्मनो निरूपयति–अचेतन इति । चिज्ज्योष्ट्वमिति–न सूर्यादिवद् भौतिकज्योतिष्ट्वम् ॥ ७० ॥

आत्मच्छायं पयोऽशेषं यथा मारकतो मणिः ।
परीक्षणाय प्रक्षिप्तः कुर्य्यादात्मा तथैव हि ॥ ७१ ॥

बुद्ध्यादेश्चेतनकल्पत्वेनेक्षणमुक्तं तत्र दृष्टान्तमाह आत्मच्छायमिति–परीक्षणाय प्रक्षिप्तो मारकतो मणिरशेषं पयआत्मच्छायमात्मकल्पं यथा करोतीति दृष्टान्तवाक्ये योजना–दृष्टान्तसिद्धमर्थं दार्ष्टन्तिकेयोजयति आत्मेत्यादि ॥ ७१ ॥

ज्योतिरात्मा चितिच्छायं प्रथमं कुरुते तमः ।
तमोयोगेन धीस्तद्धीयोगादिन्द्रियं तथा ॥ ७२ ॥

आत्मा तथैव हीत्युक्तं संग्रहवाक्यं व्याचष्टे । ज्योतिरित्यादिपद्यद्विकेन । ज्योतिरात्मा प्रथमं तमोऽज्ञानं चिदाभासेन चितिच्छायमात्मकल्पं करोति । निरुक्ताज्ञानयोगेन बुद्धिस्तद्वदात्मवद्भवति निरुक्तधीयोगादिन्द्रियं तथाऽऽत्मवद्भवति निरुक्तेन्द्रिययोगाद्देहस्तथाऽऽत्मवद्भवति एवं प्रणाड्यैतत् उक्तसर्वाज्ञानादिकमात्मवद्भवतीति सार्द्धश्लोकयोजना ॥ ७२ ॥

अक्षयोगात्तथा देह एवमेतच्चिदात्मवत् ।
भासन्ते ते स्वतः पुसां प्रत्यगात्मत्वविभ्रमः ॥ ७३ ॥

भासन्त इत्यादि आत्मत्त्वेन ते अज्ञानबुद्ध्यादयः स्वतः स्वरूपेण भासन्तेऽतः पुसां लौकिकानां तेष्वात्मत्वभ्रांतिर्भवतीत्यर्थः ॥ ७३ ॥

तमेव भान्तमात्मानमनुभात्यखिलं जगत् ।
इति श्रुत्यन्तरे स्पष्टमुक्तं ज्योतिष्ट्वमात्मनः ॥ ७४ ॥

आत्मनो ज्योतिष्ट्वे श्रुत्यन्तरमाह—तमेवेति ॥ ७४ ॥

आत्मेत्येवं प्रबुद्धेऽस्मिञ्ज्योतिषि ध्वान्तनाशतः ।
सर्वस्यैवात्मयाथात्म्यादात्मा पुरुष उच्यते ॥ ७५ ॥

श्रुतिस्थपुरुषपदं व्याख्यातुमुपक्रमते आत्मेत्येवमिति ॥ ७५ ॥

आत्माज्ञानसमुच्छित्तौ तज्जस्य नहि वस्तुनः ।
प्रत्यग्रूपात् पृथग्रूपं संभाव्यं केनचित् क्वचित् ॥ ७६ ॥

तज्जस्याऽऽत्माज्ञानोत्थस्य ॥ ७६ ॥

पूर्णत्वात् पुरुषः सोऽयं ज्योतिरात्मेति भण्यते ।
पूर्णस्य लोकसंचारः कथं स्यादिति भण्यताम् ॥ ७७ ॥

पूर्णत्वात् सोयं ज्योतिरात्मा पुरुष इति कथ्यते श्रुत्येति पूर्वार्धे योजना "स समानः सन्नुभौ लोकावनुसंचरती"त्येतद्व्याख्यातुमारभते पूर्णस्येत्यादिना॥७७॥

यः पूर्णः स समानः सन् बुद्ध्या लोकावुभावपि
संप्राप्तप्रतिपत्तव्यावनुसंचरति क्रमात् ॥ ७८ ॥

वाक्यार्थमाह यः पूर्ण इति ॥ ७८ ॥

किंपुनः स्यात् समानत्वमात्मबुद्ध्योस्तदुच्यते।
विवेकानुपलंभेन तादात्म्यं रज्जुसर्पवत् ॥ ७९ ॥

समान इत्युक्तं बुद्ध्यात्मनः सादृश्यं दर्शयति किमिति ॥ ७९ ॥

सम एव धिया लोकौ संचरत्येष न स्वतः।
अतः संसारमिथ्यात्वं ध्यायतीवेति वर्ण्यते ॥ ८० ॥

"ध्यायतीव लेलायतीवे" त्येतद् व्याचष्टे। सम इति न स्वतः न-स्वरूपेण ॥ ८० ॥

ध्यायन्त्यां ध्यायतीवात्मा चलन्त्यां चलतीव च।
बुद्धिस्थे ध्यानचलने कल्प्येते बुद्धिसाक्षिणि ॥ ८१ ॥

उक्तवाक्यार्थं प्रपञ्चयति ध्यायन्त्यामिति ॥ ८१ ॥

आलोके व्यंजके यद्वदभिव्यंग्यघटाकृतिः ॥
आरोप्यते तथा बौद्धः संसारो बुद्धिसाक्षिणि ॥ ८२ ॥

संसारस्यात्मनि कल्पितत्वं दृष्टान्तेन साधयति आलोक इति ॥ ८२ ॥

ध्यानादीनामवस्तुत्वे स हि स्वप्न इति श्रुतिः।
हेतुमाह स आत्मायं स्वप्नो भवति धीवशात् ॥ ८३ ॥
बुद्धिजागरणे यद्वज्जागर्मीत्यभिमन्यते।
बुद्धिस्वप्ने तथा स्वप्नरूपत्वमभिमन्यते ॥ ८४ ॥

"सहि स्वप्नो भूत्वे" त्येतद् विवृणोति। ध्यानादीनामिति ॥ ८३ ॥ ८४ ॥

जाग्रद्भोगमिमं लोकं स्वप्नो भूत्वाऽतिवर्तते।
वासनाराशिसाक्षित्वं स्वाप्नं भोगं तदाऽप्नुयात् ॥ ८५ ॥

"इमं लोकमतिक्रामती" त्येतद् व्याचष्टे जाग्रदिति ॥ ८५ ॥

अविद्याकाम कर्माख्यमृत्यो रूपाण्यतीत्य सः।
जाग्रद्देहेन्द्रियादीनि तिष्ठति ज्योतिरात्मना ॥ ८६ ॥

"मृत्योरूपाणि"इत्येतद्व्याचष्टे । अविद्येत्यादि–सोऽविद्याकामकर्मात्मा मृत्योर्जाग्रद्देहेन्द्रियादिलक्षणानि रूपाण्यतीत्य ज्योतिरात्मना तिष्ठतीति योजना॥८६॥

तस्मात् स्वाभाविको नैव क्रियाध्यानादिलक्षणः ।
लोकद्वयानुसंचारः किंत्वौपाधिक इष्यताम् ॥ ८७ ॥

उक्तार्थं निगमयति । तस्मादिति ॥ ८७ ॥

जाग्रद्देहादिकं मृत्यो रूपं स्वप्नेऽतिवर्तताम् ।
न जन्मान्तरमित्येवमाशङ्क्योक्तं स वा इति ॥ ८८ ॥

" स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाती"त्यष्टमीं कण्डिकां व्याचष्टे । जाग्रदित्यादि पद्यपञ्चकेन ॥ ८८ ॥

युज्यते यजमानः सन् दुःखैरात्मैष ऐहिकैः ।
मृतो वियुज्यते भाविजन्म स्वप्नसमंततः ॥ ८९ ॥

मृत इत्यादि मृतः सन् ऐहिकैः पूर्वजन्मीयजाग्रद्देहादिरूपैर्दुःखैर्वियुज्यत इति यतस्ततो भाविजन्म स्वप्नसदृशं पूर्वोक्तदुःखानां स्वप्न इव तस्मिन्नप्यभावादित्यर्थः ॥ ८९ ॥

जन्मात्र नासतः सत्त्वं किन्तु देहेन संयुतिः ।
प्रादुर्भावो जनेरर्थः सत एव स युज्यते ॥ ९० ॥

" जायमान "इत्यस्य श्रुतौ व्याख्या शरीरमभिसंपद्यमान इति तद्व्याचष्टे जन्मेति ॥ ९० ॥

मृतिः प्राणवियोगःस्यान्न तु नाशः सतो मतः ॥
मृङ् प्राणत्याग इत्युक्त्या स्वयं नष्टः कथं त्यजेत् ॥ ९१ ॥

"म्रियमाण"इत्यस्य व्याख्यानं श्रुतावुत्क्रामन्नित्याह । मृतिरिति ॥९१॥

इमं लोकं परं चायं जाग्रत् स्वप्नप्रवाहवत् ।
सदा भजति तेनास्य सिद्धा देहादिभिन्नता ॥ ९२ ॥

एतल्लोकपरलोकसंचारप्रदर्शनया देहादिभिन्नताऽऽत्मनः सिद्धेत्याह । इममिति ॥ ९२ ॥

लोकायताः परं लोकं नेच्छन्त्यन्ये तु मन्वते ॥
त्रीँल्लोकान् स्वप्नसंयुक्ताँस्ततस्तस्येति वक्त्यसौ ॥ ९३ ॥

" तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीय ँस्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यती"त्येतद् व्याचष्टे लोकायता इत्यादि पद्यसप्तकेन । तस्येतीति "तस्य वा एतस्य द्वे"इत्यादि रसौ श्रुतिरन्वियः ॥ ९३ ॥

अयोगं परलोकस्य वारयत्येवकारतः ॥
सन्ध्यत्वेन तृतीयत्वं स्वप्नलोकस्य वार्यते ॥ ९४ ॥

परलोकस्याभावमेवकारेण वारयन्ती श्रुतिः संध्यत्वेन स्वप्नलोकस्यैतल्लोकपरलोकापेक्षया तृतीयत्वं वारयतीत्याह--अयोगमिति ॥ ९४ ॥

भोगभावात्तृतीयत्वमुच्यते चेत्तथोच्यताम् ।
वस्तुतो न तृतीयत्वं धर्माधर्मप्रसङ्गतः ॥ ९५ ॥

ननु श्रुत्या कथं तृतीयत्वमुक्तमित्याशङ्क्य तत्र भोगसद्भावमात्रेण तस्य तृतीयत्वोक्तिर्न वस्तुतो लोकद्वयवत्तत्र धर्माधर्मापत्तेरित्याह । भोगेति ॥ ९५ ॥

देशयोरुभयोःसंधिर्न हि देशान्तरं यथा ।
लोकयोरुभयोः सन्धिस्तथा लोकान्तरं नहि ॥ ९६ ॥

दृष्टान्तेन स्वप्नस्य तृतीयलोकत्वाभावं दर्शयति ॥ ९६ ॥

इमं लोकमिव स्वप्ने परलोकं स पश्यति ।
अतः प्रत्यक्षतोऽस्तित्वं परलोकस्य गम्यताम् ॥ ९७ ॥

परलोकस्य स्वप्ने प्रत्यक्षदृष्टत्वेन लोकायताभिमतं तदभावं निराचष्टे इममिति ॥ ९७ ॥

अतीतजन्मवृत्तान्तं बाल्ये प्रायेण पश्यति ।
ऐहिकं यौवनेऽन्ते तु तपस्वी भावि वीक्षते ॥ ९८ ॥
आक्रम्य यादृग्देहादिभाविजन्मानि वीक्षते ।
स्वप्नेऽपि तादृगाक्रम्य सुखदुःखानि पश्यति ॥ ९९ ॥

" तमाक्रममाक्रम्योभयान् पाप्मन आनदांश्च पश्यती"त्येतद्व्याचष्टे। अतीतेति । अतिबाल्यावस्थायां प्रायेणातीतजन्मवृत्तान्तं पश्यति बालः युवा यौवनेऽतीतमैहिकं वृत्तं पश्यति वृद्धोऽन्ते वार्धक्यावस्थायामतीतमैहिकं जानाति तपस्वी तपः प्रभावादैहिकं भावि जानातीत्युक्तश्रुत्यर्थमाह अतीतेत्यादि पद्यद्विकेन ॥ ९८ ॥ ९९ ॥

बहुजन्मसु संचाराद्देहादि व्यतिरिक्तताम् ।
निरूप्याथ स्वप्रभत्वं स यत्रेति निरूप्यते ॥ १०० ॥

वृत्तं कथयन् "स यत्र प्रस्वपित्यस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवती"ति ग्रन्थस्यात्मनः स्वप्रकाशत्वनिरूपणपरत्वमाह बह्विति ॥ १०० ॥

स यदा वासनामस्य जाग्रल्लोकस्य सर्वशः ।
आदाय शेते विज्ञेया तस्य स्वप्रभता तदा ॥ १ ॥

उक्तग्रन्थं व्याचष्टे । स इत्यादिपद्यद्वादशकेन ॥ १ ॥

स यत्र प्रस्वपित्यत्र स्वयं ज्योतिः पुमानिति ।
योऽयमस्येत्यादिना तु स्वापशब्दार्थ उच्यते ॥ २ ॥

इतीति इदमुत्तरत्रान्वेति । तथाच इति योऽयं स्वापशब्दार्थः स अस्य सर्वावत इत्यादिनोच्यते इति योजना भवति ॥ २ ॥

न सुषुप्तिरिह स्वापः किन्तु स्वप्नो विवक्षितः ।
स जाग्रद्वासनाजन्यप्रपञ्चप्रतिभासकः ॥ ३ ॥

इह व्याख्यायमानश्रुतौ । स्वप्नस्वरूपमाह स जाग्रदिति ॥ ३ ॥

जाग्रल्लोकस्तु सर्वावानशेषमवतीत्यतः।
अवितृत्वं च सप्तान्नब्राह्मणे प्राक्प्रपञ्चितम् ॥ ४ ॥

जाग्रदिति अत्रतु हेतौ यतो जाग्रल्लोकोऽशेषमवत्यतः सर्वावानित्यन्वयः। तस्यावितृत्वं प्रागुक्तं स्मारयति अवितृत्वमिति ॥ ४ ॥

यद्वाऽध्यात्मादिभेदोऽयं सर्वोऽत्रास्तीति सर्ववान्।
तस्य सर्वावतोऽशेषवासनास्वप्नसृष्टिकृत् ॥ ५ ॥

अथवाऽध्यात्मादिभेदवान् जाग्रल्लोकः सर्वावत्पदार्थः तस्य मात्रास्वप्नसृष्टिकत्री अशेषवासनेत्याह यद्वेति ॥ ५ ॥

आदाय वासनां स्थूले देहे हित्वाऽभिमन्तृताम्।
सूक्ष्मेऽभिमानं निर्माय पश्यन्नेषोऽभिमन्यते ॥ ६ ॥

पदार्थानुक्त्वा वाक्यार्थमाह। आदायेति ॥ ६ ॥

हननं च विनिर्माणं जीवे कर्मवशादिति।
विवक्षुः स्वयमित्याह दैवं कर्मानुसार्यतः ॥ ७ ॥

हननमिति हननादिकं जीवे कर्मानुरोधाद्भवति न तु तदुपेक्ष्यान्यत्र तस्य सहकारित्वश्रवणादिति विवक्षुः श्रुतिः स्वयमित्याह अतो दैवं कर्मानुसारि भवतीति योजना स्वयं शब्देन लौकिकोपादानादिकं निरस्यते नतु कर्मापीति भावः ॥ ७ ॥

स्वेनं भासेतिशब्दाभ्यां स्वकीया वासनोच्यते।
स्वरूपभूता चित्स्वेन ज्योतिषेति विवक्षिता ॥ ८ ॥

"स्वेन भासे"त्यत्रात्मीयवाची स्वशब्दो भाःशब्दो भास्यवासनावाचकः स्वेन ज्योतिषेत्यत्र च स्वशब्दः स्वरूपवचनो ज्योतिःशब्दश्चिद्वाचीत्याह स्वेनेति ॥ ८ ॥

इत्थंभावे तृतीया स्याद्वासनाज्ज्योतिषोस्ततः।
भास्यभासकरूपेण स्थितिः स्वप्न इतीर्यते ॥ ९ ॥

"स्वेन भासा" "स्वेन ज्योतिषे"त्यत्र इत्थंभावे केनचित् प्रकारेण स्थितौ तद्बोधिकेति यावत् तृतीया प्रकृत्यादित्वात् स्यात्संभवति ततो निरुक्तसम्भवाद्वासनाया-

ज्योतिषश्च स्वप्ने भास्यभासकरूपेणावस्थितिरित्येतत् स्वेनभासेत्यादिभ्यामवान्तरवा-
क्याभ्यामीर्य्यते बोध्यत इति योजनया व्याख्येयमित्थमित्यादिपद्यम् ॥ ९ ॥

अत्रान्यज्योतिषोऽभावात्स्वयंज्योतिः पुमान्भवेत् ।
न ज्योतिष्ट्वंवासनाया भास्यत्वेन परिक्षयात् ॥ १० ॥

अत्रेत्यादि अत्र स्वप्नावस्थायामन्यस्यात्मभिन्नस्य सूर्य्यादिलक्षणस्य ज्यो-
तिषोऽभावात् स्वयंज्योतिः पुरुषो भवतीति संभाव्यत इति पूर्वार्द्धार्थः । उत्तरार्द्धे-
नात्मभिन्नवासनाया ज्योतिष्ट्वं निषेधति नेति ॥ १० ॥

आत्मा बुद्धिमनश्चक्षुरालोकविषयैर्युते ।
न जागरे स्वयंज्योतिर्विवेक्तुं शक्यते नृभिः ॥ ११ ॥
न सुषुप्तेऽपि तच्छक्यं भास्याभिव्यक्त्यभावतः ।
स्वप्ने तु भास्यमस्त्येव ततो ज्योतिर्विविच्यते ॥ १२ ॥

जागरे सुषुप्तौ चात्मा संघाताद्विवेक्तुं न शक्यतेऽतो स्वप्ने ततो विविच्यते
श्रुत्येत्याह आत्मेत्यादिपद्यद्विकेन ॥ ११ ॥ १२ ॥

स्वप्ने जागरवद्द्रष्टा मात्मानादयस्ततः ।
दुर्विवेचत्वमाशङ्क्य न तत्रेति निषिध्यते ॥ १३ ॥

"न तत्र रथानयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रान-
न्दामुदः प्रमुदोभवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः
पुष्कारिण्यः संभवन्त्यथवेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि कर्त्ते"ति दशमीं
कण्डिकां संक्षेपतो विवृणोति स्वप्न इत्यादिपद्यचतुष्केण ॥ १३ ॥

रथाश्वादीनि वस्तूनि जाग्रत्कर्मक्षये सति ।
लीयन्ते वासनास्तेषां तिष्ठन्ति स्वप्नसिद्धये ॥ १४ ॥

रथेत्यादि । जाग्रद्भोगप्रदकर्मक्षये सति जाग्रद्रथादीनि लीयन्ते स्वप्न-
रथाद्युत्पादफलास्तेषां वासनास्तिष्ठन्तीत्यन्वयः ॥ १४ ॥

लोकसिद्धमुपादानं निमित्तं वा न विद्यते ।
स्वप्ने ते न रथादीनां मिथ्यात्वं युज्यतेतराम् ॥ १५

स्वप्नरथादयो न सन्तीत्याह लोकेति ॥ १५ ॥

असङ्गस्यापि संभाव्यमविद्याकामकर्मभिः ।
स्रष्टृत्वमित्यभिप्रेत्य सहि कर्तेत्यवोचत ॥ १६ ॥

नन्वात्मनः श्रुतासङ्गत्वेन विरुद्धं "स हि कर्ते"ति श्रुतकर्तृत्वमित्याशङ्क्य कर्तृत्वस्य मायिकत्वेन निरस्यति असङ्गस्येति ॥ १६ ॥

ब्राह्मणोक्तार्थदार्ढ्यार्थं श्रुतिर्मन्त्रानुदाहरत् ।
स्वयंज्योतिष्ट्वदेहादिभिन्नत्वे तेष्वतिस्फुटे ॥ १७॥

"तदेते श्लोका" इत्युपक्रमान् "स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानꣳहिरण्मयः पुरुष एकहꣳसः" ॥११॥ प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामꣳहिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥ स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥१३॥ आराममस्य पश्यन्ति न तं पश्यति कश्चनेति इति सार्धांस्त्रीन् मन्त्रान् व्याख्यातुमवतारयति ब्राह्मणोक्तेति । ब्राह्मणेन तेषां मन्त्राणां गतार्थता न शङ्क्या स्वयंज्योतिष्ट्वदेहादिभिन्नत्वयोस्तैरतिस्पष्टप्रतिपादनादित्यर्थः ॥ १७ ॥

आराममेव मायेत्थं स्वप्ननिर्माणलक्षणम् ।
पश्यन्ति जन्तवस्तस्य न तं पश्यति कश्चन ॥ १८ ॥

तान् संक्षेपतो व्याचष्टे । आराममिति । तस्यात्मनः । तमात्मानम् ॥१८॥

चिकित्सकप्रसिद्ध्यापि सुप्तो देहाद्विभिद्यते ।
द्रुतं न बोधयेत्सुप्तमिति प्राहुश्चिकित्सकाः ॥ १९ ॥

" तं नाऽऽयतं बोधयेदित्याहुः दुर्भिषज्यꣳहास्मै भवति यमेष न प्रतिपद्यत" इत्येतद्व्याचष्टे । चिकित्सकेति । द्रुतं शीघ्रम् ॥ १९ ॥

देहान्यत्वस्वप्रभत्वे असोढ्वास्वप्नमप्यमुम् ।
अपह्नुवानाश्चार्वाकास्तस्याहुर्जागरात्मताम् ॥ २० ॥

सदसत्स्वप्नपार्थक्यं प्रसिद्धं लोकशास्त्रयोः ।
अत्रायं पुरुषस्तेन स्वप्रभश्चेतनः पृथक् ॥ २१ ॥

"अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्त" इत्येतच्चार्वाकपूर्वपक्षत्वेन "अत्रायं पुरुषः स्वयं ज्योतिर्भवती" त्येतदुत्तरपक्षत्वेन वर्णयन् विवृणोति । देहेत्यादिद्विकेन तस्य स्वप्नस्य ॥ २० २१ ॥

मोदन्यासौ कर्मकार्यौ दृष्टौ स्वप्नेऽपि चात्मनः ।
इत्याशङ्क्य स वा एष इति कर्म विविच्यते ॥ २२ ॥

"स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च । पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इत्यादिकां पञ्चदशीं "स वा एष एतस्मिन्स्वप्ने रत्वा-चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यती" त्यादिकां षोडशीं "स वा एष एतस्मिन्बुद्धान्ते रत्वा च-रित्वे" त्यादिकां सप्तदशीं च कण्डिकां व्याचष्टे । मोदन्यासावित्यादिभिर्द्वादशभिः पद्यैः । न्यासः सञ्चरणम् । कर्मकार्यौ धर्माधर्मजन्यौ । आशंक्येत्यन्तभागस्य ननु कर्मजन्ययोर्मोदन्यासयोः स्वप्नेपि दर्शनादात्मा तत्र कर्मकर्तृत्वेन धर्माधर्मसमवायी स्यादित्यर्थः । स वा इत्यादि "स वा एष सम्प्रसाद" इत्यादिश्रुत्यन्तर्गतेन दृष्ट्वै-त्यंशेनानन्वागतस्तेन भवतीत्यंशेन वा कर्मधर्मादिकं विनिच्यते । आत्मसमवेतत्वादा-त्मजन्यत्वाद्वा पृथक्क्रियत इत्यर्थः ॥ २२ ॥

कालुष्यं जागरे जीवे स्वप्ने स्वल्पप्रसन्नता ।
सम्यक् प्रसीदत्यत्रेति संप्रसादः सुषुप्तकम् ॥ २३ ॥

सम्प्रसादपदार्थमाह । कालुष्यमिति ॥ २३ ॥

स्वप्ने रत्वा चरित्वाऽथ विश्रान्तः सम्प्रसादके ।
पुनरायात्यसौ नाडीं स्वप्नार्थमिति योजना ॥ २४ ॥

"स वा एष" इत्यादेः "पुनः प्रतिन्यायं प्रतियोन्या द्रवती" त्यन्तस्य योजनामाह । स्वप्न इति ॥ २४ ॥

दृष्ट्वैवेत्येव शब्देन न कृत्वेति विवक्षितम्।
न कर्म कुरुते स्वप्ने कारकाणामसम्भवात् ॥ २५ ॥

दृष्ट्वैवेति शब्देन स्वप्ने कर्मकर्तृत्वमात्मनो वारयतीत्याह । दृष्ट्वैवेतीति । कर्मकरणासम्भवं तत्र तस्योपपादयति । नेत्युत्तरार्द्धेन ॥ २५ ॥

जागरात्स्वप्नमाप्नोति स्वप्नात्सुप्तिमिति क्रमात्।
वैपरीत्यं प्रतिन्यायं प्रतिमार्ग इतीर्यते ॥ २६ ॥

जागरात्स्वप्नः स्वप्नात्सुषुप्तिरिति क्रमो न्यायः। जागरात्सुषुप्तिः सुषुप्तेर्वा स्वप्न इति क्रमः प्रतिन्यायपदार्थ इत्याह । जागरादिति ॥ २६ ॥

प्रतियोनि यथास्थानं स्वप्ननाड्यादि भण्यते।
प्रतिमार्गमवाप्याथ स्वप्नाय स्थानमाव्रजेत् ॥ २७ ॥

प्रतियोनिपदार्थः स्वस्थानस्थितस्वप्ननाड्यादिरित्याह। प्रतियोनीति। "पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैवे" त्येतद्वाक्यार्थमाह। प्रतिमार्गमित्युत्तरार्द्धेन। प्रतिमार्गमिति। सुषुप्तेः स्वप्न इति विपरीतक्रममित्यर्थः। स्थानमिति। प्रतियोनिपदार्थस्वप्ननाड्यादिकमित्यर्थः ॥ २७ ॥

अनन्वागमने हेतुरसङ्गत्वं हि शब्दतः।
सूच्यते बाधकस्तर्कः प्रसिद्धिर्वाऽत्र लौकिकी ॥ २८ ॥

"अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इत्येतद्व्याचष्टे। अनन्वेत्यादिश्लोकचतुष्केण। हिर्हेतौ। अत्रायं प्रयोगः। आत्मा पुण्यपापफलैः सुखदुःखैर्न सम्बध्यतेऽसङ्गत्वात् यन्नैवं तन्नैवं यथा देहादि न चायं तथा तस्मान्न तथेति। यद्वा हिः प्रसिद्धावित्याह। बाधक इत्यादि। आत्मा पुण्यादिफलैर्न सम्बध्यते चेतनत्वात् यन्नैवं तन्नैवं यथा बुद्ध्यादि न चायं तथा तस्मान्न तथेत्याद्यनुमाने हेतोरप्रयोजकत्वाशङ्कायामत्रात्मन्यसङ्गत्वेन लौकिकी प्रसिद्धिर्बाधकस्तर्कं श्रुत्योपन्यस्त इत्यर्थः ॥ २८ ॥

यद्वाऽनन्वागतत्वेन विवेकः कर्मणः कृतः।
असङ्गत्वेन कामस्य कामो न ह्यात्मनो गुणः ॥ २९ ॥

व्याख्यान्तरमाह । यद्वेति । अनन्वागतत्वेनेत्यादि । आत्मा कर्मकर्त्ता न भवति तज्जन्यधर्मादिसमवायी न भवत्यनन्वागतत्वाद्व्यतिरेके बुद्ध्यादिवदित्यनुमानप्रयोगः पूर्वार्द्धेन सूचितः । विवेक इत्यादि आत्मसमवायित्वात् तत्कर्तृकत्वाद्वा कर्मणः पृथक् करणं दर्शितमित्यर्थः । आत्मा न कामधर्मकोऽसङ्गत्वाद्व्यतिरेके बुद्ध्यादिवदित्यनुमानप्रयोगस्सूचितः ॥ २९ ॥

स ईयते यत्र कामं यथाकामं प्रवर्तते ।
इति श्रुतिद्वयं स्वप्ने विस्पष्टं काममब्रवीत् ॥ ३० ॥

नन्वात्मधर्मत्वेन कामस्य प्रसक्तौ सत्यामनुमानेन तन्निरासो युक्तः सा च नास्तीत्याशङ्क्य श्रुतिद्वयेन तस्याः सत्त्वान्नैवमित्याह । स इति ॥ ३० ॥

स्वप्नकामस्य वस्तुत्वं श्रुतिभ्यां चेद्विवक्षितम् ।
प्रबोधेऽप्यनुवर्तेत तच्च नास्ति ततो मृषा ॥ ३१ ॥

ननु कामस्यात्मधर्मत्वेन श्रुतिद्वयबोधितत्वेऽसङ्गत्वेन तन्निरासोऽयुक्त इत्याशङ्क्य कामस्य मिथ्यात्वान्नैवमित्याह । स्वप्नकामस्येति ॥ ३१ ॥

जाग्रत्प्रत्यक्षमाश्रित्य जागरे मृत्युसत्यताम् ।
आशङ्क्य पुनरप्राक्षीद्दृष्ट्वैवेति तदुत्तरम् ॥ ३२ ॥

"सोऽहं भगवते सहस्रं ददामी"त्युपक्रम्याम्नातम् "अत ऊर्ध्वं विमोक्षायैवानुब्रूही" ति प्रश्नवाक्यं तदुत्तरत्वेन प्रवृत्तं "स वा एष एतास्मिन्स्वप्ने रत्वा चरित्वा च दृष्ट्वैव पुण्यं च पापं चे" त्यादिषोडशकण्डिकारूपवाक्यं च संक्षेपतो विवृणोति । जाग्रदिति । मृत्युसत्यतां जाग्रद्वस्तुपरमार्थताम् । दृष्ट्वैवेतीति तत्पर्यायगतदृष्ट्वैवेत्यादिवाक्येनेत्यर्थः ॥ ३२ ॥

मूढप्रत्यक्षतः कर्त्ता विद्वत्प्रत्यक्षतोऽक्रियः ।
विवेकिनामनुभवादात्मज्योतिर्विवेचितम् ॥ ३३ ॥

यतो मूढप्रत्यक्षतः कर्ताऽऽत्मा विद्वत्प्रत्यक्षतोऽकर्तेति तस्य सङ्घातादुर्विवेचत्वमतोऽनुभवमाश्रित्यात्मज्योतिः स्वप्ने विवेचितमित्याह । मूढेति ॥ ३३ ॥

असकृत्स्वप्नबुद्धान्तसञ्चारेऽपि न बुद्धवान्।
इत्यर्थेऽस्मिन्महामत्स्यो दृष्टान्तत्वेन वर्ण्यते ॥ ३४ ॥

"तद्यथा महामत्स्य उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तंच बुद्धान्तं च" त्येतत्तात्पर्यतो व्याचष्टे। असकृदिति। नबुद्धवानिति। अस्य निर्विशेषात्मरूपमितिशेषः ॥ ३४ ॥

इत्थं स्वप्नप्रसङ्गेन देहादिव्यतिरिक्तता।
स्वप्रभत्वमसङ्गत्वं चेत्येतेऽर्थाः प्रपञ्चिताः ॥ ३५ ॥

परलोकस्य दृष्टान्तत्वेन प्राधान्येन स्वप्नो वर्णितस्तद्वर्णनप्रसङ्गेनदेहादिव्यतिरिक्तत्वादित्रयं प्रपञ्चितं सार्द्धेन–इत्थमित्यादिना ॥ ३५ ॥

स एव परलोकस्य दृष्टान्तः स्वप्न ईरितः।
सुषुप्तिर्मोक्षदृष्टान्तस्तदर्थो ग्रन्थ उत्तरः ॥ ३६ ॥

उत्तर इति "तद्यथाऽस्मिन्नाकाशे श्येनोवे"त्यादि "मेधावीराजासर्वेभ्योमातेभ्यउदरौत्सी"दित्यन्तकिञ्चिदूनपञ्चदशकण्डिकात्मकइत्यर्थः ॥ ३६ ॥

तद्वा अस्यैतदित्यत्र प्राप्तकामस्वभावताम्।
वक्तुं सुप्तावदुःखत्वं वक्ति श्येननिदर्शनात् ॥ ३७ ॥

"तद्यथाश्येनो वा सुपर्णोवा विपरिवृत्य श्रान्तः सꣳहत्यपक्षौ संलयायैव ध्रियते एवमेवायं पुरुष एतस्मात् अन्तायं धावति यत्र सुप्तो नकञ्चन कामयते नकञ्चन स्वप्नं पश्यती"त्येतयोनविंशतितम्याकण्डिकयोक्तमात्मनः सुषुप्तौश्येन निदर्शनेन निर्दुःखत्वं तच्च "तद्वा अस्यैतदतिच्छन्दा" इत्याद्यायामेकविंशतितम्यां श्रुतस्याप्तकामत्वस्योपपादकमित्याह—तद्वाइति ॥ ३७ ॥

आत्मस्वभावोनिःशेषं पुञ्जीकृत्येह लक्ष्यते।
सुप्तो मुक्ताविवाद्वैतस्वप्रभानन्दलक्षणः ॥ ३८ ॥

आत्मेत्यादि। मुक्ताविवेह सुषुप्तावद्वैतानन्दस्वरूप आत्मस्वभावः पुञ्जीकृत्य निःशेषं लक्ष्यते भासत इति योजना निःशेष इति प्रथमान्तपाठोऽपि ॥ ३८ ॥

अविद्या तु स्थिताऽप्यत्र द्वैतदुःखाद्यनुद्भवात् ।
स्वभावं न तिरोधत्ते स्वप्रभानंदमद्वयम् ॥ ३९ ॥

नन्वविद्यायाः सुषुप्तौ सत्त्वेन तत्र तयोक्तस्वभावस्यतिरोधानसंभवेन तत्र तद्भानं नोपपद्यत इत्याशङ्क्य दुःखात्मकजगदुद्भवसहकृतत्वेन तस्यास्तत्तीरोधायकत्वेन तत्र तदनुद्भवेन तत्र तया तिरोधानासंभवान्मैवमित्याह—अविद्येति । स्वप्रभानन्दमद्वयं स्वभावमितियोजना ॥ ३९ ॥

द्वैतदुःखादिरूपंयत्स्वात्मनः स्वप्नजाग्रतोः ।
तदाविद्योत्थमित्येतत्तावाअस्येति वर्ण्यते ॥ ४० ॥

"ता वा अस्यैता हितानाम नाड्यो यथाकेशः सहस्रधाभिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनंघ्नन्तीव जिनन्तीव हस्तीवविच्छाययतिगर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राऽविद्यया मन्यतेऽथ यत्र देव इव राजेवाह मेवेदꣳसर्वोऽस्मीति मन्यते सोऽस्य परमोलोकः" इत्येतत्कण्डिकायास्तात्पर्यमाह । द्वैतेति ॥ ४० ॥

विद्यायाः परमोत्कर्षे जाग्रत्साक्ष्यात्मवासना ।
सर्वोऽस्मीतिमतिस्वप्ने करोत्यद्वैतभासिनि ॥ ४१ ॥

नन्व"हमेवेदꣳसर्वोस्मी"ति वाक्यात् प्रतीयमानं स्वप्ने सार्वात्म्यभानमनुपपन्नं तदा तत्कारणासम्भवादित्याशङ्क्य विद्योत्कर्षसहितायाः साक्षिवासनायास्तदाकारणत्वसम्भवान्मैवमिति परिहरति विद्यया इति—जाग्रत्साक्ष्यात्मवासनेति । जाग्रदवस्थायांयःसाक्षिस्वरूप आत्मातदीयवासनेत्यर्थः । अद्वैतभासिनीति । विद्याप्रकर्षाद्यदद्वैतभानं तदुपलक्षिते सविशेषे पुरुष इत्यर्थः । संभावितोयोऽद्वैतभासिनीति दीर्घान्तपाठस्तत्रेदं निरुक्तवासनाविशेषणं बोध्यम् ॥ ४१ ॥

सर्वात्मभावः परमो लोकोबाधविवर्जनात् ।
बाध्यन्ते देवराजाद्याइवशब्दश्रुतत्वतः ॥ ४२ ॥

"सोऽस्य परमोलोक" इत्येतद्विवृण्वन् "अथ यत्रैनंघ्नन्तीवे"त्यादि विवृणोति—सर्वात्मेति ॥ ४२ ॥

नन्वद्वैतमपिद्वैतं सुप्त्यसुप्त्योरिहात्मानि।
क्रमाद्भात्यत्र किं रूपं तस्येत्याशङ्क्यवर्ण्यते ॥ ४३ ॥

"तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳरूपम्। तद्यथाप्रिययास्त्रिया संपरिष्वक्तोनबाह्यं किञ्चन वेदनान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मनासंपरिष्वक्तो न बाह्यं किञ्चनवेदनान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳरूप ꣳशोकान्तर"मित्येतांकाण्डिकांव्याख्यातुं शङ्कापुरःसरमवतारयति–नन्वद्वैतमिति। ननु सुषुप्तावद्वैतताद्भिन्ने जाग्रदादौ द्वैतमिहात्मनिभाति अत्र सुषुप्तौ तस्यात्मनः किं रूपमिति शङ्काभागार्थः। वर्ण्यत इति–अस्य "तद्वा अस्यैतदतिच्छन्दा" इत्येतद्वाक्यघटकैतदतिच्छन्दवैशब्दादिभिस्तत्रास्य रूपमित्यादिः ॥ ४३ ॥

यत्सार्वात्म्यपुराप्रोक्तंतदेवाद्वैतमात्मनः।
रूपमागमतः स्वानुभूतेश्चपुरुषार्थतः ॥ ४४ ॥

तदाह–यदिति। चकारोभिन्नक्रमः पुरुषार्थत इति भावनिर्देशः पुरुषार्थत्वादितितदर्थः ॥ ४४ ॥

शास्त्रप्रसिद्धितच्छब्दोवक्तिस्वानुभवं पुनः।
एतच्छब्दपुमर्थत्वमतिच्छन्दादिनोच्यते ॥ ४५ ॥

उक्तार्थं प्रपञ्चयति–शास्त्रेत्यादिपद्यचतुष्केण ॥ ४५ ॥

शिवमद्वैतमित्यादि शास्त्रमुद्घुष्यते वहु।
समाधिसुप्त्योरद्वैतं स्वयमेवानुभूयते ॥ ४६ ॥

माण्डूक्यादिशास्त्रप्रसिद्धिं समाधिसुषुप्त्योः स्वानुभूतिञ्चाह–शिवमिति ४६॥

छन्दः कामः कर्म्मपाप्माभयंस्यात्कर्मणः फलम्।
अनर्थरूपत्रितयमद्वैतेवीक्ष्यते नहि ॥ ४७ ॥

पुमर्थत्वमतिच्छन्दादिनोच्यते इत्युक्तं विवृणोति। छन्द इति ॥ छन्दपाप्मभयपदानिव्याचष्टे–छन्द इति। पदार्थानभिधाय "अतिच्छन्दो अपहत पाप्माऽभयंꣳरूपमि"त्येद्वाक्यार्थमाह—अनर्थरूपमिति ॥ ४७ ॥

त्रितयेनतुयद्युक्तंद्वैतंतस्यणुमर्थता ।
नेतिद्वैतश्रुतावस्थावैशब्देनानिवर्त्यते ॥ ४८ ॥

वैशब्दार्थमाह-त्रितयेनेति ॥ ४८ ॥

योषिदालिङ्गितः क्षेत्रं गृहंवाप्याविचारयन् ॥
यथासुखीतथासुप्तः कामभीत्यादिवर्जनात् ॥ ४९ ॥

सुषुप्तावस्थस्य रूपं दर्शयन् "तद्यथाप्रिययास्त्रिये" त्यादि व्याचष्टे योषिदिति ॥ ४९ ॥

तद्वा अस्येति वाक्येन कामाभावः प्रपञ्च्यते ।
आत्मरूपयदद्वैतमाप्तकामतदीक्षताम् ॥ ५० ॥

"तद्वा अस्य तदाप्तकाम" मित्यादिवाक्यं व्याचष्टे—तद्वा इति ॥ ५० ॥

सुषुप्सुस्तुसमाधित्सुर्वाह्यं कामयते न हि ।
अपित्वात्मानमेवात्माप्राप्त एवाखिलैः सदा ॥ ५१ ॥

उक्तार्थमुपपादयति-सुषुप्सुस्त्विति-अत्र तुश्चार्थोभिन्नक्रमः समाधित्सुरित्यस्याग्रेद्रष्टव्यः समाधित्सुरितिदृष्टान्तप्रदर्शनार्थमुपात्तम् ॥ ५१ ॥

काम्यभोजनतस्तृप्तस्तदाभोज्यं नवाञ्छति ।
एवं काम्यात्मनिप्राप्ते किमन्यत्काम्यतेपुनः ॥ ५२ ॥

आत्मकामाकामपदेसदृष्टान्तं व्याचष्टे—काम्येति ॥ ५२ ॥

आत्मरूपमकामं यत्तच्छोकरहितं सदा ।
शोकान्तरं पृथक्शोकादितिनिःशोकतोच्यते ॥५३॥

शोकान्तरपदं विवृणोति—आत्मेति । पूर्वार्द्धोक्तार्थं शोकान्तरपदव्युत्पत्त्या दर्शयति—शोकान्तरमित्युत्तरार्द्धेन ॥ ५३ ॥

ननुदेहाभिमानश्च धर्माधर्मौ च शोकदाः ।
यथा जागरणेतद्वत् सुषुप्तौ च प्रसज्जते ॥ ५४ ॥

"अत्र पिताऽपिता भवतिमाताऽमातालोकाअलोका देवा अदेवा वेदा अवेदाः अत्रस्त्येनोऽस्त्येनोभवतिभ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेनतीर्णोहितदा सर्वाञ्छोकान्हृदयस्यभवती" त्येतद्वाचष्टे—नन्वित्यादिपद्यचतुष्केण । देहाभिमान इति । शोकदो देहाभिमानः सुषुप्तौ जागरण इव प्रसज्जते—शोकदौधर्म्माधर्म्मौचप्रसज्जेते इति बचनविपरिणामेनान्वयः ॥ ५४ ॥

मैवं पिता ऽहमित्यादि देहात्मभ्रान्तिलोपनात् ।
पितृत्वयुक्तदेहेऽभिमानः सुप्तस्य नेक्ष्यते ॥ ५५ ॥

उक्तशङ्कामुक्तश्रुतिव्याख्यानेनपरिहरति—मैवमित्यादिपद्यत्रिकेण ॥५५॥

तत्तद्देहाभिमानस्तु क्षीणः तत्कर्म्मसंक्षयात् ॥
पुण्येनपाप्मनाऽनन्वागतं रूपं परात्मनः ॥ ५६ ॥

तस्येक्षमाणत्वाभावे क्षीणत्वं तत्र च कर्मक्षयोहेतुरित्याह—तत्तदिति—तुर्हेतौ । पुण्येनेति—तदापरात्मनोरूपं पुण्यादिनाऽसम्बद्धं भवतीत्यन्वयः ॥ ५६ ॥

हृदयाख्यंमनस्तस्यपुण्यपापे ततोऽखिलाः ।
शोकामनोगताः सुप्तौशोकानात्मातिवर्त्तते । ५७ ॥

"तीर्णोही" त्यादिव्याचष्टे—हृदयाख्यंमनइत्यादि—तस्येति—मनसइत्यर्थः । पुण्यपापे इति—अस्यधर्माविविशेषः । ततइति । धर्माधर्म्माभ्यामित्यर्थः । मनोगताः शोकाः सुखादयोयेजागरणादौभासन्तेतान्शोकान् सुषुप्तावात्मातिवर्त्तते इत्येवमस्याऽन्वयः कार्य्यः ॥ ५७ ॥

ननु शोकादिवत्सुप्तौ चैतन्यमपि लुप्यते ।
सुप्तोनपश्यतीत्येवमाहुः सर्वेऽपि लौकिकाः ॥ ५८ ॥
आत्मन्यदृष्टवशतो ज्ञानमिच्छादिवद्भवेत् ।
इत्याहुस्तार्किकाः सुप्तौनज्ञानं कर्म्मणः क्षयात् ॥ ५९ ॥

"यद्वैतन्नपश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्द्दृष्टे र्विपरिलोपोविद्यते अविनाशित्वात् । न तु तद्द्वितीयमास्ति ततोऽन्यद्विभक्तं यत्पश्येदि" त्यादिकान्

"यद्वैतन्नजिघ्रतियद्वैतन्नरसयते यद्वैतन्नवदतियद्वैतन्नशृणोति यद्वैतन्नमनुतेयद्वैतन्न स्पृशतियद्वैतन्नविजानाती" त्याद्यन्तान् अष्टपर्य्यायान् शङ्कानिवर्त्तकत्वेन व्याचष्टे न न्वित्यादिपद्यषट्केन–सुप्तौ सुषुप्तौ–चैतन्यं ज्ञानं–शोकाभावादिवत्–तत्र ज्ञानाभावे-लौकिकीं शास्त्रीयां च प्रसिद्धिं शङ्काबीजमाह—सुप्त इत्यादिपद्यद्वयेन । शोकादिम-दित्यपपाठः ॥ ५८ ॥ ५९ ॥

यद्वैतन्नेत्यादिवाक्यैरस्योत्तरमुदीर्य्यते ।
नचिल्लोपः किन्तुबुद्धेर्लोपइत्येतदुत्तरम् ॥ ६० ॥

उक्तशङ्कोत्तरभूता उक्ताअष्टौपर्य्याया इति दर्शयन् तान्व्याचष्टे–यद्वैत-दित्यादिना ॥ ६० ॥

तच्छब्दः सुप्तिमाचष्टे वै शब्दोऽवधृतौ भवेत् ।
तत्र सुप्तौपुमान्नैव पश्यतीतिजना जगुः ॥ ६१ ॥

तच्छब्दवैशब्दार्थौ दर्शयँल्लोकप्रसिद्धियुक्तामुपपादयति–तच्छब्द इति ॥ ६१ ॥

अदर्शनं सर्वथेति तदाहुरविवेकिनः ।
तद्विविच्यतथाचात्मा पश्यन्नेव नपश्यति ॥ ६२ ॥

"यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यतीत्ये"वंप्रकारपर्य्यायाष्टकान्तर्गता-निवाक्यानि अविवेकिप्रसिद्ध्याप्राप्तशङ्कायानिरासकानीति दर्शयँस्तान्व्याचष्टे अद-र्शनमित्यादिपद्यद्विकेन–आत्मापश्यन्नेव तत्र तथा जागरादाविवततदृश्यं विविच्य-न पश्यतीत्युत्तरार्द्धेऽन्वयः ॥ ६२ ॥

साक्षी चैतन्यनित्यत्वात्पश्यन्नेव व्यवस्थितः ।
ज्ञातृज्ञानज्ञेयलोपाद्व्यवहारं न पश्यति ॥ ६३ ॥

उक्तार्थमेवविशदयति–साक्षीति ॥ ६३ ॥

तस्मात्सुप्तौ चिदद्वैतं यद्रूपं परमात्मनः ।
एतद्द्रढयितुं प्रोक्ताः पर्य्यायावहवः श्रुतौ ॥ ६४ ॥

सुषुप्तौ बहूनां पर्य्यायाणां कथनस्य प्रयोजनमाह–तस्मादिति ॥ ६४ ॥

ननुसर्वैर्जनैर्द्वैतं जागरेस्पष्टमीक्ष्यते ।
सद्वैत एव किं न स्यादात्मेत्याशङ्क्य वर्ण्यते ॥ ६५ ॥
यत्रैवजागरेस्वस्मादन्यत् किञ्चिदिवभ्रमः ।
तत्रैवान्यः स्वयंद्रष्टा दृश्यमन्यदिवेक्ष्यते ॥ ६६ ॥

"यत्र वा अन्यदिवस्यात्तत्रान्योऽन्यत्पश्येदन्योन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयाद्" इत्येतच्छङ्कानिरासकत्वेनव्याचष्टे–नन्वित्यादिपद्यद्विकेन ॥ ६५ ॥ ६६ ॥

अद्वैतमित्युपक्रम्य व्याख्यातं तद्धिविस्तरात् ।
सलिलादिगिरातस्य क्रियते चोपसंहृतिः ॥ ६७ ॥
आत्मासलिलवच्छुद्धः कार्य्यकारणहीनतः ।
स्वतोऽवबोधमात्रत्वात्कुतोऽविद्यादि सङ्गतिः ॥ ६८ ॥

"सलिल एकोद्रष्टाऽद्वैतोभवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशासयाज्ञवल्क्य एषाऽस्य परमागति रेषाऽस्य परमासम्पदेषोऽस्य परमालोक एषोऽस्य परमआनन्द एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्येतद्वाक्यजातमुपसंहाररूपमिति ब्रुवन्व्याचष्टे—अद्वैतमित्यादिपद्यचतुर्दशकेन ॥६७॥६८॥

अन्तरेणापि सम्बन्धं कार्यकारणवस्तुनः ।
स्वतोऽनेकात्मकं तत्स्यादित्याशङ्क्यैकतोच्यते ॥ ६९॥

"एक" इत्येतद्व्याचष्टे—अन्तरेणेति । तदिति रूपमित्यर्थः ॥ ६९ ॥

अकारक स्वभावत्वमद्रष्टेत्यभिधीयते ।
यत्र हि द्वैतमित्युक्तेर्यत्रत्वस्येतिचेरणात् ॥ ७० ॥

"यत्र हि द्वैतमिवे"ति "यत्रत्वस्य सर्वमात्मैवे"ति च श्रुतिमवष्टभ्याकारकस्वभावत्वपरत्वेनाद्रष्टृपदं व्याचक्षाण ऐक्यमुपपादयति–अकारकेति ॥ ७० ॥

स्वतः पूर्णात्मकं ज्योतिरेष द्रष्टेति चोच्यते ।
अविद्या कार्य्यराहित्यादद्वैतोऽयं भवेत्स्वतः ॥ ७१ ॥

"एषद्रष्टे" त्यादौ श्रुतद्रष्टृपदार्थः स्वतः पूर्णात्मकज्योतिः स्वरूपो न तु दर्शनक्रियाकर्तृरूप इत्याह—स्वत इत्यादि ॥ ७१ ॥

प्रत्यगूदृष्टयव्यवहिते प्रात्यक्षादात्मवस्तुनः ।
एष इत्यात्मनिर्देशोयत्साक्षादिति च श्रुतेः ॥ ७२ ॥

एषपदार्थमाह—प्रत्यगिति ॥ ७२ ॥

अव्यावृत्ताननुगतं निःसामान्यविशेषवत् ।
ब्रह्मेतिमुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ॥ ७३ ॥

ब्रह्मपदार्थमाह—अव्यावृत्तेति ॥ ७३ ॥

ततो लोकयते र्धातो र्दर्शनार्थत्व हेतुतः ।
प्रकृतत्वात्तथादृष्टे र्लोकनं लोक उच्यते ॥ ७४ ॥

लोकपदार्थमाह—तत इति ॥ ७४ ॥

विज्ञानपुरुषस्याऽस्ययोक्ताब्रह्मात्मतापुरा ।
नैष्ठिकीगतिरेषाऽत्र गत्यन्तरसमाप्तितः ॥ ७५ ॥

परमागातिरित्येतद्व्याचष्टे विज्ञानेति ॥ ७५ ॥

सम्पच्चपरमैषेव महेच्छाश्चान्यसम्पदः ।
उत्कर्षातिशयः सम्पद्विभूतिश्चेति भण्यते ॥ ७६ ॥

"एषाऽस्यपरमासम्पदि" त्येतद्व्याचष्टे—सम्पदिति ॥ एषापरमात्मताम-महेच्छा इति—महत्य इच्छा यासु ता इत्यर्थः ॥ ७६ ॥

एषोऽस्य परमोलोको लोकास्त्वन्येक्षयिष्णवः ।
क्षयिष्णुसाधनायत्तानत्वेषासाधनाश्रयात् ॥ ७७ ॥

"एषोऽस्य परमोलोक" इत्येतद्व्याचष्टे—एष इति—अन्येस्वरादयः । तेषां क्षयित्वे हेतुगर्भविशेषणम् क्षयिष्णुसाधनायत्ता इति—नत्विति—एषा ब्रह्मात्मता-साधनस्य—कारणस्य—आश्रयआश्रयणमुपादानंतत्प्रयोज्यानेत्यर्थः ॥ ७७ ॥

आनन्दः परमोऽस्यैव सुखोत्कर्षसमाप्तितः ।
सर्वानन्दातिशायित्वात्तथाचैतत्प्रवक्ष्यते ॥ ७८ ॥

"एषोऽस्यपरमआनन्द" इत्येतद्विवृणोति–आनन्द इति ॥ ७८ ॥

आनन्दः परमोऽस्यैव इत्युक्तार्थप्रसिद्धये ।
एतस्यैवेतिवचसासमर्थो हेतुरुच्यते ॥ ७९ ॥

परमानन्दत्वं साधयितु "मेतस्यैवानन्दस्ये" त्यादिवाक्यमित्याह—आनन्द इति ॥ ७९ ॥

कृत्स्नोऽपिचैष आनन्दतदविद्यैकहेतुकः ।
बुद्ध्याद्युपाध्यवच्छेदान्मात्रेति व्यपदिश्यते ॥ ८० ॥

मात्रापदार्थमाह–कृत्स्न इति—तदाविद्यैकहेतुकइति—तस्यात्मनोऽविद्या एको हेतुर्यस्यसतथा मीयतेबुद्ध्याद्युपाधिभिः परिच्छिद्यतेस्वतरभिन्नत्वेननिश्चीयते इति व्युत्पत्त्यामात्राशब्देनोक्त आनन्दः श्रुत्याबोध्यत इत्युत्तरार्द्धेनाह—बुद्ध्येति॥८०॥

मानुषादिक हैरण्यगर्भान्ताऽऽनन्दमात्रतया ।
परानन्दं बोधयितुं श्रोत्रियेतदुदाहृतिः ॥ ८१ ॥

"सयोमनुष्याणाꣳराद्ध समृद्धोभवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः समनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः सएकः पितॄणां जितलोकानामानन्दाथये शतं पितॄणां जितलोकानामानन्दाः स एकोगन्धर्व लोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्दोयश्च श्रोत्रियाऽवृजिनाऽकामहतोऽथ ये शतमा जानदेवानामानन्दाः सएकः प्रजापतिलोक आनन्दोयश्च श्रोत्रियोऽवृजिनोऽकामहतो ये शतं प्रजापतिलोक आनन्दाः स एकोब्रह्मलोक आनन्दोयश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावीराजासर्वेभ्योमान्तेभ्य उदरौत्सीदिति" इत्येतां कण्डिकां नवभिः पद्यैर्व्याचक्षाणोऽवतारयति–मानुषेति–तदिति श्रोत्रियोक्तिः ॥ ८१ ॥

श्रोत्रियोवेदशास्त्रज्ञोनिष्पापो ब्रह्मवित्त्वतः ।
भोग्यदोषान् विविच्यास्ते नातः कामेनहन्यते ॥ ८२ ॥

"यश्चश्रोत्रियोऽवृजिनोऽकामहत" इत्यानन्दोदाहरणभूतश्रोत्रियप्रति-

पादकवाक्यं व्याचष्टे—श्रोत्रिय इत्यादिपद्यत्रिकेण॥ ८२ ॥

सुखं तृप्तिरकामत्वमित्येकार्था इमा गिरः ।
सर्वकामविहीनेऽतः सुखं सर्वं व्यवस्थितम् ॥ ८३ ॥

सुखमिति-निरुक्ता गिरः शब्दाः सर्वकामविहीने श्रोत्रिये प्रयुक्ता अतस्तत्रतेषां प्रयुक्तत्वात् तत्र सर्वं सुखं व्यवस्थितमित्यन्वयः ॥ ८३ ॥

श्रोत्रिये काम राहित्यात्सर्वानन्दाः सहस्थिताः ।
सोऽश्नुते सकलान्कामान्सहेति प्राहतित्तिरिः ॥ ८४ ॥

अत्र तित्तिरिश्रुतिं सम्वादयति-श्रोत्रिय इति ॥ ८४ ॥

सूत्रात्परमनन्तत्वाद्भणितं विनिवर्त्तते ।
यतोवाचोनिवर्त्तन्त इतिश्रुत्यन्तरं जगौ ॥ ८५ ॥

"स एकः प्रजापतिलोक आनन्दोयश्च श्रोत्रिय" इत्यादेस्तात्पर्यमाह—सूत्रादिति । भणितमानन्दस्य शतत्वेन पूर्ववत्कथनम् । अत्र श्रुत्यन्तरं सम्वादयति यत इति ॥ ८५ ॥

श्रोत्रियेणानुभूतो यो ब्रह्माऽऽनन्दोऽस्य विप्रुषः ।
सार्वभौमादिसूत्रान्ताः प्राणिनोऽनुभवत्यमी ॥ ८६ ॥

"एतस्यैवानन्दस्यान्यानिभूतानि मात्रामुपजीवन्ती"त्युक्तार्थोपपादकं "स योमनुष्याणां राद्ध" इत्यादीत्याह-श्रोत्रियेणेति-अस्यात्मनः विप्रुषोलेशात् ॥८६॥

वक्तव्यार्थे समाप्तेऽपि राजा पृच्छति पूर्ववत् ।
भीतो मुनिर्भये हेतुं मेधावीत्यादिनोक्तवान् ॥ ८७ ॥
सर्वेभ्यो निर्णयेभ्यो मामरौत्सीन्न तु मुञ्चति ।
अयमेवभये हेतुतोत्तरानवबोधनम् ॥ ८८ ॥

अत ऊर्ध्वम् "विमोक्षायैव ब्रूही"त्येतद्व्याचष्टे—वक्तव्यार्थ इति "अत्र ह याज्ञवल्क्यो विभयाञ्चकार" त्यस्य व्याख्याभीतोमुनिरिति । "मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदि"त्येतद्व्याचष्टे—भयेहेतुमित्यादिना किंचिदूनेनसार्धपद्येन ॥ ८७ ॥ ८८ ॥

स्वप्नः सुप्तिश्च दृष्टान्तौ परलोकविमोक्षयोः।
तावेव मुनिना प्रोक्तौ शिष्टं दार्ष्टान्तिकद्वयम् ॥ ८९ ॥

उपसंहरति—शिष्टमित्यादि—शिष्टं मोक्षपरलोकलक्षणं द्वयं दार्ष्टान्तिकमिति योजना ॥ ८९ ॥

स्वप्नाज्जागरणं यद्वद्देहाल्लोकान्तरं तथा।
इत्यभिप्रेत्य मुनिनास्वाप्नाद्बोधोऽभिधीयते ॥ ९० ॥

"सवा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवे"त्येतत्तात्पर्यमाह—जागरणमिति॥९०॥

शकटं बहुभिर्द्रव्यैर्योजितं गुरुभारतः।
कुर्वन् शब्दान्बहून्याति चेतनेन प्रयोजितम् ॥ ९१ ॥

"तद्यथाऽनः सुसमाहित मुत्सर्जद्याया देवमेवायꣳशारीर आत्माप्राज्ञेनाऽऽत्मनाऽन्वारूढउत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवती"त्येतत् सोदाहरणं व्याचष्टे—शकटमित्यादि पद्यचतुष्टयेन ॥ ९१ ॥

शरीरस्थो हि लिङ्गात्माह्यन्वारूढश्चिदात्मना।
शब्दान्कुर्वन् हि हिक्कादीन्प्रैत्यूर्ध्वश्वासपूर्वकम् ॥ ९२ ॥

अन्वारूढश्चिदात्मनेत्यादि—चिदात्मनाऽऽन्वारूढोऽवभासमानः हिक्कादीञ्शब्दान्कुर्वन्नूर्ध्वश्वासपूर्वकंप्रतीति योजना ॥ ९२ ॥

उपाध्यारोहमन्वात्मारूढवत्प्रति भासते।
भानोरिवोदपात्रादावारोहो नात्मनः स्वतः ॥ ९३ ॥

आत्मन उपाध्यारोह उदपात्रादौ भानोरारोह इव नतु स्वरूपेणेत्याह—उपाध्येति ॥ ९३ ॥

मर्मसूत्कृष्यमाणेषु वायुनोदानरूपिणा।
मुमूर्षोरत्रयद्दुःखं स्मर्यतांतन्मुमुक्षुभिः ॥ ९४ ॥

मरणदशायां मुमूर्षोर्यद्दुःखं भवति तन्मुमुक्षुभिः स्मरणीयम् तेषां तस्य संसाराद्वैराग्यहेतुत्वादिति श्रुतेस्तात्पर्यमाह—मर्मेति ॥ ९४ ॥

रोगेण जरया वा यद्देहकार्श्यं यदाप्नुयात् ।
तदाम्रादिफलं वृक्षादिवाङ्गेभ्यः प्रमुच्यते ॥ ९५ ॥

"स यत्रायमणिमानं न्येति जरया वोपतपतावाऽणिमानं निगच्छति तद्यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवतिप्राणयैव" इत्येतद्व्याचष्टे–रोगेणेत्यादि ॥ ९५ ॥

निर्गत्यहृदयस्थानान्नाडीमार्गेण जागरम् ।
प्राप्तोऽत्रवैपरीत्येननाडीमार्गाद्धृदि व्रजेत् ॥ ९६ ॥

जागरमिति–इदं प्राप्त इत्युत्तरान्वयि–अत्रेति–मरण दशायामित्यर्थः॥९६॥

जाग्रत्स्वप्नादिसिद्ध्यर्थं गमनामने पुरा ।
इदानीं त्वन्यदेहेऽसौ प्राणं धारयितुं व्रजेत् ॥ ९७ ॥

पूर्वगमनागमनवाक्येनात्रत्यतद्वाक्यस्य पुनरुक्तत्वशङ्कां निवर्तयति–जाग्रदिदि ॥ ९७ ॥

ननूपादित्सिते देहे भोगाय प्राणधारणम् ।
भोग्यसम्पादने नास्ति शक्तिरस्येति चेच्छृणु ॥ ९८ ॥

"तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्यैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवꣳहेवं विदꣳसर्वाणि भूतानिप्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छती" त्येतद्व्याख्यातुमवतारयति–नन्वित्यादिना पद्यचतुष्केण । भोग्येति भाविदेहबन्ध्वादीत्यर्थः । अस्येति–भोगायभाविदेहमुपादित्सोरात्मन इत्यर्थः ॥ ९८ ॥

तत्कर्मोपार्जितैरन्यैर्भोग्यं सम्पाद्यते पुरा ।
इत्येतद्विशदीकर्तुं राजदृष्टान्त उच्यते ॥ ९९ ॥

राजदृष्टान्तस्य प्रयोजनमाह तदिति–अन्यैरिति–भाविदेहबन्ध्वादिभिरित्यर्थः । पुरेति–अस्योत्पत्तेः प्रागित्यर्थः ॥ ९९ ॥

राज्ञा जीवितदानेन ह्युग्रादय उपार्जिताः।
मुमूर्षुणा भाविदेहबन्धवः कर्मणार्जिताः ॥ २०० ॥

दृष्टान्तं विभजते—राज्ञेति—जीवितदानेनेति वेतनादिनेत्यर्थः ॥ २०० ॥

एवं पुत्रादिभावाय प्रतीक्षन्तेऽखिलाः सदा।
ऋतावस्मिन्समायाति ब्रह्म पुत्रादिरूपतः ॥ १ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—एवमिति ॥ १ ॥

नन्विन्द्रियाणि प्रेतस्य लीयन्ते वपुषा सह।
इत्याहुस्तार्किका ब्रह्म निरुपाधि कथं व्रजेत् ॥ २ ॥

"तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायान्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवती"त्येतद्व्याख्यातुं शङ्कते—नन्विति ॥ २ ॥

प्राणोपाधिक एवात्मा गच्छतीति विवक्षया।
प्राणानामात्मसामीप्यगतिं वक्ति मृतौ श्रुतिः ॥ ३ ॥

उक्तशङ्कां निरासितुमेतद्वाक्यतात्पर्यमाह—प्राणोपाधिक इति ॥ ३ ॥

राजानं प्रयियासन्तमाभिमुख्येन सेवितुम्।
आयान्त्युग्रादयस्तद्वत्प्राणानामात्मसंगतिः ॥ ४ ॥

राजदृष्टान्तं बिभज्य तत्सिद्धमर्थं दार्ष्टान्तिके योजयति—राजानमिति ॥ ४ ॥

तृतीयब्राह्मणे प्रोक्ता देहे स्वप्नादिसंसृतिः।
देहान्तरेषु संसारो मुक्तिश्चाथ प्रवक्ष्यते ॥ ५ ॥

वृत्तं कथयँश्चतुर्थब्राह्मणस्य संसारो मुक्तिश्चेत्येतद्द्वयं विषय इत्याह तृतीयेति ॥ ५ ॥

समुमूर्षुर्यदा देहे दौर्बल्यं प्राप्यमूढताम्।
प्राप्नोतीव तदा चक्षुराद्या आयान्ति देहिनम् ॥ ६ ॥

"सयत्रायमात्माऽवल्यं न्येत्य संमोहमिवन्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैव चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञोभवती"त्येतां संसारवर्णनपरां चतुर्थब्राह्मणप्रथमकाण्डिकां व्याचष्टे–स इत्यादिपद्यपञ्चकेन सयत्रेत्यादिप्राणा–अभिसमायन्तीत्यन्तं वाक्यं व्याचष्टे स इति पद्येन ॥ ६ ॥

राजदृष्टान्ततः प्रोक्तां प्राणानामात्मसंगतिम् ।
अनूद्यतत्प्रकारोऽत्र विस्तरेणाभिधीयते ॥ ७ ॥

पुनरुक्तिमाशङ्क्य समाधत्ते–राजेति ॥ ७ ॥

तेजोमात्राश्चक्षुराद्याः प्रसृताः मत्स्यजालवत् ।
जागरेऽथमुमुर्षुस्ताः समादाय हृदि व्रजेत् ॥ ८ ॥

" स एतास्तेजोमात्रा"इत्यादि "अन्ववक्रामती"त्यन्तं विवृणोति । तेजोमात्रा इति ॥ ८ ॥

अनुगृह्णाति यः पूर्वं चाक्षुषः पुरुषोरविः ।
भोगार्थमधुना सोऽयं भोगाभावादुपेक्षते ॥ ९ ॥

इन्द्रियस्योपसंहारादादित्यस्याप्युपेक्षया ।
आत्मा द्रष्टुमसामर्थ्यादरूपोऽज्ञो भवेत्तदा ॥ २० ॥

" स यत्रैष चाक्षुषः पुरुष" इत्यादिक"मरूपज्ञो भवती"त्यन्तं च व्याचष्टे—अनुगृह्णातीत्यादिपद्यद्विकेन ॥ ९ ॥ १० ॥

अस्मिन्नर्थे सर्वलोकप्रसिद्धिरभिधीयते ।
एकीभावादयं नैव पश्यतीति जगुर्जनाः ॥ ११ ॥

"एकी भवति न पश्यतीत्याहुरेकी भवति न जाघ्रतीत्याहुरेकीभवतिनरसयत इत्याहुरेकी भवति न वदतीत्याहुरेकी भवति न शृणोतीत्याहुरेकी भवति न मनुत इत्याहुरेकी भवति न स्पृशतीत्याहुरेकी भवति न विजानात्याहुस्तस्य हैतस्य हृदयस्याग्रं विद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्योवा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳसर्वे प्राणा

अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामतितंविद्याकर्मणी समन्वारभेते पूर्वप्रज्ञाचे"त्येतां काण्डिकां व्याचष्टे—अस्मिन्नित्यादिनापद्यद्वादशकेन तत्र तावत् "न पश्यतीत्येकी भवती"ति लोकप्रसिद्धिपरं प्रथमपर्यायं विवृणोति। अस्मिन्निति ॥ २१ ॥

चक्षुर्बुद्धावैक्यमेति रवौरव्यंश एकताम्।
इन्द्रियान्तरवद्देवेष्वयं न्यायोऽत्रयोज्यताम् ॥ १२ ॥

एकीभावादित्येतद्व्याचष्टे— चक्षुरिति—चक्षुस्तदा बुद्धौ लीयते चक्षुषि स्थितस्तदनुग्राहकः सूर्य्यांशोऽधिदैवतेबाह्यरवौ लीयते इति पूर्वार्द्धार्थः। इदमेव व्याख्यानमेकी भवति न जिघ्रती"त्यादिषूत्तरेषुसप्तसुपर्य्याये येष्वतिदिशति—इन्द्रियान्तरवदिति घ्राणं बुद्धावैक्यमेति तस्थस्तदनुग्राहकोऽश्विनोरंशस्तयोर्देवयोरैक्यमाप्नोतीत्येवंसर्वपर्य्यायेषु योजनेत्यर्थ ॥ १२ ॥

कृत्स्नप्राणोपसंहारसंयुक्तस्य मुमूर्षतः।
नाड्यग्रं हृदयस्याथ प्रकर्षेण प्रकाशते ॥ १३ ॥

"तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतनेने"त्येतद् वाक्यं प्रद्योत पदार्थं दर्शयन् लोकमिति द्वितीयान्तं पश्यतीतिक्रियापदं चाध्याहृत्य व्याचष्टे—कृत्स्नेनेत्यादिनापद्यत्रिकेण ॥ १३ ॥

भाविदेहात्मता यस्य प्रत्यक्चैतन्यबिम्बिता।
वासनैवात्मनः सैषा प्रद्योतवचसोच्यते ॥ १४ ॥

भावीति—यस्य भाविदेहात्मता तस्यात्मनः प्रत्यक् चैतन्यप्रतिबिम्बविशिष्टा या वासना सैवैषा प्रद्योतशब्देन श्रुतावुच्यते इति योजना ॥ १४ ॥

स एष कर्मजो बुद्धेः प्रकाशो जायते मृतौ।
स्वकर्मनिर्मितं लोकं तेनाऽत्मायं प्रपश्यति ॥ १५ ॥

उक्तप्रद्योतनहेतुमाह— स एष इति। प्रत्यक् चैतन्यप्रतिबिम्बविशिष्टवासना रूपोयः प्रद्योतपदार्थलक्षणः प्रकाशःस एष कर्मजो मृतौ जायत इति योजना। उक्तवाक्यार्थमाह —स्वकर्मेत्यादि ॥ १५ ॥

स्वप्नवत्प्राप्य तद्भावं पश्चाद्देहाद्विनिः सरेत् ।
गम्यलोकानुसारेण द्वारं स्याच्चक्षुरादिकम् ॥ १६ ॥

"एष आत्मा निष्क्रामति चक्षुषोवे"त्यादि व्याचष्टे । स्वप्नवदिति । तद्भावमिति । भाविदेहात्मत्वमित्यर्थः–पश्चादित्यादि–चक्षुषो वेत्यादि वाक्ये तेनेति पदं तत्सजातीयज्ञानानन्तरपरमनुषञ्जनीयम् । तथा चायमर्थः पश्चाद्भाविदेहविषयकोक्तज्ञानान्तरमुत्पन्नेन तेन नाडी विशेषविषयकज्ञानेन देहाच्छरीरान्निर्गच्छतीति चक्षुषोमूर्द्ध्नोवेत्यादिना द्वारत्वेन श्रुतं चक्षुरादिकं भाविलोक प्राप्तिप्रयोजकमित्याह—गम्येत्यादिना ॥ १६ ॥

देहाज्जिगमिषुः प्राणसहितो निर्गतः पुनः ।
सविज्ञानो भवेत्पूर्वं हृदि प्रद्योतनं यथा ॥ १७ ॥

"तमुत्क्रामन्तं प्राण"इत्यादि "प्राणा अनूत्क्रामन्ती"त्यन्तं व्याचष्टे । देहादिति—देहाद्बहिर्गन्तुमिच्छुस्तस्मान्मुख्यगौणप्राणसहितो वहिर्निर्गतः पुनर्ज्ञानवान् भवति । बहिर्गतस्य तस्य पुनर्ज्ञाने दृष्टान्तमाह–पूर्वमित्यादि, बहिर्निर्गमनात्पूर्वं हृदये प्रद्योतने नाडीविशेषविषयकज्ञानमिवेत्यर्थः ॥ १७ ॥

पुरानाडीविशेषेण निर्गन्तुं ज्ञानमीरितम् ।
गन्तुं लोकविशेषेऽथ पुनर्विज्ञानमीर्यते ॥ १८ ॥

यथाक्रमं पूर्वोत्तरज्ञानयोः फलं देहाद्बहिर्निर्गमनं लोकविशेषगमनं चाह–पुरेति॥ १८ ॥

हेतुर्जाग्रद्वासनाऽस्य स्वप्नारम्भे यथा तथा ।
जन्मान्तरारम्भहेतुः कः स्यादिति तदुच्यते ॥ १९ ॥

"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञाचे" त्येतद्व्याख्यातुमवतारयति–हेतुरिति–यथास्यात्मनः स्वप्नारम्भे जाग्रद्वासनाहेतुस्तथा को जन्मान्तरारम्भहेतुः स्यादित्याशङ्कायां श्रुत्या तत्–तन्निरसनमुच्यते कथ्यते इत्यत्र योजना ॥ १९ ॥

विद्या सम्पादिता तेन पुरा कर्म च यत्कृतम् ।
या वासना च तत्सर्वं जन्मभोग्यादिकारणम् ॥ २० ॥

अवतारितश्रुतिं व्याचष्टे—विद्येत्यादि श्लोकत्रिकेण—पूर्वजन्मन्यात्मनायोपासनासम्पादिता यच्च कर्म कृतं या च तदीया वासनैतत्त्रयं जन्मोत्पत्तिर्भोग्यं शरीरेन्द्रियादिकमादिनासुखदुःखान्यतरसाक्षात्काररलक्षणोभोग एतत्सर्वस्य कारणं हेतुरित्यर्थः॥२०॥

देहं विद्यापरिच्छिन्द्यादीदृशोदेह इत्यथ ।
विकर्तृकर्मवोढ्री तु पूर्वप्रज्ञेह पूर्वयोः ॥ २१ ॥

देहमित्यादि—विद्योपासनालक्षणा देहं परिच्छिन्द्यात् परिच्छेदोज्ञानविशेषस्तमाह—ईदृशोदेहइतीति—अथ कर्म्म धर्मादिकं विकर्तृ विविधकार्यकारि इह वासना लक्षणापूर्वप्रज्ञा च पूर्वयोर्विद्यानिष्ठपरिच्छेदकत्वधर्मादिनिष्ठविविधकार्यकर्तृत्वयोर्वोढ्री-निर्वाहिकेति योजना ॥ २१ ॥

समर्था सैव ते यस्मादुद्वोढुं ज्ञानकर्मणी ।
नरस्यातः प्रधानत्वात्ताभ्यां सा गृह्यते पृथक् ॥ २२ ॥

विद्याकर्मभ्यां पृथक् पूर्वप्रज्ञाग्रहणे प्राधान्यं हेतुमाह—समर्थेति—यस्मान्नरस्य ते निरुक्ते विद्याकर्मणी उद्वोढुं निर्वाहयितुं सैव पूर्वप्रज्ञैव समर्थाशक्ताऽवस्तस्यास्तयोरपेक्षया प्रधानत्वात् सा पूर्वप्रज्ञा ताभ्यां विद्याकर्मभ्यां पृथग्गृह्यत इति योजना ॥ २२ ॥

सर्वगस्य मनोमात्रगतिं ब्रूतेऽत्र तार्किकः ।
श्रुतिस्तु स्वमतं ब्रूते जालूकाख्यनिदर्शनात् ॥ २३ ॥

"तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽत्मानमुपसँहरत्येवमेवायमात्मेदँशरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसँहरती"त्येतद्व्याख्यातुमवतारयति । सर्वगस्येति ॥ २३ ॥

जलूका हि तृणाग्रस्था स्वमुखेन तृणान्तरम् ।
अवलम्ब्य वपुः शिष्टं सर्वं तत्रोपसंहरेत् ॥ २४ ॥

दृष्टान्तं विभजते—जलूकेति—तृणान्तरमिति—तृणान्तरमवलम्ब्यशिष्टं स्वमुखाद्भिन्नं सर्वं शरीरं तत्र तृणान्तरे यस्य तृणस्याग्रेस्थिता तद्भिन्ने तृणे इति यावत् । उपसंहरेत् प्रापयेदित्यर्थः ॥ २४ ॥

लिङ्गदेहोपाधिरात्मा धिया देहान्तरं स्मरन् ।
लिङ्गोपाधिकमात्मानं प्रापयेदन्यदेहकम् ॥ २५ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति–लिङ्गेति–अन्यदेहकमिति–अन्यं देहमित्यर्थः । कन्नत्रस्वार्थिकः ॥ २५ ॥

ननु देहान्तरारम्भे उपादानं किमात्मनः ।
एतद्देहारम्भकं यत्तदेवोतान्यदीर्यताम् ॥ २६ ॥

" तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳरूपं तनुत एवमेवायमात्मेदꣳशरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳरूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानामि" त्येतां चतुर्थीं कण्डिकामवतार्य्य व्याख्यातुं शङ्कते–नन्विति ॥ २६ ॥

स्वर्णकारः सुवर्णांशमादायान्यन्नवं नवम् ।
तेनैव कुरुते भूय उपमृद्यातियत्नतः ॥ २७ ॥

तत्र दृष्टान्तांशं विभजते–स्वर्णकारइति–एतेन श्रुतिस्थपेशस्कारिपदं व्याख्यातम् ॥ २७ ॥

पञ्चीकृतास्तु भूतांशाः स्थूलदेहस्य हेतवः ।
अल्पत्वेनाति सूक्ष्मास्तैर्लिङ्गं तिष्ठति वेष्टितम् ॥ २८ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति–पञ्चीति । येऽल्पत्वेनातिसूक्ष्माः स्थूलदेहहेतवः पञ्चीकृताभूतांशास्तैर्वेष्टितं सूक्ष्मशरीरं तिष्ठतीति योजना ॥ २८ ॥

निर्मितस्तैरयं देहः पोषितः पितृवीर्यतः ।
मृतौ कंचुकवत्त्याज्यो बाह्यांशो वीर्यनिर्मितः ॥ २९ ॥

उपसंहरति–निर्मित इति–तैरिति–पूर्वपद्योक्तभूतांशैर्निर्मितोऽयं देह इत्यन्वयः । शुक्रशोणितयोरस्य पोषणेहेतुत्वं न निर्माण इत्याह–पोषितः पितृवीर्यत इति–पित्रिति–मातुरप्युपलक्षणम् ॥ शुक्रशोणितनिर्मितोबाह्यांशोमरणावस्थायां हेयो भवति नतूक्तभूतांशवेष्टितसूक्ष्मशरीरमपीत्युत्तरार्द्धार्थः ॥ २९ ॥

अधिष्ठानारोप्यभागौ तेषु देहेषु यौ स्थितौ।
तादृशौ विशदीकर्तुं स वा इत्यादिका श्रुतिः ॥ ३० ॥

"स वा अयमात्मे"त्यादिकां "यत्कर्म कुरुते तदभिसम्पद्यत" इत्यन्तां कण्डिकां व्याचक्षाणस्तद्विषयमाह—अधिष्ठानेति ॥ ३० ॥

यः संसारी पुरा प्रोक्तः स एवायं स्वतः स्फुरन्।
साक्षिचैतन्यरूपत्वादधिष्ठान मनात्मनः ॥ ३१ ॥

"स वा अयमात्माब्रह्मे"त्यधिष्ठानपरं भागं व्याचष्टे–यइति ॥ ३१ ॥

विज्ञानं कर्तृतोपाधि र्मनः प्राणादयोऽखिलाः।
बहिर्बहिः समारोप्याः सर्वमारोपितं चिति ॥ ३२ ॥

"विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमय तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयोधर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इती"त्येतद्वाक्यजातमारोप्य परं व्याचष्टे—विज्ञानमित्यादिपद्यत्रिकेण ॥ ३२ ॥

तद्यदित्यादिना सर्वशब्दस्यार्थ उदाहृतः।
प्रत्यक्षवस्तुन्यध्यासे सतीदंमयता भवेत् ॥ ३३ ॥

"तद्यदेतदिदमय" इत्येतद्व्याचष्टे–तादित्यादि। सर्वेति। सर्वमय इत्यत्रत्यमयट्प्रकृतिभूतेत्यर्थः। सर्वपदार्थमभिधायैतद्वाक्यार्थमाह–प्रत्यक्षेति ॥ ३३ ॥

परोक्षवस्तुन्यध्यासाददोमय इतीर्यते।
आरोपोक्तिसमाप्त्यर्थमितिशब्दः प्रयुज्यते ॥ ३४ ॥

"अदोमयइती"त्येतद्व्याचष्टे–परोक्षेति–इतिशब्दकृत्यमाह–आरोपेति। उक्तिः कथनम्। समाप्त्यर्थमिति। समाप्तिद्योतनायेत्यर्थः ॥ ३४ ॥

इदंमयत्वं विस्पष्टमैहिकत्वादपेक्ष्य तत्।
अदोमयत्वं व्याचष्टे यथाकारीति वाक्यतः ॥ ३५ ॥

"यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो

भवति पुण्यः पुण्येन कर्मणाभवति पापः पापेन" इत्येतद्व्याचष्टे-इदमिति । श्रुतिरैहिकत्वाद्विस्पष्टमिदमयत्वं यतस्ततस्तदुपेक्ष्यादोमयत्वमाचष्टेकथयति यथाकारी यथाचारीत्यादिनेतियोजना ॥ ३५ ॥

करणं नित्यकर्म स्यात्काम्यं तु चरणं भवेत् ।
कर्म वा करणं शक्तिश्चरणं प्रत्ययात्मकम् ॥ ३६ ॥

करणचरणपदार्थावाह—करणमिति—करणंकृधात्वर्थः नित्यकर्म, चरधात्वर्थः काम्यंकर्मेत्युत्तरेणान्वयः प्रकारान्तरेण तावाह—वेति—अथवा करणं क्रियाशक्तिश्चरणंज्ञानमित्यर्थः ॥ ३६ ॥

वासना कर्म्म विद्या च त्रयं जन्मप्रयोजकम् ।
उक्तं तत्र प्रधानत्वं कर्मणः श्रूयते पुनः ॥ ३७ ॥
पूर्वकाण्डपरा इत्थं कर्मप्राधान्यमूचिरे ।
अथ वेदान्तशास्त्रज्ञाः प्राहुः कामप्रधानताम् ॥ ३८ ॥

"अथोखल्वाहुः काममय एवायं पुरुषइति स यथा कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्मकुरुते तदभिसंपद्यते तदेषश्लोको भवति । तदेव सक्तः सह कर्मणेति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्यम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमान" इत्येतद्वृत्तं कथयन् व्याख्यातुमवतारयति—वासनेत्यादिसार्धपद्यद्विकेन॥३७॥३८॥

इत्येतद्विशदीकर्तुं स यथेत्युत्तराश्रुतिः ।
कामः क्रतुः कर्मजन्मेत्येषामेव क्रमो भवेत् ॥ ३९ ॥

अवतारितां श्रुतिं व्याचष्टे—काम इति—काम इच्छासामान्यम् क्रतुरिच्छा विशेषोरुचेरतिशय इति वक्ष्यमाण उत्कटेच्छेत्याद्यपरपर्य्यायः । कर्म जन्मोत्क्षेपणादि लक्षणक्रियोत्पत्तिरित्येषामेव नतु क्रमिकत्वेन तार्किकाभिमतानामिष्टसाधनत्वादिज्ञानचिकीर्षाकृतिक्रमोत्पत्तीनामित्यर्थः आसां निरासे श्रुतितात्पर्यमिति फलितोऽर्थः ॥ ३९ ॥

रुचेरतिशयः काम्ये विषये क्रतुरीर्यते ।
पाक्षिकं धर्मकामे स्यात्करोत्येव कृतौ सति ॥ ४० ॥

क्रतुपदार्थमाह–रुचेरिति–काम्ये लौकिकेवैदिकेच विषये रुचेरतिशयः क्रतुरीर्य्यते कथ्यत इति योजना–प्रसिद्धार्थत्वात् कामकर्मजन्मपदमव्याख्याय व्याख्यायचाप्रसिद्धार्थत्वात् क्रतुपदमेषामेवक्रमोभवेदित्युक्तार्थमभिनीय दर्शयति–पाक्षिकमिति–अत्रेयं योजना धर्मविषयायां कामनायां सत्यां पाक्षिकं यथा भवति तथा कदाचिदिति यावत् निरुक्तः क्रतुः स्यात् संभवति तस्मिन् सति कृतिस्तस्यां सत्यां करोत्येव क्रियाभवत्येवेति धातूनामेनकार्थत्वाद्वा लक्षणया वा क्रिया भवनेऽत्र करोतिः ॥ ४० ॥

कामप्राधान्यदार्ढ्यार्थं मन्त्रस्योदाहृतिः श्रुतौ ।
लिङ्ग्यते गम्यते सर्वं मनसोऽतोऽस्य लिङ्गता ॥ ४१ ॥

मन्त्रोदाहरणप्रयोजनं दर्शयँस्तत्रत्यलिङ्गपदं व्याचष्टे–कामेति–अत उक्त योगात् अस्य मनसः लिङ्गता लिङ्गपदव्यवहार्य्यत्वम् ॥ ४१ ॥

यः पुरा स्वप्नदृष्टान्तात्परो लोको विवक्षितः ।
इतिन्वित्युपसंहारं तदुक्तेः कृतवान् मुनिः ॥ ४२ ॥

"इतिनुकामयमान" इत्येतद्वाक्यं निगमनरूपमित्याह–य इति–तदुक्तेः स्वप्नदृष्टान्तेन परलोकप्रतिपादकवाक्यस्योपसंहारं मुनिर्याज्ञवल्क्यः कृतवानिति योजना ॥ ४२ ॥

मुक्तिः सुषुप्तिदृष्टान्तान्मुनिना या विवक्षिता ।
मुनिरारभते वक्तुं तामथेत्यादिवाक्यतः ॥ ४३ ॥

"अथाकामयमानो योऽकामोनिष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैवसन् ब्रह्माप्येती" त्येतद्व्याचष्टे–मुक्तिरित्यादिपद्यपञ्चदशकेन–तां निरूक्ताम् ॥ ४३ ॥

पूर्वोक्तकामिवैषम्यमथ शब्देन सूच्यते ।
कामी संसरतीत्युक्तं कामाभावे विमुच्यते ॥ ४४ ॥

अथशब्दद्योत्यार्थं दर्शयन् कामरूपसंसारकारणाभावे तद्रूपकार्याभाव इत्याह। पूर्वोक्तेति ॥ ४४ ॥

परमानन्दरूपत्वमात्मनश्चेद्विबुध्यते ।
कुतः कामयते भोग्यं ततो बोधादकामता ॥ ४५ ॥

कामाभावे बोधः प्रयोजक इत्याह–परेति ॥ ४५ ॥

बोधलभ्यमकामत्वं यथाकामेत्यसूत्रयत् ।
योऽकाम इत्यादिनैतत्सूत्रं विव्रियते स्फुटम् ॥ ४६ ॥

बोधलभ्याकामत्वसंसूचकयथाकाम इत्यादिश्रुतिविवरणभूतयोऽकाम इत्यादिवाक्यामित्याह ॥ बोधेति । असूत्रयदिति । सूत्रभूतेन वाक्येन सूचितवानित्यर्थः । अयम्भावः । स यथाकाम इत्यादिश्रुतेरविद्या प्रयोज्यः काम एवात्मनः सर्वमयत्वे संसारित्वे च हेतुरिति पर्यवसितार्थः एवञ्चार्थादायातं यदकामत्वं बोधलभ्यं तेन च संसारित्वसर्वमयत्वयोर्निवृत्तिरिति ॥ ४६ ॥

योऽकामस्तस्य न प्राणात्क्रामितीति योजना ।
संसृतिः कामिनो यद्वदकामोमुच्यते तथा ॥ ४७ ॥

अकामत्वं प्राणोत्क्रमणाभावेप्रयोजकं तत्र निष्कामत्वं तत्राप्तकामत्वं तत्र चात्मकामत्वमितिसमनन्तरवक्ष्यमाणं मनसि निधायमाकश्चिद्योनिष्कामो न तस्य प्राणा उत्क्रामन्तीत्यादियोजनां कार्षीदिति स्वाभिमतां योजनामाह–य इति–सोदाहरणमकामत्वस्यमोक्षहेतुत्वं दर्शयति संसृतिरिति ॥ ४७ ॥

दृष्टानुश्रविका वाह्यकामा यस्य नसन्त्यसौ ।
अकामस्तादृशत्वं तु निष्कामत्वेन सिध्यति ॥ ४८ ॥

अकामपदार्थमाह–दृष्टानुश्रविकाइति–दृष्टा ऐहिका आनुश्रविका वेदबोधिताः पारलौकिकाः तादृशत्वं निरुक्ताकामत्वम् ॥ ४८ ॥

विभ्रमापादिताः कामाः प्रत्यक्तत्त्वविवेकिनः ।
यस्माद्विनिर्गताः सोऽयंनिष्काम इति भण्यते ॥ ४९ ॥

निष्कामपदार्थमाह–विभ्रमेति ॥ ४९ ॥

आप्तकामत्वतः सिद्ध्येद्बुद्धेः कामाविनिर्गमः ।
अप्राप्तौ काम्यमानस्य कामः क्वापि न निःसरेत् ॥५०॥

आप्तकामत्वं निष्कामत्वेहेतुरित्याह—आप्तेति ॥ ५० ॥

एवंसत्याप्तकामत्वं निष्कामत्वस्यसाधनम् ।
कामाप्तौ त्वात्मकामत्वमेव हेतुर्नचेतरत् ॥ ५१ ॥

आप्तकामत्वेनिष्कामत्वहेतुत्वंदर्शयन्नाप्तकामत्वे आत्मकामत्वस्य हेतुतामाह—एवमिति ॥ ५१ ॥

निरुपाधिपरानन्द आत्मेतिश्रुतिसंमतः ।
आनन्दाः सर्वभूतानां तस्मिन्नन्तर्भवन्ति हि ॥ ५२ ॥

आत्मन आत्मकामत्वमुपपादयति—निरुपाधीत्यादिसार्द्धेन ॥ ५२ ॥

पुत्रादिजन्या आनन्दा अपि तस्मिन्नवस्थिताः ।
तथाविधात्मकामोऽयमाप्तकामोभवेदयम् ॥ ५३ ॥

आत्मकामस्याप्तकामत्वे तस्य निष्कामत्वे तस्याकामत्वें तस्य च संसाराभावद्वारामुक्तौहेतुत्वमाह—तथाविधात्मकाम इत्यादिसार्द्धपद्येन ॥ ५३ ॥

यदीदृगाप्तकामो यः सनिष्कामो भवेत्ततः ।
निष्कामत्वादकामः सन् संसारात्प्रविमुच्यते ॥ ५४ ॥

यदीदृगिति—यद् यस्मादीदृगाप्तकामो यः स ईदृगाप्तकामः ततः आप्तकामत्वान्निष्कामोभवतीति योजना ॥ ५४ ॥

उत्पन्नतत्त्वज्ञानस्य प्राणा अज्ञानबाधनात् ।
नोत्क्रामन्ति नतिष्ठन्ति नच नश्यन्त्यहेतुतः ॥ ५५ ॥

"नतस्य प्राणा उत्क्रामन्ती" त्येतद्व्याचष्टे—उत्पन्नेति । नचेत्यादि—नच नष्टा भवन्तीत्यर्थः । प्रतिज्ञा त्रितये हेतुमाह । अहेतुत इति । कारणस्याविद्यारूपस्य तत्त्वज्ञानं बाधितत्वेनाभावादित्यर्थः । अहेतुत इत्यनेनाऽज्ञानं बाधत्तादिनेति ॥ ५५ ॥

बन्धस्य कल्पितत्वेन तन्मुक्तिरपि कल्पिता ।
इत्यभिप्रायमाचष्टे ब्रह्मैवेत्यादिवाक्यतः ॥ ५६ ॥

तर्हिसन्त्वेव ते तथा च द्वैतापत्तिरित्याशङ्क्यप्राणादिबन्धस्य कल्पितत्वात् शुक्तिरूप्यादिवत् त्रैकालिकनिषेध प्रतियोगित्वेन तुच्छत्वान्नैवमिति परिहरन् "ब्रह्मैवसन् ब्रह्माप्येती"ति वाक्यं व्याचष्टे बन्धस्येति–अभिप्रायमिति–अस्य "नतस्य प्राणा" इत्यादिवदतः स्वस्येति शेषः आचष्ट इति–अस्यमुनिरितिशेषः ॥ ५६ ॥

अविद्याध्वस्तिमापेक्ष्य सम्यग्धीजन्ममात्रतः ।
आत्मा ब्रह्मैवसन्साक्षाद्ब्रह्माप्येतीति सुस्थितम् ॥ ५७ ॥

उक्तवाक्यस्य तात्पर्यमभिधायतद्वाक्यार्थमाह–अविद्येति–आत्मासाक्षाद् ब्रह्मैवसन् सम्यग्धीजन्ममात्रतोऽविद्याध्वंसमपेक्ष्य ब्रह्माप्येतीत्यत्रयोजना ॥ ५७ ॥

इत्येतत् सर्ववेदान्तसर्वस्वं ब्राह्मणोदितम् ।
अस्यैवार्थस्य दार्ढ्यार्थं मन्त्रोदाहरणं भवेत् ॥ ५८ ॥

सङ्गतये वृत्तकथयन् "तदेषश्लोकोभवती"त्युपक्रम्य "यदासर्वेप्रमुच्यन्ते कामायेऽस्य हृदिश्रिताः । अथमर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते"इत्युदाहृतमन्त्रस्य प्रयोजनमाह–इत्येतदिति–ब्राह्मणेनोक्तं ब्राह्मणोदितम् अस्य ब्राह्मणोक्तस्य ॥ ५८ ॥

कामिनः सर्वसंसारः पुरामन्त्रेणवर्णितः ।
अकामस्यविमोक्षोऽत्रतथामन्त्रेणवर्ण्यते ॥ ५९ ॥
पुंसोहृदिश्रिताः कामा मुच्यन्ते निखिला यदा ।
तदानीममृतोभूत्वाब्रह्मैवात्रसमश्नुते ॥ ६० ॥

मन्त्रेणेति "तदेव सक्तः सहकर्मणैती"तिमन्त्रेणेत्यर्थः । वर्णित इति–अस्य यथेतिशेषः ॥ ५९ ॥ ६० ॥

ननु ब्रह्माश्नुतेऽत्रेति जीवतोमुक्तिरीरिता ।
जीवत्त्वे को विशेषोऽस्य बन्धान्मुक्तावितीर्यताम् ॥ ६१ ॥

"तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्तो शयीतैव मेवेदंशरीरं शेतेऽथायमशरीरोऽमृतः प्राणोब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति–होवाच जनको वैदेह" इत्येतद्व्याचष्टे—नन्वित्यादि पद्यदशकेन–जीवन्मुक्तस्य बन्धान्मुक्तौ कोविशेष इति शङ्का ॥ ६१ ॥

अभिमानः पूर्वमासीद्देहादावधुना तथा ।
नास्तीत्यत्राति विस्पष्टः सर्पदृष्टान्त उच्यते ॥ ६२ ॥

सर्पदृष्टान्तवाक्यं विवृण्वन् शङ्कामुक्तां निरस्यति—अभिमानइति—तथेत्युत्तरान्वयि ॥ ६२ ॥

प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ।
नेति नेति स्वरूपत्वादशरीरो भवत्ययम् ॥ ६३ ॥

अशरीर इत्येतद् व्याचष्टे । प्रत्यगिति ॥ ६३ ॥

स्थूलदेहं परित्यज्य लिङ्गदेहयुतो यदि ।
मृतस्तदा स्यान्नत्वेवममृतोऽसावतो भवेत् ॥ ६४ ॥

अमृत इत्येतद् व्याचष्टे—स्थूलेति । यदि स्यात्तदामृत इति योजना एवमिति—लिङ्गदेहयुत इत्यर्थः । असौ जीवन्मुक्तः—अत इति—उक्त देह रहितत्वादित्यर्थः ॥ ६४ ॥

प्रकृष्टचेष्टाहेतुत्वात्साक्ष्युक्तः प्राणशब्दतः ।
कोह्येवान्यादिति प्रोक्तं चेष्टाहेतुत्वमात्मनः ॥ ६५ ॥

प्राण इत्यनेन साक्षीग्राह्योनभौतिक इत्येतत् श्रुत्यन्तरसहकृतप्राणशब्दयोगेन दर्शयति—प्रकृष्टेति ॥ ६५ ॥

साक्षिणो ब्रह्मरूपत्वं ब्रह्मैवेत्यभिधीयते ।
संसर्गशङ्कानुत्त्यर्थमेवकारः प्रयुज्यते ॥ ६६ ॥
संयोगः समवायो वा नैव ब्रह्मात्मनोरिह ।
अखण्डैकरसत्वं तु भवतीति विवक्षितम् ॥ ६७ ॥

ब्रह्मैवेत्येतत् प्राणशब्दितसाक्षिणोब्रह्मात्यन्ताभेदपरं सद् गुणगुण्यादिवत् तयोः सम्बन्धं निरस्यतीत्याह । साक्षिण इत्यादिपद्यद्विकेन ॥ ६६ ॥ ६७ ॥

तदेव विशदीकर्तुं तेज एवेत्युदीर्यते ।
चैतन्यं तेज इत्युक्तं तच्चैकमुभयोरपि ॥ ६८ ॥

अविद्यादिनिवृत्तिश्च चैतन्यव्यतिरेकतः ।
नास्तीत्येवमभिप्राय एवकारेण सूच्यते ॥ ६९ ॥

तेज एव इत्येतद्विवृणोति-तदेवेत्यादिपद्यद्विकेन ॥ ६८ ॥ ६९ ॥

तत्त्वविद्यारसाकृष्टः श्रोतुं वाञ्छति संग्रहात् ।
साधनान्यपि विद्यायाः श्रोतुमिच्छति भूपतिः ॥ ७० ॥

"सोऽहं भगवत" इत्यादि जनकवचनतात्पर्यमाह-तत्त्वेति ॥ ७० ॥

एतत्सर्वं विवक्षुः सन्मुनिः संग्रहरूपिणः ।
श्लोकानुदाहरत्तत्र ज्ञानमार्गमिमं जगौ ॥ ७१ ॥

"तदेतेश्लोकाभवन्ती" त्युपक्रान्ता "नणुःपन्था" इत्यादीन् "वाचोविग्लापनꣳहितदि"त्यन्तांश्चतुर्दशश्लोकान् व्याचष्टे एतदित्यादि-सप्तदशश्लोक्या तत्र-मन्त्रेषु इमं वक्ष्यमाणम् ॥ ७१ ॥

श्लोकेनाद्येनयः पन्थाः प्रोक्तस्तस्मिन्मतान्तरम् ।
उपन्यस्याथसिद्धान्तं प्राहश्लोकान्तरेण सः ॥ ७२ ॥

"अणुः पन्थावितत: पुराणोमाꣳस्पृष्टोऽनुवित्तोमयैव ॥ तेनधीरा अपियन्तिब्रह्मविदः स्वर्गलोकमित ऊर्ध्वंविमुक्ताः ॥ १ ॥ तस्मिञ्छुक्लमुतनीलमाहुः पिङ्गलꣳहरितरोहितञ्चएषपन्थाब्रह्मणाहानुवित्तस्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्च" ॥२॥ एतौमन्त्रौव्याचष्टे-श्लोकेनेत्यादिपद्यात्रिकेण-श्लोकान्तरेणद्वितीयमन्त्रेणेत्यर्थः ॥७१॥

ब्रह्मविन्मुक्तिमाप्नोतितेनवोधात्मना यथा ।
पुण्यकृत्तैजसश्चादौ भूत्वाऽथब्रह्मविद्भवेत् ॥ ७३ ॥

"ब्रह्मवित्पुण्यकृदि" त्येतद्व्याचष्टे- ब्रह्मविदिति ॥ ७३ ॥

तेजः शब्देनसंशुद्धा बुद्धिरेवाभिधीयते ।
पुण्यकृते बुद्धिशुद्धौ विद्यास्यात्समर्प्यते तथा ॥ ७४ ॥

"तैजसश्चे" त्येतद्व्याचष्टे-तेजइति ॥ ७४ ॥

यत्पुण्यं बुद्धिशुद्ध्यर्थं योयोगश्चात्मबोधकृत्।
श्लोके द्वितीये तौप्रोक्तौतृतीयेत्वन्यथोच्यते ॥ ७५ ॥

"अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ततोभूयइवतेतमोयउविद्यायांᳫंरताः" इत्येतं मन्त्रं व्याख्यातुमवतारयति-यत्पुण्यमिति-अन्यथेति-ताभ्यामन्यप्रकार-इत्यर्थः ॥ ७५ ॥

यत्काम्यं कर्मयोगश्च योऽणिमादिप्रदो द्वयम्।
तत्संसारस्यैवहेतुर्नमुक्तावुपयुज्यते ॥ ७६ ॥

अन्यप्रकारमाह-यदित्यादि-आविद्याकाम्यंकर्म्म विद्याऽणिमादिप्रदोपासनाते संसारस्यैवहेतूनमोक्षस्येत्यर्थः ॥ ७६ ॥

युज्यतेऽमुक्तभावोऽयं तत्त्वबोधविवर्ज्जनात्।
जन्मप्रवाह एवातश्चतुर्थेश्लोक ईर्यते ॥ ७७ ॥

"अनन्दानामते लोका अन्धेनतमसावृताः। तांस्ते प्रेत्याभिगच्छन्त्यविद्वाᳫंसोऽबुधोजनाः"इत्येतं मन्त्रं व्याचष्टे-युज्यते इति ॥ ७७ ॥

ब्रह्मानुभवयुक्तानां विशेषोदुःखसंक्षयः ॥
श्लोकेन पञ्चमेनात्रविस्पष्टमभिधीयते ॥ ७८ ॥

"आत्मानं चेद्विजानीयादयमस्मीतिपूरुषः। किमिच्छन् कस्य कामायशरीरमनुसंज्वरेदि"ति मन्त्रंविवृणोति-ब्रह्मेति ॥ ७८ ॥

नदुःखक्षय एवाऽस्य किन्तुविश्वस्यकर्तृता।
सर्वलोकात्मता चेतिषष्ठेश्लोक उदीर्य्यते ॥ ७९ ॥

"यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् संदेह्येगहनेप्रविष्टः। सविश्वकृत् सहि-सर्वस्य कर्त्ता तस्य लोकः सउलोक एव"इत्येतंमन्त्रंव्याचष्टे-नेति ॥ ७९ ॥

शास्त्राधिकारयुक्तेऽस्मिन्देहेविद्यात्परंपदम्।
अन्यथाऽनर्थइत्येवंसप्तमेश्लोकईर्यते ॥ ८० ॥

"इहैवसन्तोऽथविद्मस्तद्वयं न चेदवेदिर्महतीविनष्टिः येतद्विदुरमृतास्ते-भवन्त्यथेतरे दुःखमेवापियन्ति"इति सप्तमंमन्त्रंव्याचष्टे—शास्त्रेति ॥ ८० ॥

गर्भप्रवेशादिरूपाजुगुप्सा नात्मवेदिनः ।
इत्येषेऽर्थोऽष्टमे श्लोके विस्पष्टमभिधीयते ॥ ८१ ॥

" यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सत"इत्यष्टमन्तं विवृणोति—गर्भेति ॥ ८१ ॥

निःशेषविक्रियाहेतुकालातिक्रमहेतुतः ।
देवैरुपास्य इत्येतन्नवमे श्लोक उच्यते ॥ ८२ ॥

"यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्त्तते । तद्देवाज्योतिषांज्योतिरायुर्होपासतेऽमृतम्"इति नवमस्यंतात्पर्य्यमाह—निःशेषेति ॥ ८२ ॥

चेतनाचेतनाधार आत्माऽस्य ब्रह्मतोचिता ।
इतिदर्शयितुंश्लोकंदशमं श्रुतिरब्रवीत् ॥ ८३ ॥

"यस्मिन् पञ्चपञ्चजना आकाशश्चप्रतिष्ठितः । तमेवमन्यआत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम्"इतिदशमंविवृणोति—चेतनेति ॥ ८३ ॥

प्राणादिसङ्घआत्मास्यादेतस्यब्रह्मताकथम् ।
इत्याशङ्क्योत्तरं श्लोक एकादश उदीर्य्यते ॥ ८४ ॥

"प्राणस्य प्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रं मनसो येमनोविदुः । ते-निचिक्युर्ब्रह्मपुराणमग्र्यम्"इत्येकादशंतं विवृणोति—प्राणादीति ॥ ८४ ॥

तस्यास्य दर्शनोपायः कः स्यादित्यभिचोदिते ।
श्लोकेन द्वादशेनाह मनसैवेति निर्णयम् ॥ ८५ ॥

"मनसैवाऽनुद्रष्टव्यं नेह नाऽनास्ति किंचन मृत्योः स मृत्युमाप्नोति य इहनानेव पश्यती"ति द्वादशस्य तात्पर्य्यार्थमाह—तस्येति—तस्याऽस्येति तदिदंम्यामात्मानं परामृशति ॥ ८५ ॥

अत्यन्तभेदाभावेऽपि भेदाभेदौ तयोरिति ।
मतं वारयितुं श्लोकस्त्रयोदश इहोच्यते ॥ ८६ ॥

"एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् । विरजः पर आकाशादजआत्मामहान् ध्रुवः" इति त्रयोदशमन्त्रस्य तात्पर्य्यमाह —अत्यन्तेति–तयोरितिमतमिति–आत्मप्राणादिसंघातयो गुणगुण्यादिवद् भेदाभेदावितिमतमित्यर्थः ॥ ८६ ॥

बोधादूर्ध्वं च कर्तव्यमस्तीत्याशङ्क्य वार्यते ।
चतुर्दशेन श्लोकेन संग्रहोऽत्र समाप्यते ॥ ८७ ॥

"तमेवधीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान् वाचोविग्लापनꣳहितदिति" चतुर्दशमन्त्रं व्याचष्टे–बोधादिति–संग्रहइति–अस्य मन्त्राणामिति शेषः ॥ ८७ ॥

मन्त्रब्राह्मणसंघेन यत्तत्त्वं प्राङ्निरूपितम् ।
तद्विद्यासाधनं सर्वं मुनिरेष विवक्षति ॥ ८८ ॥

सगृहीतमन्त्रचतुर्दशकं व्याख्याय "सवाएषमहानज" इत्यादि "नैनं कृताकृते तपत" इत्यन्तं वाक्यजातं व्याचष्टे–मन्त्रेत्यादिश्लोकैः सप्तविंशत्या–मुनिर्याज्ञवल्क्यः ॥ ८८ ॥

तत्रादौ वेदतत्त्वस्यानुवादेन परिस्फुटम् ।
निरूप्यते सरूपं तत्सवाइत्यादिवाक्यतः ॥ ८९ ॥

"स वाएष महानज आत्मायोऽयं विज्ञानमय" इत्यादिम् "एषां लोकानामसम्भेदाये" न्यन्तं व्याचष्टे–तत्रेत्यादिपद्यनवकेन ॥ ८९ ॥

ब्रह्मत्वादेव जीवस्य भ्रान्तजीवत्ववारणात् ।
वशित्वाद्या जीवधर्माः शिष्यन्ते सोऽयमीश्वरः ॥ ९० ॥

सोऽयमिति–जीव इत्यर्थः ॥ ९० ॥

जीवत्ववद्वशित्वाद्या यद्यपि भ्रान्तिकल्पिताः ।
तथाप्येते समीचीनाः स्वप्ने पुत्रान्वयो यथा ॥ ९१ ॥

पुत्रन्वयः पुत्रालाभ इत्यर्थः ॥ ९१ ॥

अतएवहि जिज्ञासुं प्ररोचयितुमीरितैः ।
वशित्वाद्यैः प्रेर्यतेऽसौ यज्ञादौ ज्ञानसाधने ॥ ९२ ॥

असौ जिज्ञासुरित्यर्थः ॥ २९२ ॥

जीवधर्माश्चेशधर्माः सन्तीत्येतन्न मे मतम् ।
असतामेव तेषांतु भानंमायिकमिष्यते ॥ ९३ ॥

तेषाम् जीवधर्म्मत्वेनश्रुतिबोधितानां वशित्वादीशधर्माणाम् ॥ ९३ ॥

कादाचित्की सतोऽसत्त्वेत्येष नाशोनतेष्वतः ।
कालत्रयासत्वबोधरूपो बाधस्तु सम्भवेत् ॥ ९४ ॥

असतामेव तेषामित्यत्रोक्ता तेषामसत्ता नाशरूपा कादाचित्की न किन्तु कालत्रयाऽसत्त्वबोधरूपबाधलक्षणेत्याह । कादाचित्कीति ॥ ९४ ॥

बाधिता अपिभासन्तेसामग्रीसम्भवेसति ।
आरब्धाशेषसामग्री विनिवृत्तौ न भासनम् ॥ ९५ ॥

"भानंमायिकामिष्यते" इत्युक्तंभानमुपपादयति–बाधिता इति–सामग्रीति–अस्य प्रारब्धफलकर्म्मलक्षणेत्यादिः । आरब्धाशेषेति–प्रारब्धफलकर्म्मशेषलक्षणायाऽशेषाकृत्स्ना सामग्रीत्यर्थः ॥ ९५ ॥

निवृत्तत्वाज्जीवधर्म्मा भासन्तेनैव कस्यचित् ।
अनिवृत्ता ईशधर्म्मा अकर्म्मोपादितत्त्वतः ॥ ९६ ॥

जीवधर्म्मांणां तेषां निवृत्तावपि–ईश्वरस्य चतेषां न निवृत्तिः धर्म्माद्यजन्यत्वादित्याह—निवृत्तत्वादिति ॥ ९६ ॥

भान्ति ते त्वीश्वरस्याऽपि बद्धानाञ्च स्वबुद्धितः ।
ईश्वरस्यहिलीला तैर्बद्धानां त्वतिविस्मयः ॥ ९७ ॥

ईश्वरधर्म्माणां तेषां बद्धानां भानेन विस्मयोभवति नत्वीश्वरस्य तस्य तैर्लीलाबालवत्क्रीडाभवतीत्याहभान्तीत्यादि ॥ ९७ ॥

सर्वेश्वरादिकः पूर्वशेषश्चेदुपसंहृतिः ।
उत्तरस्य तु शेषत्वेबुभुत्साविषयोभवेत् ॥ ९८ ॥

"एष सर्वेश्वर" इत्यादि "रसंभेदाये" त्यन्तोयदिपूर्वशेषस्तदानिगमनरूपो यदि "तमेतमि" त्याद्युत्तरशेषस्तदोत्तरत्र जिज्ञासितपदार्थसमर्पकइत्याह—सर्वेश्वरादिक इति ॥ ९८ ॥

यः सर्वेशत्वादिलक्ष्यस्तं वेदाध्ययनादिभिः ।
ज्ञातुमिच्छत्यविज्ञातः सएवार्थो यतस्ततः ॥ ९९ ॥

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" त्येतद्व्याचक्षाण एतच्छेषतां पूर्वोक्तस्य विशदयति—य इति—अस्याविज्ञातइत्यादिः । यतः स एवार्थोऽविज्ञातस्ततस्तं तै र्ज्ञातुमिच्छतीत्यन्वयः ॥ ९९ ॥

वहिरङ्गं कर्म्मजातंसंन्यासस्यान्तरङ्गता ।
प्रत्यासन्नाःशान्तिदान्तिक्षान्त्याद्या इत्यसौक्रमः ॥ ३०० ॥

इदानीं विद्याम्प्रतिकर्म्मणां वहिरङ्गत्वं संन्यासस्यान्तरङ्गत्वं शमादीनामन्तरङ्गतरत्वमित्याह—वहिरङ्गमिति—प्रत्यासत्तिरत्रान्तरङ्गतरता—इत्यसौ क्रमइति । इत्येतमुक्तान्तरङ्गवहिरङ्गभावादि दर्शयितुमसौविद्यासाधनत्वेन कर्मादिबोधकात्रयवाक्यजातस्थः क्रमः क्रमेण तेषां पाठ इत्यर्थः ॥ ३०० ॥

प्रत्यक्प्रवणतां बुद्धेः कर्म्माण्युत्पाद्यशुद्धितः ।
कृतार्थान्यस्तमायान्तिप्रावृडन्ते घना इव ॥ १ ॥

सोदाहरणं कर्म्मणांविद्यावहिरङ्गसाधनत्वमाह—प्रत्यगिति ॥ १ ॥

सामर्थ्यमीदृक्चेदस्ति कर्म्मणां तर्हि किं तव ।
ज्ञानेनेति नवक्तव्यंमुनित्वार्थमपेक्षणात् ॥ २ ॥

"एतमेवविदित्वामुनिर्भवती" त्येतद्व्याख्यातुमवतारयति—सामर्थ्यमिति—ज्ञानवैयर्थ्यशङ्कांतस्यमुनित्वफलकत्वेननिषेधति—नेत्यादि ॥ २ ॥

वुभुत्सतेऽयमात्मानं सर्वैर्यज्ञादिकर्म्मभिः ।
एतमेवाविदित्वाऽसौ मुनिर्भवति नान्यथा ॥ ३ ॥

उक्तंवाक्यं विवृणोति–एतमिति–मुनिरिति–जीवन्मुक्तइत्यर्थः आनन्दज्ञानेन तथैवोक्तेः ग्रन्थकृत्तु "मुनित्वंज्ञानशीलते"त्यनेनान्यथामुनित्वं निर्वक्ष्यतीति बोध्यम्—अन्यथेति—बोधाभाव इत्यर्थः ॥ ३ ॥

अरुचिप्रतिबन्धस्य कर्म्मभिः प्रक्षये सति ।
गृहस्थो वा परिव्राड्वा शास्त्रेणात्मानमीक्षते ॥ ४ ॥

"एतमेव प्रव्राजिनोलोकमिच्छन्तः प्रव्रजन्ती"ति वाक्यमेत"मेवविदित्वामुनिर्भवती"ति वाक्यस्य सकृद्बोधरूपविशेषउपसंहर्त्रितिवक्ष्यन्नस्यवाक्यस्य प्रतिबन्धाभावेगृहस्थस्य वा संन्यासिनोवाऽऽत्मेक्षणफलके शास्त्रविचारेऽधिकारइत्याह—अरुचीति–विद्यायालमरुचित्व लक्षणदोषो यः प्रतिबन्धस्तस्येत्यर्थः कर्म्मभिर्नित्यनैमित्तिकलक्षणैः ॥ ४ ॥

जनकोषस्तगार्ग्यादेर्नस्याद्वेदनमन्यथा ।
सुलभन्तुपरिव्राजोवहुविक्षेपवर्ज्जनात् ॥ ५ ॥

अन्यथेति–संन्यासिनएवतत्राधिकारइत्यर्थः—नन्वेवंपारिव्राज्यं विफलं स्यादित्याशङ्क्य तत्र बहूनांनित्यनैमित्तिकर्म्मलक्षणानां विक्षेपाणां वर्जनेन विद्यायाः सुलभत्वान्नैवमित्याह—सुलभमित्यादि ॥ ५ ॥

सोढ्वाऽपि कर्म्मविक्षेपंचित्तैकाग्र्येक्षमोयदि ।
तदावेत्तुगृहस्थोऽपि प्रव्रजत्वन्यथापुमान् ॥ ६ ॥

उक्तार्थमभिनीयदर्शयति–सोढ्वेति–अन्यथेति–कर्म्मविक्षेपसहनपुरस्सराचित्तैकाग्र्याभावेइत्यर्थः ॥ ६ ॥

अतोविदित्वेति वाक्यं सामान्यविषयंभवेत् ।
प्रव्रजन्तीतिवाक्यन्तुविशेषेण प्रवर्त्तते ॥ ७ ॥

"एतमेवविदित्वे"तिवाक्यं"पुरोडाशं चतुर्धा करोती"तिवत् सामान्यविषयं तदुत्तरंतु "प्रव्रजन्ती"ति पदघटितवाक्य "माग्नेयश्चतुर्धाकरोती"तिवद्विशेषविषयं सकृद्बोधरूपविशेष उपसंहर्तृसङ्कोचकमितियावदित्याह–अत इति ॥ ७ ॥

सकृद्बोधो वेदनं स्यान्मुनित्वं ज्ञानशीलता ।
अज्ञानहानिर्बोधात्स्याज्जीवन्मुक्तिर्मुनित्वतः ॥ ८ ॥

सामान्यविशेषवाक्याभ्यां फलितमर्थमाह । सकृदिति ॥ ८ ॥

बुद्धोऽपि न मुनिः स्याच्चेद्विद्वत्सन्न्यासमाचरेत् ।
एतद्धस्मेति वाक्येन तदेतदभिधीयते ॥ ९ ॥

"एतद्धस्मवैतत्पूर्वे विद्वांसः प्रजांनकामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकइति तेहस्मपुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्चव्युत्थायाथभिक्षाचर्य्यंचरन्तियाह्येव पुत्रैषणासावित्तैषणायावित्तैषणासालोकैषणोभेह्येतेएषणेएव भवत" इत्येतद्–अनाश्रमसंन्यासपरमिति कथयन् विद्वत्संन्यासस्य मुनिभावं फलितमाह । बुद्ध इति–सकृद्विद्वानित्यर्थः ॥ ९ ॥

परिव्राड्भिर्बुद्ध आत्माकीदृगित्यभिशङ्किते ॥
सएषनेतिनेतीति श्रुतिः प्राहोत्सुका सती ॥ १० ॥

"सएषनेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहिशीर्यतेऽसङ्गोनहि सज्यतेऽसितोनहि व्यथतेनरिष्यती" त्येतद्व्याचष्टे । परिव्राड्भिरिति । प्राहेति–अस्योत्तरमितिशेषः–उत्सुकेति–उत्तरदान उत्कण्ठावतीत्यर्थः ॥ १० ॥

ननु भिक्षादिना देहपोषणादौ समे सति ।
आत्मतत्त्वविदः कोऽतिशयो मूढादितीर्यताम् ॥ ११ ॥

"एतमुहैवैतेन तपतइत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभेउहैवैष एतेतरति नैनं कृताकृतेतपतः" इत्येतद्व्याख्यां विदधच्छिरसनीयां शङ्कांतावदुपन्यस्यति–नन्विति ॥ ११ ॥

सर्वेषामपि मूढानां चित्तेस्तः पुण्यपापयोः ।
एतमेवैकमात्मज्ञं चित्ते द्वे प्राप्नतो नहि ॥ १२ ॥

व्याचक्षाणउक्तशङ्कां निरस्यति । सर्वेषामित्यादिपद्यत्रिकेण "एतमुहैवैष" इत्यादिं "कल्याणमकरवमि" त्यन्तं व्याचष्टे–एतमित्युत्तरार्द्धेन । पुण्यपापयोरिति ।

अत्र पुण्यपापके इति पाठ्यम् ॥ १२ ॥

उभे उहेति हेतूक्ते तच्चिन्ताया असंभवे ।
अतिक्रामति तत्त्वज्ञः पुण्यपापे उभे अपि ॥ १३ ॥

"उभे उहैवैषतरत" इत्येतद्व्याचष्टे "उभेउहेतिहेतूक्त इति–अत्र हेतूक्ति शब्दं प्रथमान्तंपञ्चम्यन्तंवोत्प्रेक्षते ॥ १३ ॥

कृते देहादिभिर्वास्तां द्वे कृते वा द्विधापि च ।
एवं तत्त्वविदन्ते द्वे नैव तापयतः क्वचित् ॥ १४ ॥

"नैनंकृताकृतेतपत" इत्येतद्विवृणोति कृते इति–द्वेकृते इति–अकृते इति-च्छेदः सन्धिरैच्छिकः यदिकृतेदेहादिभिर्द्वेस्तोऽकृतेवेत्याद्यपठिष्यततदाऽनुशासनं-नात्यक्ष्यत ॥ १४ ॥

अन्तरङ्गतरायेतेशान्तिदान्त्यादयोऽखिलाः ।
वक्तव्या इत्यभिप्रेत्यश्रुतिस्तत्र प्रवर्तते ॥ १५ ॥
रुचिमान्कर्मसंन्यासी युक्तः शमदमादिभिः ।
मुख्याधिकारी भूत्वाऽसावात्मन्यात्मानमीक्षते ॥ १६ ॥

"तदेतदृचाभ्युक्तमि" त्युपक्रम्य पठितम् "एषनित्यो महिमाब्राह्मणस्य नवर्द्धतेकर्मणानोकनीयान् तस्यैवस्यात् पदवित्तंविदित्वा न लिप्यते कर्मणापापकेने" तिमन्त्रं ब्राह्मणोक्तार्थोपोद्बलकमुपेक्ष्य "तस्मादेवं विच्छान्तोदान्त उपरतस्तितिक्षुः समाहितोभूत्वाऽऽत्मन्येवात्मानं पश्यतिसर्वमात्मानं पश्यती" ति वाक्यं विवृणोति । अन्तरङ्गेतिपद्यद्विकेन ॥ १५ ॥ १६ ॥

पुण्यञ्च जन्महेतुत्वादत्र पाप्मेति वर्ण्यते ।
कर्महानिः पूर्वमुक्ता या तस्या उपसंहृतिः ॥ १७ ॥

"नैनं पाप्मातरतिसर्वं पाप्मानं तरतिनैनं पाप्मातपति सर्वं पाप्मानं तपतिविपापोविरजोऽविचिकित्सो ब्राह्मणो भवत्येषब्रह्मलोकः सम्राडेनं प्रापितोऽसीति-होवाचयाज्ञवल्क्य" इत्येतद्वाक्यजातं संक्षेपतो व्याचष्टे–पुण्यञ्चेतिपूर्वार्द्धेन–अस्य

वाक्यस्यनिगमनस्थानीयत्वमाह । कर्मेत्युत्तरार्द्धेन ॥ १७ ॥

ब्रह्मत्वमेव ब्राह्मण्यमित्यभिप्रायमात्मनः ।
विशदी कर्तुमाहैष ब्रह्मलोक इतीदृशम् ॥ १८ ॥

अत्र ब्राह्मणत्वंब्रह्मभावोनतुब्राह्मणत्वादिजतिरित्यत्रतात्पर्यग्राहकं ब्रह्मलोक इत्याह । ब्रह्मत्वमिति–आत्मनोयाज्ञवल्क्यस्य, एष याज्ञवल्क्यः ॥ १८ ॥

ससाधनाया विद्यायाः संपूर्णत्वादयं नृपः ।
स्वदेहसहितं राज्यं गुरवेऽस्मै न्यवेदयत् ॥ १९ ॥

"सोऽहं भगवतेविदेहान् ददामिमांचापि सहदास्याये" तिजनकवचनतात्पर्य्यमाह–सेति ॥ १९ ॥

आख्यायिकां परित्यज्य श्रुतिरस्मदनुग्रहात् ।
सगुणं निर्गुणं ब्रह्म संक्षिप्योचे "स वा" इति ॥२०॥

"सवाएषमहानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माऽभयँहि वै ब्रह्मभवति यएवं वेदे"ति वाक्यजातं विवृणोति–आख्यायिकामिति॥२०॥

पूजास्वीकारदातृत्वगुणयुक्तं महेश्वरम् ।
य उपास्ते पुमानेष यथेष्टं लभते धनम् ॥ २१ ॥

सगुणत्वेन ब्रह्मवर्णनस्योपासनायां तात्पर्य्यमाह–पूजेति ॥ २१ ॥

विद्वद्दृष्ट्या स एवात्माजरामरणवर्जितः ।
आनन्दोभयहीनश्च ब्रह्मैवाजो न चेतरः ॥ २२ ॥

निर्गुणवाक्यस्य तात्पर्यमाह । विद्वदिति ॥ २२ ॥

य एवं ब्रह्मजानाति तद् ब्रह्मैव भवत्यसौ ।
हि शब्दोऽशेषवेदान्तप्रसिद्धिं सूचयेदिह ॥ २३ ॥

वाक्यस्थहिशब्दं व्याचष्टे–यइति ॥ २३ ॥

जनकायात्मविद्यैषा याज्ञवल्क्येन वर्णिता ।
तद्व्याख्यानेनानुगृह्याद्विद्यातीर्थमहेश्वरः ॥ २४ ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे जनकविद्याप्रकाशो नामाष्टादशोऽध्यायः ॥ १८ ॥

विद्यातीर्थमहेश्वरानुग्रहमाशास्ते । जनकायेति ॥ २४ ॥

इति श्रीमत्पाराशर्याम्भोजभास्कराचित्रधरपण्डिताऽऽत्मजरामटहलपण्डिततनुजेविठ्ठि-देवीगर्भजकाशीनाथशर्म्मकृतौ मितप्रकाशविवृतौबृहदारण्यकोपनिषदि-जनकविद्याप्रकाशोनामाऽष्टादशोऽध्यायः ॥ १८ ॥



## अथैकोनविंशोऽध्यायः

शाखातलवकाराणां सामवेदगताऽस्ति या ।
विद्योक्ता तत्र संक्षेपात्तां विस्पष्टमिहब्रुवे ॥ १ ॥

इदानींसामवेदगततलवकारीयशाखान्तर्गतां केनोपनिषदं व्याख्यातुंप्रतिजानीते—शाखेति ॥ १ ॥

तद्वविद्धिप्रणिपातेन परिप्रश्नेन सेवया ।
इत्यर्जुनाय भगवानाह प्रश्नाख्यसाधनम् ॥ २ ॥

"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैतियुक्तः, केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रंकउदेवो युनक्ती"तिमन्त्रं व्यांचष्टे—तद्विद्धीत्यादिभिरेकादशभिः पद्यैः ॥ २ ॥

नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेनपृच्छतः ।
जानन्नपि च मेधावी जडवल्लोकमाचरेत् ॥ ३ ॥

मनुवाक्यमाह—नापृष्ट इति ॥ ३ ॥

इति शास्त्रमवेक्ष्यात्रकश्चिच्छिष्यगुणान्वितः ।
उपसद्य गुरुं सम्यगप्राक्षीदात्मबुद्धये ॥ ४ ॥

गुणेति—श्रद्धाभक्तिप्रभृतीत्यर्थः ॥ ४ ॥

मनः प्राणौ श्रोत्रचक्षुर्वाचश्च वपुषिस्थिताः ।
प्रवर्त्तन्ते स्वस्वकार्ये विद्यते प्रेरको न वा ॥ ५ ॥

प्रेरकइति । अस्यैषामित्यादिः ॥ ५ ॥

नचेत्तर्हि जडत्वेन प्रवृत्तिर्मन आदिषु ।
न स्याद्विना प्रेरकेण शकटाद्यप्रवृत्तिवत् ॥ ६ ॥

द्वितीयकल्पं दूषयति—नचेति ॥ ६ ॥

चैतन्यमिन्द्रियाणां चेद्ब्रह्मासत्वं प्रसज्यते ।
इन्द्रियेभ्यश्चेतनोऽन्यः प्रेरकोऽभ्युपगम्यताम् ॥ ७ ॥

द्वितीयकल्पं खण्डयन्निन्द्रियचैतन्यं खण्डयति । चैतन्यमिति ॥ ७ ॥

इन्द्रियैः साधनैर्जीवो यः कर्ताऽसौ प्रवर्तकः ।
इति चेन्न यतो जीवे पारतन्त्र्यमवेक्ष्यते ॥ ८ ॥

जीवस्य प्रवर्तकत्वं निषेधति । इन्द्रियैरिति ॥ ८ ॥

व्यापारमिन्द्रियोत्थानं न करिष्येऽमुमीत्ययम् ।
सङ्कल्प्यापि करोत्येव भूताविष्ट इवातुरः ॥ ९ ॥

इन्द्रियदेवानां जीवेपारतन्त्र्यमभिनयति । व्यापारमिति ॥ ९ ॥

इन्द्रियाधिष्ठातृदेवा न स्वतन्त्रा यथा वयम् ।
धर्माधर्मात्मकं कर्म न स्वतन्त्रं जडत्वतः ॥ १० ॥

इन्द्रियदेवानां स्वातन्त्र्यं निषेधति । इन्द्रियेति, अध्वरमीमांसकमतं दूषयति—धर्मेति ॥ १० ॥

तस्मात् केन प्रेरितं सद्विषयान्मनुते मनः ।
कर्तुमुच्छ्वासनिश्वासौ प्राणः केन प्रणीयते ॥ ११ ॥

एवं तात्पर्य्यमभिधायतत्पूर्वार्द्धं व्याचष्टे । तस्मादिति—स्वतन्त्रप्रेरकानुपलम्भादित्यर्थः ॥ ११ ॥

वाक्चक्षुःश्रोत्रमुख्यानि प्रेरयेत् करणानि कः ।
ईश्वरश्चेत् किमेकोऽसौ बहवोऽमीत्युतेर्यताम् ॥ १२ ॥

ईश्वरप्रेरकत्वाङ्गीकारेपि सएकउतानेक इति प्रेरकसंख्याविषयेपि मन्त्रतात्पर्य्यतदुत्तरार्द्धंव्याचक्षाण आह । वागिति । बहव इति—उतामीबहव इत्यीर्यतामिति योजना ॥ १२ ॥

प्रवर्त्यानामनन्तत्वाद्वैलक्षण्याच्च नैकता ।
नैकमत्यं बहुत्वे स्याद्बहुराजकदेशवत् ॥ १३ ॥
उक्तदोषनिवृत्यर्थं गुरुर्वचनमब्रवीत् ।
"श्रोत्रस्य श्रोत्र"मित्यादि तदर्थस्तु विविच्यते ॥ १४ ॥

"श्रोत्रस्यश्रोत्रं मनसोमनो यद्वाचोह वाचᳪंसउ प्राणस्य प्राणश्चक्षुषश्च क्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृताभवन्ति । नतत्रचक्षुर्गच्छतिनवागगच्छतिनोमन" इति सार्द्धमन्त्रमुक्तप्रश्नोत्तरभूतं व्याचक्षाणस्तात्पर्य्यवर्णयन् तद्विषयंदर्शयति । प्रवर्त्यानामित्यादिनापद्यद्विकेन ॥ १३ ॥ १४ ॥

अन्तर्याम्येकएवेशः स च सर्वं नियच्छति ।
अधीयते पृथिव्यादौ स्थितं वाजसनेयिनः ॥ १५ ॥

उक्तमन्त्रमतिरिक्तमीश्वरं साधयन् व्याचष्टे । अन्तर्य्यामीत्यादिभिरेकविंशत्यापद्यैः । पृथिव्यादौस्थितमधीयत इत्यन्वयः ॥ १५ ॥

स्थित्वा मनस्यान्तरोऽस्माज्ज्ञायते मनसा न सः ।
मनस्तस्य शरीरं स्यान्नियच्छत्यान्तरो मनः ॥ १६ ॥

अस्मादिति, मनस इत्यर्थः ॥ १६ ॥

एवं श्रुतः स सर्वेषु प्राणवागादिवस्तुषु ।
अन्तः प्रविष्टः शास्ताऽयमिति श्रुत्यन्तरं जगौ ॥ १७ ॥

श्रुत्यन्तरमिति । वाजसनेयिब्राह्मणगतश्रुतिभिन्नाश्रुतिरित्यर्थः ॥ १७ ॥

"सत्यज्ञानमनन्तंयब्रह्म" वेदेषु वर्णितम् ।
तदेव मायासंयोगादीश्वरत्वं प्रपद्यते ॥ १८ ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
परास्य शक्तिर्विविधा तामाया शक्तयोऽखिलाः ॥ १९ ॥

"श्रोत्रस्य श्रोत्र"मिति वाक्यं व्याचक्षाणःस्वतोनिर्विशेषस्य ब्रह्मण औपाधिकमीश्वरत्वं श्रुत्यासाधयति–सत्यमिति ॥ १८ ॥ १९ ॥

मायाभिरीशो बहुधा भाति सर्वेषु वस्तुषु ।
श्रोत्रशक्तिमुपादाय श्रोत्रं सृष्ट्वाऽत्र भात्यसौ ॥ २० ॥

अत्रश्रोत्रेऽसावीश्वरः ॥ २० ॥

येन शब्दः श्रूयते तच्छ्रोत्रं श्रोत्रत्वमस्य यत् ।
तस्येशशक्त्या सृष्टत्वाच्छ्रोत्रस्य श्रोत्रमीश्वरः ॥ २१ ॥

अस्य मनसोयच्छब्दसाक्षात्कारहेतुत्वं तस्येश्वरशक्त्यासृष्टत्वाच्छ्रोत्रस्य-श्रोत्रमीश्वरोभवतीत्याह–येनेति ॥ २१ ॥

व्याकृताऽव्याकृताकारौ यौ श्रोत्रस्य तयोरिदम् ।
श्रोत्रं व्याकृत आकारः शक्तिरव्याकृताभिधा ॥ २२ ॥

ईशशक्त्येत्युक्तेशशक्तिर्व्यक्तश्रोत्राव्यक्ताऽवस्थेत्याह–व्याकृतेति ॥ २२ ॥

तच्छक्त्युपहितत्वेन ब्रह्मापि श्रोत्रमुच्यते ।
शृणोत्यकर्ण इत्युक्तं श्रोत्रशक्तियुतत्वतः ॥ २३ ॥

निरुक्तशक्तिविशिष्टत्वमीश्वरस्यश्रोत्रस्यश्रोत्रत्वमेतदिति ईश्वरे तच्छक्तिसत्त्वादेव "शृणोत्यकर्ण" इत्यप्युपपन्नोभवतीत्याह–शृणोत्यकर्ण इति ॥ २३ ॥

षष्ठ्यन्तं करणं तस्य प्रथमान्तं प्रवर्तकम् ।
मनसो मन इत्यादावयंन्यायः समीक्ष्यताम् ॥ २४ ॥

"श्रोत्रस्य श्रोत्रमि"तिषष्ठ्यन्तप्रतिपाद्यमिन्द्रियं तस्य प्रवर्तकं प्रथमान्तप्रतिपाद्यमित्याह–षष्ठ्यन्तमिति–उक्तव्याख्यामन्यत्रातिदिशति–मनस इति ॥२४॥

एकत्वेऽपीश्वरस्येत्थं तच्छक्तीनां बहुत्वतः ।
विलक्षणाऽनन्तवस्तुप्रेरणं संभाविष्यति ॥ २५ ॥

एकत्वेऽपीश्वरस्याऽचिन्त्यानन्तशक्तिकत्वेन परस्परातिविलक्षणासंख्यपदार्थप्रेरकत्वं सम्भवतीत्याह–एकत्व इति ॥ २५ ॥

अक्षाधिष्ठातृदेवेषु जीवेष्वक्षेषु चेश्वरः ।
अन्तर्यामितयास्थित्वा नियच्छति यथायथम् ॥ २६ ॥

"श्रोत्रस्य श्रोत्रमि"त्यादेरुपलक्षणविधयेश्वरस्य सर्वान्तर्यामित्वेतात्पर्य्यमाह–अक्षेति ॥ २६ ॥

शक्तौ चिदाभासवत्यां स्थिता नियमनक्रिया ।
तदधिष्ठानचैतन्ये नियन्तृत्वं प्रकल्पितम् ॥ २७ ॥

नियन्तृताचिदाभासविशिष्टशक्तौ स्वतेनतदधिष्ठानचैतन्ये तत्रसाकल्पितेत्याह–शक्ताविति ॥ २७ ॥

नियन्तृत्वोपाधिना यः परमात्मोपलक्षितः ।
तमिन्द्रियनिरोधेन धीराः पश्यन्ति योगिनः ॥ २८ ॥

"अतिमुच्यधीराः प्रेत्यास्माल्लोकादमृताभवन्ती"ति तद्वाक्यभागं व्याचष्टे । नियन्तृत्वोपाधिनेत्यादिभिः पञ्चभिः पद्यैः–श्रुतिस्थधीरा इति पदस्य व्याख्या योगिनइति–अत्रेदं बोध्यम्–अतिमुच्य धीराइति खण्डवाक्येऽतिमोकपदार्थोऽविद्याप्रयुक्तं चिन्निष्ठमहंकारतादात्म्यंयत् तस्ययोऽध्यासश्चिति जीवत्वं सम्पाद्य तत्रकर्तृत्वभोक्तृत्वप्रमातृत्वरूपबन्धकृत् तत्त्यागः धीरपदार्थविशेषणीभूतं ज्ञानं चतादृशत्यागजनकमिति मनसिनिधायातिमुच्यपदं परित्यज्याध्याहृत्येन्द्रियनिरोधेनेतिपदं दृष्ट्वेति पदमध्याहर्तुमभिप्रैष्यँस्तत्रक्त्वाप्रत्ययेनधातुंवियोज्य संयोज्यच तं लटोक्तखण्डवाक्यं व्याचष्टे । तमिन्द्रियनिरोधेन धीराः पश्यन्तीति ॥ २८ ॥

अदर्शने त्वहंकारतादात्म्यं चिति कल्पितम् ।
तादात्म्याध्यासतो जीवो भूत्वाऽसौ बन्धमाप्नुयात् ॥२९॥

एतदेवाह–अदर्शनेत्यादिसार्द्धेनपद्येन–अदर्शनमविद्या ॥ २९ ॥

अध्यासवारिका बुद्धिर्येषां धीरास्त ईरिताः ।
बन्धान्मुक्त्वावपुस्त्यक्त्वा ते स्युर्मरणवर्जिताः ॥ ३० ॥

महावाक्यार्थमाह । बन्धान्मुक्त्वेति ॥ ३० ॥

ऐक्यभ्रान्तिर्बन्धकृत्स्यादहंकारचिदात्मनोः ।
तद्विवेके कुतो बन्धः शरीरं चात्मनः कुतः ॥ ३१ ॥

बन्धमोकं वपुस्त्यागं चोपपादयति–ऐक्येति । अहंकारचिदात्मनोरैक्यभ्रान्तिरित्यन्वयः । तदिति । तदाऽहङ्कारचिदात्मानौ परामृशति । आत्मनोबन्धः कुतः शरीरं च कुत इति योजना ॥ ३१ ॥

५८

देहप्राणवियोगः स्यान्मरणं यस्य तौ नहि ।
तद्वियोगः कथं तस्य चिदेकरसवस्तुनः ॥ ३२ ॥

"मरणवर्जिता" इत्युक्तमरणराहित्यं मरणपदार्थं दर्शयन्नुपपादयति । देहेति। देहात्प्राणवियोगरूपंमरणं सम्भवति संहतस्ययस्यासंहतस्य चिदेकरसस्यतौ देहप्राणौनस्तस्तस्य तद्वियोगो देहात् प्राणवियोगात्मकं मरणं कथं न केनापि प्रकारेणसम्भवतीत्यर्थः ॥ ३२ ॥

बन्धो देहोमृतिर्बोधमात्राच्चेत्सन्ति नोतदा ।
सर्वे बुध्वा निजात्मानं कृतकृत्याः कुतो नहि ॥ ३३ ॥

"नतत्र चक्षुर्गच्छतिनवाग्गच्छति नोमन" इति तृतीयमन्त्रपूर्वार्द्धव्याख्यातुमवतारयति–बन्धइत्यादि–बन्धोनिरुक्तलक्षणः देहस्त्रिविधः मृतिरुक्तिलक्षणंमरणं वोधमात्रान्नोसन्तिनभवन्ति निवर्तन्त इति यावत्तदा सर्वे गुरूपदेशरहिता अपि निजात्मानं बुद्ध्वाकुतोनकृतकृत्याभवन्तीति योजना ॥ ३३ ॥

गुरूपदेशरहितो आत्मानं बोद्धुमक्षमाः ॥
चक्षुर्वागादयो यस्मान्न गच्छन्ति चिदात्मनि ॥ ३४ ॥

इमांशङ्कां परिहरति–गुर्विति–ननुकिंगुरूपदेशेन तद्रहिता अपिनिजात्मानं बुध्येयुरित्याशङ्कां व्याख्यायमानश्रुत्यापरिहरति–चक्षुरिति ॥ ३४ ॥

चक्षुर्न गच्छेन्नीरूपे वागवाच्यं कथं भवेत् ।
अविकल्पमसङ्कल्पं ग्रहीतुं न मनोऽर्हति ॥ ३५ ॥

अवतारितां श्रुतिं व्याचष्टे–चक्षुर्नेति–अवाच्यं वक्तुं वाक्कथं शक्ताभवेदिति द्वितीयपादार्थः । "न मन" इत्येतद् व्याचष्टे–अविकल्पमित्यादि ॥ ३५ ॥

एवं सति कथं यूयं जानीथमनसेति चेत् ।
आचार्य्यनिरपेक्षेणनविद्मो मनसा वयम् ॥ ३६ ॥

"नविद्मोनविजानीमो यथैतदनुशिष्यादि"ति तदीयोत्तरार्द्धं व्याचक्षाणस्तत्त्वं न विद्म इति भागं तावद् व्याख्यातुं शङ्कते–एवमिति । तंव्याचक्षाण एवोक्तशङ्कां निरस्यति–आचार्य्येति ॥ ३६ ॥

आचार्य्योऽपि कथं ब्रूयादवाच्यमपिचेद्यथा।
बोधयेदभिधावृत्त्यातं प्रकारं न वेद्म्यहम्॥ ३७॥

"न विजानीमो यथैतदनुशिष्यादि"ति व्याचक्षाणएतन्निरसनीयांशङ्कां तावदाह–आचार्य्योऽपीति। अवतारितभागं व्याचष्टे। यथा बोधयेदित्यादि॥३७॥

षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः।
नात्मन्यन्यतमोऽमीषां तेनात्मानाभिधीयते॥ ३८॥

"अन्यदेवतद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां येनस्तद्व्याचचक्षिरे" इति मन्त्रं व्याख्यातुंशङ्कते–षष्ठीत्यादिनाकिञ्चिदाधिकेन सार्द्धपद्येन–षष्ठीसम्बन्धः–शब्दहेतव इति–तत्प्रवृत्तिनिमित्तानीत्यर्थः॥ ३८॥

ईदृशं यूयमाचार्य्याच्छ्रुतवन्तः कथंत्विति।
ब्रूषे चेच्छुश्रुमात्मानमतद्व्यावृत्तितो वयम्॥ ३९॥

येभ्योगुरुभ्यो वयमात्मानस्तत्त्वं श्रुतवन्तस्तेविधिमुखेम नतदुपदिष्टवन्तः किन्तु निषेधमुखेनेतिनोक्तदोषइत्याह–शुश्रुमेति॥ ३९॥

ज्ञातं चाज्ञातमित्येव जगद्द्वेधावभासते।
तस्योभयस्य व्यावृत्त्या परमात्मावशिष्यते॥ ४०॥

एतदेव विशदयतिअवतारितमन्त्रपूवार्द्धं विभजन्–ज्ञातमित्यादि–जगदिति–घटादीत्यर्थः। तस्येति–ज्ञाताज्ञातराश्यवयवकस्येत्यर्थः॥ ४०॥

धीर्वृत्तिविषयीकृत्य यद्घटाद्यवभासयेत्।
विदितं तद्यत्रनोधीस्ततस्यादविदितं खलु॥ ४१॥

ज्ञातं विभजन्नज्ञातं विभजति–धीरिति–धीरन्तःकरणंनिजपरिणामरूपवृत्तिविषयतां संपाद्ययद्घटादिरूपंवस्तुअवभासयति तद्घटादिरूपंवस्तु विदितं यत्रघटादौ नोधीवृत्तिविषयतातद्घटाद्यविदितमित्यर्थः॥ ४१॥

ज्ञाताज्ञाते साक्षिभास्येससाक्षीभासते स्वयम्।
ज्ञाताज्ञातपरित्यागे साक्षिशेषोद्यतिस्फुटः॥ ४२॥

ज्ञानविशिष्टोऽज्ञानविशिष्टश्च घटादिरन्तःकरणोपहितचिद्रूपसाक्षिभास्यः साक्षीतु न केनचिद्भास्यः किन्तु स्वयं प्रकाशस्तथाच ज्ञाताज्ञातयो-र्निषेधेस्वयं प्रकाशः साक्षीशिष्ट इत्याह—ज्ञाताज्ञाते इति ॥ ४२ ॥

वेद्मीति यद्बलादास्थ न वेद्मीत्यपि यद्बलात् ।
तदन्यनिरपेक्षं सद्भातीत्यस्मद्गुरोर्वचः ॥ ४३ ॥

ज्ञाताज्ञातातिरिक्तं साक्षिणंसाधयन् गुरूपदेशमुपपादयति—वेद्मीतीति—ज्ञानाज्ञानविशिष्टस्य घटस्य नवृत्त्याभानं तस्याः केवलघटस्फुरणप्रयोजकत्वात् विशिष्टं भासयितुं साक्ष्यङ्गीकार्य्यइत्यर्थः ॥ ४३ ॥

अज्ञातज्ञातयोः साक्षी ब्रह्मेत्येवंविधातुधीः ।
अज्ञानन्नाशयत्येव न ब्रह्मस्फोरयत्यसौ ॥ ४४ ॥

ननुज्ञाताज्ञातयोः साक्षिब्रह्मेत्येवं विधयाधिया ब्रह्मस्फुरेत्तथाचतत्रवेद्यतास्यादित्याशङ्क्याज्ञानं नाशयितुं तादृशधीविषयत्वस्वीकारेऽपि तत्प्रतिफलितचिद्रूपस्फुरणविषयत्वाभावेन तत्र तादृशस्फुरणविषयत्वरूपवेद्यत्वाभावान्नैवमिति परिहरति—अज्ञातेति—असौसाक्षी ॥ ४४ ॥

स्वतः स्फुरणरूपेऽस्मिन् किमन्यत्स्फुरणम्भवेत् ।
स्फोर्यत्वाभावतस्तस्य न मनोगम्यता भवेत् ॥ ४५ ॥

एतदेव विशदय्यदर्शयति—स्वत इति—मनोगम्यतेति—मनोजन्यवृत्तिप्रतिफलितचिद्विषयतेत्यर्थः ॥ ४५ ॥

अवाङ्मनसगम्यं तदाचार्य्येणोपदिश्यते ।
शिष्येण बुद्ध्यते चेत्थं न किंचिन्नोपपद्यते ॥ ४६ ॥

गुरूपदेशोपपादनमुपसंहरति—अवाङिति ॥ ४६ ॥

यन्नाभिधीयते वाचा वाग्येन प्रेर्य्यते सदा ।
ब्रह्मविद्धितदेव त्वं न त्विदं यदुपासते ॥ ४७ ॥

न"न्वन्यदेवतद्विदितादथो अविदितादधी"ति प्रतिपादितः साक्षिरूपआत्माब्रह्मेति न युक्तं तस्येशस्योपास्यब्रह्मभिन्नत्वेन लौकिकतार्किकयाज्ञिकप्रसिद्धेरिति

शिष्यशङ्कां निवर्तयितुं प्रवृत्तान् गुरुवचनरूपान् मन्त्रान् व्याचक्षाणस्तत्रतावत् "यद्वाचाऽनभ्युदितं येनवागभ्युद्यते तदेव ब्रह्मत्वं विद्धिनेदं यदिदमुपासते" इति मन्त्रं-व्याचष्टे । यन्नेति ॥ ४७ ॥

उपासकास्तु सर्वज्ञसर्वशक्त्यादिशब्दतः ।
वाच्यं स्वभिन्नं ध्यायन्ति न मुख्यं ब्रह्मतद्भवेत् ॥ ४८ ॥

उपास्यस्य ब्रह्मत्वं निषेधति । उपासका इति ॥ ४८ ॥

स्फोर्यते मनसा यन्नस्फोरकं मनसस्तु यत् ।
तद्ब्रह्म विद्धि न त्वेतद्यत्तु स्फोर्यमुपासते ॥ ४९ ॥
भावना जन्य वृत्त्यैव स्फोर्य्यं ध्यायन्त्युपासकाः ।
उपासकेन दृश्यं तद्ब्रह्म मुख्यं कथं भवेत् ॥ ५० ॥

"यन्मनसानमनुतेयेनाहुर्मनोमतम् तदेवब्रह्म त्वं विद्धिनेदं यदिदमुपासते" इति मन्त्रं विवृणोति—स्फोर्य्यत इति ॥ ४९ ॥ ५० ॥

न दृश्यते चक्षुषा यच्चक्षुषोभासकं तु यत् ।
तद्ब्रह्म विष्णुमूर्त्यादेर्न मुख्यब्रह्मताऽस्ति हि ॥ ५१ ॥

"यच्चक्षुषानपश्यतियेनचक्षूंषिपश्यति तदेव ब्रह्म त्वं विद्धिनेदं यदिदमुपासते" इतिमन्त्रतात्पर्य्यमाह—नेति ॥ ५१ ॥

न श्रूयते यच्छ्रोत्रस्य साक्षि यद्ब्रह्म तद्भवेत् ।
श्रुतं प्रणवनामादि न मुख्यब्रह्मनामियात् ॥ ५२ ॥

"यच्छ्रोत्रेणनशृणोति येनश्रोत्रमिदंश्रुतं तदेव ब्रह्मत्वं विद्धिनेदं यदिदमुपासत" इति मन्त्रं विवृणोति । न श्रूयत इति । यन्नश्रूयतेयच्चश्रोत्रस्यसाक्षितद्ब्रह्मभवेदितियोजना । ब्रह्मत्वेन श्रुत्याबोधितमोङ्कारोनामशब्दआदित्यादिकं न मुख्यं ब्रह्मेत्युत्तरार्धार्थः ॥ ५२ ॥

न प्रेर्यते यत्प्राणेन प्राणस्य प्रेरकं तु यत् ।
तद्ब्रह्म नतु हंसाख्यमन्त्रः प्राणप्रचोदितः ॥ ५३ ॥

"यत्प्राणेन न प्राणितियेन प्राणः प्रणीयते। तदेवब्रह्मत्वं विद्धिनेदंयदिदमुपासते" इति मन्त्रं विवृणोति। नप्रेर्य्यत इति। नेदं यदिदमुपासते इत्यंशं विवृणोति–नत्विति। हंसाख्यमन्त्र इति। "अहंसः सोऽहमि" तिमन्त्रोब्रह्मत्वेनश्रुतोनमुख्यंब्रह्मप्राणप्रचोदितत्वात् किन्तु गौणंतदित्यर्थः ॥ ५४ ॥

अन्यैरपीन्द्रियैर्गम्यं न यत् किन्त्वक्षभासकम्।
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥ ५४ ॥

उक्तमन्त्राणामुपलक्षणत्वमित्याह। अन्यैरिति। अन्यैरपीन्द्रियैर्यद्गम्यंनतदपिमुख्यं किन्तु यदक्षावभासकमिन्द्रियसाक्षितदेवब्रह्मत्वंविद्धिजानीहिनतुयदिदमुपासते मन्दमध्याधिकारिण इति योजना ॥ ५४ ॥

सर्वप्रत्ययवेद्यं यत् सोपाधि ब्रह्मविद्यते।
उपासकात्पृथग्भूतं तदेवोपासतेजनाः ॥ ५५ ॥

"यदिदमुपासत" इति मन्त्रांशंविवृण्वन् "यदिमन्यसेसुवेदेतिदभ्रमेवापिनूनंत्वंवेत्थब्रह्मणोरूपं यदस्यत्वं यदस्यचदेवेष्वथनुमीमांस्यमेवतेमन्येविदित" मित्येतद्व्याख्यातुमवतारयति–सर्वेत्यादिपद्यद्विकेन ॥ ५५ ॥

ब्रह्माभासमिदं रूपमुपेक्ष्यानिदमात्मकम्।
मुख्यब्रह्मैवसाक्ष्याख्यं ज्ञात्वास्वानुभवंवद ॥ ५६ ॥

अनिदमात्मकमिदं ब्रह्माभासमुपेक्ष्येतियोजना। इदं रूपंपराक्। अनिदमात्मकंप्रत्यक्स्वरूपम् ॥ ५६ ॥

त्वत्कारुण्यात् सुष्ठुवेदब्रह्माहमितिवक्षिचेत्।
अल्पंवेत्सि नसम्पूर्णंज्ञातृज्ञेयविभेदतः ॥ ५७ ॥

"यदिमन्यसेसुवेदे" त्यादिं "यदस्यदेवेष्वि" त्यन्तभागंविवृणोति–त्वदित्यादिपद्यद्विकेन - हेभगवन्नहंत्वत्कारुण्याद्ब्रह्मसुष्ठुवेदजानामीत्यादियोजना। अल्पमित्यभेदेनवेत्सीतिवेदनक्रियान्वयि ॥ ५७ ॥

अखण्डैकरसेतत्त्वेज्ञातृत्वं प्रत्यगात्मनः।
देवस्य ब्रह्मतत्येवंखण्डनादल्पवेदनम् ॥ ५८ ॥

ज्ञातृज्ञेयविषयकत्वेनोपास्यदेववेदनस्याल्पत्वमेवनतुसंपूर्णत्वमित्युक्तमर्थंस्पष्ट-यति-अखण्डैकरस इत्यादि-प्रत्यगात्मनः शोधितस्यसाक्षिभूतस्यजीवस्याखण्डैकरस-विषकज्ञानवत्त्वन्ध्येयदेवस्य ब्रह्मतेत्येवमस्यप्रकारस्यखण्डना "नेदंयदिदमुपासत" इत्यसकृन्निरसनादहंब्रह्मसुष्ठुवेदेत्याकारकमल्पवेदनमसंपूर्णज्ञानमित्यर्थः ॥ ५८ ॥

मीमांस्यमेवते ऽथापि भेदभ्रमनिवृत्तये ।
मीमांसित्वानिश्चयंतेवदेत्युक्तस्तथाऽकरोत ॥ ५९ ॥

"अथमीमांस्यमेवते" इत्यस्यतात्पर्य्यमाह-मीमांस्यमिति-इत्युक्त इति-अ-स्यशिष्य इति शेषः ॥ ५९ ॥

भेदभ्रमोनिवृत्तोऽद्ययथाशास्त्रं विचारतः ।
सुवेदेतिनवेदेति द्वाभ्यांहीनन्तुशेषितम् ॥ ६० ॥

पूर्वमन्त्रगतं "मन्येविदित" मिति "नाहंमन्येसुवेदेतिनोनवेदेतिवेदचे" तिद्वितीयमन्त्रपूर्वार्द्धंचव्याचष्टे-भेदेत्यादिभिस्त्रिभिः पद्यैः । इतीति । आभ्यांज्ञात-त्वाऽज्ञातत्वाभ्यां द्वाभ्यांप्रकाराभ्यांहीनंरहितं शेषितं विदिताऽविदिताभ्यामाहत्य-भिन्दत्याश्रुत्यानिषेधाधिष्ठानत्वेनार्थात्साधितं स्वप्रकाशमित्युत्तरगतेनान्वयः ॥६०॥

स्वप्रकाशंतमात्मानंतथात्वेनैव वेद्म्यहम् ।
नान्यथाऽतोयथाशास्त्रंवुद्धंब्रह्मेतिनिश्चयः ॥ ६१ ॥

तथात्वेनेति-स्वप्रकाशत्वेनेत्यर्थः । अन्यथापराधीनप्रकाशत्वेन ॥ ६१ ॥

सुवेदेत्यक्षविषयेनवेदेत्यप्यभासिते ।
वक्तुं युक्तंस्वयंभातेकथंतद्युज्यतेद्वयम् ॥ ६२ ॥

विदिताऽविदिताभ्यामन्यत्त्वंस्वप्रकाशेऽभिनयति-सुवेदेत्यक्षेति ॥ ६२ ॥

मध्येऽस्माकंहेसखायोज्ञाताऽज्ञातत्ववर्जितम् ।
ब्रह्मेतिवेत्तियोऽसौहियथाशास्त्रंविबुद्धवान् ॥ ६३ ॥

"योनस्तद्वेदतद्वेदनोनवेदेतिवेदचे" तितदुत्तरार्द्धं व्याचष्टे-मध्यइति ॥६३॥

यल्लौकिकंवस्तु यच्चब्रह्म तद्विविलक्षणम् ।
यस्यामतन्तस्यमतं मतं यस्य न वेदसः ॥ ६४ ॥
लोके घटो मतो येन स घटज्ञ इतीर्यते ।
येन मन्त्रा मतं ब्रह्म न त्वसौ ब्रह्मविद्भवेत् ॥ ६५ ॥

"यस्यामतं तस्यमतं मतं यस्यनवेदसः । अविज्ञातं विजानतां विज्ञातमविजानतामि" ति मन्त्रचतुर्भिः पद्यैर्विवृण्वन् पूर्वार्द्धं तावद्विवृणोति । यदित्यादिपद्यद्विकेन—तदिति—तदालौकिकंवस्तुब्रह्मचेतिद्वयं परामृशति—विलक्षणमिति-अस्य परस्परमित्यादिः । वैलक्षण्यमेवाह । यस्यामतमित्यादिसार्द्धपद्येन ॥६४॥६५॥

मन्तृमन्तव्यरूपेण विविधत्वं विजानता ।
अविज्ञातं ब्रह्मतत्त्वमखण्डैकरसात्मकम् ॥ ६६ ॥
विविधत्वमविज्ञाय यदखण्डत्ववेदनम् ।
तद्भवेद्ब्रह्मविज्ञानं धीमद्भिर्बुध्यतां तथा ॥ ६७ ॥

उक्तमन्त्रोत्तरार्द्धं व्याचष्टे । मन्त्रमित्यादिपद्यद्विकेन ॥ ६६ ॥ ६७ ॥

ईदृशः प्रतिबोधो यस्तेन चेद्विदितं तदा ।
मतं ब्रह्म भवेद्विद्वानमृतत्वं हि विन्दते ॥ ६८ ॥
नित्यानित्यविवेकादि युक्तेनमनसा पुमान् ।
वेदितुं लभते वीर्य्यं विद्ययाविन्दतेऽमृतम् ॥ ६९ ॥

"प्रतिबोधविदितंमतंममृतत्वं हिविन्दते । आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतमित्ये"तद्विवृणोति । ईदृश इत्यादिपद्यपञ्चकेन ॥ ६८ ॥ ६९ ॥

देहे प्राणवियोगाख्यामृतिरात्मनि कल्पिता ।
अविद्यया विद्ययातुभ्रान्तिः सा विनिवर्तते ॥ ७० ॥
नैव जन्मनिसर्वस्मिन्विद्यासौ सुलभाऽपि तु ।
शिष्यलक्षणसंपूर्णजन्मन्येवहि लक्ष्यते ॥ ७१ ॥

ईश्वरानुग्रहाच्छान्तिदान्त्यादिगुणसंयुतम् ।
जन्म चेल्लभ्यते तस्मिन्विद्यया मोक्षमाप्नुयात् ॥ ७२ ॥

अविद्ययेत्येतत्कल्पिते इत्यत्रान्वयि ॥ ७० ॥ ७१ ॥ ७२ ॥

नावेदिचेदिहालस्याद्विनष्टिर्महतीभवेत् ।
कदाचिज्जन्मपश्वादिरूपंस्यादितिवेत्तिकः ॥ ७३ ॥

"इह चेदवेदीदथसत्यमास्तिनचेदवेदीन् महतीविनष्टिः । भूतेषुभूतेषुविचित्यधीराः प्रेत्यास्माल्लोकादमृताभवन्ती"तीमंमन्त्रं व्याचष्टे—नावेदीत्यादिपद्यचतुष्केण—महतींविनष्टिं दर्शयति—कदाचिदिति ॥ ७३ ॥

तस्माच्छास्त्राधिकारेण युक्तं विप्रादिजन्मचेत् ।
लभ्यमालस्यरहितो विद्यादात्मानमद्वयम् ॥ ७४ ॥

"वेत्तिक"इति प्रश्नस्योत्तरमाह—तस्मादिति—तदापरामृष्टस्सम्भावितमहाविनाशोवेदनेहेतुः ॥ ७४ ॥

नानात्मत्वभ्रमोच्छित्त्यैतत्त्वेद्देहेष्ववस्थितम् ।
स्वात्मत्वेनैवनिश्चित्यधीरायान्ति कृतार्थताम् ॥ ७५ ॥

नानात्मत्वेति-भिन्नात्मत्वेत्यर्थः ॥ ७५ ॥

माययादृश्यतेलोकोयेऽस्मात्प्रेत्यस्थिताः परे ।
नतेषां जन्ममरणे विद्येतेकर्हिचित्कचित् ॥ ७६ ॥

तेषाम्—अस्मात्प्रेत्यस्थितानां परेषां, श्रुतिस्थमृङ्धातुमुपलक्षणत्वेनव्याचष्टे—जन्ममरणे इति ॥ ७६ ॥

ईश्वरानुग्रहादेवभवेदद्वैतवासना ।
नान्यथेति विवक्षित्वाकाचिदाख्यायिकोच्यते ॥ ७७ ॥
देवार्थमीश्वरोयुद्धेविजयं कुरुते सदा ।
अज्ञात्वाऽनुग्रहंदेवाजयगर्वंप्रपेदिरे ॥ ७८ ॥

"ब्रह्महदेवेभ्योविजिग्य" इत्यादिं तांहोवाचकिमेतद्यक्षमि"त्यन्तं तृतीयखण्डं "साहो वाचे"त्युपक्रमं "सह्येनत्प्रथमोविदा ञ्चकारे"त्यन्तंचतुर्थखण्डभागञ्चव्याचष्टे–ईश्वरेत्यादिश्लोकैकादशकेन–अन्यथेति–ईश्वरानुग्रहाभावइत्यर्थः ॥७७॥७८॥

जयः स्वकीयइत्येवं देवाभिप्रायमीश्वरः ।
ज्ञात्वादेवान्बोधयितुं तेषां प्रादुर्बभौ पुनः ॥ ७९ ॥

तेषां देवानाम् ॥ ७२ ॥

देवाः सभासदोदृष्ट्वावपुरैशमलौकिकम् ।
किमेतदितिविज्ञातुं प्रैरयन्ताग्निमन्तिके ॥ ८० ॥
समागतंवह्निमीशः कोभवानितिपृष्टवान् ।
जातवेदोऽग्निनामाहमितिगर्वितवानसौ ॥ ८१ ॥
त्वयिकिंवीर्य्यमित्याहगर्वंभङ्क्तुंपरेश्वरः ।
अग्निः सर्वं दहामीतिवाक्यं गर्वादवोचत ॥ ८२ ॥

यक्षमित्यस्यव्याख्याऽलौकिकमिति ॥ ८० ॥ ८१ ॥ ८२ ॥

स्वदत्तांशक्तिमाहृत्य दहेतितृणमित्यमुम् ।
उवाचेशः सोऽपिदग्धुंनशशाकैवतत्तृणम् ॥ ८३ ॥
अग्निवद्वायुरप्यत्रगर्वेभग्नेनिवृत्तवान् ।
निर्गर्वमिन्द्रंदृष्ट्वेशः परीक्षायैतिरोऽभवत् ॥ ८४ ॥
इन्द्रईशप्रसादार्थीतस्थावूर्ध्वंविलोकयन् ।
अनुग्रहीतुमिन्द्रंतमुमारूपोऽभवद्धरः ॥ ८५ ॥

सोऽग्निः ॥ ८३ ॥ ८४ ॥ ८५ ॥

देविदृष्टंपुरादेवैः किंतद्ब्रूहीतिपृष्टवान् ।
तद्ब्रह्मानुग्रहात्तस्य जयोऽभूदित्युवाचसा ॥ ८६ ॥
सोमा ॥ ८६ ॥

उत्कृष्टा अग्निवाय्विन्द्रा ईषत्सम्भाषणादमी।
तेषामपीन्द्रः पुण्यात्माऽनुग्रहोऽप्याधिकोयत ॥ ८७ ॥

तेषाम्—अग्निवाय्विन्द्राणांमध्ये तस्य पुण्यात्मत्वेलिङ्गमाह—अनुग्रहइति॥८७॥

ईशानुग्रहसिद्ध्यर्थं ब्रह्मोपास्यंमुमुक्षुभिः।
तच्चाधिदैवमध्यात्ममधिभूतमुपास्यताम् ॥८८॥

"तस्यैष आदेशोयदेतद्विद्युतोव्यद्युतदा ३ इतीन्न्यमीमिषदा ३ इत्याधिदैवतम्—अथाध्यात्मम्—यदेतद्गच्छतीवचमनोऽनेनचैतदुपस्मरत्यभीक्ष्णंसङ्कल्पः। तद्धतद्वनं नाम तद्वनेत्युपासितव्यं सयोएतदेवं वेदाभिहैनं सर्वाणिभूतानिसंवाञ्छन्ती"त्येतान्युपासनपराणिवचनानिविवृणोति—ईशेत्यादिपद्यचतुष्केण ॥ ८८ ॥

आविर्भावतिरोभावौ विद्युद्वद्ब्रह्मणिस्थितौ।
ततोविद्युदुपाध्येतद्ब्रह्मस्यादाधिदैवतम् ॥ ८९ ॥

ततो, ब्रह्मणिविद्युद्वदाविर्भावतिरोभावयोः स्थितत्वात् ॥ ८९ ॥

मनोऽध्यात्ममुपाधिः स्यात्स्मृतिसंकल्पसंयुतम्।
तद्धनेति ब्रह्मनामतन्नामकमुपास्यताम् ॥ ९० ॥

तन्नामकमिति। तत्तद्धनंनामयस्यतत्तथेत्यर्थः ॥ ९० ॥

यत्तैः संभजनीयंतद्धवेत्तद्धननामकम्।
तथैवोपासितं ब्रह्मदद्यादाचार्य्यसंपदम् ॥ ९१ ॥

तथेति—तद्धननामकत्वेनेत्यर्थः ॥ ९१ ॥

तदुपासकमीशानुगृहीतं ब्रह्मवेदिनम्।
वाञ्छन्तिविद्यां ब्रूहीति भक्तिमन्तोऽखिलाजनाः॥ ९२ ॥

प्रकाशकृत् सप्तमकाण्डिकास्थ "मुपनिषदंभोब्रूही"त्येतत् षष्ठ्यामपकृष्यैतां व्याचष्टे—तदिति—भाष्यकृत्तुतत्तत्रैवयोजितवानिति बोध्यम् ॥ ९२ ॥

हेशिष्यब्रह्मविद्यातेकथिताऽत्यन्तविस्तरात्।
"श्रोत्रस्यश्रोत्रमि"त्यादेस्तद्विद्यासाधनंशृणु ॥ ९३ ॥

"उपनिषदंभोब्रूही"ति व्याख्यातप्रश्नस्योत्तरवचनम् "उक्तातउपनिषद्ब्राह्मीं वावत उपनिषदमब्रूमे"तीत्येतद्व्याचक्षाण "स्तस्यैतपोदमः कर्मेति प्रतिष्ठा-वेदाः सर्वाङ्गाणिसत्यमायतन"मित्येतद्विवृणोति-हेशिष्येति ॥ ९३ ॥

वेदाः षडङ्गसहिता अग्निहोत्रादिकर्म च ।
कृच्छ्रादिकंतपोदान्तिस्तैर्विद्याप्रतितिष्ठति ॥ ९४ ॥

अवतार्य्य व्याचष्टे-वेदा इत्यादिपद्यद्विकेन ॥ ९४ ॥

यत् सत्यंबाधरहितं तद्विद्यायतनंखलु ।
साधनैः साधिता विद्यासत्येऽस्मिन् पर्य्यवस्यति ॥ ९५ ॥

"सत्यमायतन"मित्यस्यतात्पर्य्यमाह-यदिति ॥ ९५ ॥

अर्ज्यतेसुष्ठुयन्मुक्तिपदंतत्स्वर्ग उच्यते ।
अनन्तोनाशराहित्याज्ज्येष्ठः सर्वोत्तमत्वतः ॥ ९६ ॥

"योवाएतामेवं वेदाऽपहत्यपाप्मानमनन्तेस्वर्गेलोकेज्येयप्रतितिष्ठती"त्येतद्विवृणोति-अर्ज्यतइत्यादिपद्यत्रिकेण-पूर्वार्द्धे स्वर्गपदव्याख्या, तृतीयचतुर्थपादौ क्रमादनन्तज्येयपदयोः विवरणम् ॥ ९६ ॥

मुख्याधिकारिणः प्रष्टुः शिष्यस्य ब्रह्मबोधनम् ।
ससाधनं सदाऽऽचार्य्यएवमत्रोपदिष्टवान् ॥ ९७ ॥

पदार्थानभिधायवाक्यार्थवर्णनंप्रसञ्जयति-मुख्येति-एवमिति-वक्ष्यमाणप्रकारेणेत्यर्थः-अत्रेत्यवतारितवाक्योक्तिः ॥ ९७ ॥

विद्यामेतां वेदयोऽसौपाप्मानं प्रतिबन्धकम् ।
अपहत्यविमुक्त्याख्येस्वर्गेऽस्मिन् प्रतितिष्ठति ॥ ९८ ॥

वाक्यार्थं वर्णयति-विद्यामिति-विमुक्त्याख्ये, मोक्षनामनि ॥ ९८ ॥

अवाङ्मनसगम्यत्वमुपदेशश्चवेदनम् ।
अविरोधेनतत्सर्वं विस्पष्टमिहवर्णितम् ॥ ९९ ॥

व्याख्यासमाप्तिं दर्शयति–अवाङिति–इहेति–तलवकारशाखोपनिषदुक्तिः॥९९॥

विद्यातलवकाराणां शाखायां श्रूयते स्फुटम् ।
तद्व्याख्यानेन सन्तुष्याद्विद्यातीर्थमहेश्वरः ॥ १०० ॥

इति श्रीविद्यारण्यविरचितेऽनुभूतिप्रकाशे तलवकारविद्याप्रकाशो नामैकोनविंशोऽध्यायः ॥ १९ ॥

विद्यातीर्थमहेश्वरसन्तोषं प्रार्थयते–विद्येति–तलवकारनामकानां या शाखा तस्यां श्रूयते या "केनेषितं पततीत्यादिका" विद्या तस्याः स्फुटं व्याख्यानेनेतियोजना १००

इतिश्रीद्विजवर्य्यपतिरामात्मजपाराशर्य्यकुलाम्भोजभास्करचित्रधरपण्डितात्मजश्रीरामटहलपण्डिततनूजोविठीदेवीगर्भजकाशीनाथशर्म्मकृतौ मितप्रकाशविवृतौ तलवकारविद्याप्रकाशो नामोनविंशोऽध्यायः ॥ १९ ॥



## अथविंशोऽध्यायः ।

अथर्वणेतापनीये उत्तरस्मिन्प्रजापतिः ।
देवानबूबुधन्मन्त्रराजप्रणवमागतः ॥ १ ॥

अथर्ववेदीयांनृसिहोत्तरतापिन्युपनिषदंव्याख्यातुमुपक्रमते–अथर्वणइति–मन्त्रराजप्रणवेति - मन्त्राणांराजायःप्रणव ओङ्कारस्तस्येत्यर्थः ॥ १ ॥

मन्त्रराजं पूर्वतापनीयं श्रुत्वातदाधिया ।
ध्यायन्तः सगुणं ब्रह्मदेवाधीशुद्धिमाप्नुवन् ॥ २ ॥

"ॐदेवाहवैप्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोङ्कारनोव्याचक्ष्वेति" देवानां प्रश्नवचनंविवरीतुमवतारयति–मन्त्रराजमिति–देवानृसिंहपूर्वतापिन्युपनिषदुत्पन्नं मन्त्रराजं प्रणवं श्रुत्वा "देवाहवैमृत्योः पाप्मभ्यः संसाराच्चविभीयुस्तेप्रजापतिमुपाधावँस्तेतेभ्यएतंमन्त्रराजं नारसिंहमानुष्टुभंप्रायच्छत्–तेनहवैतेमृत्युमजयन्पाप्मानंचातरन्संसारंचातरन्नि" त्युपक्रम्य पठितयानृसिंहपूर्वतापिनीययाश्रुत्यानिश्चित्य-तदाश्रवणोत्तरसमयेधियाऽन्तःकरणेनसगुणं ब्रह्मध्यायन्तः तत्रत्यप्रजापत्युपदिष्टमार्गेणोपासीनामनश्शुद्धिमाप्नुवन्निनितियोजना–एतेननुदेवानां वक्ष्यमाणेनिर्विशेषब्रह्मप्रश्नोऽनुपपन्नोजिज्ञपयिषारूपस्यतस्यजिज्ञासालक्षणकारणाभावात्--जिज्ञासाकारणं चान्तःकरणशुद्धिः साचयज्ञाद्यनुष्ठानादेवभवतिनान्यथा–"तमेतमात्मानं वेदानुवचनेन ब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसाऽनाशकेने" त्यादिश्रुत्याजिज्ञासांप्रतिचित्तशुद्धिद्वारायज्ञादीनामेवकारणत्वेनावगमात् । नचयज्ञादिभिस्तेषांसासम्भवतितेषांतत्रानधिकारादिति शङ्कानिरस्ता यज्ञाद्यनुष्ठानवदुपासनानामपि तद्द्वारातांप्रतिकारणत्वसम्भवात् । नचतास्वपितेषामनधिकारइति वाच्यम् । तान्प्रतिदेवादीनां तदुपदेपदेशस्यायुक्तत्वप्रसङ्गात् । नचतान्प्रतितदुपदेशोऽर्थवाद इति वाच्यम् । तस्यार्थवादत्वेऽपि देवताधिकरणन्यायेनदेवादिविग्रहसिद्धिवत् तेषान्तदाधिकारादेरपिसिद्धेः । निरूपितश्चायमर्थेनिपुणतरंदेवताधिकरणभाष्येभगवत्पादैरित्युपरम्यते–नचोपासनापियज्ञाद्यनुष्ठानेनान्तःकरणकल्मषक्षयेसत्येव भवतिनान्यथेतिकथन्तेषांसेति वाच्यम् । तत्तदधिकारसम्पादकैः पूर्वकर्म्मभिरेवतेषान्तत्क्षयसम्भवादिति सर्वमवदातम् ॥ २ ॥

ततस्तेनिर्गुणं ब्रह्म पप्रच्छुः शुद्धबुद्धयः ।
अणोरणीयान् यः प्रत्यङ्प्रणवेतं वद प्रभो ॥ ३ ॥

अवतारितप्रश्नवचनं विवृणोति-तत इत्यादिपद्यत्रिकेण-"देवाहवै प्रजापति मब्रुवन्" इति तदंशं पूर्वार्द्धेन विवृण्वन्-विवृणोत्युत्तरार्द्धेना"णोरणीयांसमिममात्मा-नमोङ्कारंनो व्याचक्ष्वे"ति तदंशं विवृणोति ततइति-ततोऽन्तःकरणशुद्धिप्राप्त्य-नन्तरम्-श्रुतिस्थात्मपदाविवरणमुत्तरार्द्धे-प्रत्यङ्ङिति-आचक्ष्वेतिपदस्यचतद्वदेति, तथौङ्कारमित्यस्य तात्पर्यार्थविवरणंप्रणव इति। हेप्रभो योऽणोरणीयान् प्रत्यङ्तं प्रणवलक्षणोपाधौवदोपादिशेतियोजना ॥ ३ ॥

परमाणोर्योगिनेत्रगम्यं रूपं यदस्तितत्।
प्रतीचोनास्त्यतः प्रत्यङ्ङणीयान्न परमाणुतः ॥ ४ ॥

उक्तमणोरणीयस्त्वं प्रतीचउपपादयति-परमाणोरिति-यत्परमाणोरूपं यो-गिप्रत्यक्षविषयीभूतमस्तितत्तादृशंयोगिप्रत्यक्षविषयतामापन्नंप्रतीचोरूपंनास्तीत्यतः प-रमाण्वपेक्षयाऽपि प्रत्यङ्ङात्माऽणीयानितिविभागः ॥ ४ ॥

ॐकारो वाचकस्तस्य प्रतीकं वेति हि श्रुतम्।
ॐकारेणात्मनो ध्यानं वदास्मभ्यं सविस्तरम् ॥ ५ ॥

उक्तवाक्यार्थमभिनयति-ॐकार इति-तस्य प्रत्यगात्मनः—वाकारोऽत्र-समुच्चये "वास्याद्विकल्पोपमयोरेवार्थेचसमुच्चये" इतिकोशात्—तथाचात्रेयं यो-जना-तस्य-प्रतीचओंशब्दोवाचकः प्रतीकंध्यानालम्बनंचेति हि यतः श्रुतं "त-स्य वाचकः प्रणव" इत्यादिना-नृसिंहपूर्वतापिनीप्रभृतिस्थश्रुत्याचबुद्धमतोऽस्मा-कं किन्तत् प्रणवालम्बनन्ध्यानमिति जिज्ञासाजायते इति तांनिवर्त्तयितुंप्रणवेनाल-म्बनेनप्रतीचोध्यानमस्मभ्यं वदोपदिशेति-ननुतस्याऽपि पूर्वतापिन्यामाभिहितत्वा-त्पुनस्तदुपदेशो वः प्रत्यनर्थकइत्याशङ्कांपरिहरति-सविस्तरमिति-अयम्भावः-त-त्रसगुणस्यैवप्रतीचस्तदालम्बनंध्यानमुक्तमधुनानिर्विशेषस्यतस्यसविस्तरंतदालम्बनं-तदुपदिशेति-अत्रप्रतीकोवेति पाठोयुक्तः प्रतिभाति-प्रतीकोऽवयवे पुंसी"तिकोशात् नचास्तुतस्यावयवेपुंस्त्वन्ध्यानालम्बनेक्लीवत्वकल्पनयानदोषइति वाच्यम्। तस्या-एवदोषत्वात्-किञ्चब्रह्मणःसर्वोपादानत्वेनतदीयोपादेयेप्रणवादौग्रुप्रभृतिपुमूर्द्धत्वादि-कल्पनावत्तदीयावयवत्वकल्पनेनपुँस्त्वस्यैवन्याय्यत्वाच्च-नचप्रतीकंवेतिप्रकाशेतत्पदा-दालम्बनत्वेनैवप्रणवस्यभानंनत्ववयवत्वरूपेणापीति वाच्यम्। प्रतीकपदस्याजह-ल्लक्षणयातत्रतेनरूपेणात्रतत्पदात्तद्भानस्वीकारेबाधकाभावात्। अस्तुवा जहल्लक्षण-

यातेनैवरूपेणतत्रतद्भानं तथापिपुंस्त्वत्यागोनयुक्तः गङ्गायांघोषइत्यादिस्थलयिग-ङ्गादिपदेपुंस्त्रीत्वाद्यत्यागवदत्राऽपि पुंस्त्वत्यागे बाधकाभावेन क्लृप्ततत्त्यागाक्लृप्तक्लीवत्वकल्पनाया अनौचित्यात् । वस्तुतस्तुतत्पदमालम्बनविशेषे आदैजादिपुवृ-द्ध्यादिपदवत्पारिभाषिकमेव नतुलाक्षणिकंशक्तंवातथाचतत्रतस्यक्लीवत्वेनपरिभाषितुः प्रयुयुक्षितत्वेनयथाश्रुतपाठएवसाधुरिति बोध्यम् ॥ ५ ॥

श्रूयतामयमोङ्कारोनिःशेषजगदात्मकः ।
इति ध्यात्वा ब्रह्मसर्वमात्मा ब्रह्मेतिवै स्मरेत् ॥ ६ ॥

"तथेत्योमितित्येतदक्षरमिदंसर्वं" तस्योपव्याख्यानं "भूतंभवद्भविष्यदिति सर्वमोङ्कारएवयच्चान्यत्त्रिकालातीतंतदप्योङ्कारएवसर्वंह्येतद्ब्रह्मायमात्माब्रह्मैतमेत-मात्मानमोमिति ब्रह्मणैकीकृत्यब्रह्मचात्मानमोमित्येकीकृत्यतदेकमजरममृतमभयमोमि-त्यनुभूये"त्येतावन्तंब्रह्मोपदेशभागं विवृणोति—श्रूयतामित्यादिपद्याष्टकेन—ओंकारवि-शेष्यकं सर्वात्मत्वप्रकारकन्ध्यानं प्रकर्त्तव्यमित्यत्रतात्पर्य्यवत्—'ओमित्येतदक्षरमिदं सर्वमि"त्यादितदप्योङ्कारएवे"त्यन्तं वाक्यमित्याह—अयमोङ्कार इत्यादिनाध्यात्वेत्य-न्तेन—"सर्वंह्येतद्ब्रह्मायमात्माब्रह्म"त्येतद्व्याचष्टे—ब्रह्मेत्यादिना "सर्वंह्येतद्ब्रह्माऽय-मात्माब्रह्मे"ति तद्भागं विवृणोति—ब्रह्मसर्वमित्यादिनाकिञ्चिन्न्यूनार्द्धाधिकेनपद्यच-तुष्केण—अत्रात्मपदमावर्त्यसर्वंब्रह्माऽऽत्माऽऽत्माब्रह्मेतियोजना—आत्मप्रकारकसर्वात्म-कब्रह्मविशेष्यासर्वात्मकब्रह्मप्रकाराऽऽत्मविशेष्याचस्मृतिर्द्वेय्युत्पाद्येत्यर्थः ॥ ६ ॥

यदोंकारस्य सार्वात्म्यं ध्यानार्थैतन्नवस्तुतः ।
यद्ब्रह्मणस्तु सार्वात्म्यं वस्तुतोऽप्येतदीक्ष्यताम् ॥ ७ ॥

पूर्वोक्तमोङ्कारस्यसर्वतादात्म्यंध्यातुंकल्पितं न वास्तवमत्रब्रह्मणस्तदुच्यमानं वस्तुसद् नत्वेतदपि ध्यानफलकत्वेन कल्पितमिति बोध्यमित्याह—यदिति ॥ ७ ॥

ब्रह्म स्यात्सच्चिदानन्दरूपं सर्वेषु वस्तुषु ।
विद्यन्तेसच्चिदानन्दा इति ह्यूर्ध्वं प्रवक्ष्यते ॥ ८ ॥

ब्रह्मसार्वात्म्यवस्तुत्वे तस्य सर्वानुगतत्वं प्रयोजकं सम्भावयति—ब्रह्मेति—सच्चिदानन्दरूपं ब्रह्म सर्वेषुवस्तुषुस्यात्सम्भवतीति योजना—ननु ब्रह्मणस्तद्रूपत्वंतद्वत्तस्य-सर्वानुगतत्वञ्चोपपादयेत्याशङ्क्यक्षमस्वतान्तदस्यार्थस्यवक्ष्यमाणत्वादित्याह—विद्यन्त-इति ॥ ८ ॥

देहेन्द्रियादिसाक्षी य आत्माऽस्मिन् ब्रह्मरूपता ।
सच्चिदानन्दरूपत्वादसंसारिणि युज्यते ॥ ९ ॥

जीवे स्मार्यं ब्रह्मतादात्म्यं वास्तवं नतु शालग्रामादिषु विष्णूवादितादात्म्यवत् कल्पितमित्याह—देहेन्द्रियादीत्यादिपद्यद्विकेन—सच्चिदानन्दरूपत्वादस्मिन्नात्मन्ब्रह्मरूपतायुज्यत इति योजना ॥ ९ ॥

देहाद्युपाधिसम्बन्धात्संसारित्वं चिदात्मनः ।
स्वतः सोऽयमसंसारी ब्रह्मत्वं युज्यते ततः ॥ १० ॥

औपाधिकमात्मनः संसारित्वं न स्वत इत्याह—देहाद्युपाधीति ॥ १० ॥

ॐमित्युच्चारयन् ध्याता स्वात्मानं ब्रह्मणा सह ।
एकीकृत्य पुनर्ब्रह्माप्येकीकुर्य्यात्तथात्मना ॥ ११ ॥

"तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्मचात्मानमोमीत्येकीकृत्य तदेकमजरममृतमभयमोमीत्यनुभूये"त्येतद्वाक्यं विवृणोति—ॐमित्यादिना पद्यत्रिकेण—ध्यातोमित्येवमुच्चारयन् ब्रह्मणासहाऽऽत्मानमेकीकृत्य आत्मानंब्रह्मतादात्म्येन ध्यात्वेति यावत्—तथाऽऽत्मनाऽऽसह ब्रह्मैकीकुर्यात् आत्मतादात्म्येन ब्रह्मध्यायेदिति योजना, तादात्म्येन ब्रह्मप्रकारकमात्मविशेष्यकं तादात्म्येनाऽऽत्मप्रकारकब्रह्मविशेकमिति व्यतिहारलक्षणंध्यानं संपादनीयमिति तात्पर्य्यम् ॥ ११ ॥

तथाऽहंसः सोऽहमिति व्यतिहारोऽत्र लक्ष्यते ।
विचिन्त्याऽन्योन्यतादात्म्यं तथैवानुभवेदिदम् ॥ १२ ॥

तथेति—तथा सति "अहंसः सोऽहमि"त्याकारकं व्यतिहारपदप्रतिपाद्यं ध्यानमात्रप्रजापतिवाक्येलक्ष्यते लक्षणया प्रतीयत इति योजना—विचिन्त्येत्यादि—एवमन्योऽन्यतादात्म्यं ध्यात्वा तथैव व्यतिहारलक्षणतादात्म्यध्यानादेव इदमन्योन्यतादात्म्यमनुभवेत् साक्षात्कुर्य्यादित्यर्थः ॥ १२ ॥

बुद्धिस्तदाकृतिं कृत्वा यावन्नैश्चल्यमाप्नुयात् ।
तावद्भवेदनुभवो जरामरणवर्जिते ॥ १३ ॥

बुद्धिस्तदाकृतिंध्येयाकारां निर्विकल्पलक्षणां वृत्तिं कृत्वोत्पाद्ययावदय-

६०

दानैश्वर्यं स्थैर्य्यमाप्नुयात् तावत्तदाजरामरणभयवर्जितविषयाऽनुभवः साक्षात्कारो भवेदित्यन्वयः ॥ १३ ॥

चलितानुभवाद्बुद्धिर्बहिश्चेद्गन्तुमुद्यता ।
तदा बाह्यनिवृत्त्यर्थं कुर्य्यादारोपसंहृती ॥ १४ ॥

"तस्मिन्निदं सर्वं त्रिशरीरमारोप्यतन्मयंहि तदेवेति संहरेदोमिती"त्येतद्व्याचष्टे—चलितेत्यादिपद्यत्रिकेण—यदि बुद्धिरनुभवाज्जरामरणभयरहितात्मसाक्षात्कारमजनयित्वाऽऽत्मनश्चलिता ततो निर्गतोपेक्षितध्यानेति यावत् तथासतीबहिः संचारं कर्तुमुद्यताभवति तदा बहिर्देशसंचारं निरोद्धुमारोपसंहृतीकुर्य्यादिति योजना । आरोपः,आरोपितत्वप्रकारकमिदमारोपितमित्याद्याकारं ध्यानं, संहृतिः बोधजन्यलयप्रकारकमिदं बोधाल्लीनमित्याकारकं ध्यानम् ॥ १४ ॥

स्थूलं सूक्ष्मं कारणं च शरीरत्रयमात्मनि ।
माययारोपितं ध्यात्वा बोधाल्लीनमिति स्मरेत् ॥ १५ ॥

श्रुत्यभिप्रेतावारोपसंहारौ तां व्याचक्षाण आह—स्थूलमिति ॥ १५ ॥

तदाप्योङ्कारमुच्चार्य नादान्ते निर्विकल्पकम् ।
चित्तं कृत्वा यथाशक्ति स्वात्मतत्त्वे स्थिरो भवेत् ॥ १६ ॥

तदापीति—आरोपसंहारसमयेऽपि, नादान्ते, प्रणवोच्चारणसमये, मकारोच्चारणानन्तरं यो ध्वनिर्जायते सोऽत्र नादस्तदवसानसमये चित्तं यथाशक्ति, शक्तिमनतिक्रम्य निर्विकल्पकं, निर्विकल्पसमाधिमत् ध्येयैकाकारवृत्तिमदितियावत्, कृत्वा, संपादयेत्यादि योजना ॥ १६ ॥

निर्गते तु पुनश्चित्तेऽधिदैवाध्यात्मभेदतः ।
यद्देहत्रयमस्त्येतदभेदेनैव चिन्तयेत् ॥ १७ ॥
अण्डसूत्राव्याकृताख्या देहाः स्युरधिदैवतम् ।
पिण्डलिङ्गाज्ञानरूपमध्यात्मं वपुषां त्रयम् ॥ १८ ॥

प्रतिबन्धकसद्भावादारोपसंहृतिभ्यामपि निर्विकल्पसमाध्यलाभे शरीरत्रिकद्विकसमुदायमध्येस्थूलत्वसूक्ष्मत्वसूक्ष्मतरत्वरूपात्यन्तसादृश्यात् अण्डपिण्ड-

शरीरयोः सूत्रलिङ्गशरीरयोरव्याकृतनामकाज्ञानशरीरयोश्चाभेदं ध्यायेत्—तत-श्चित्त्रिकद्विकसमुदायमध्येस्थूलानन्दभुक्त्वसूक्ष्माऽऽनन्दभुक्त्वसूक्ष्मतराऽऽनन्द-भुक्त्वरूपसादृश्यात् विराड्विश्वयोर्हिरण्यगर्भतैजसयोरीशप्राज्ञयोश्चाभेदंध्यायेयेदि-त्येतत्परम्—"तंवाएतंत्रिशरीरमात्मानं त्रिशरीरं ब्रह्मानुसन्दध्यात् स्थूलत्वात् स्थूलभुक्त्वाच्चसूक्ष्मत्वात्सूक्ष्मभुक्त्वाच्चैक्यादानन्दभुक्त्वाचेति" वाक्यजातं विवृणोति-निर्गतैं इत्यादिनासार्द्धचतुष्केण ॥ १७ ॥ १८ ॥

स्थूलसूक्ष्मैक्यरूपत्वमुभयत्रक्रमात्त्रिषु ।
अस्तिसाम्यमभेदोऽत उभयोरिहाचिन्त्यताम् ॥ १९ ॥
विराड्ढिरण्यगर्भेशा अधिदैवं हि देहिनः ।
विश्वश्चतैजसः प्राज्ञोह्यध्यात्ममपिदेहिनः ॥ २० ॥

अत, अभेदारोपप्रयोजकसाम्यसद्भावात् ॥ १९ ॥ २० ॥

स्थूलसूक्ष्माऽऽनन्दभुजः क्रमात्तेदेहिनस्त्रयः ।
एतत्सर्वंस्फुटीकर्त्तुं चतुष्पात्प्रविविच्यते ॥ २१ ॥

आप्रथमखण्डसमाप्त्युत्तरग्रन्थकल्पितचतुष्पात्त्वं पूर्वोक्तार्थस्य स्पष्टप्रति-पत्तये प्रकर्षेणविविच्यते इत्याह—एतदिति ॥ २१ ॥

इन्द्रियैर्विषयज्ञानं यत्तज्जागरितं भवेत् ।
तत्रस्थित्वा जगत् स्थूलं वेत्त्यात्मातत्तदिन्द्रियैः ॥ २२ ॥

प्रतिज्ञातं विवरणं कुर्वन्नादौ "सोऽयमात्मचतुष्पाज्जागरितस्थानः स्थूलप्रज्ञः सप्ताङ्गएकोनविंशतिमुखः स्थूलभुक्चतुरात्माविश्वोवैश्वानरः प्रथमः पादः" इत्येत-द्वाक्यंविवृणोति—इन्द्रियैरित्यादिपद्यषट्केन—जागरितं जागरणं स्थानंयस्यसोऽयं जागरितस्थान इत्यत्रत्यजागरितपदार्थं निर्वक्ति—इन्द्रियैरिति—तनेति—निरुक्तजाग-रइत्यर्थः । स्थूलास्थूलजगद्विषया प्रज्ञायस्येति स्थूलपदार्थमाह—जगदित्यादि ॥२२॥

शिरश्चक्षुर्मुखं प्राणो मध्यं बस्तिस्ततोप्यधः ।
इत्यङ्गसप्तकं वैश्वानरोपास्तिश्रुतौ श्रुतम् ॥ २३ ॥

सप्ताङ्गानियस्यसोऽयं सप्ताङ्ग इत्यत्राकाङ्क्षितानि सप्ताङ्गानि दर्शयति । शिरइत्यादि—मध्यं, देहमध्यम् । बस्तिर्मूत्रस्थानम्—ततोपि, बस्तेरप्यधः पादावि-

त्यर्थः । वैश्वानरोपास्तिश्रुताविति—वैश्वानरोपासनाविधायिन्यांछान्दोग्यादिश्रुतावित्यर्थः ॥ २३ ॥

ज्ञानकर्मेन्द्रियप्राणभेदाः पञ्चदशेरिताः ।
चतुर्विधान्तःकरणं मुखान्येकोनविंशतिः ॥ २४ ॥

एकोनविंशतिर्मुखानिजागरभोगद्वारभूतानि यस्यसतथेत्यत्रापेक्षितानिमुखानि दर्शयति ज्ञानेति—चतुर्विधेति—अस्यबुद्धिमनोऽहंकारचित्तभेदादित्यादिः ॥२४॥

स्थूलमिन्द्रियगम्यं यत्तद्भुङ्क्तेऽसौचतुर्विधः ।
जागरे जागरः स्वप्नसुप्तितुर्याख्यभेदतः ॥ २५ ॥

चतुर्विधआत्मास्वरूपं यस्य सोऽयं चतुरात्मेत्येतदर्थपरत्वेनचतुरात्मेति पदं विवृण्वन् विवृणोति स्थूलभुक्पदम्—स्थूलमिति—यदिन्द्रियगम्यं तदसौ भुङ्क्त इत्यर्थः—चतुर्विध इत्यादि—जागरस्वप्नसुषुप्तितुर्याख्यभेदतश्चतुर्विधोऽसौजागरे भवतीत्यर्थः ॥ २५ ॥

जागरो व्यवहारोऽक्षैः स्वप्नोमानसचिन्तनम् ।
तूष्णीं स्थितिः सुषुप्तिः स्यात्तृप्तत्वन्तुर्यमुच्यते ॥ २६ ॥

जागराजागरादीनां चतुर्णाम् क्रमाच्चतुर्भिः पादैः स्वरूपाणिदर्शयति—जागरइति ॥ २६ ॥

अध्यात्ममधिदैवं च विश्ववैश्वानराभिधः ।
ईदृशः प्रथमः पाद आत्मनः स्याच्चतुष्पदः ॥ २७ ॥

"विश्वोवैश्वानरः प्रथमः पाद" इति श्रुतिभागं विभजति—अध्यात्ममिति-अध्यात्मं विश्वाभिधोऽधिदैवं विश्वानराभिध ईदृशश्चतुष्पद आत्मनः प्रथमः पादः स्यादित्यन्वयः ॥ २७ ॥

इन्द्रियाणामुपरमे धिया जागरवासनाम् ।
सूक्ष्मां जानन्वासनात्मा सप्ताङ्गादियुतो भवेत् ॥ २८ ॥

"स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्ताङ्गएकोनविंशतिमुखः सूक्ष्मभुक्चतुरात्मातैजसोहिरण्यगर्भोद्वितीयः पादइत्ये" तद्व्याचष्टे । इन्द्रियाणामित्यादिसार्द्धत्रिकेण॥२८॥

स्पष्टस्मृतिरविस्पष्टस्मृतिरस्मृतिरित्यपि ।
स्वप्नभेदाः स्वप्नमध्ये जाग्रत्स्वप्नसुषुप्तयः ॥ २९ ॥

स्पष्टेत्यादि–स्वप्नेऽपि स्पष्टस्मृतिराविस्पष्टस्मृतिरस्मृतिरित्येतेस्वप्नविशेषाः क्रमाज्जाग्रत्स्वप्नसुषुप्तयो ज्ञेया इति योजना ॥ २९ ॥

स्वप्नेऽपि तुर्यं तृप्तत्वं जाग्रतीवानुभूयते ।
हिरण्यगर्भोऽधिदैवमध्यात्मं तैजसाभिधः ॥ ३० ॥

तृप्तत्वलक्षणं तूर्यं स्वप्नेऽप्यनुभूयत इत्यन्वयः ॥ ३० ॥

द्वितीयः पाद एष स्यादात्मनोऽस्य चतुष्पदः ।
धियोलयेसुषुप्तिस्थ एकोऽभूद्द्वैतलोपनात् ॥ ३१ ॥
धीवृत्तिरूपा प्रज्ञास्ता एकीभावमुपागताः ।
दुःखहान्यानन्दमयो भुङ्क्ते ब्रह्मसुखन्तदा ॥ ३२ ॥

"यत्र सुप्तो न कंचन कामं कामयते । न कंचनस्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयोह्यानन्दभुक् चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पाद" इत्येतद्व्याचष्टे–धियइत्यादिपद्यपञ्चकेन ॥ ३१ ॥ ३२ ॥

अविद्यावृत्त्यवच्छिन्नं चैतन्यं भोगसाधनम् ।
सुषुप्तौ चतुरात्मत्वं जागरादिविभेदतः ॥ ३३ ॥

"चेतोमुख"इत्यस्य तात्पर्य्यार्थमाह । अविद्येति–चतुरात्मत्वं साधयति–जागरेति ॥ ३३ ॥

तन्द्र्यामध्यापयेद्वाचा तदा स्यात्सुप्तिजागरः ॥
ध्यानाभ्यासस्तु यस्तन्द्र्यां सुप्तिस्वप्नः स उच्यते ॥ ३४ ॥

स्वप्नस्य स्पष्टस्मृतिप्रभृतिभेदात्त्रैविध्यवत् सुषुप्तेरपि सुप्तिजागरसुप्तिस्वप्नसुप्तिसुप्तिसुप्तितुर्यभेदाच्चातुर्विध्यं दर्शयति–गाढनिद्रेति–स्वप्नजागरयोः सन्धिलक्षणायान्तन्द्र्यां वाचानतुमनसा कश्चिदध्यापयेत्तदा सुप्तिजागरोज्ञेयस्तत्रैवयोध्यानाभ्यासः स सुप्तिस्वप्न इत्यर्थः ॥ ३४ ॥

गाढनिन्द्रा सुप्तसुप्तिः सुप्तितुर्यसुखोद्भवः ।
अध्यात्मं प्राज्ञ एवं स्यादधिदैवं तथेश्वरः ॥ ३५ ॥

गाढनिद्रासुप्तिः सुखोद्भवरूपं सुप्तितुर्यमित्याह—गाढनिद्रेतिपूर्वार्द्धेन—एतेनसार्द्धपद्येन जागरादि विभेदत इत्युक्तं व्याख्याय "प्राज्ञ ईश्वरस्तृतीयः पाद" इत्येतद्व्याचष्टे । अध्यात्ममित्यादिना ॥ ३५ ॥

तृतीयः पाद इत्युक्त आत्मनोऽस्य चतुष्पदः ।
पादत्रयमिदं मायामात्रं स्यान्नतु तात्त्विकम् ॥ ३६ ॥

"एषसर्वेश्वर एषसर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौहि भूतानांत्रयमप्येतत् सुषुप्तं स्वप्नं मायामात्रं चिदेकरसोह्ययमात्मे"ति वाक्यं प्रत्यग्भिन्नस्व सर्वस्य मिथ्यात्वपरं प्रतीचश्चचिदेकरसतापरमित्याह—सार्द्धद्विकसहितेनैकेन पद्येन—पादत्रयमित्यादिना ॥ ३६ ॥

सुषुप्तिस्वप्ननामभ्यां तत्त्वविद्वाक्ति तत्त्रयम् ।
तत्त्वावृते सुप्तसुप्तं स्वप्नता त्वन्यथेक्षणात् ॥ ३७ ॥

तदिति—जाग्रत्स्वप्नसुषुप्तीत्यर्थः—तत्त्वविद्वाक्यस्थसुषुप्तस्वप्नपदार्थावाह तत्त्वेत्यादिना—सुप्तसुप्तंगाढनिद्रालक्षणसुप्तिसुप्त्यपरपर्य्यायः सुषुप्तिविशेष इत्यर्थः॥३७॥

पादत्रयेणावृताऽसौ चिदेकरसताऽऽत्मनः ।
अथ पादश्चतुर्थो यश्चतुरात्मासपूर्ववत् ॥ ३८ ॥

"अथ तुरीयश्चतुरात्मातुरीयाऽवसितत्वादेकैकस्योतानुज्ञात्रनुज्ञाविकल्पैस्त्रयमप्यत्रापि सुषुप्तं स्वप्नमायामात्रं चिदेकरसोह्ययमात्मे"त्येतद्विवृणोति—अथपादइत्यादिनाकिञ्चिन्न्यूनेन सार्द्धषट्केन—अथ यश्चचतुर्थः पादः सपूर्ववत् प्रथमादिपादत्रयवच्चतुरात्माचतुर्विधइत्यर्थः चातुर्विध्यमोताऽनुज्ञाविकल्पभेदसमनन्तरंवक्ष्यति॥३८॥

तुरीयाऽवसितत्वं तु भवेत् पादचतुष्टये ।
ओताऽनुज्ञात्रनुज्ञाविकल्पशब्दैरुदीरिताः ॥ ३९ ॥

"चतुरात्मातुरीयाऽवसितत्वादेकैकस्ये"त्येतद्व्याचष्टे । तुरीयेति । "ओताऽनुज्ञात्रनुज्ञाविकल्पैरि"त्येतद्विवरीतुं प्रतिजानीते । ओतेत्याद्यर्द्धद्विकेन ॥ ३९ ॥

तुरीयपादगा भेदास्तत्स्वरूपं विविच्यते।
ब्रह्मणो गुरुशास्त्राभ्यां बुद्ध्वा सर्वात्मतां ततः ॥ ४० ॥

ओतापदार्थमाह । ब्रह्मणइत्यात्यर्धद्विकेनततः—तादृग्बोधानन्तर-मित्यर्थः ॥ ४० ॥

सर्ववस्तुष्वनुस्यूतं पश्यन्नोता भवेदयम्।
इन्द्रियाणि निरुध्याह ब्रह्मेति ब्रह्मतात्मनि ॥ ४१ ॥

अनुज्ञातृपदार्थमाह । इन्द्रियाणीत्याद्यर्धद्विकेन ॥ ४१ ॥

येनानुज्ञायते सोऽयमनुज्ञातेति कथ्यते।
ज्ञातृत्वं तु निराकृत्य चिदेकरसशेषता ॥ ४२ ॥

अनुज्ञापदार्थमाह—ज्ञातृत्वमित्यादिनाकिञ्चिदधिकेनार्द्धेन ॥ ४२ ॥

अनुज्ञेत्युच्यते मुक्ति रविकल्प इतीर्य्यते।
विद्वज्जारणस्वप्नसुप्तितुर्याऽभिधा इमाः ॥ ४३ ॥

अविकल्पपदार्थमाह—मुक्तिरिति—मुक्तेरविकल्पत्वं विशदयति—विद्वादित्यादि-किञ्चिन्न्यूनसार्द्धपद्येन ॥ ४३ ॥

अवस्थास्तिस्र एतास्तुमायालेशेन संयुताः।
निःशेषमायाहीनोऽयमविकल्पो भवत्यथ ॥ ४४ ॥

अथेत्युत्तरान्वयी ॥ ४४ ॥

अतद्व्यावृत्तिरूपेण तस्यादेशोऽत्र वर्ण्यते।
जाग्रत्स्वप्नान्तरालानि विद्याऽविद्ये सुषुप्तकम् ॥ ४५ ॥

"अथाऽयमादेश" इत्युपक्रम्याम्नातम् "नस्थूलप्रज्ञंनसूक्ष्मप्रज्ञंनोभयतः प्रज्ञंनप्रज्ञं-नाप्रज्ञंनप्रज्ञानघनमदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं-प्रपञ्चोपशमं शिवंशान्तमद्वैतं चतुर्थं मन्यन्ते सआत्मासविज्ञेय ईश्वरग्रासस्तुरीयस्तु-रीय" इत्येतद्व्याचष्टे—अतदित्यादिनापद्याष्टकेन—नस्थूलप्रज्ञमित्यनेन—जाग्रदवस्था, न सूक्ष्ममित्यनेन स्वप्नावस्था, नोभयतः प्रज्ञमित्यनेनजाग्रत्स्वप्नयोः सन्धिः, न-

प्रज्ञमित्यनेनविद्या, नाप्रज्ञमित्यनेनाविद्या, नप्रज्ञानघनमित्यनेनसुषुप्तिर्निषिध्यते, इत्याह—जाग्रदित्यादिनाऽर्द्धद्वयेन ॥ ४५ ॥

नस्थूलप्रज्ञमित्याद्यैः क्रमात्षड्भिर्निर्वार्य्यते ॥
न चक्षुरादिभिर्दृश्यैर्नप्राणै र्व्यवहारभाक् ॥ ४६ ॥

अचिन्त्यमितिपदमव्यवहार्य्यमिति च पदं क्रमाद्व्याचष्टे—नचेत्यादिना॥४६॥

नापिकर्मेन्द्रियैर्ग्राह्यं नानुमेयं च लक्षणात् ।
नचिन्त्यंमनसा नैव शब्दैश्चव्यपदिश्यते ॥ ४७ ॥

अग्राह्यालक्षणाचिन्त्याव्यपदेश्यपदानि—व्याचष्टे—नापीति ॥ ४७ ॥

स्वप्रकाशात्मसारत्वान्नापिशक्याऽस्य शून्यता ।
स्थूलप्रज्ञादिरूपो यः प्रपञ्चः स्वात्मनः पृथक् ॥ ४८ ॥

ऐकात्म्यप्रत्ययसारप्रपञ्चोपशमपदार्थौक्रमाद्दर्शयति—स्वेति ॥ ४८ ॥

तत्कृतैर्वहुर्विक्षेपैरात्मनोदुःखितेति चेत् ।
प्रपञ्चः कल्पितस्तत्त्वबोधेनैवोपशाम्यति ॥ ४९ ॥

"प्रपञ्चोपशममि"त्येतद्व्याचक्षाणः पूर्वंतन्निरास्यांशङ्कामाह—तदिति ॥४९॥

ततः शिवंदुःखहीनं सर्वविक्षेपशान्तितः ।
पादं चतुर्थमन्यन्तेवस्त्वद्वैतमिहोच्यते ॥ ५० ॥

शिवशान्तपदे प्रयोज्यप्रयोजकपरत्वेनाविवृणोति—तत इति—सर्वदुःखोपशमादित्यर्थः । शिवमित्यस्य व्याख्या दुःखहीनमिति"अद्वैतं चतुर्थं मन्यन्ते" इत्येतद्व्याचष्टे । पादमित्त्यादिसार्द्धद्वयेन—इह वाक्ये मन्यन्ते इति पदेनाद्वैतेचतुर्थत्व प्रकारकभ्रमरूपामतिरेवोच्यते तुर्हेत्वर्थो यतस्तत्रवस्तुतश्चतुर्थतानास्तीत्यन्वयः॥५०॥

मतिरेवबुभुत्सूनां न त्वद्वैते चतुर्थता ।
यदद्वैतं स एवात्मा ज्ञेयो जिज्ञासुना सहि ॥ ५१ ॥

"सआत्मे"त्यत्रतच्छब्दापेक्षितं पूरयति—यदद्वैतमिति—"सविज्ञेयय"इति कर्तृपदं पूरयित्वा व्याचष्टे । ज्ञेय इति ॥ ५१ ॥

तुर्यपादे त्रयं त्यक्त्वा तुर्ये तुर्योऽवबुध्यताम् ।
मायित्वादीश्वरोऽप्यत्र ग्रस्तः स्यादवबोधतः ॥ ५२ ॥

"ईश्वरग्रासस्तु तुरीय" इत्येतत्तात्पर्यार्थमाह । तुर्येति—त्रयमिति—अस्यपादेत्यादिः, अहेतुपरत्वेनाक्षरार्थमाह—मायित्वादिति—ईश्वरोऽपीति । अपिना-विराड्हिरण्यगर्भौ ग्राह्यौ, अत्र, तुर्ये ॥ ५२ ॥

इत्थंयोगविवेकोद्वौ प्रथमे खण्ड ईरितौ ।
चित्तभ्रमणरूपस्य संसारस्य प्रशान्तये ॥ ५३ ॥

प्रथमखण्डे श्रुत्युक्तयोर्योगब्रह्मविवेकयोः फलं संसारनिवृत्तिरित्याह—इत्थमिति ॥ ५३ ॥

योगो विवेक इत्युक्तौ प्रकारौ श्रुतिसम्मतौ ।
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ॥ ५४ ॥

तत्रैकतरोपदेशस्य वैयर्थ्यमाशङ्क्याधिकारिविशेषेण परिहरति—योग इत्यादिपद्यसार्द्धेन ॥ ५४ ॥

प्रकारौ द्वौ ततः प्रोक्तौ सर्वानुग्रहकाम्यया ।
आदौ द्वितीयखण्डस्य सच्चिदानन्दतात्मनः ॥ ५५ ॥

द्वितीयखण्डं व्याचिख्यासुरादौ आत्मनः सच्चिदानन्दतां विवेक्तुं प्रवृत्ता-श्रुतिरित्याह सार्द्धेन—प्रकाराविति ॥ ५५ ॥

विविच्यते नित्यसत्ता गम्यतेह्यनुवृत्तितः ।
व्यभिचारे जागरादेर्यत्सदव्यभिचारितत् ॥ ५६ ॥

"तम्वा एतमात्मानं जाग्रत्यस्वप्नमसुषुप्तं स्वप्नेजाग्रतमसुषुप्तं सुषुप्तेऽजाग्रतमस्वप्नंतुरीयेजाग्रतमस्वप्नमसुषुप्तमव्यभिचारिणं नित्यानन्दं सदेकरसं ह्येवचक्षुषो द्रष्टा श्रोत्रस्य द्रष्टावाचो द्रष्टामनसो द्रष्टाबुद्धेर्द्रष्टा प्राणस्य द्रष्टातमसो द्रष्टासर्वस्य द्रष्टाततः सर्वस्मादन्यो विलक्षणश्चक्षुषः साक्षीश्रोत्रस्य साक्षीवाचस्साक्षी मनसः साक्षीबुद्धेःसाक्षी प्राणस्यसाक्षीतमसः साक्षीसर्वस्य साक्षीततोऽविक्रियोमहाचैतन्योऽस्मात् सर्वस्मात् प्रियतम आनन्दघनं ह्येवमस्मात् सर्वस्मात् पुरतःसुविभातमेकरसमेवा-

जरममृतमभयं ब्रह्मैवे"ति तद्विवेकपरां श्रुतिं विवृणोति–व्यभिचार इत्यादिना सार्धषट्केन–तदित्युत्तरान्वयि ॥ ५६ ॥

आनन्दैकरसं नित्यमिति सत्त्वं विवेचितम् ।
चक्षुःश्रोत्रादयः सर्वे मदीया इति भासिताः ॥ ५७ ॥
भाताऽसौ चक्षुरादिभ्यो द्रष्टान्यश्चेतनो भवेत् ।
द्रष्टेति दृष्टिकर्तृत्वमहंकारेण कल्पितम् ॥ ५८ ॥

विवेचितमिति–अस्य "सदेकरसंह्येवे"त्यन्तयोक्तश्रुत्येतिशेषः, "चक्षुषोद्रष्टे"त्यादिपर्य्यायस्य, चक्षुरादीनां दृश्यत्वम् चक्षुरादयो मदीया इत्याद्याकारकभानविषयत्वमिति यावत् द्रष्टादृश्येभ्यस्तेभ्यो विलक्षणोभाता चेतनस्तेभ्यो भिन्नः नित्यालुप्तदर्शनरूपं द्रष्टृत्वं तस्य स्वभावोदर्शनकर्तृत्वरूपं तदहंकारोपाधिकमित्यत्र तात्पर्यमाह । चक्षुरित्यादिना सार्धपद्येन ॥ ५७ ॥ ५८ ॥

दृङ्मात्रत्वेन साक्ष्यात्मा विकाररहितत्वतः ।
आनन्दघन आत्माऽसौ परप्रेमास्पदत्वतः ॥ ५९ ॥

"चक्षुषः साक्षी"त्यादे "स्ततो ऽविक्रियोमहे"त्यन्तस्य तात्पर्यमाह । दृङिति–"अस्मात् सर्वस्मात् प्रियतम आनन्दघनंही"त्येतद्व्याचष्टे । आनन्दघन इति–एतेनानन्दघनमिति श्रुतौ क्लीवत्वं छान्दसमिति सूचितम् । एवमेवाग्रेपि ज्ञेयम् ॥५९॥

मा न भूवं सदा सम्यग्भूयासमिति हीक्ष्यते ।
सच्चिदानन्दैकरसो भात्यस्माद्दृश्यतः पुरा ॥ ६० ॥

असिद्धिं निरस्यति, मानेति "एतस्मात् सर्वस्मात् पुरतः सुविभातमेक रसमेवे"त्येताद्विवृणोति–सच्चिदेति ॥ ६० ॥

सर्वेषु व्यवहारेषु निर्विकल्पं स्फुरेत्पुरः ।
तमेव भान्तमन्वेति तद्भासा भास्यते जगत् ॥ ६१ ॥

"भात्यस्मादि"त्यत्रोक्तं भानं स्वरूपभूतं प्रकारतादिरहितमित्याह सर्वेष्विति–निर्विकल्पमिति, स्फुरेदित्यत्रत्यस्फुरणेऽभेदान्वयि; पुरःस्फुरणे श्रुत्यन्तरं संवादयति–तमेव इत्याद्यर्द्धद्वयेन ॥ ६१ ॥

इति श्रुत्यन्तरे प्रोक्तः परमात्मा पुरा स्फुरन् ।
अखण्डैकरसः सोऽयं जरामरणवर्जितः ॥ ६२ ॥

"अजरममृतमभयं ब्रह्मैवे"ति विवृणोति—अखण्डैकरस इति ॥ ६२ ॥

इत्यात्मानं विविच्याथ युञ्जीत प्रणवेन तम् ।
चतुर्णां जागरादीनां प्रत्येकं चतुरात्मता ॥ ६३ ॥

अत्रेदं बोध्यम् । "ब्रह्मैवाप्यजयैनमि"ति पाठो व्याख्येयश्रुतौ संप्रत्युपलभ्यते सचासंबद्धः प्रतीयते किन्तुतत्स्थाने "ब्रह्मैवाथब्रैवैनमि"ति पाठः सम्भाव्यते तत्र ब्रह्मैवेत्यंशस्तु व्याख्यातः अधुना "आप्यजयैनम् (अथब्रैवैनम्) चतुष्पादं मात्राभिरोङ्कारेणचैकीकुर्याज्जागरितस्थानश्चतुरात्मा विश्वोवैश्वानरश्चतूरूपोह्ययमकौरः । स्थूलसूक्ष्मवीजसाक्षिभिरकाररूपैरासेरासिमत्त्वाद्वास्थूलत्वात् सूक्ष्मत्वात् बीजत्वात् साक्षित्वाच्चाप्नोतिहवा इदं सर्वमादिश्च भवति य एवं वेदे"त्येतद्व्याचष्टे । इत्यात्मानमित्यादिना पद्यनवकेन । यथा पूर्वमुक्ता चतुरात्मतेत्यन्वयः ॥ ६३ ॥

पूर्वमुक्ता यथा तद्वदकारादिषु कल्पयेत् ।
आधारादुत्थितो वायुर्नाभिहृत्कण्ठगो बहिः ॥ ६४ ॥

पूर्वमिति—"जागरस्य चातुर्विध्यं "जागरो व्यवहारोऽक्षैः स्वप्नो मानस चिन्तम् । तूष्णीं स्थितिः सुषुप्तिः स्यात् तृप्तत्वं तुर्यमुच्यत"इत्यनेनोक्तं—"स्वप्नस्य चतुर्विधत्वं "स्पष्टस्मृतिरविस्पष्ट स्मृतिरस्मृतिरित्यपीत्यादिना" स्वप्नेपितुर्यं तृप्तत्वं जाग्रतीवानुभूयत" इत्यन्तेनाभिहितं सुषुप्तेश्चातुर्विध्यं, "तन्द्यामध्यापयेद्वाचे"त्यादिना "सुप्तितूर्यंसुखोद्भव" इत्यन्तेन कथिता तूरीयस्य चतुरात्मता" ओताऽनुज्ञात्रनुज्ञाऽविकल्पशब्दैरुदीरिता इत्यर्थ अकारादिषु चातुर्विध्यकल्पनां दर्शयति । आधारादित्यादिना पद्यसार्द्धचतुष्केण ॥ ६४ ॥

निर्गच्छन्न जनयेच्छब्दं सोऽपि स्थानैश्चतुर्विधः ।
संज्ञाः परेति पश्यन्ती मध्यमा वैखरीति च ॥ ६५ ॥

स निरुक्तवायुजनितः शब्दः, पराप्रभृतयः शब्दस्यागमोक्ता संज्ञा इति योजना ॥ ६५ ॥

आगमोक्ता वैखरी तु श्रूयते मुखनिर्गता ।
वाचः पदानि चत्वारि त्रीणि गूढानि विग्रहे ॥ ६६ ॥

आगमेति । अस्य "परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता । हृदिस्था-मध्यमा ज्ञेया वैखरीकण्ठदेशगे"त्यादिः, तुशब्द एवकारार्थः । मुखनिर्गतासती वैखर्येव श्रूयते परैः श्रोत्रेण गृह्यते नतु पराद्यास्तिस्रो गृह्यन्ते इत्यन्वयः, अत्र मन्त्रं सम्वादयति । वाच इति ॥ ६६ ॥

तुर्यं मर्त्यावदन्तीति प्राह मन्त्रोऽप्यतिस्फुटम् ।
वैखर्याद्याः परान्तास्तु शब्दभेदाः क्रमादमी ॥ ६७ ॥

मन्त्र इति । अस्य "चत्वारि वाक्परिमिता पदानि तानिविदुर्ब्राह्मणायेमनी-षिणः । गुहात्रीणि निहितानेङ्गयन्ति तुरीयं वाचो मनुष्यावदन्ती"त्याद्याकारके-त्यादिः । स्थूलसूक्ष्मवीजसाक्षिभिरकाररूपैरित्यस्य तात्पर्य्यमाह । वैखर्य्याद्या इति । अमी, शब्दभेदाः क्रमादित्येव श्रुतीरिता इत्यन्वयः स्थूलशब्देन वैखरी, सूक्ष्मशब्देन मध्यमा वीजशब्देन पश्यन्ती, साक्षिपदेन परा श्रुत्योक्तेत्यर्थः ॥ ६७ ॥

स्थूलसूक्ष्मौ वीजसाक्षिणावित्येव श्रुतीरिताः ।
निवृत्तिश्च प्रतिष्ठाश्च विद्याशान्तिश्च वै कलाः ॥ ६८ ॥

अकरादीनामागमोक्तं चातुर्विध्यमाह—निवृत्तिश्चेति ॥ ६८ ॥

अकारेऽस्मिँश्चतुर्भेदे जागरं तु चतुर्विधम् ।
ध्यायेत्साम्यं तयोराप्तिरादित्वं चेति चिन्तयेत् ॥ ६९ ॥

अकार इति—चतुर्विधेऽकारे चतुर्विधं जागरं ध्यायेदिति योजना, तयोरका-रजागरयोराप्तिरादित्वं चेतिसाम्यं चिन्तयेत् ध्यायेदित्यर्थः ॥ ६९ ॥

जागरेऽक्षे व्याप्तिरस्ति व्याप्तोऽकारः कखादिषु ।
आदित्वं लोकतः सिद्धं जागराकारयोर्द्वयोः ॥ ७० ॥

जागरेऽक्षव्याप्तिर्लोकसिद्धा, कखादिष्वकारव्याप्तिः "अकारो वैसर्वावागि"ति श्रुतिसिद्धा, तयोरादित्वंच लोकसिद्धमित्याह । जागर इति ॥ ७० ॥

स्थूलसूक्ष्मत्वादिसाम्यं तद्भेदानां क्रमाद्भवेत् ।
फलं यथागुणं ध्याने भवेत्सर्वत्र कामिनः ॥ ७१ ॥

अवतारितं श्रुतिवाक्यं व्याचक्षाणः "स्वप्नस्थानश्चतुरात्मातैजसो हिरण्यगर्भश्चतूरूप उकार एव चतूरूपोह्ययमुकारः स्थूलसूक्ष्मवीजसाक्षिभिरुकाररूपैरुत्कर्षादुभयत्वात् स्थूलत्वात् सूक्ष्मत्वात् वीजत्वात् साक्षित्वाचोत्कर्षति हवैज्ञानसन्ततिं समानश्च भवति य एवंवेद । सुषुप्तस्थानश्चतुरात्माप्राज्ञ ईश्वरश्चतूरूपोमकार एव चतूरूपोह्ययमकारः स्थूलसूक्ष्मवीजसाक्षिभिर्मकाररूपैर्मीतेरपीतेर्वास्थूलत्वात्सूक्ष्मत्वाद्वीजत्वात् साक्षित्वाच्च मिनोतिहवा इदं सर्वमपीतिश्च भवति यएवं वेद । मात्रामात्राः प्रतिमात्राः कुर्यादि" त्यादि उकारमकारनादेषु क्रमात् स्वप्नसुषुप्ततुरीयध्यानपरं समनन्तरं व्याख्यानवाक्यसदृशं वाक्यं संक्षेपतो व्याचष्टे—स्थूलेत्यादि पूर्वार्द्धेन तद्भेदानामिति—चतुर्विधानामित्यर्थः चतुर्विधयोः स्वप्नोकारयोस्ताद्विधयोः सुषुप्तमकारयोस्तद्विधयोस्तुरीयनादयोश्चेत्यर्थः । फलपरवाक्यचतुष्टयमपि संक्षेपतो व्याचष्टे । फलमिति ॥ ७१ ॥

अकारं जागरेऽप्येतमुकारे संहरेत्तथा ।
उकारं च मकारे तमोङ्कारे नादरूपिणी ॥ ७२ ॥

व्याख्यातव्याख्यायमानयोरुभयोः सन्दर्भयोरपरं तात्पर्य्यमाह । अकारमिति—जागरेपि, अविना स्वप्नसुषुप्ततुरीयेष्वप्यकारमुकारे संहरेत् प्रविलापयेत् अकार उकारे प्रविलीन इति ध्यायेदिति यावत्—तथोकारं मकारे संहरेत्—तमोङ्कारं मकारोच्चारणानन्तरजायमानध्वनिविशेषलक्षणनादरूपायां चतुर्थ्यामोंकारमात्रायांसंहरेदिति योजना ॥ ७२ ॥

अथतुर्यं चतुर्भेदमीशग्रासादिनामकम् ।
ध्यायेन्महेश्वरोऽमायी यस्तमोऽतो ग्रसत्ययम् ॥ ७३ ॥

"अथ तुरीय ईश्वरग्रासः सस्वराट्स्वयमीश्वरः स्वप्रकाशश्चतुरात्मोतानुज्ञात्रनुज्ञाविकल्पैरोतो ह्ययमात्मा ह्यथैवेदं सर्वमन्तकालेकालाग्निः सूर्योस्रैरनुज्ञातो ह्ययमात्मा ह्यस्य सर्वस्यस्वात्मानं ददातीदंसर्वं स्वात्मानमेव करोति यथातमः सविताऽनुज्ञैकरसोह्ययमात्मा चिद्रूप एव यथादाह्यं दग्ध्वाऽग्निरविकल्पो ह्ययमात्मा वाङ्मनोऽगोचरत्वाच्चिद्रूपश्चतूरूप ओंकार एव चतूरूपोह्ययमोङ्कार

ओताऽनुज्ञात्रनुज्ञाविकल्पै रोङ्कारररूपैरात्मैव नामरूपात्मकं हीदं सर्वं तुरीयत्वाच्चिद्रूपत्वाच्चोतत्वादनुज्ञातृत्वादनुज्ञात्वादविकल्परूपत्वाच्चाविकल्परूपं हीदं सर्वं नैव तत्र काचन भिदास्त्यथ तस्यायमादेशोऽमात्रश्चतुर्थोऽव्ययहार्य्यः प्रपञ्चोपशमः शिवोऽद्वैत ओंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेदे"ति सन्दर्भं सामान्यतः पूर्वत्रव्याख्यातम्, विशेषतो व्याचष्टे—अथेत्यादिनापद्यसप्तकेन। अत्र सर्वे ओङ्कारशब्दा नादपराः ॥ ७३ ॥

कालाग्निसूर्यः संहारकाले स्वैस्तीव्ररश्मिभिः।
तिरस्कुर्याज्जगत्तत्तु लेशाद्भाति यथातथा ॥ ७४ ॥

दृष्टान्तमाह—कालेति। तथेत्युत्तरान्वयि ॥ ७४ ॥

ओतोऽयं सच्चिदानन्दैर्नामरूपे जगद्गते।
तिरस्कुर्य्याच्चे तु लेशमात्रे भातःक्वचित्क्वचित ॥ ७५ ॥

दृष्टान्तासिद्धमर्थं दार्ष्टान्तिके योजयति—ओतइति ॥ ७४ ॥

यथा सूर्यस्तमः सर्वं प्रकाशी कुरुते तथा।
अनुज्ञाता जगत्सर्वं स्वात्ममात्रं करोति हि ॥ ७६ ॥

श्रुत्युक्तदृष्टान्तान्तरमाह—यथेति। तत्सिद्धमर्थं दार्ष्टान्तिके योजयति—तथेत्यादि ॥ ७६ ॥

दाह्यं दग्ध्वा यथा वह्निर्निर्व्यापारोऽवशिष्यते।
अनुज्ञैकरसस्तद्वच्चिन्मात्रः परिशिष्यते ॥ ७७ ॥

पूर्ववत् तदुक्तौ तावाह—दाह्यमिति ॥ ७७ ॥

अवाङ्मनसगम्योऽयमविकल्पश्चतुर्विधः।
तुर्यपादं चतुर्भेदे नादे संचिन्तयेत्क्रमात ॥ ७८ ॥

नाद उक्त ॥ ७८ ॥

सर्वस्य जगतो वस्तु तत्त्वं यन्निर्विकल्पकम्।
तदात्मेति समाधायचित्तं तस्मिन्भवेद्धि तत ॥ ७९ ॥

तदिति-सर्वतत्त्वरूपं निर्विकल्पमित्यर्थः ॥ ७९ ॥

अथवा मन्त्रराजे धीः समाधेयात्मवाचिनि ।
सर्वसंहारशक्त्याद्या अर्था उग्रादिशब्दगाः ॥ ८० ॥

"एषवीरोनारसिंहेनवाऽनुष्टुभामन्त्रराजेनतुरीयं विद्यादेषह्यात्मानं प्रकाशयति सर्वसंहारसमर्थः परिभवाऽसहः प्रभुर्व्याप्तः सदोऽज्ज्वलोऽविद्यातत्कार्य्यहीनः स्वात्मबन्धहरः सर्वदाद्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रोनिरस्ताऽविद्यातमोऽमोहोऽहमेवेति तस्मादेवमेवेममात्मानं परं ब्रह्मानुसंदध्यादेष वीरोनृसिंहएवे"ति व्याचष्ट-अथवेत्यादिनापद्यत्रिकेण-आत्मवाचिनि मन्त्रराजे प्रणवे धीः समाधेया उग्रादिशब्दगास्तत्प्रतिपाद्यास्सर्वसंहारशक्त्याद्याअर्थाश्च समाधेया इत्यत्र योजना८०॥

आत्मानं मन्त्रराजेन ध्यायन्ब्रह्मतया पुमान् ।
ब्रह्मरूपो नृसिंहः स्याद्योगः शुद्धधियोह्ययम् ॥ ८१ ॥

फलवाक्येनृसिंहपदं नृसिंहमूर्त्त्युपलक्षितब्रह्मपरमित्याह ब्रह्मेत्यादि-तत्र हेतुमाह-योग इत्यादि । अयमिति । प्रणवेन ब्रह्मतयाऽऽत्मध्यानरूप इत्यर्थः ॥८१॥

विवेकयोगौ संप्रोक्तौ द्वितीये खण्ड आत्मनः ।
प्रणवे मन्त्रराजे च द्विविधो योग ईरितः ॥ ८२ ॥

द्वितीयखण्डव्याख्यामुपसंहरन्नत्रोक्तयोगस्य द्वैविध्यंदर्शयति—विविकेति-द्वितीये खण्डे आत्मनो विवेको योगश्चोक्तौ, मन्त्रराजे, प्रणवे प्रणवतन्मात्राभेदेन द्विविधोयोगश्च ईरितः उक्त इति योजना ॥ ८२ ॥

तृतीयेमन्त्रराजस्य प्रणवस्यात्मनोऽपि च ।
एकीकारेणयद्ध्यानं तत्सम्यगभिधीयते ॥ ८३ ॥
पृथिव्याद्यात्मकोंकारः पाद उग्रादिकोऽपि च ।
परापश्यन्त्यादिरूप सोऽयं विश्वश्चतुर्विधः ॥ ८४ ॥

तृतीयखण्डंतृतीय इत्यादिसार्द्धविंशत्यापद्यैर्व्याख्यातुमारभतते तत्रादौ "तस्य हवैप्रणवस्ययापूर्वामात्रा सा प्रथमः पादो भवतिद्वितीयाद्वितीयस्यतृतीयातृतीयस्य चतुर्थ्योतानुज्ञात्रनुज्ञाविकल्परूपतया तुरीयं चतुरात्मानमन्विष्य चतुर्थपादेनचतया

तुरीयेणानुचिन्तयन्ग्रसेत् तस्यह वा एतस्य प्रणवस्ययापूर्वामात्रासापृथिव्यकारः सऋग्भिर्ऋग्वेदोब्रह्मावसवोगायत्री गार्हपत्यः सा प्रथमः पादोभवति भवति च सर्वेषु पादेषु चतुरात्मास्थूलसूक्ष्मवीजसाक्षिभिर्द्वितीयान्तरिक्षं स उकारः सयजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः साद्वितीयः पादोभवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मवीजसाक्षिभि स्तृतीयाद्यौः समकारः ससामभिः सामवेदोरुद्रादित्याजगत्याहवनीयः सा तृतीयः पादो भवति भवति च सर्वेषुपादेषु चतुरात्मा स्थूलसूक्ष्मवीजसाक्षिभिर्याऽवसानेऽस्य चतुर्थ्यर्द्धमात्रासासोमलोक ओङ्कारः साऽथर्वणैर्मन्त्रैरथर्ववेदः सम्बर्त्तकोऽग्निर्मरुतोविराडेकर्षिभास्वतीस्मृता चतुर्थः पादोभवति भवति च सर्वेषुपादेषु चतुरात्मास्थूलसूक्ष्मवीजसाक्षिभिर्मात्रामात्राः प्रतिमात्राः कृत्वोतानुज्ञात्रनुज्ञाविकल्परूपं चिन्तयन् ग्रसेज्ज्ञोऽमृतोह्युतसम्वित्कः शुद्धः संविष्टोनिर्विघ्न इममसुनियमेऽनुभूयेहेदं सर्वं दृष्ट्वा स प्रपञ्चहीनोऽथसकलः साधारोऽमृतमयश्चतुरात्मे"ति तृतीयभागं व्याचष्टे—तृतीयइत्यादिपद्यषट्केन ॥ ८३ ॥ ८४ ॥

तैजसप्राज्ञतुर्य्याश्चतथाध्यात्वोपसंहरेत् ।
असौप्रपञ्चहीनः स्यादविकल्पेस्थिरः पुमान् ॥ ८५ ॥

तथेति—विश्ववच्चतुर्विधाइत्यर्थः । तथेत्यस्यध्याने उपसंहारेचापियोजनाकार्य्या—उपसंहारः प्रविलापनं तादृशगुरोरभावेन तदशक्तौ अस्मदाभिरिदमत्र प्रविलीनमिदमत्रविलीनमिति ध्यानं कार्य्यमिति बोध्यम् ॥ ८५ ॥

ज्ञश्चिन्मात्रोऽमृतोनित्योह्युतसम्विदवृत्तिकः ।
शुद्धो भ्रान्तिविहीनत्वात्संविष्टोऽयमविक्रियः ॥ ८६ ॥

"ज्ञोऽमृतोह्युतसंवित्कः शुद्धः सम्विष्ट"इत्येतद्व्याचष्टे-ज्ञ इति=चिन्मात्रत्वान्नित्यत्वाद्धुता निवृत्ता सम्वित् वृत्तिलक्षणा यस्मात्स तथाभ्रमादिलक्षणवृत्तिरहितत्वाच्छुद्धः सर्वविकाररहितस्तत्त्वात् सम्विष्टः कूटस्थइत्यर्थः ॥ ८६ ॥

प्राणायामेन निर्विघ्नोऽनुभवेदीदृशात्मताम् ।
प्राणाधीनामनोवृत्तिः प्राणरोधेन शाम्यति ॥ ८७ ॥

"निर्विघ्न इममसुनियमेऽनुभूये"त्येतद्विवृणोति । प्राणेति—निर्विघ्नोवृत्तिरहितः, एतदेवाह—प्राणाधीनेति ॥ ८७ ॥

निर्विकल्पधिया पश्येज्जगत्स्वात्मतया तदा ।
ध्याने प्रपञ्च संत्यज्य ब्रह्मरूपेणतिष्ठति ॥ ८८ ॥

"इहेदं सर्वं दृष्ट्वा स प्रपञ्चहीनोऽथ सकलः साधारोऽमृतमयश्चतुरात्मे"त्येतद्विवृणोति । निर्विकल्पेति ॥ ८८ ॥

अन्योदेवोऽहमप्यन्य इति द्वैतस्य वासना ।
दृढा चेतादृशी देवपूजोपास्तिरथोच्यते ॥ ८९ ॥

"अथमहापीठे सपरिवारं तमेतं चतुः सप्तात्मानं चतुरात्मानं मूलाग्नावग्निरूपं प्रणवं संदध्यात्सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभौ सप्तात्मानं चतुरात्मानमुकारं विष्णुं हृदये सप्तात्मानं चतुरात्मानमकारं रुद्रं भ्रूमध्ये सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानम् चतुरात्मानमोङ्कारं सर्वेश्वरं द्वादशान्ते सप्तात्मानं चतुरात्मानं चतुःसप्तात्मान मोङ्कारतुरीयमानन्दामृतरूपं षोडशान्तेऽथानन्दामृतेनैतांश्चतुर्धासंपूज्य तथा ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तान् त्रीनेवाविभक्तांस्त्रीनेवलिङ्गरूपान्येव च संपूज्योपहारैश्चतुर्धाऽथ लिङ्गात्संहृत्य तेजसा शरीरत्रयं संव्याप्य तदाधिष्ठानमात्मानं संज्वाल्य तत्तेज आत्मचैतन्यरूपं बलमवष्टभ्य गुणैरैक्यं संपाद्य महास्थूलं महासूक्ष्मे महासूक्ष्मं महाकारणे च संहृत्य मात्राभिरोताऽनुज्ञात्रऽनुज्ञाऽविकल्परूपं चिन्तयन् ग्रसेदि"त्येतद्विवृणोति । अन्य इत्यादिसार्द्धपञ्चचतुर्दशकेन ॥ ८९ ॥

योऽस्मिन् खण्डे वर्णितोऽसौ सङ्कल्पपूज्य इष्यते ।
षट् तुस्थानानिदेहेस्मिन् पूजाधाराः प्रकीर्तिताः ॥ ९० ॥

य इति—अस्मिन्, व्याख्यायमाने तृतीयखण्डे "ज्ञोऽमृतोहुतसम्वित्कः शुद्ध" इत्यादिना वर्णित उपदिष्टो योऽसौ सङ्कल्प्यते इति कर्म्मणिघञिसङ्कल्पः भावनाऽद्यपरपर्य्यायसङ्कल्पविषयः सन् पूज्यः सत्करणीय इत्यन्वयः । भावनामयभक्ष्यादिभिरेव तस्य पूजाश्रुतेरभिप्रेतानतुबाह्यभक्ष्यादिभिरिति निष्कर्षः, अत्रसङ्कल्प्य इतिण्यदन्तः सङ्कल्प्योतिरित्यबन्तश्चपाठौ क्रमात् साधुतरसाधुतमौप्रतिभातः ! प्रकीर्तिता इति—अस्यन्याख्यायमानयाश्रुत्येत्यादिः ॥ ९० ॥

आधारनाभिहृदयभ्रूमध्यद्वादशान्तकाः ।
षोडशान्तश्च तेष्वग्निब्रह्माद्यानर्चयेत् क्रमात् ॥ ९१ ॥

एतद्देहगतानि षट् स्थानानि दर्शयति—आधारेत्यादिना षोडशान्तश्चेत्यन्तेन—आधारेति० मूलचक्रेत्यर्थः । द्वादशान्तशब्दोभ्रूमध्यादुपरितनद्वादशदलपद्माकारस्थानमध्यवाचकः । एवं षोडशान्तशब्दो द्वादशदलपद्माकारमांसमयस्थानादुपरितनषोडशदलकमलाकारमांसमयस्थानमध्यवचनः । तेष्वित्यादि । मूलाधारेऽग्निरर्च्यः । नाभौब्रह्मा । हृदि विष्णुः । भ्रूमध्ये रुद्रः । द्वादशान्ते सर्वेशः । षोडशान्ते आनन्द इत्यर्थः ॥ ९१ ॥

यश्चतुर्भेद ओताद्यैः सोऽमृतो निरुपाधिकः ।
उपाधीनां बोधबाधादविकल्पोऽवशेषणात् ॥ ९२ ॥

एतमेवार्थं प्रपञ्चयति—चतुर्भेद इत्यादिपद्यसप्तकेन ॥ ९२ ॥

सोविकल्पः सर्वमय स्तास्मिन्सर्वाधिरोपणात् ॥
येजागरादयोभेदाश्चत्वारस्तेत्र कल्पिताः ॥ ९३ ॥

अत्राविकल्पे ॥ ९३ ॥

परिवारा मन्त्रराजे माहाचक्रे प्रकीर्तिताः ।
पृथिव्याद्याः सप्तसप्त भेदा मात्रास्त्विहश्रुताः ॥ ९४ ॥
परिवारेण संयुक्तं चतुःसप्तात्मकं प्रभुम् ।
नृसिंहमभिरूपं तं मूलाधारे विचिन्तयेत् ॥ ९५ ॥

परिवारा इति—मन्त्रराजे, प्रणवीये यन्त्रे, ये परिवारास्ते सप्तभेदाः पृथिवीत्वजलत्वादिना सप्त, प्रकारा पृथिवीजलादयः, सप्तमाहाचक्रे, प्रणवीयादियन्त्रविशेषलक्षणमहाचक्रप्रतिपादकग्रन्थविशेषे, प्रकर्षेणोक्ता, व्याख्यायमानश्रुतौतु "सप्तात्मान"मित्यादिना सूत्रिताइत्यर्थः—मात्रा इति, इह, व्याख्यायमानश्रुतौ, आकारादिमात्रास्तु श्रुताः अकारमुकारमित्यादिनासाक्षाद्बोधिता नतु चतुरात्मानमित्यादिनासूचिताएवेत्यर्थः ॥ ९४ ॥ ९५ ॥

भूम्यादिभिः सप्तविधं स्थूलाद्यैश्च चतुर्विधम्।
अकाररूपं ब्रह्माणमेतं नाभौ विचिन्तयेत् ॥ ९६ ॥
हृदि विष्णुमुकारेण भ्रूमध्येच मेकारतः।
रुद्रं नादेन सर्वेशं द्वादशान्तेऽग्निवत्स्मरेत् ॥ ९७ ॥
चतुः सप्तात्मकोऽमायी सर्वेशोह्यनुपाधिकः।
षोडशान्ते मुखं ध्यायेच्चचतुःसप्तात्मलक्षितम् ॥ ९८ ॥

चतुः सप्तात्मकमित्यस्यार्थमाह–पूर्वार्द्धेन–भूम्यादिभिरिति ॥९६॥९७॥९८॥

तेनानन्दामृतेनाधः स्थितास्ताः पञ्च देवताः।
व्याप्ताश्चतुर्विधाः स्थूलादिभिरित्येवचिन्तयेत् ॥ ९९ ॥

"अथानन्दामृतेनैतांश्चतुर्विधे"त्यादि व्याचष्टे तेनेत्यादिना ॥ ९९ ॥

उपचारैरागमोक्तैर्देवाँस्तान् मनसार्चयेत्।
ब्रह्मादिमूर्त्तिभेदेन तथैक्येनापि पूजयेत् ॥ १०० ॥

"अविभक्तानि"त्यस्य व्याख्यैक्येनेति–अभेदेनेत्यर्थः ॥ १०० ॥

भक्ष्यभोज्यैर्लेह्यचोष्यैरित्यैतेरुपहारयेत्।
गुरुश्रुत्युक्तमार्गेण पूजयित्वा यथाविधि ॥ १ ॥
मूर्त्तिं तेजसि संहृत्य तेजश्चात्मनि संहरेत्।
सूत्रे विराजं संहृत्य सूत्रमव्याकृते च तत् ॥ २ ॥

यथाविधि पूजयित्वा मूर्त्तिंतेजसि संहृत्येत्यन्वयः ॥ १ ॥ २ ॥

अविकल्पे तत्र चित्तं समाधाय स्थिरो भव।
पूज्यपूजकयोर्भेदवासना यस्यहीयते ॥ ३ ॥

तत्राविकल्पे, भवेति–अत्रभवेदिति पाठोयुक्तोभाति। चतुर्थखण्डं व्याख्यातुमवतारयन् सप्रयोजनं तस्यविषयमाह। पूज्येत्याद्यर्द्धद्वयेन ॥ ३ ॥

चतुर्थखण्डे योगोऽस्य धीविश्रान्त्यै निगद्यते ।
नादस्तुरीय ॐकारस्तस्यान्ते स्फुरदद्वयम् ॥ १०४ ॥

"तम्वा एतमात्मानं परमंब्रह्मोंकारन्तुरीयोंकाराग्रविद्योतमनुष्टुभानत्वा-प्रसाद्योमिति संहृत्याहमित्यनुसंदध्यादि" त्येतद्वाक्यंव्याचष्टे—नाद इत्यादिनासार्द्ध-पद्यद्वयेन । "तुरीयोंकाराग्रविद्योत"मित्येतद् विवृणोति—नाद इति ॥ ४ ॥

मन्त्रराजेनसाम्यन्तैः पादैर्नत्वाप्रसादयेत् ।
प्रणवात्मतया ध्यात्वाऽहमित्यात्मतयास्मरेत् ॥ ५ ॥

मन्त्रराजेन, प्रणवेन ॥ ५ ॥

यावन्निश्चलतातावत्स्थित्वोर्ध्वं चिन्तयेत्पुनः ।
कृत्स्नमन्त्रेण नत्वोमित्युच्चार्यान्तेस्थिरो भवेत् ॥ ६ ॥

कृत्स्नमन्त्रेणेति—संपूर्णप्रणवेन, नत्वारोपिततद्भावमात्रालक्षणेन तेनेत्यर्थः ॥६॥

ध्यात्वोङ्कारं पुनर्मात्राम्महावाक्यादनुस्मरेत् ।
मन्त्रेणवाकेवलेननृसिंहेतिपदेनवा ॥ ७ ॥

"अथैतमेवात्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतमेकादशात्मानं नारसिंहं नत्वोमिति संहरन्ना(न्न)नुसन्दध्यादथैतमेवमात्मानंपरमंब्रह्मोंकारं तुरीयों-काराग्रविद्योतं प्रणवेन संचिन्त्यानुष्टुभानत्वासच्चिदानन्दपूर्णात्मसुनवात्मकं सच्चिदान-न्दपूर्णात्मानम्परंब्रह्मसम्भाव्याहमित्यात्मानमादायमनसाब्रह्मणैकीकुर्याद्यदनुष्टुभैववे-त्ये" तद्वृणोति । ध्यात्वोंकारमित्यादिपद्यद्वयेन । पुनरोंकारं ध्यात्वामात्रां चतु-र्थींन्नादलक्षणांतदीयांमात्रां च ध्यात्वा अनुपश्चाद्महावाक्यात् अहंब्रह्मास्मीत्यादि-लक्षणेनमहावाक्येनकेवलेनमहावाक्यनादरहितेनमन्त्रेणप्रणवेनएतत्त्रयरहितेननृसिंहेति शब्देनवास्फुरदद्वयंस्मरेत्ध्यायेदितियोजना अत्रादन्तमन्त्रशब्दप्रकृतिकशसन्तोमन्त्रा-नितिपाठोलेखकप्रमादादायात इति प्रतिभाति ॥ ७ ॥

संस्मृत्याखण्डवाक्यार्थं युञ्जीतोंकार मात्रयोः ।
संस्तभ्यचित्ते स्वात्मानं गुणत्रयविवर्जितम् ॥ ८ ॥

संस्मृत्येति—सच्चिदानन्दैकरसलक्षणमखण्डवाक्यार्थमुक्तप्रक्रियया संस्मृत्य-

गुणत्रयविवर्जितमुक्तलक्षणं स्वात्मानं चित्ते संस्तभ्य संस्थाप्यॐकारे आलम्बने-नादलक्षणायां तदीयायां मात्रायां चोक्तलक्षणमात्मानं युञ्जीत ध्यायेदितियोजना-अत्र ओंकारमन्त्रयोरितिपाठस्तथाभाति ॥ ८ ॥

ब्रह्मादिकानकाराद्यैः संयोज्यात्मनिसंहरेत् ।
तेषां तु कारणाविद्यां बाधित्वावस्तुतोऽसतीम् ॥ ९ ॥

"एष उपवसन्नेष(व) हिसर्वत्रसर्वदासर्वात्मासन् सर्वमाचि नृसिंहोऽसौ परमेश्वरो ऽसौ हि सर्वत्र सर्वदा सर्वात्मासन्त्सर्वमत्ति नृसिंहएवैकलएष तुरीयएषएवोग्रएषएव वीरएषएष महानेष एव विष्णुरेष एव ज्वलन्नेषएवसर्वतोमुखएष एव नृसिंह एष-एवभीषणएव एव भद्र एषएवमृत्युमृत्युरेष एवनमाम्येष एवाहमेवंयोगारुढोब्रह्मण्ये-वानुष्टुभंसन्दध्यादोंकार इति । तदेतौ श्लोकौ भवतः । संस्तभ्यसिंहं स्वसुतान्गुणा-र्थान्संयोज्यशृङ्गैर्ऋषभस्यहत्वा । वश्यां स्फुरन्तीमसतींनिपीड्यसम्भक्ष्य सिंहेनसएष-वीरः । शृङ्गप्रोतात्पादान्स्पृष्ट्वाहत्वातानग्रसत्स्वयम् । नत्वाचबहुधादृष्ट्वानृसिंहःस्वय-मुद्बभा"वित्येतद्विवृणोति—ब्रह्मादीत्यादिसार्द्धपद्यद्वयेन, संहरेत् प्रविलापयेत् ॥९॥

कृत्वाचिद्रक्षितां वीरः संस्मरन्निर्भयो भवेत् ।
ब्रह्मादीन्मन्त्रराजस्य पादैश्चिद्रूपतां नयेत् ॥ १० ॥

मन्त्राराजस्य प्रणवस्य ॥ १० ॥

अविद्याविनिवर्त्येषनृसिंहः स्वयमुद्बभौ ॥
योगान्तरेपञ्चमेऽस्मिन् खण्डेसप्तमुदीर्यते ॥ ११ ॥

श्रुतीरितिपञ्चमखण्डविषयं दर्शयति, योगान्तरमिति ॥ ११ ॥

अकारार्थं मन्त्रराजपदार्थैर्योजयेत्क्रमात् ।
चतुर्मूर्त्यात्मकैर्योगैरविकल्पान्तकैरपि ॥ १२ ॥
चतुर्दशाभिरेकेनाप्यजस्रं प्रयतोवसेत् ।
उग्रेवीरेमहाविष्णावुज्ज्वलेसर्वतोमुखे ॥ १३ ॥
नृसिंहे भीषणेभद्रेमृत्युमृत्यौ नमम्यजा ।
भाति हिंसाकरीमायानमय्यस्तिचिदात्मनि॥१४॥

"अथैष उ एव अकार आप्ततमार्थ आत्मन्येवनृसिंहे देवेब्रह्मणि वर्त्तत एष ह्येवाप्ततम एषहि साक्ष्येष ईश्वरस्तत्सर्वगतोनहीदं सर्वमेषहि व्याप्ततम इदं सर्वं-यदयमात्मामायामात्र एषएवोग्रएषहि व्याप्ततम एषएववीर एषहिव्याप्ततमएषएव-महानेषाहिव्याप्ततमएषएवविष्णुरेषहि व्याप्ततम एषएवज्वलन् एषहि व्याप्ततम एषएव सर्वतोमुखएषहि व्याप्ततम एषएव नृसिंह एषहिव्याप्ततमएषएवभीषण एष हि व्याप्ततम एषएवभद्र एषहि व्याप्ततम एषएवमृत्युमृत्युरेष हि व्यप्तातम एषएव नमाम्येष हि व्याप्ततम एषएवनमाम्येषहि व्याप्ततम एषएवाहमेवहिव्याप्ततम"इत्ये-द्विवृणोति—अकारार्थमित्यादिपद्यत्रिकेण—अकारार्थंविश्वादिकं,मन्त्रराजपदार्थैः, प्रणव-पदार्थैः, समनन्तरवक्ष्यमाणैश्चतुर्दशभिः, क्रमाद्योजयेदित्यर्थः। अमुमेवार्थ—स्पष्टय-ति—चतुरित्यादिसार्द्धपद्यद्विकेन—योगैः, ध्यानसाधनैः, अविकल्पान्तकैः, ओतानुज्ञा-त्रनुज्ञाऽविकल्पैः ॥ १२ ॥ १३ ॥ १४ ॥

नमामीति पदाद्ब्रह्माऽभिन्नतामनुचिन्तयेत् ।
ईदृग्योगी स्यादकामः काम्यमस्य न सम्भवेत् ॥ १५ ॥
निष्कामोऽसौ लौकिकानां कामानां विनिवृत्तितः ।
काम्य आत्मापि बोधाप्तः किमन्यत्काम्यते पुनः ॥ १६ ॥
उत्क्रामन्ति न तत्प्राणा लीयन्ते तु परात्मनि ।
ब्रह्मैव सन्पुराप्येष ब्रह्माप्नोत्यवबोधतः ॥ १७ ॥

"आत्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद सोऽकामो निष्काम-आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैवसन् ब्रह्मा-प्येति" त्येतद्विवृणोति। ईदृगित्यादिसार्द्धपद्यद्वयेन ॥ १५ ॥ १६ ॥ १७ ॥

तथोकारमकारौ च योज्यौ मन्त्रपदेष्वतः ।
अस्मिन्खण्डे त्रयोयोगा धीविश्रान्त्यै प्रकीर्तिताः ॥१८॥

"अथैष एवोङ्कार उत्कृष्टतमार्थ आत्मन्येव नृसिंहे देवे ब्रह्मणिवर्तते तस्मा-देषसत्यस्वरूपो नह्यन्यदस्त्यप्रमेयमनात्मप्रकाशमेषहि स्वप्रकाशोऽसङ्गोऽन्यन्नवीक्षत आत्मातो नान्यथा प्राप्तिरात्ममात्रं ह्येतदुत्कृष्टमेष एवोग्र एषह्येवोत्कृष्ट एष एव वीर एष ह्येवोत्कृष्ट एषएव महानेष ह्येवोत्कृष्ट एष एव विष्णुरेषह्येवोत्कृष्ट एष एव

ज्वलन्नेषह्येवोत्कृष्ट एषएव सर्वतोमुख एषह्येवोत्कृष्ट एषएव नृसिंह एष ह्येवोत्कृष्ट एषएव भीषण एषह्येवोत्कृष्ट एषएवभद्रएषएवह्योत्कृष्टएषएव मृत्युमृत्युरेष ह्येवोत्कृष्ट एषएव नमाम्येष ह्येवोत्कृष्टएषएवाहमेषह्येवोत्कृष्टस्तस्मादात्मान-मेवैनं जानीयादात्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद सोऽका-मो निष्काम आप्तकाम आत्मकामोनतस्य प्राणाउत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैवसन्ब्रह्माप्येत्यथैषएव मकारो महाविभूत्यर्थं आत्मन्येव नृसिंहे देवे ब्रह्मणि-वर्त्तते तस्मादयमनल्पोभिन्नरूपः स्वप्रकाशो ब्रह्मैवाप्ततम उत्कृष्टतम एतदेव ब्रह्मापि सर्वज्ञ महामायं महाविभूत्येतदेवोग्रमेतद्धि महाविभूत्येतदेव वीरमेतद्धि महाविभू-त्येतदेव महदेतद्धि महाविभूत्येतदेव विष्ण्वेतद्धिमहाविभूत्येतदेव ज्वलदेतद्धि महाविभूति एतदेव सर्वतोमुखमेतद्धिमहाविभूत्येतदेव नृसिंहमेतद्धि महाविभूत्ये-तदेव भीषणमेतद्धिमहाविभूत्येतदेव भद्रमेतद्धि महाविभूत्येतदेव मृत्युमृत्य्वेतद्धि-महाविभूत्येतदेव नमाम्येतद्धि महाविभूत्येतदेवाहमेतद्धि महाविभूतितस्मादका-रोकाराभ्यामिममात्मानमाप्ततममुत्कृष्टतमं चिन्मात्रं सर्वद्रष्टारं सर्वसाक्षिणं सर्वग्रासं सर्वप्रेमास्पदं सच्चिदानन्दमात्रमेकरसं पुरतोऽस्मात् सर्वस्मात् सुविभातमन्विष्या-प्ततममुत्कृष्टतमं महामायं महाविभूतिसच्चिदानन्दमात्रमेकरसंपरमेव ब्रह्ममका-रेणजानीयादात्मैव नृसिंहोदेवः परमेवब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामोनतस्य प्राणाउत्क्रामन्त्यत्रैव समवलीयन्तेब्रह्मैवसन्ब्रह्माप्येतीति ह प्रजापतिरुवाचप्रजापतिरुवाच"इत्येतावतिविशिष्टेऽस्मिन्खण्डे पूर्वां व्याख्यामति दिशति । तथोकारमकारौच योज्यौमन्त्रपदेष्विति—यथाऽकारः अकारार्थो विश्वा-दिश्च प्रणवार्थेषु ओतादिचतुष्कोग्रवीरमहाविष्णूज्ज्वलसर्वतोमुखनृसिंहभीष-ण, भद्र, मृत्युमृत्यु, ब्रह्माभिन्नात्म, लक्षणेषुयोजितस्तथाद्वितीयमात्रात्मक उका-रस्तथातैजसादिश्च, तृतीयमात्रालक्षणोमकारस्तदर्थः प्राज्ञादिश्च मन्त्रपदेषु प्रणव-बोध्येषूक्तेषु चतुर्दशसु, योज्यावित्यर्थः, यद्यप्यत्र प्रणवबोधकोंकारपदघटितस्तथों-कारमकारं चेति पाठो दृश्यते, तथापि लेखकप्रमादादागतत्वेन स उपेक्षितः । नन्वतिदिष्टव्याख्यायाम् "अथैष एवों कारेत्कृष्टतमार्थ" इत्यादिकायां श्रुताव-वपिप्रणवापरपर्य्यायोंकारघटित एव पाठो दृश्यते इति चेन्न—तस्यापि तथात्वेना-श्रद्धेयत्वात्—यद्वातत्रोंकारशब्द उकारपरः, अत्राकारस्योकारस्य मकारस्य च चतु-र्दशसुयोजनं श्रुति र्दृशयन्ती दर्शितवती धीविक्षेपानिवृत्तिफलकं योगत्रयमित्याह—अत इत्यादि—अस्मिन्, पञ्चमे ॥ १८ ॥

षष्ठे खण्डेऽथ विद्यायाः साधनान्यखिलान्यपि ।
जीवन्मुक्त्यवसायीनि संगृह्यन्ते ह्यतिस्फुटम् ॥ १९ ॥

षष्ठं खण्डं व्याचिख्यासुस्तत्रप्रेक्षावत्प्रवृत्तयेतदीयविषयं तावदाह—षष्ठ इति-अथोक्तयोगत्रयकीर्तनान्तरं जीवन्मुक्त्यवसितानि निखिलानि विद्यासाधनानि अपि-शब्दादुक्तफलकोयोगोपि श्रुत्याऽतिस्पष्टं संग्रहेण संक्षेपलक्षणेन वोच्यन्त इत्यन्वयः।१९।

विषयासङ्गरूपोयः पाप्मासावासुरत्वतः ।
विद्येच्छांप्रतिबध्नाति सोऽयमादौ निवर्त्यताम् ॥ २० ॥
रजस्तमोवृत्तयो या लोभमोहादयो हृदि ।
क्रूरत्वादसुरास्ते स्युर्देवाः स्युः सत्त्ववृत्तयः ॥ २१ ॥

"ते देवा इममात्मानं ज्ञातुमैच्छँस्तान्हासुरः पाप्मापरिजग्राह त ऐक्षन्त हन्तैनमासुरं पाप्मानं ग्रसाम इत्येतमेवोंकाराग्रविविद्योतं तुरीयतुरीयमात्मानमुग्रमनुग्रंवीरमवीरं महान्तममहान्तं विष्णुमविष्णुं ज्वलन्तमज्वलन्तं सर्वतोमुखमसर्वतोमुखं नृसिंहमनृसिंहं भीषणमभीषणं भद्रमभद्रं मृत्युमृत्युममृत्युमृत्यं नमाम्यनमाम्यहमनहं नृसिंहानुष्टुभैव बुबुधिरेतेभ्योहासावासुरः पाप्मा सच्चिदानन्दघनज्योतिरभवत् तस्मादपक्वकषाय इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानं नृसिंहानुष्टुभैव जानीयात्तस्यासुरः पाप्मासच्चिदानन्दघन ज्योतिर्भवति ते देवाज्ज्योतिरुत्तितीर्षवो द्वितीयाद्भयमेव पश्यन्त इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानमनुष्टुभान्विष्यप्रणवेनैव तस्मिन्नवस्थितास्तेभ्य स्तज्ज्योतिरस्य सर्वस्य पुरतः सुविभातमविभातमद्वैतमचिन्त्यमलिङ्गं स्वप्रकाशमानन्दघनं शून्यमभवदेवं वित्स्वप्रकाशं परमेव ब्रह्मभवती"त्येतद्व्याचष्टे । विषयेत्यादिना पद्यद्वयेन ॥ २० ॥ २१ ॥

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ २२ ॥

उक्तार्थे भगवद्वाक्यं संवादयति—सत्त्वादिति ॥ २२ ॥

अर्थावुग्रादिशब्दानां यौ प्रोक्तौ तापनीययोः ।
सगुणागुणभेदेन तद्ध्यानादसुरान् जयेत् ॥ २३ ॥

त्यक्त्वा रजस्तमोवृत्ती सात्त्विकीं वृत्तिमाश्रिता ।
धीश्चिदानन्दमात्मानं ध्यायन्ती तन्मयी भवेत् ॥ २४ ॥

सगुणागुणभेदेनेति । पूर्वतापनीये सगुणउग्रादिशब्दार्थः । उत्तरतापनीयेऽगुण उग्रादिशब्दार्थ इत्यर्थः ॥ २३ ॥ २४ ॥

ततो ध्यातृध्येयभेदनिवृत्त्यै मन्त्रराजतः ।
तुर्यातुर्यमनुस्मृत्य समाधिः प्रणवे भवेत् ॥ २५ ॥

तत इति । तस्याश्चिदानन्दमयभवनान्तरमित्यर्थः । मन्त्रराजत इति । प्रणवादित्यर्थः ॥ २५ ॥

मन्त्रार्थे प्रणवं दीर्घमुक्त्वा चित्तं विलापयेत् ।
अमूर्तमद्वयं ब्रह्मानुभवन्वर्ततेतदा ॥ २६ ॥

मन्त्रार्थ इति । दीर्घं प्रणवमुक्त्वा मन्त्रार्थे प्रणवार्थे चित्तं विलापयेदित्यन्वयः । तदेति । निरुक्तविलापनानन्तरमित्यर्थः ॥ २६ ॥

ईदृक्समाधिविघ्नानां शान्त्यै पुत्रैषणादिकम् ।
त्यक्त्वा चित्तं समाधाय जीवन्मुक्तः सुखी भवेत् ॥ २७ ॥

"तेदेवाः पुत्रैषणायाश्चवित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय-निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा वधिरा मुग्धाः क्लीवा मूका उन्मत्ता इव परिवर्तमानाः शान्ताः दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्तास्तस्मात्तद्देवानां व्रतमाचरन्नोंकारे परे ब्रह्मणि पर्यवसितो भवेत् स आत्मन्येवात्मानं परं ब्रह्मपश्यती"त्येतद्व्याचष्टे । ईदृगिति ॥ २७ ॥

अकारादिषडङ्गेषु संयोज्यासङ्गमद्वयम् ।
मन्त्रार्थमपि संयोज्य ह्यकारादीनुपेक्षते ॥ २८ ॥

"तदेष श्लोक" इत्युपक्रम्य पठितस्य "शृङ्गेष्वशृङ्गं संयोज्य सिंहं शृङ्गेषु योजयेत् शृङ्गाभ्यां शृङ्गमावध्य त्रयो देवा उपासत"इति मन्त्रस्यार्थं वर्णयति—अकारादिषडङ्गेष्विति—अकारोकारमकारनादलक्षणाश्चतस्रोमात्राः प्रणवः । सिंह

शब्दश्चाकारादिषडङ्गानि तेषु—असङ्गमद्वयं संयोज्य मन्त्रार्थं प्रणवपदशक्यं सविशेषमपि तेषु संयोज्य ध्यात्वाऽकारादीनुपेक्षत इत्यन्वयः । अत्र पूर्वार्द्धं मन्त्रपूर्वार्द्धव्याख्योत्तरार्द्धं तदुत्तरार्द्धव्याख्येति बोध्यम् ॥ २८ ॥

खण्डेऽथ सप्तमे योगाः प्रवक्ष्यन्ते पुनस्त्रयः ।
तेषामन्यतमेनासौ विद्वान्कालं नयेत्पुमान् ॥ २९ ॥

सुखपूर्वककालयापनफलकं सप्तमीयं योगत्रयमित्याह खण्ड इति । असौ पुमान् विद्वानुपासीनः कालं नयेत्समयं सुखेन व्यतीयादित्यन्वयः ॥ २९ ॥

अकारार्थमजत्वाद्यैश्चिन्तयेद्बुद्धिसाक्षिणम् ।
उत्कर्षाद्यैरुकारार्थं मन्त्रदेवं विचिन्तयेत् ॥ ३० ॥

"देवा ह वै प्रजापतिमब्रुवन् भूय एव नो भगवान् विज्ञापयत्विति तथेत्यजत्वादमरत्वादजरत्वादमृतत्वादशोकत्वादमोहत्वादनशनायत्वादपिपासत्वादद्वैतत्वाच्चाकारेणेममात्मानमन्विष्योत्कृष्टत्वादुत्पादकत्वादुत्प्रवेष्ट(ष्टृ)त्वादुत्थापयितृत्वादुद्द्रष्टृत्वादुत्कर्तृत्वादुत्पथवारकत्वादुद्ग्रासत्वादुद्भ्रान्तत्वादुत्तीर्णविकृतत्वाच्चोंकारेणेममात्मानं परमं ब्रह्म नृसिंहमन्विष्याकारेणेममात्मानमुकारं पूर्वार्द्धमाकृष्य सिंहीकृत्योत्तरार्द्धेन तं सिंहमाकृष्यमहत्त्वान्महस्त्वान्मानत्वान्मुक्तत्वान्महादेवत्वान्महेश्वरत्वान्महासत्त्वान्महाचित्त्वान् महानन्दत्वान्महाप्रभुत्वाच्च मकारार्द्धे(र्थे)नानेनात्मनैकीकुर्य्यादशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद" इत्येतद् विवृणोति—अकारार्थमित्यादिना पद्यचतुष्केण—मन्त्रेति प्रणवेत्यर्थः ॥ ३० ॥

अनूद्य साक्षिणं प्रोक्तं मन्त्रदेवत्वमस्य तत् ।
उत्कृष्टत्वादिभिः शब्दैः पञ्चभिश्चिन्तयेत्तथा ॥ ३१ ॥

मन्त्रेति प्रणवेत्यर्थः । अस्य साक्षिणस्तन्मन्त्रदेवत्वम् । उत्कृष्टत्वादिभिरिति । आदिनोत्पादकत्वोत्प्रवेष्ट(ष्टृ)त्वोत्थापयितृत्वोद्द्रष्टृत्वानि गृह्यन्ते । शब्दैरिति । उत्कृष्टादिशब्दैरेव । पञ्चभिरुत्कृष्टत्वादिप्रकारकं प्रणवदेवविशेष्यकं ध्यानं सम्पाद्यमिति द्योतयितुमुत्कृष्टत्वादिभिः शब्दैरिति सामानाधिकरण्यमिति बोध्यम् । तथेत्युत्तरान्वयि ॥ ३१ ॥

उत्तरैः पञ्चभिर्देवमनूद्य परमात्मताम् ।
महत्त्वाद्यैर्मकारार्थरूपं तस्य विचिन्तयेत् ॥ ३२ ॥
शरीरत्रयहीनो यः सच्चिदानन्दलक्षणः ।
सएवभवतिध्यानाद्योगोऽयंप्रथमोभवेत् ॥ ३३ ॥

उत्तरैः पञ्चभिरिति। उत्कर्तृत्वोत्पथा वारकत्वोद्ग्रासत्वोद्धान्तत्वोचीर्णविकृतत्वलक्षणैरित्यर्थः। परमात्मतामिति। अस्यचिन्तयेदिति पूर्वेणान्वयः। परमात्मतामित्यस्यतस्येत्यादिः। एवं महत्वादिभिः प्रणवदेवस्य मकारार्थरूपत्वं ध्येयमित्युत्तरग्रन्थस्यतात्पर्यमाह—महत्वेति ॥ ३२ ॥ ३३ ॥

अन्येन कस्त्वमित्येवं पृष्टाः सर्वेऽपिमानवाः ।
अहमित्याहुरेतेषामहमित्यभिधानतः ॥ ३४ ॥
अहंशब्देप्रत्यगात्मवाचिन्यादेरकारतः ।
प्रथमेप्रथमाद्वर्णादात्मानमनुचिन्तयेत् ॥ ३५ ॥
ब्रह्मणः सच्चिदानन्दा वीक्ष्यन्ते सर्ववस्तुषु ।
तस्मात्सर्वात्मकं ब्रह्म मकारो ब्रह्मशब्दगः ॥ ३६ ॥
मकारः प्रणवस्यान्ते यस्तेन ब्रह्म चिन्तयेत् ।
आत्मनो ब्रह्मणैकत्वमुकारेण विचिन्तयेत् ॥ ३७ ॥

"कस्त्वमित्यहामिति होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभिधानं तस्यादिरयमकारः स एव भवति सर्वं ह्ययमात्मायं हि सर्वान्तरो नहीदंसर्वमहमिति होवाचैव निरात्मकमात्मैवेदं सर्वं तस्मात्सर्वात्मकेनाकारेण सर्वात्मकमात्मानमन्विच्छेद्ब्रह्मैवेदं सर्वंसच्चिदानन्दरूपं सच्चिदानन्दरूपमिदं सर्वं सद्धीदं सर्वं सत्सदिति चिद्धीदंसर्वंकाशतेप्रकाशते चेति किंसदितीदामिदं नेत्यनुभूतिरिति कैषेतीयामियं नेत्यवचनेनैवानुभवन्नुवाचैवमेव चिदानन्दावप्यवचनेनैवानुभवन्नुवाच सर्वमन्यदिति स परमानन्दस्य ब्रह्मणो नाम ब्रह्मेति तस्यान्त्योऽयंमकारः स एव भवति तस्मान्मकारेण परमं ब्रह्मान्विच्छेत्किमिदमेवमित्युकार इत्येवाह।विचिकित्सन्नकारेणममात्मानमन्विष्य मकारेण ब्रह्मणानुसंदध्यादुकारेणाविचिकित्सन्नशरीरोऽनिन्द्रियोऽप्राणोऽतमाः

सच्चिदानन्दमात्रः स स्वराड् भवति यएवंवेद''त्येतस्य द्वितीययोगप्रतिपादकस्य तात्पर्यं दर्शयति, अन्येनेत्यादिसार्द्धपद्यचतुष्केण ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

आत्मा ब्रह्मेति वाक्यार्थे योगोऽयं प्रणवे श्रुतः ।
अर्थे तत्त्वमसीत्यस्य योगोऽथ प्रणवेभवेत् ॥ ३८ ॥

"अयमात्मा ब्रह्मेति" महावाक्यार्थे द्वितीयो योगः श्रुतः श्रुत्यावोधित इत्याह पूर्वार्द्धेन आत्मेत्यादिना । तृतीययोगपरम् "ब्रह्म वा इदं सर्वमत्तृत्वादुग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्वात् सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद् भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति सततं ह्येतद्ब्रह्मोग्रत्वाद्वीरत्वान्महत्वाद्विष्णुत्वाज्ज्वलत्वात्सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद् भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादिति तस्मादकारेण परमं ब्रह्मान्विष्य मकारेण मन आद्यवितारं मन आदिसाक्षिणमन्विच्छेत्सयदैतत् सर्वमपेक्षते तदैतत्सर्वमस्मिन् प्रविशति स यदा प्रतिबुध्यते तदे(दै)तत्सर्वमस्मादेवोत्तीष्ठती''त्येतद्वाक्यजातं तृतीययोगपरं विवृणोति । अर्थेतत्त्वमसीत्यादिना सार्द्धचतुष्केण ॥ ३८ ॥

सर्वात्मकं ब्रह्म यत्स्यादुग्रादिपदभाषितम् ।
संहारे जगदत्तृत्वात्तस्योकारार्थतोचिता ॥ ३९ ॥

प्रतीकक्षितवाक्यजातस्य "ब्रह्म वा इदं सर्वमत्तृत्वादित्यादि" "नमामित्वादहन्त्वा''दित्यन्तं तदीयं भागं विवृणोति सर्वात्मकमिति ॥ ३९ ॥

संहृते जगति ब्रह्म स(सं)ततंह्यवतिष्ठते ।
पुनरुग्रादिशब्दैस्तदखण्डत्वेन संस्मरेत् ॥ ४० ॥

"सततं ह्येतद्ब्रह्मोग्रत्वादित्यादिं" "नमामित्वादि" त्यन्तं तदीयं भागं विवृणोति । संहृते जगतीति ॥ ४० ॥

साक्षिणं मन आदीनामात्मानं तु मकारतः ।
ध्यात्वा ब्रह्मत्वसंपत्त्यै दृष्टिसृष्टिमनुस्मरेत् ॥ ४१ ॥
ब्रह्मात्मनोस्तु समयोरैक्यं ध्यायेदुकारतः ।
फलं तु पूर्ववद्विद्यात्त्रयोयोग इतीरिताः ॥ ४२ ॥

"तस्मादुकारेण परमं ब्रह्मान्विष्ये"त्यादिमासप्तमखण्डसमाप्ति व्याचष्टे । साक्षिणमित्यादिना पद्यद्वयेन ॥ ४१ ॥ ४२ ॥

चत्वारो ह्यष्टमे खण्डे योगास्तुर्यस्य भासकाः ।
ॐकारनामा प्रणवे नादो यस्तत्र वर्णिताः ॥ ४३ ॥

"अथतुरीयेणोतश्च प्रोतश्च ह्ययमात्मा नृसिंहोऽस्मिन्सर्वमयं सर्वात्मायं हि सर्वनैवातोऽद्वयो ह्ययमात्मैकल एवाविकल्पो नहि वस्तु सदयं ह्योत इव सद्घनोऽयं चिद्घनं आनन्दघन एवैकरसोऽव्यवहार्यः केनचनाऽद्वितीय ओतश्च प्रोतश्चैष ओंकार एवं नैवमिति पृष्ट ओमित्येवाह वाग्वा ओंकारो वागेवेदं सर्वं नह्यशब्दमिवेहास्ति चिन्मयो ह्ययमोंकारश्चिन्मयामिदं सर्वं तस्मात्परमेश्वरएवैकमेव तद्भवत्येतदमृतमभयमेतद् ब्रह्माऽभयं वै ब्रह्म भवति य एवं वेदेति रहस्यमनुज्ञाता ह्ययमात्मैष ह्यस्य सर्वस्य स्वात्मानमनुजानातिनहीदं सर्वं स्वत आत्मविन्नह्ययमोतो नानुज्ञाताऽसङ्गत्वादविकारित्वादसत्त्वादन्यस्यानुज्ञाताह्ययमोंकार ओमिति ह्यनुजानातिवाग्वा ओंकारोवागेवेदं सर्वमनुजानाति चिन्मयो ह्ययमोंकारश्चिद्धीदं सर्वं निरात्मकमात्मसात्करोति तस्मात् परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्मभवति य एवं वेदेति रहस्यमनुज्ञैकरसो ह्ययमात्मा प्रज्ञानघन एवायं यस्मात्सर्वस्मात् पुरतः सुविभातोऽतश्चिद्धन एव न ह्ययमोतो नानुज्ञातैतदात्म्यं हीदं सर्वं सदैवानुज्ञैकरसोह्ययमोंकार ओमिति ह्येवानुजानाति वाग्वा ओंकारो वागेव ह्यनुजानाति चिन्मयो ह्ययमोंकारश्चिदेव ह्यनुज्ञाता तस्मात् परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्मभवति य एवं वेदेति रहस्यमविकल्पो ह्ययमात्माऽद्वितीयत्वादविकल्पो ह्ययमोंकारोऽद्वितीयत्वादेव चिन्मयोह्ययमोंकारस्तस्मात् परमेश्वर एवैकमेव तद्भवत्यविकल्पोपि नात्र काचन भिदास्ति नैव तत्र काचनभिदास्त्यत्र हि भिदामिव मन्यमानः शतधासहस्रधाभिन्नोमृत्योःस मृत्युमाप्नोति तदेतदद्वयं स्वप्रकाशं महानन्दमात्मैवैतदमृतमभयमेतद् ब्रह्माऽभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम्" इत्यष्टमं खण्डं संक्षेपतो विवृणोति चत्वार इत्यादिना पद्यद्वयेन । अष्टमे खण्डे तुर्य्यस्याद्वितीयाभयचिदानन्दैकरसस्य भासकाः साक्षात्कारहेतवश्चत्वारो योगा वर्णिताः श्रुत्याप्रतिपादिता इति योजना । अत्रोंकारशब्देन न मुख्यः प्रणव आलम्बनतया विवक्षितः किन्तु तदीयचतुर्थमात्रालक्षणो नाद इत्याह ओमित्यादिना

तत्रेत्यन्तेन "अथतुरीयेणोतश्च प्रोतश्चेत्यादिना" "ऽभयं वै ब्रह्म भवति य एवं वेदे"त्य न्तेन सफलः प्रथमो योगो वर्णितः "रहस्यमनुज्ञाते"त्यादिना "यएवं वेदे"त्यन्तेनसाङ्गः सप्रयोजनश्चद्वितीयः स उपदिष्टः "रहस्यमनुज्ञैकरस" इत्यादिना "य एवं वेदे"त्यन्तेन तादृशस्तृतीयो योगः प्रतिपादितः "रहस्यमाविकल्पमि"त्यादिना "य एवं वेदेति रहस्य" मित्यन्तेन ससाधनः सफलश्चतुर्थः स वर्णित इति बोध्यम् ॥ ४३ ॥

ओतानुज्ञात्रनुज्ञातैरविकल्प इतीरितैः ।
भेदैर्योगा विभिन्नाः स्युरभयं ब्रह्म तैर्भवेत् ॥ ४४ ॥

योगचातुर्विध्यप्रयोजका ओतादय इत्याह । ओतेति । अभयमिति तैर्योगैः साक्षात्कारद्वाराऽभयं ब्रह्म भवेदिति योजना ॥ ४४ ॥

ॐ कारमात्रयोर्ध्येयं वस्तु यद्बहुधेरितम् ।
तत्तत्त्वं नवमे खण्डे विस्पष्टं प्रविविच्यते ॥ ४५ ॥

नवमखण्डस्य विषयोऽष्टभिः खण्डैर्यद्बहुधेरितं प्रणवतदीयमात्रयोर्ध्येयं वस्तु तत्तत्त्वस्य विस्पष्टं विवेक इत्याह ॐकारमात्रयोरिति । अत्र मन्त्रयोरित्यपपाठः ॥ ४५ ॥

य आत्मा ध्यातृदेहेषु यश्च ध्येयेषु भासते ।
एक एव स चिद्रूपो मायया भात्यनेकवत् ॥ ४६ ॥
सुषुप्तौ जीवचैतन्यमद्वयं(य) ब्रह्मतां व्रजेत् ।
जगत्सर्वमविद्येति सर्वैरप्यनुभूयते ॥ ४७ ॥

"देवाहवै प्रजापतिमब्रुवन्निममेव नो भगवन्नोंकारमात्मानमुपदिशेति तथेत्युपद्रष्टानुमन्तैष आत्मा नृसिंहश्चिद्रूप एवाविकारोह्युपलब्धः सर्वस्य सर्वत्र नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयोमाययाह्यन्यदिव स वा एष आत्मा पर एवैष सर्वं तथाहि प्रज्ञैनैषाविद्याजगत् सर्वमात्मा परमात्मैव स्वप्रकाशोप्यविषयज्ञानत्वाज्जानन्नेवह्यन्यत्रान्यन्नविजानात्यनुभूते" रित्येतद्व्याचष्टे । माययेत्यादि सपादश्लोकेन ॥ ४६ ॥ ४७ ॥

सृष्टेः प्रागप्येवमासीत्सा माया वटबीजवत् ।
अनेकरूपतां प्राप्य जीवेशावपि निर्ममे ॥ ४८ ॥

"माया च तमोरूपानुभूतिस्तदेतज्जडं मोहात्मकमनन्तमिदं रूपमस्यास्य-व्यञ्जिका नित्यनिवृत्तापि मूढैरात्मै(त्मे)व दृष्टास्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन सैषा वटबीजसामान्यवदनेकवटशक्तिरेकैवत-द्यथा बटबीजसामान्यमेकमनेकान्स्वाव्यतिरिक्तान् बटान् सबीजानुत्पाद्यतत्र तत्र पूर्णं सत्तिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि पूर्णानि क्षेत्राणि दर्शयित्वाजीवे-शाव(वा)भासेन करोति माया चाविद्या च स्वयमेव भवति सैषाचित्रासुदृढा बहङ्कुरा-स्वयं गुणभिन्नाङ्कुरेष्वपिगुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता त-स्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमभिमन्ताजीवो नियन्तेश्वरः सर्वाहंमानी हिरण्यगर्भस्त्रिरूप ईश्वरवद्व्यक्तचैतन्यः सर्वगोह्येषईश्वरः क्रियाज्ञानात्मा सर्वं सर्व-मयं सर्वेजीवा सर्वमयाः सर्वावस्थासु तथाप्यल्पाः सवा एष भूतानीन्द्रियाणि-विराजं देवताः कोशाँश्चसृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव त-स्मादद्वय एवायमात्मे" त्यतद्वाक्यं मायास्वरूपं तत्कार्यं च प्रदर्शयद्दर्शयतिच त-योस्तुच्छत्वमात्मनः परमार्थतत्त्वञ्च । तद्विवृणोति । सृष्टेरित्यादिपद्यसप्तकेन ॥४८॥

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
उपाध्योर्यौ चिदाभासौ तौ जीवेशावुदीरितौ ॥ ४९ ॥

उक्तमर्थं श्रुत्यन्तरसंवादेनद्रढयति कार्य्योपाधिरिति ॥ ४९ ॥

नियन्तेशोऽनुमन्ता तु जीवः सोऽपि द्विधा भवेत् ।
समष्टिव्या(र्व्य)ष्टिरित्याद्यैस्तयोः सर्वाभिमानवान् ॥ ५० ॥

सोऽपि, जीवोऽपि, तस्य द्वैविध्यमाह । समष्टीति । तयोरीशजीवयोः स-र्वेति, समष्टीत्यर्थः ॥ ५० ॥

हिरण्यगर्भः सूत्रात्मा त्रिमूर्तिश्चेत्युदीर्यते ।
ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयो गुणभेदतः ॥ ५१ ॥

समष्ट्यभिमानिनस्संज्ञात्रयं श्रुतिस्मृतिप्रसिद्धमाह । हिरण्येति । मूर्तित्रयभे-देनाह । ब्रह्मेति ॥ ५१ ॥

लिङ्गोपाधित्वतो जीवा अपीशाः सर्वविस्त्वतः।
समष्टिः समुदायात्मा व्यष्टिस्तु पृथगात्मवान् ॥ ५२ ॥

लिङ्गोपाधीति—ते हिरण्यगर्भादयः सूक्ष्मशरीरोपहितत्वेन सर्वज्ञत्वादीशाः सर्वशक्तय इत्यर्थः। समष्टिरिति–समुदायस्वरूपः समष्टिपदार्थः। एकैको व्यष्टिपदार्थः ॥ ५२ ॥

समष्टिः सूत्रवज्ज्ञेयो ब्रह्माण्डाख्यवपुर्विराट्।
देवतिर्यङ्मनुष्यादिदेहो व्यष्टिरितीर्यते ॥ ५३ ॥
परः प्रविश्य देहेषु मायया गू( मू )ढवत् स्थितः।
द्वैतस्य मायिकत्वेन तत्त्वमद्वैतमिष्यताम् ॥ ५४ ॥

समष्टिरिति। यथासमष्ट्यभिमानी चेतनो हिरण्यगर्भसूत्रत्रिमूर्तिब्रह्मविष्णुमहेश्वरादिपदैः श्रुतिस्मृतीतिहासपुराणादिषु कीर्त्यते। तथा समष्टिर्ब्रह्माण्डाख्यं वपुर्यस्य स विराट्पदेन कीर्त्यते। देवतिर्यङ्मनुष्यादिदेहो व्यष्टिशब्देन कीर्त्यते इत्यन्वयः ॥ ५३ ॥ ५४ ॥

सन्मात्रोनित्य इत्यादि श्रुत्या तत्तुस्फुटीकृतम्।
अथर्वणेतुकैवल्यप्रमुखाः श्रुतयः स्फुटाः ॥ ५५ ॥

"सन्मात्रोनित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनोविभुरद्वयानन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगतः सत्तामात्रंहीदंसर्वं सदेवपुरस्तात्सिद्धं हि ब्रह्म नह्यत्र किञ्चनानुभूयते नाविद्याऽनुभवात्मा न स्वप्रकाशेसर्वसाक्षिण्यविक्रियेऽद्वये पश्यतेहापि सन्मात्रमसदन्यत्सत्यं हीत्थं पुरस्तादयोनिस्वात्मस्थमानन्दचिद्घनं सिद्धंह्यसिद्धंतद्विष्णुरीशानोब्रह्मान्यदपि सर्वं सर्वगतं सर्वमत एवशुद्धोऽबाध्यस्वरूपोबुद्धः सुखस्वरूपआत्मानह्येतन्निरात्मकमपि नात्मापुरतोहि सिद्धो नहीदं सर्वं कदाचिदात्माहि स्वमहिमस्थोनिरपेक्षएकएवसाक्षीस्वप्रकाशः किं तन्नित्यमात्माऽत्रह्येव न विचिकित्समेतद्धीदंसर्वंसाधयति द्रष्टाद्रष्टुः साक्ष्यविक्रियः सिद्धोनिरवद्योवाह्याऽभ्यन्तरवीक्षणात् सुविस्फुटस्त(त)मः सपरस्ताद् ब्रूतैष दृष्टोऽदृष्टो व्यवहार्योऽप्यल्पोनाल्पः साक्ष्यविशेषोऽनन्योऽसुखदुःखोऽद्वयः परमात्मासर्वज्ञोऽनन्तोऽभिन्नोऽद्वयः सर्वदासम्वित्तिर्माययानासम्विात्तिः स्वप्रकाशेयूयमेवद(पृ)ष्टाः किमद्वयेनद्वितीयमेव न यूयमेव ब्रूह्येवभगव-

न्निति देवा ऊचुर्यूयमेवदृश्यते चेन्नात्मज्ञाऽसङ्गो ह्ययमात्मातोयूयमेवस्वप्रकाशाइदं हि सत्सम्विन्मयत्वाद्यूयमेवनेति होचुर्हन्तासङ्गावयमितिहोचुः कथं पश्यन्तीतिहोवाच न- वयं विद्म इति होचुस्ततोयूयमेव स्वप्रकाशा इति होवाच नच सत्साम्विन्मयाएतौ- हिपुरस्तात्सुविभातमव्यवहार्य्यमेवाऽद्वयंज्ञातो नैषविज्ञातोविदिताऽविदितात्पर इति होचुः सहोवाचतद्वा एतद्ब्रह्माद्वयं ब्रह्मत्वान्नित्यंशुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मंपरिपूर्ण- मद्वयं सदानन्दचिन्मात्रमात्मैवाव्यवहार्य्यंकेनच तत्चदेतदात्मानमोमित्यपश्यन्तः पश्यततदेतत्सत्यमात्माब्रह्मैवब्रह्मात्मैवात्रह्येवनविचिकित्स्यमित्योंसत्यन्तदेतत्पण्डिता- एवपश्यन्त्येतदृध्यशब्दमस्पर्शमरूपमरसमगन्धमवक्तव्यमनादातव्यमगन्तव्यमविसर्ज- यितव्यमनानन्दायितव्यमगन्तव्यमबोद्धव्यमनहङ्कर्त्तयितव्यमचेतायितव्यमप्राणयितव्य- मनपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिन्द्रियमविषयमकरणम- लक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमभयमप्यौपानिषद- मेवसुविभातं सकृद्विभातंपुरतोऽस्मात्सर्वस्मात् सुविभातमद्वयंपश्यतहंसः सोऽहमिति सहोवाचकिमेषदृष्टोऽदृष्टोवेति दृष्टोविदिताविदितात्पर इति होचुः कैषाकथमितिहोचुः किन्तेननाकिञ्चनेतिहोचुर्यूयमेवाश्चर्य्यरूपा इति होवाचनचेत्याहुरोमित्यनुजानीध्वं ब्रूतै- नमितिज्ञातोऽज्ञातश्चेतिहोचुर्नचैनामितिहोचुरीतिब्रूतैवमात्मसिद्धमिति होवाच पश्याम एव भगवोनचवयं पश्यामोनैववयं वक्तुंशक्नुमोनमस्ते ऽस्तुभगवन् प्रसीदेति होचुर्न भेत्तव्यं पृच्छतेतिहोवाचकैषाऽनुज्ञेत्येषएवात्मेतिहोवाचेतेहोचुर्नमस्तुभ्यंवयंन्त इति- हप्रजापतिर्देवाननुशशासाऽनुशशासेतितदेषश्लोकः ॥ ओतमोतेनजानीयादनुज्ञातार- मान्तरमनुज्ञामद्वयंलब्ध्वा उपद्रष्टारमाव्रजेदिति'' इत्येतद्वाक्यजातंद्वैतंमायिकमद्वैतं- परमार्थसदित्येतत्परमित्याह सन्मात्र इति–इममर्थमथर्ववेदीयकैवल्योपनिषच्छ्रुतयो- ऽपिस्पष्टं प्रतिपादयन्तीत्याह–अथर्वण इति ॥ ५५ ॥

श्रुतिस्मृतीतिहासानामभिप्रायविदव्ययः ।
श्रुतिव्याख्यानतस्तुष्याद्विद्यातीर्थमहेश्वरः ॥ ५६ ॥

एतद्व्याख्यानेनविद्यातीर्थमहेश्वरसन्तोषंप्रार्थयते–श्रुतीति ॥ ५६ ॥

इति श्रीविद्याऽऽरण्यविरचितेऽनुभूतिप्रकाशे देव- विद्याख्यो नृसिंहतापिनीविवरणो नाम- विंशोऽध्यायः ॥ २० ॥

ॐतत्सद्ब्रह्मार्पणमस्तु ॥

*श्रीरस्तु*

बह्वशुद्धिकमेकैकं मुद्रितं पुस्तकं द्वयोः ।
लब्ध्वा प्रकाशतापिन्योर्यत्नेनेदमशूशुधम् ॥ १ ॥
तेन तेन मिषेणाऽत्र तापिनी निखिला मया ॥
श्रद्धाधनेन निहिता केसरीतुष्यतादिति ॥ २ ॥
योगक्षेमयता ब्रह्मनिष्ठेन सुधिया सता ॥
भगवद्दासगुप्तेन प्रार्थितोऽत्र प्रवृत्तवान् ॥ ३ ॥
नामं नामं घनश्याममज्ञानध्वान्तभास्करम् ॥
राधावदनचन्द्रांशुचकोरं नन्दनन्दनम् ॥ ४ ॥
हेरम्बालम्बितक्रोडामुमां स्कन्दं सदाशिवम् ।
सरस्वतीं महाविष्णुं मार्तण्डं च सहग्रहम् ॥ ५ ॥
वस्वश्वरत्नभूवर्षे ( १९७८ ) मार्गशीर्षे सितेदले ।
दशम्यां शनिवारे श्रीकाशीक्षेत्रेऽपवर्गदे ॥ ६ ॥
बलियाप्रान्तसंलग्नछाताग्रामसुवास्तुकः ।
समापिपदिमां वृत्तिं काशीनाथो द्विजोत्तमः ॥ ७ ॥
नमामि सततं तस्या मातुश्चरणपङ्कजम् ।
यत्कारुण्यमहो स्मारं स्मारमाप्नोमि विस्मयम् ॥ ८ ॥
प्रणमन्पितरं ब्रह्म सच्चिदानन्दविग्रहम् ।
गौरीदत्ताभिधं नौमि पितृव्यं सादरं मुहुः ॥ ९ ॥
अन्यानपि नमस्यामि पितृव्यान् दिक्षुविश्रुतान् ।
आसंयैर्लालितो बाल्ये स्नेहाद्रक्षणतत्परैः ॥ १० ॥
व्यासं श्रीशङ्कराचार्य्यसुरेश्वरमुखान्यतीन् ।
विद्यारण्यं च नमति काशीनाथो मुहुर्मुहुः ॥ ११ ॥

प्रकाशेटीकयाहीने सा व्यधायि यथामति ।
तेनमामनुगृह्णातु विद्यारण्यमुनीश्वरः ॥ १२ ॥
जरसाग्रस्तवपुषोऽध्यापनव्यग्रचेतसः ।
रोगाक्रान्तस्य सततं शरीरादेरुपेक्षया ॥ १३ ॥
मन्दबुद्धेरियं वृत्तिर्हृद्या मे नैव यद्यपि ।
तथापिसत्स्वभावत्वात् प्रशंसेयुर्महाजनाः ॥ १४ ॥
निन्दन्तु दुर्जनास्तेन न चेतो मम दूयते ।
साध्वीष्वपि कृतिर्लोके तैर्गर्हांपदमाप्यते ॥ १५ ॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ १६ ॥

इति श्रीविद्वन्मण्डलमण्डनायमाननन्दूरामपण्डितात्मजविद्वद्वर्यपति-
रामपण्डिततनुजन्मपाराशर्यकुलाम्भोजभास्करचित्रधरपण्डिता-
त्मजविद्वदग्रेसरश्रीरामटहलपण्डिततनूजोविठीदे-
वीगर्भजकाशीनाथकृतौ मितप्रकाशाविवृतौ देव
विद्यारण्यो नृसिंहतापिनीविवरणं नाम
विंशोऽध्यायः ॥

—:०:—



श्रीगणेशाय नमः ।

श्रीमच्छङ्कराचार्य्यप्रणीता ।

# वाक्यसुधा ।

श्रीमद्ब्रह्मानन्दभारती–प्रक्लृप्तया टीकया सहिता ।

यस्मात् सर्वं समुत्पन्नं चराचरमिदं जगत् ।
इदं नमो नटेशाय तस्मै कारुण्यरूपिणे ॥ १ ॥
कारणं खादिजगतां तारणार्थमनागसाम् ।
वारणाननमात्मानमद्वयं समुपास्महे ॥ २ ॥
परापश्यन्त्यादिदेहां प्रणताभीष्टदायिनीम् ।
सत्यज्ञानानन्दरूपां ध्याये ह्याद्यां सरस्वतीम् ॥ ३ ॥
नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
मया वाक्यसुधाटीका यथामति विरच्यते ॥ ४ ॥
न ख्यातिर्लाभपूजे च टीकाकरणकारणम् ।
न विद्वत्ताबलं वात्र मुक्तिरेवात्र कारणम् ॥ ५ ॥

प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाय शिष्टाचारपरिपालनाय च केवलकूटस्थप्रत्यग्बोधरूपपरमात्मस्वरूपानुस्मरणलक्षणं मङ्गलमाचरन् सच्चिदानन्दाखण्डैकरसस्वरूपावस्थानलक्षणस्य मोक्षस्य तत्त्वमस्यादिमहावाक्यार्थापरोक्षज्ञानफलत्वाद्वाक्यार्थज्ञानस्य चान्वयव्यतिरेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात् पदार्थपरिशोधनस्य, प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयमितिन्यायेन प्रतिशरीरमहमहमिति प्रसिद्धजीववाचकत्वंपदार्थपरिशोधनपूर्वकत्वात् श्रीमच्छारीरकमहाशास्त्रे श्रीमद्भाष्यकारैः प्रतिपादितमर्थं हृदि निधाय प्राण्यनुजिघृक्षया दृग्दृश्यविवेकद्वाराप्राधान्येन त्वंपदार्थपरिशोधनपरमिदं प्रकरणमारभमाणः परमकृपानिधिः (१)श्रीभारतीतीर्थगुरुः प्रकरणप्रतिपाद्यमानमर्थं संक्षिप्य प्रथमश्लोकेन तावद्दर्शयति ।

**रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक् तु मानसम् ।**
**दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ॥ १ ॥**

(१) श्रीभारती तीर्थगुरुरिति । अनेन वाक्यसुधाकृद् भारतीतीर्थ इति प्रतीयते ।

रूपमिति—लोके चक्षुरिन्द्रियग्राह्यं यद्रूपमस्ति तत्सर्वं दृश्यं भवति तद्ग्राहकं चक्षुरिन्द्रियं स्वग्राह्यापेक्षया दृग्भवति तथा तत्पुनश्चक्षुरिन्द्रियं स्वस्मादप्यान्तरस्य मनसो दृश्यं भवति स्वभास्यचक्षुरिन्द्रियापेक्षया मानसमपि दृग्भवति द्रष्टृ भवति मनसः सर्वेन्द्रियावभासकत्वसामर्थ्यं द्योतयति तुशब्दो, धीवृत्तयोऽन्तःकरणस्य वक्ष्यमाणवृत्तयस्तदविद्याकार्य्यत्वेन जडरूपत्वाद्दृश्या भवन्ति, साक्षी शरीरत्रयविलक्षणः प्रत्यगात्मा दृगेव भवति द्रष्टैव भवति एवकारेणार्थाद्दृश्यत्वे निषिद्धेऽपि कण्ठतोऽपि दृश्यत्वं निषेधयन् प्रत्यगात्मनो द्रष्टृत्वमेव दृढयति नतु-दृश्यते इति । साक्षिणि वर्त्तमानस्य दृक्त्वस्य सर्वान्तरत्वे सापेक्षितत्वाभावात् ततस्तस्य लोचनमानसयोर्वर्त्तमानदृक्त्ववैलक्षण्यं द्योतयति द्वितीयस्तुशब्दः, साक्षिणः दृश्यत्वमप्रामाणिकमिति यस्मात्तस्मात्कालत्रयेऽपि दृक्त्वमेवास्य स्वरूपमिति भावः ॥ १ ॥

एवं प्रकरणे प्रतिपाद्यमानमर्थं संक्षिप्य प्रथमश्लोकेन दर्शयित्वा इदानीं प्रथमश्लोकस्य प्रथमपादेन दर्शितमर्थं द्वितीयश्लोकेन स्पष्टयति ।

**नीलपीतस्थूलसूक्ष्महृस्वदीर्घादिभेदतः ।**
**नानाविधानि रूपाणि पश्येल्लोचनमेकधा ॥ २ ॥**

नीलेति—दृश्यत्वदृक्त्वयोर्नानात्वैकत्वहेतुकत्वान्नीलपीताद्यनेकभेदभिन्नत्वेन दृश्यत्वं प्राप्तानि रूपाणि चक्षुरिन्द्रियं स्वयं स्वग्राह्यरूपभेदानुकूलस्वरूपभेदमगृहीत्वैव एकरूपेणैव पश्येत् गृह्णीयात् अत एवास्य दृक्त्वं स्यादिति भावः ॥ २ ॥

एवं प्रथमश्लोकस्य द्वितीयपादोक्तमर्थं स्पष्टीकुर्वन् चक्षुरिन्द्रिये प्रदर्शितन्यायं श्रोत्रादीन्द्रियेष्वप्यतिदिशति ।

**आन्ध्यमान्द्यपटुत्वेषु नेत्रधर्मेषु चैकधा ।**
**सङ्कल्पयेन्मनः श्रोत्रत्वगादौ योज्यतामिदम् ॥ ३ ॥**

आन्ध्यमिति—आन्ध्यं नाम सामान्याकारेणापि स्वविषयग्रहणासामर्थ्यं विषयसामान्याकारग्राहकत्वं मान्द्यं स्वविषयसूक्ष्मविशेषाकारग्रहणसामर्थ्यं पटुत्वम् । एवमत्र नेत्रधर्मेषु आन्ध्यमान्द्यादिभेदभिन्नेष्वपि नानात्वेनैव हेतुना भासमानान् तान्नेत्रधर्मान् भास्यभेदानुरूपस्वरूपभेदमगृहीत्वैकरूपेणैव मनः सङ्कल्पयेत् मम चक्षुरन्धं मम चक्षुर्मन्दं मम चक्षुः पट्विति, अत एवास्य मनसो दृक्त्वं भवतीत्यर्थः । श्रोत्रत्वगादीत्यत्र चशब्दः सम्बध्यते, श्रोत्रत्वग्जिह्वाघ्राणेष्वपीदं स्वविषयाप-

क्षया दृक्त्वं स्वभासकमानसापेक्षया दृश्यत्वं यथोचितं बाधिर्य्यादिकञ्च योज्यतामूह्यतामित्यर्थः । एकस्मिन्निन्द्रिये दृग्दृश्यविवेकं दर्शयित्वा श्रोत्रादीन्द्रियान्तरेष्वप्येवं योज्यतामित्यतिदिशति । आचार्य्यस्य स्वशिष्यैः स्वबुद्ध्या क्रियमाणो दृग्दृश्यविवेक एव पुरुषार्थोपायो भवतीत्यभिप्रायः ॥ ३ ॥

प्रथमश्लोकस्योत्तरार्द्धे साक्षी दृगेवेत्यन्तेन ग्रन्थेन प्रदर्शितमर्थं विशदयति।

**कामः सङ्कल्पसन्देहौ श्रद्धाश्रद्धे धृतीतरे ।**
**ह्रीर्धीर्भीरित्येवमादीन् भासयत्येकधा चितिः ॥ ४ ॥**

काम इति ॥ रज्ज्वज्ञानाद्रज्ज्वारोपितान् सर्पादीन् रज्जुरिव स्वाज्ञानात्स्वस्मिन्नारोपितान् कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति बृहदारण्यकश्रुत्युक्तानादिशब्देन संगृहीतानैतरेयोपनिषदुक्तान् संज्ञादींश्च स्वरूपज्ञानापनोद्यानेतान् सर्वानप्यन्तःकरणवृत्तिविशेषान्स्वगतादिभेदरहितसच्चिदानन्दलक्षणब्रह्माभिन्नकूटस्थप्रत्यग्रूपा सर्वसाक्षिणी चितिरेकधा भासयति विकारकारणाभावात् स्वभास्याऽवस्तुभूतविकारानुरूपं स्वगतविकारमन्तरेणाप्येकरूपेणैव प्रकाशयतीति यावत् ॥ ४ ॥

इन्द्रियमनसोरुक्तन्यायेन उक्तलक्षणायाश्चितेरपि दृश्यत्वं स्यादित्याशङ्कायां दृश्यत्वस्य द्रष्टृपूर्वकत्वाच्चितेर्द्रष्टृत्वेन चित्यन्तराङ्गीकारेणानवस्थाख्यो दोषः स्यात्, चितेश्चितिरेव द्रष्ट्रीत्यस्मिन् पक्षेऽपि कर्मकर्तृविरोधः स्यात् तस्मात् प्रकाशान्तरनिरपेक्षतया स्वयंप्रकाशमानायाश्चितेर्दृश्यत्वं न स्यादित्यर्थतो दर्शयन् मुखतः स्वव्यतिरिक्तान्तःकरणादियुष्मदर्थेभ्याश्चितेर्वैलक्षण्यं न तु दृश्यते इत्यंशविवरणेनानेन श्लोकेन दर्शयति ।

**नोदेति नास्तमेत्येषा न वृद्धिं याति न क्षयम् ।**
**स्वयं विभात्यथान्यानि भासयेत् साधनं विना ॥ ५ ॥**

नोदेतीति—यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुत्युक्तप्रकारेण विद्वदपरोक्षतां चितेरर्थात्सूचयन् उक्तलक्षणां चितिं परामृशत्येषेति । सर्वसाक्षिण्येषा चितिरहमादियुष्मदर्थवत् प्रागभावाभावान्नोदेति नोत्पद्यते प्रध्वंसाभावाभावान्नास्तमेत्यन्तं विनाशं न प्राप्नोति वृद्धिक्षयौ ताभ्यामुपलक्षितौ अस्तित्वपरिणामौ च न प्राप्नोति सर्वथाप्येकरूपत्वादुत्पत्त्यनन्तरं भाविव्यावहारिकास्तित्वमेव विकारान्तःपातित्वेन निषिध्यते

ननु स्वरूपास्तित्वं तस्याविकारित्वेन निषेद्धुमशक्यत्वाच्चितेः षड्भावविकाररहितत्वे हेतुं दर्शयति स्वयं विभातीति । एषा चितिः स्वस्य प्रकाशान्तरनिरपेक्षतया स्वयंप्रकाशमाना सती सच्चिदानन्दात्मकस्वरूपप्रकाशानन्तरमेव स्वव्यतिरिक्तान्यखिलान्यारोपितवस्तूनि भासयेत् प्रकाशयेत "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" तिश्रुतेः । सविकल्पस्य ज्ञानस्य निर्विकल्पकज्ञानपूर्वकत्वाच्चात्रानुमानद्वयं सूचितम्, अस्मत्प्रत्ययविषया एषा चितिः षड्भावविकाररहिता प्रकाशान्तरनैरपेक्ष्येण स्वयंप्रकाशमानत्वाद्यत्षड्भावविकाररहितं न भवति तत्प्रकाशान्तरनैरपेक्ष्येण स्वयंप्रकाशमानमपि न भवति यथा युष्मत्प्रत्ययविषयोऽहमादिः, उक्तलक्षणा एषा चितिः षड्भावविकाररहिता प्रकाशान्तरनैरपेक्ष्येण स्वव्यतिरिक्तवस्त्ववभासकत्वाद्यन्नैवं तन्नैवं यथाऽहमादिरित्येवमुक्तप्रकारेण स्वयंप्रकाशमानत्वात् षड्भावविकाररहितत्वाच्च युष्मदर्थवैलक्षण्ये समर्थिते सति चितेः कालत्रयेऽपि दृक्त्वमेव स्वरूपं न तु दृश्यत्वमित्यर्थात्समर्थितं भवति, "अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रमविज्ञातं विज्ञातृ न दृष्टेर्द्रष्टारं पश्येन्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीया" इत्यादिश्रुतिसहस्रेणाप्ययमेवार्थस्तात्पर्य्येण प्रतिपाद्यत इत्यतो युष्मत्प्रत्ययविषयान्तःकरणादिरूपं दृश्यमेवास्मत्प्रत्ययावलम्बनभूतायाः प्रत्यक्चितेः स्वरूपं दृक्त्वमेवातः प्रत्यक्चितिरेव परं ब्रह्मेत्ययमेवाभिप्रेतार्थः ॥ ५ ॥

ननु युष्मदर्थावभासकत्वं प्रथमश्लोके साक्षिण इत्युक्तं, अत्र तु चितेरित्युक्तमतः पूर्वापरविरोध इति चेन्नैष दोषः, प्रथमश्लोकोक्तसाक्षिण एवात्रचितिशब्देन परामृष्टत्वात् तस्यैव पुनः प्रथमश्लोकार्थविवरणेन प्रकरणपरिसमाप्तिपर्यन्तेनोत्तरग्रन्थसन्दर्भेणापि तत्र तत्र साक्षिशब्देन परामृष्टत्वात्साक्षी चितिश्चिच्चैतन्यं ज्ञानं बोधः प्रत्यगात्मा कूटस्थः इत्यादिशब्दानामेकार्थपर्य्यवसायित्वाच्च । ननु तर्हि युष्मदर्थस्यान्तःकरणस्य सापेक्षकं दृक्त्वमपि न सम्भवति भौतिकत्वेन जडात्मकत्वाद्घटादिवत् । "द्रष्टरि नास्ति दृष्यत्वं दृश्यस्य द्रष्टृता न हि । दृश्यरूपस्य कुड्यादेर्द्रष्टृता न हि दृश्यते" इति पुराणवचनाच्च, तथा सति तस्य संसारो नोपपद्यते । अथवा पूर्वोक्तप्रकारेणाहमादिविलक्षणस्य कूटस्थस्य स्वयंप्रकाशप्रत्यग्बोधरूपस्य साक्षिणश्च जाग्रदादिविमोक्षान्तः संसारो नोपपद्यते तस्यासङ्गोदासीनत्वात्, योऽसंसारी न भवति सोऽसङ्ग उदासीनोऽपि न भवति यथाहमादिः, 'असङ्गोह्ययं पुरुष' इत्यादि श्रुतिसद्भावाद्धेतुरसिद्धो न भवत्येवमुक्तप्रकारेणान्तःकरणतत्साक्षिणोरुभयोरन्यसंसारित्वे समर्थिते सति निवर्त्यसंसाराभा-

वात् तन्निवर्त्तकज्ञानस्यापि नैरर्थक्यं स्यात्ततस्तज्ज्ञानप्रतिपादकवेदान्तवाक्यानामप्यप्रामाणिकत्वप्रसङ्गः स्यात् पुनरुक्तलक्षणस्याशेषाविशेषशून्यस्य साक्षिणः शब्दप्रवृत्तिनिमित्तषष्ठ्यादिरहितत्वेन वेदान्तवाक्यैर्विधिमुखेन प्रतिपाद्यमानत्वासम्भवादतस्तन्निरसनमात्रेण तद्रूपाप्रसिद्धेश्च शास्त्रस्याप्रामाण्यं प्रसज्येत एवं परम्परयानेकदोषसम्भवात्साक्षिणः कूटस्थत्वस्वयंप्रकाशमानत्वादिकमप्यप्रामाणिकं स्यादित्यनेकदोषमाशङ्क्यान्तःकरणप्रतिफलितानिर्वचनीयचिच्छायाङ्गीकारे सति सर्वोपि दोषः परिहृतः स्यादित्यभिप्रेत्य चिच्छायां तावदङ्गीकरोति ।

चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता ।
एकाहङ्कृतिरन्या स्यादन्तःकरणरूपिणी ॥ ६ ॥

चिच्छायेति—चिच्छायावेशतो बुद्धौ भानं रजतसुवर्णादिवद्बहुविधपरिणामार्हमन्तःकरणाख्यं द्रव्यमत्र बुद्धिशब्देन धीशब्देन चोच्यते तस्यान्तःकरणस्य कर्तृस्वरूपवृत्तिमदंशोऽहङ्कृतिशब्देनोच्यते करणस्वरूपमनःशब्दवाच्याहमिदमात्मिकवृत्त्यंशोऽन्तःकरणशब्देनोच्यते तत्र श्रोत्रादिकरणापेक्षया अन्तःकरणत्वादन्तःकरणं बुध्यते अनया चिच्छायावेशतः । चिच्छाया चित्प्रतिबिम्बं तस्या आवेशोऽनुप्रवेशस्ततोऽस्वरूपमितिबुद्धिस्तस्यां भानं स्यात् स्वभावतो जडरूपाप्यनुप्रविष्टचैतन्यबलाद्बुद्धिः स्वयंप्रकाशमानेव भवतीति यावत् । धीस्तु द्विधा । तुशब्दोऽवधारणे । भ्रामकसन्निधौ लोहवत् साक्षिसन्निधौ बहुविधचेष्टां स्थिता कुर्वती सा धीर्द्विधैव स्थिता तयोर्मध्ये एकाधीरहङ्कृतिशब्दवाच्यकर्तृरूपा स्यादन्या धीर्मनःशब्दवाच्यान्तःकरणरूपिणी स्यात् कामादीनां संज्ञादीनाञ्च सर्वेषामप्यन्तःकरणपरिणामविशेषाणां मनोबुद्ध्यहङ्कारचित्ताख्येष्वन्तःकरणचतुष्टयेष्वन्तर्भूतत्वात् बुद्धिचित्तयोरपि यथाक्रममहङ्कारमनसोरेवान्तर्भूतत्वाद्वृत्तिमद्वृत्तिलक्षणाकारद्वयान्यतिरिक्तान्तःकरणाकारान्तरस्य निरूपयितुमशक्यत्वात् चित्कर्मभूता बुद्धिः स्वविकारानुकारिणाऽनुप्रविष्टचैतन्येन सहिताऽहङ्कारमनःशब्दवाच्यकर्तृकरणात्मकवृत्तिमद्वृत्तिलक्षणाकारद्वयेनैकावस्थितेति भावः ॥ ६ ॥

उक्तलक्षणयोरहङ्कारमनसोर्मध्येऽहङ्कारस्य चिच्छायया सह तप्तायःपिण्डवत् तादात्म्यात् तेन सच्चिदाभासाहङ्कारेण तादात्म्याज्जडरूपोपि देहश्चेतनत्वं प्राप्नुयादित्याह ।

छायाहङ्कारयोरैक्यं तप्तायःपिण्डवन्मतम् ।
तदहङ्कारतादात्म्याद्देहश्चेतनतामगात् ॥ ७ ॥

छायेति ॥ छायाहङ्कारयोश्चिदाभासकर्त्रोरैक्यं तप्तायःपिण्डवद्वह्निसम्बन्धेन तद्रूपं तप्तायःपिण्डवन्मतमभिमतं तथा दृष्टान्ते अयमग्निरिदमय इति पृथक्करणमशक्यं तथा दार्ष्टान्तिकेऽप्ययमहङ्कार इयं चिच्छायेत्यहङ्कारस्वरूपस्य तत्रानुप्रविष्टचिच्छायास्वरूपस्य च पृथक्करणमशक्यमिति भावः । तदहङ्कारतादात्म्यात् तेन चिच्छायासहितेनाहङ्कारेण तादात्म्यात् सोऽहङ्कार आत्मा नाम स्वरूपं यस्य देहस्य स तदात्मा तस्य भावस्तादात्म्यं सम्बन्ध इत्यर्थः । तस्माद्देहः स्थूलशरीरं स्वयं जडरूपमपि चेतनतां चेतनं ज्ञानं तस्य भावश्चेतनता तां ज्ञानस्वरूपतामगात्प्राप्नुयादित्यर्थः । यथा पयसि परीक्षणार्थं प्रक्षिप्तो मरकतमणिः पयोशेषमात्मच्छायं कुर्यात् तथा स्वभावत एव सर्वान्तरः कूटस्थोऽसङ्गबोधरूपः साक्ष्यप्यहङ्कारादिस्थूलदेहपर्य्यन्तमशेषं युष्मदर्थमात्मच्छायं कुरुत इति भावः ॥ ७ ॥

नन्वेवमहङ्कारस्य चिच्छायादेहाभ्यां तादात्म्ये सत्यहं पश्याम्यहं शृणोमीत्यादेरनुभवसिद्धत्वादिन्द्रियैरपि तादात्म्यमस्तीत्याशङ्क्य इन्द्रियाणां स्वस्वगोलकस्थानमन्तरेण स्वस्वविषयग्रहणसामर्थ्याभावाद् गोलकानाञ्च स्थूलशरीरावयवत्वादवयवावयविनोर्भेदाभावान्मनुष्योऽहं ब्राह्मणोऽहं गृहस्थोऽहं कृष्णकेशोऽहमित्यादिवदहं चक्षुरहं श्रोत्रमित्याद्यनुभवाभावात् कस्त्वमितिपृष्टे अहमितिवदतो देहस्यैव स्पृश्यमानत्वाच्चेन्द्रियतादात्म्यस्यापि देहतादात्म्येऽन्तर्भूतत्वात् पृथक् न निरूपणीयमित्यहङ्कारस्य सम्बन्ध्युद्देशद्वारेण तादात्म्यस्येयत्तां दर्शयति ।

अहङ्कारस्य तादात्म्यं चिच्छायादेहसाक्षिभिः ।
सहजं कर्मजं भ्रान्तिजन्यञ्च त्रिविधं क्रमात् ॥ ८ ॥

अहङ्कारस्येति—अहङ्कारस्येत्युक्तलक्षणस्य कर्त्तुः चिच्छायादेहसाक्षिभिः चिच्छायया देहेन साक्षिणा च सह क्रमात् सम्बन्ध्युद्देशक्रमेण त्रिविधं त्रिप्रकारं तादात्म्यं सम्बन्धस्तेषां तादात्म्यानां सदर्थानि नामानि कल्पयति सहजं चिच्छायाहङ्कारयोर्यत्तादात्म्यं तत्सम्बन्धिनोरुभयोरपि उत्पत्तिकाले सहैव जायते इति सहजमित्युच्यते । कर्मजं उक्तलक्षणाहङ्कारस्य देहस्य च यत्तादात्म्यं तदन्वयव्यतिरेकाभ्यां जाग्रद्भोगप्रदकर्मणैव जायते इति कर्मजमित्युच्यते, भ्रान्तिजन्यमधिष्ठानया-

थात्म्याज्ञानं भ्रान्तिशब्देनोच्यते अहङ्कारसाक्षिणोर्यत्तादात्म्यं तदनाद्यनिर्वचनीय-भ्रान्त्यैव जायते इति भ्रान्तिजन्यमित्युच्यते । तादात्म्यत्रयसमुच्चयार्थश्चशब्दः । अत्रायं प्रयोगः, अहङ्कारसाक्षिणोस्तादात्म्यमधिष्ठानयाथात्म्याज्ञानजन्यमधिष्ठानयाथा-त्म्यज्ञानापनोद्यत्वात् यद्यदधिष्ठानयाथात्म्यज्ञानापनोद्यन्तत्तदधिष्ठानयाथात्म्याज्ञानजन्यं यथा रज्जुसर्पादीनां तादात्म्यं तथा चेदमधिष्ठानयाथात्म्यज्ञानापनोद्यं तस्मादधिष्ठानया-थात्म्याज्ञानजन्यमेवेति । एवमहङ्कारस्य चिच्छायादेहसाक्षिभिः सम्बन्ध्युद्देशक्रमेणैवोक्त-लक्षणं त्रिविधं तादात्म्यमस्तीति शेषः ॥ ८ ॥

ननु तर्हि "ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययं"—"एवमनादिरनन्तो नैःसर्गिकोऽयमिति" च श्रीभगवद्भाष्यकाराभ्यामुक्तत्वादहङ्कारसाक्षिणोस्तादात्म्यस्य निवृत्तिर्नास्त्यत एव निःशेषदुःखोच्छित्तिनिरतिशयानन्दावाप्तिलक्षणमोक्षोऽप्याशा-मात्रमित्याशङ्क्य ब्रह्मात्मज्ञानपर्यन्तमेव भ्रान्तिजन्यतादात्म्यस्याविनाशित्वेन ताभ्यां वि-वक्षितत्वादन्यथा स्ववाक्याविरोधात् सर्वेषामपि मोक्षशास्त्राणामप्रामाण्यप्रसङ्गाच्च मु-मुक्षूणामपि सर्वेषां मोक्षविषयश्रवणादिप्रवृत्त्यभावाच्च कर्मजन्यतादात्म्यनिवृत्तेश्च प्र-तिदिनं सुषुप्तावनुभूतत्वाच्च सहजतादात्म्यातिरिक्तयोरपि तादात्म्ययोः स्वस्वकारण-नाशद्वारा निवृत्तिरस्त्येव सहजतादात्म्यस्य तु सहजत्वादेव निवृत्तिर्नास्तीत्याह ।

**सम्बन्धिनोस्सतोर्नास्ति निवृत्तिः सहजस्य तु ।**
**कर्मक्षयात्प्रबोधाच्च निवर्त्तेते क्रमादुभे ॥ ९ ॥**

सम्बन्धीति । सम्बन्धिनोः सतोः परस्परसम्बन्धित्वेनैवोत्पद्यमानयोरुत्पत्ति-काले एव सम्बन्धिनोरित्यर्थः । तुशब्दोऽवधारणे । सहजतादात्म्यस्येतरतादात्म्यवै-लक्षण्यद्योतनार्थो वा । उक्तलक्षणयोश्चिच्छायाहङ्कारयोः सहजाख्यस्य तादात्म्यस्य निवृत्तिर्नास्त्येव परस्परं पृथग्भावो न सम्भवत्येव सुषुप्तिमूर्च्छादौ मरणादौ जाग्र-द्भोगप्रदकर्मक्षयात् जाग्रत्काले श्रुत्याचार्य्यानुग्रहबलेनाहं ब्रह्मास्मीति ब्रह्मात्मैक्य-साक्षात्काराच्च कर्मजन्यभ्रान्तिजन्याख्ये उभे अपि तादात्म्ये निमित्ताभावान्नैमित्तिक-स्याप्यभाव इति न्यायेन क्रमान्निवर्त्तेते कर्मक्षयात् कर्मजं तादात्म्यं निवर्त्तते अह-ङ्कारदेहाख्यावुभावपि सम्बन्धिनौ परस्परसम्बन्धं त्यजत इत्यर्थः । प्रबोधात्प्रबोध-क्षये सति भ्रान्तिजन्यमपि तादात्म्यं निवर्त्तते बोधानन्तरं साक्षिसम्बन्धराहित्येनाप्य-हङ्कारप्रतीतिरन्यदृष्ट्यैव स्वदृष्ट्या निवर्त्तते यथा शुक्तिकाज्ञानात्तत्स्वरूपाज्ञाने नष्टे सति तत्रैव रजतं लीयते तथा स्वरूपपरिज्ञानात् स्वरूपापरिज्ञाने नष्टे सति स्वस्मि-

न्नेवाहङ्कारो लीयते एव ॥ ९ ॥

संक्षेपेणावस्थात्रयस्वरूपमन्वयव्यतिरेकाभ्यां देहस्याचेतनत्वञ्च दर्शयति ।

**अहङ्कारलये सुप्तौ भवेद्देहो ऽप्य चेतनः ।**
**अहङ्काराविकासार्द्धः स्वप्नः सर्वस्तु जागरः ॥ १० ॥**

अहङ्कारेति । स्थूलसूक्ष्मभोगद्वयप्रदकर्मक्षयात्स्वकारणाज्ञाने अहङ्कारे लीने सति तदहङ्कारलयावस्था सुषुप्तिरित्युच्यते तस्यामवस्थायां पूर्वमहङ्कारसम्बन्धाच्चेतनत्वेन भातो देहो ऽप्यचेतनो भवेत् । "अन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवती" त्यादिश्रुतेः अहङ्कृतिविकासार्द्धः स्वप्नः सूक्ष्मभोगकर्मण्युद्बुद्धे सति तद्वशात् स्वकारणाज्ञानादुत्पन्नस्याहङ्कारस्य स्वव्यतिरिक्तवस्त्वन्तराभावेऽपि जाग्रज्जनितसंस्कारमात्ररूपभोगार्थं स्थूलशरीराभिमानमन्तरेणापि शरीरस्यान्तः सूक्ष्मनाडीप्रचारो यः स एव तस्याहङ्कारस्यार्द्धविकासः स एव स्वप्न इत्युच्यते, तत्राहङ्कारव्यतिरिक्तवस्त्वन्तराभावे श्रुतिः "न तत्र रथा न रथयोगा न पन्थानो भवन्ती" त्यादिः, सर्वस्तु जागरः स्थूलभोगप्रदकर्मण्युद्बुद्धे सति तद्वशादापादमस्तकं स्थूलदेहे ऽभिव्याप्तस्याहङ्कारस्य सर्वेन्द्रियैः सर्वविषयज्ञानं यत्स एव तस्याहङ्कारस्य पूर्णविकासस्तदेव जागरणमित्युच्यते । अस्यामवस्थायां पुनरहङ्कारसम्बन्धाद्देहः पूर्ववच्चेतनत्वेन भासते उभयत्राहङ्कारे समाने स्वप्नाज्ज्य जागरितस्योन्द्रियविषयसद्भावात्मकवैलक्षण्यद्योतनार्थस्तुशब्दः । अत्र दर्शितेऽवस्थात्रयलक्षणे माण्डूक्यतापनीयाद्युपनिषदः प्रमाणानि, "दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः आकाशे च हृदि प्राज्ञस्त्रिधा देहे प्रतिष्ठितः" "इन्द्रियैरर्थोपलब्धिर्जागरितं, करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययःसविषयः स्वप्नः, सर्वप्रकारकज्ञानोपसंहारो बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिरि" त्यादीनि श्रीमद्गौडपादाचार्य्यभगवत्पादाचार्य्यादिपूर्वाचार्यवचनानि च॥१०॥

एवं कर्तृव्यापारं निरूप्य करणस्यापि क्रियाव्याप्यत्वं तत्क्रियां दर्शयति ।

**अन्तःकरणवृत्तिश्च चितिच्छायैक्यमागता ।**
**वासनाः कल्पयेत्स्वप्ने बोधेऽक्षैर्विषयान्बहिः ॥ ११ ॥**

अन्तःकरणेति । अन्तःकरणं चासौ वृत्तिश्चेत्यन्तःकरणवृत्तिः सच्चिदाभासकर्तृरूपवृत्तिमदपेक्षया करणभूतं मनःशब्दवाच्याहमिदमात्मिका वृत्तिरिति यावत् । वृत्तिश्चेति चकारेण छायाहङ्कारैक्यविषये प्रदर्शितो दृष्टान्तादिरवस्थात्रये-

ऽप्यहङ्कारवत्सङ्कोचविकासादिश्चात्रापि समान इति द्योत्यते, उक्तलक्षणा सा वृत्तिश्च सुषुप्तौ लीयते सा पुनः सूक्ष्मभोगप्रदकर्मवशादुत्पत्तिसमये चिच्छायया तप्तायःपिण्डवदैक्यं प्राप्ता सती स्वप्नावस्थायां नाडीमध्ये कर्तृकरणकर्मक्रियात्मकव्यवहारवासनाः कल्पयेत् सैव पुनः स्थूलभोगप्रदकर्मवशात्स्थूलशरीरेणैक्यं प्राप्ता सती जाग्रदवस्थायां श्रोत्रादीन्द्रियैः शब्दादिविषयान्बहिः कल्पयेत्। ननु बाह्यविषयाणामीश्वरसृष्टत्वेनान्तःकरणकल्पितत्वमयुक्तमिति चेन्नैष दोषः, स्वरूपमात्रस्येश्वरसृष्टत्वेऽपि भोग्यत्वाकारस्यान्तःकरणकल्पितत्वात्। "करणं कर्म कर्त्ता च क्रिया स्वप्ने फलञ्च धीः। जाग्रत्येवं यतो दृष्टे" त्याचार्य्यवचनाच्च ॥ ११ ॥

एकमेवान्तःकरणं व्यवहारसौकर्य्यार्थमहङ्कारमनोभेदेनावयवशो विभज्य प्रदर्शयित्वा (प्रदर्श्य) इदानीमहङ्कारस्यापि मनोऽपेक्षया कर्तृरूपत्वेऽपि चिच्छायावेशतो बुद्धौ भानमित्यत्र बुद्धिशब्देन निर्दिष्टान्तःकरणाख्यद्रव्यापेक्षया करणत्वात्तस्यैव सर्व्वसंसारनिर्वर्त्तकत्वेन मुख्यकर्तृत्वात् मुख्याहङ्कारत्वाच्चाहङ्कारमनोविभागपूर्वावस्थालक्षणस्य तस्यान्तःकरणाख्यद्रव्यस्य स्वरूपं दर्शयति।

मनोऽहङ्कृत्युपादानं लिङ्गमेकं जडात्मकम्।
अवस्थात्रयमन्वेति जायते म्रियते तथा ॥ १२ ॥

मन इति। मनोऽहङ्कृत्योरुपादानं कारणं यत्तन्मनोहङ्कृत्युपादानं, किन्तल्लिङ्गं लिङ्ग्यते गम्यतेऽनेनेति लिङ्गमन्तःकरणाख्यं द्रव्यमित्यर्थः। तस्यैवाहं ब्रह्मास्मीत्यखण्डाकारवृत्तिद्वारेण सच्चिदानन्दाद्वितीयब्रह्मात्मगमकत्वात्। ननु तत्त्वविवेकाख्ये ग्रन्थे "बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया। शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥" इति सप्तदशावयवात्मकस्य सूक्ष्मशरीरस्यैव लिङ्गत्वमुक्तं नान्तःकरणस्य लिङ्गत्वमुपपद्यते इत्याशङ्क्य बुद्धिकर्मेन्द्रियप्राणपञ्चकानां वेदान्तेषु भौतिकत्वेन श्रुतत्वेऽपि "अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमि"त्यादिश्रुतिष्वन्तःकरणाधीनत्वश्रवणादत एवाहङ्कारमनःसहितानां तेषां ज्ञानक्रियाशक्तिद्वयात्मकान्तःकरणवृत्तित्वाद्वृत्तिवृत्तिमतोर्व्यावहारिकभेदविवक्षया तत्रोक्तत्वात्तयोः पारमार्थिकाभेदाविवक्षयैवात्रोक्तत्वात्तद्विवक्षाभेदेन पक्षद्वयस्याप्युपपन्नत्वादुक्तलक्षणस्यान्तःकरणस्य सूक्ष्मशरीरत्वं लिङ्गत्वञ्चोपपद्यते एवेत्यभिप्रायेणाह एकमिति। एवमुक्तलक्षणमन्तःकरणं स्वभावतो जडमप्यनुप्रविष्टचिच्छायाबलेनैव स्थूलशरीरमप्यात्मत्वेनैव गृहीत्वा पूर्वोक्तसङ्कोचविकासप्रकारेणानुदिनमवस्थात्रयं प्राप्नोति यथा

कर्मवशादवस्थात्रयं प्राप्नोति तथा जननमरणादिकञ्च कर्मवशात्प्राप्नोतीत्यर्थः । जायते म्रियते इत्युक्त्वानन्तरं तथाशब्दप्रयोक्तुर्धर्माधर्मवशाद् घटीयन्त्रवत्पौनः–पुन्येन जन्ममरणे प्राप्नोतीत्यभिप्रायः । "शोकहर्षभयक्रोध–लोभमोहस्पृहादयः । अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः । एवं दुःखाद्यनुभवन् संसारेऽस्मिन्पुमान् मुने । घटीयन्त्रवदुद्विग्नो जायते म्रियते च सः ।" इत्यादिपुराणवचनात् ॥१२॥

एवं निखिलसंसारनिर्वाहकलिङ्गशरीरस्वरूपं निरूप्येदानीमस्य लिङ्गस्य विराडन्तसमस्तप्रपञ्चस्य मूलकारणभूतायाः सच्चिदानन्दब्रह्माश्रयाया अविद्याज्ञानतमोमोहादिशब्दवाच्यायाः सर्वानर्थबीजभूताया अनिर्वचनीयायाः मायायाः स्वरूपं तच्छक्तिद्वारेण विभज्य दर्शयितुं तच्छक्तेरियत्तां तावद्दर्शयति—

**शक्तिद्वयं हि मायाया विक्षेपावृतिरूपकम् ।**
**विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत् ॥ १३ ॥**

शक्तिद्वयमिति ॥ उक्तलक्षणमायाया आवरणशक्तिर्विक्षेपशक्तिरितिद्वयमस्तीति शेषः । "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती"त्यादिवेदान्तवाक्येषु मायायाः शक्तिद्वया(मावृतिविक्षेप)त्मक प्रसिद्धमितिशास्त्रप्रासिद्धिं द्योतयति हिशब्दः । अधिष्ठानमनाच्छाद्य विक्षेपयितुमशक्यत्वेन विक्षेपशक्तेः आवरणशक्तिपूर्वकत्वादत एवावरणशक्तेरभ्यर्हितत्वेऽपि छन्दोभङ्गभयाद्विक्षेपशब्दपूर्वनिपातः कृतः । एवं शक्तेरियत्तामुक्त्वा इदानीं सच्चिदानन्दलक्षणब्रह्मात्मस्वरूपमात्राच्छादिकायाः विक्षेपशक्त्यभिव्यक्तेः पूर्वावस्थालक्षणायाः आवरणशक्तेः सर्वानर्थबीजत्वेनाभ्यर्हितत्वेऽपि विक्षेपशक्तेर्नैरपेक्ष्येण ब्रह्मानन्दानुभवं तिरस्कृत्य सांसारिकसुखदुःखादिभोगप्रदत्वसामर्थ्याभावात्प्रतिदिनं सुषुप्तावनुभूतत्वेनास्मिन्नर्थे कस्यापि विप्रतिपत्त्यसम्भवात् विक्षेपशक्त्यभिव्यक्त्यनन्तरं तया सृष्टस्याहङ्कारादिदेहान्तस्य युष्मदर्थस्य शरीरत्रयविलक्षणस्य कूटस्थासङ्गबोधरूपस्य साक्षिणश्च स्वभावसिद्धं भेदं सैवावरणशक्तिर्येनांशेनावृणोति तस्यैवांशस्य सुखित्वदुःखित्वाद्यनेकविधसंसारकारणत्वाचादृशावरणशक्त्यंशस्योक्तरीत्या विक्षेपशक्त्यनन्तरभावित्वाच्चदपेक्षया विक्षेपशक्तेरभ्यर्हितत्वादनेनैवाभिप्रायेणावरणशक्तिस्वरूपं पश्चान्निरूपयिष्यन् विक्षेपशक्तिस्वरूपं तावन्निरूपयति, विविधं करणं विक्षेपः विविधं भानं भवनं वा सा चासौ शक्तिश्चेति विक्षेपशक्तिः अध्यात्मं विश्वतैजसप्राज्ञादिभेदेनाधिदैवतं विराट्हिरण्यगर्भान्तर्याम्यादिभेदेन च स्वगतादिभेदरहितं चिन्मात्रं विक्षेपयतीति विक्षेपशक्तिरुक्तलक्षणं

चिन्मात्रमनया विक्षिप्यते इति वा गिरिनदीसमुद्राद्यनेकनामरूपाकारेण स्वयमेव विक्षिपति नामरूपाद्याकारेण परिणमते विवर्त्तते इत्यर्थः। एवमिति विक्षेपशक्तिर्जायते पुनर्लयं गच्छतीति जगदुक्तलक्षणा सा शक्तिरुक्तलक्षणं समष्टिव्यष्ट्यात्मकं लिङ्गशरीरादिब्रह्माण्डान्तं जगत्सृजेदुत्पादयेदित्यर्थः॥ १३॥

एवं विक्षेपशक्तिस्वरूपं निरूप्य तद्विक्रियात्मकसृष्टिस्वरूपनिरूपणद्वारेणापि तदेव विशदयति।

**सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्दवस्तुनि।**
**अब्धौ फेनादिवत् सर्वनामरूपप्रसारणा॥ १४॥**

सृष्टिरिति—ब्रह्मस्वरूपे सच्चिदानन्दवस्तुन्यारोपितनामरूपयोरवस्तुत्वादधिष्ठानस्य तद्वैलक्षण्यं द्योतयति वस्तुशब्दः। सच्चिदानन्दश्च तद्वस्तु चेति सच्चिदानन्दवस्तु तस्मिन् परमार्थसच्चिदानन्दलक्षणे ब्रह्मणीत्यर्थः, नाम च रूपं च नामरूपे सर्वे च ते नामरूपे च तयोः प्रसारणा विस्तारो विततिः सृष्टिरित्युच्यते। एतदुक्तं भवति। ब्रह्मण्यवस्थितायाः विक्षेपात्मिकायाः मायायास्तस्मिन्नेव ब्रह्मणि समस्तनामरूपाकारेण विवर्त्तनं यत्सैव सृष्टिरित्युच्यते इत्यत्र दृष्टान्तमाह अब्धौ फेनादिवदब्धाववस्थितायाः विक्षेपात्मिकायाः मायायास्तत्रैव फेनतरङ्गबुद्बुदाद्याकारेण विवर्त्तनं यथा सृष्टिशब्देनोच्यते तथाऽत्रापीति भावः॥ १४॥

एवं विक्षेपशक्तिद्वारा मायास्वरूपं दर्शयित्वा आवरणशक्तिद्वारेणापि तदेव दर्शयति।

**अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः।**
**आवृणोत्यपरा शक्तिः सा संसारस्य कारणम्॥ १५॥**

अन्तरिति॥ अन्तः स्थूलशरीरस्यान्तर्देशे दृग्दृश्ययोर्भेदम् "अहमन्नादोऽहमन्नाद" इत्यादिश्रुत्यनुसारेण शरीरत्रयतादात्म्यवशाद्भोक्तृत्वमापन्नस्य परमार्थतस्तद्राहितस्य केवलदृङ्मात्रस्वरूपस्यास्मदर्थस्य साक्षिणोऽविद्याकार्यत्वेन जडरूपस्याहङ्कारादिदेहान्तस्य युष्मदर्थस्य च भेदमन्योन्यवैलक्षण्यमन्योन्यपृथग्भावं बहिः शरीरस्य बाह्यदेशे ब्रह्मसर्गयोर्भेदं "सच्चासच्चाभवत् अहमन्नमहन्न"मित्यादिश्रुत्यनुसारेण नामरूपतादात्म्यवशाद्भोग्यत्वमापन्नस्य परमार्थतस्तद्राहितस्य परब्रह्मणस्तस्मिन् शुक्तिकायां रजतवदध्यस्तनामरूपात्मकस्य सर्गस्य च भेदं एवमन्तरुक्त-

लक्षणयोर्दृग्दृश्ययोर्भेदम्बहिर्ब्रह्मसर्गयोर्भेदं चापरा शक्तिः पूर्वोक्तरीत्या विक्षेपशक्त्यनन्तर्भावित्वेऽपि स्वरूपतो विक्षेपशक्तिप्रवर्त्तकत्वेन तत्कारणभूता आवरणवाच्या मायाशक्तिरावृणोत्याच्छादयति सा संसारस्य कारणं अन्तर्दृक्स्वरूपस्य साक्षिणः कर्तृत्वभोक्तृत्वादिलक्षणस्य संसारस्य सैव कारणं तस्या एवान्योन्याध्यासेहेतुत्वेन सर्वानर्थकारित्वादिति भावः, बहिः सच्चिदानन्दलक्षणस्य ब्रह्मणो भोग्यत्वादिविकारस्यापि सैव कारणमित्यर्थाल्लभ्यते भोक्तृत्वस्य भोग्यापेक्षत्वात् ॥ १५ ॥

एवं शक्तिद्वयात्मकं मायास्वरूपं प्रदर्श्येदानीं प्रकृतानुसारेण मनोऽहङ्कृत्युपादानमित्यस्मिन् श्लोके सामान्यतो दर्शितं लिङ्गस्वरूपं विशेषतः प्रदर्शयति।

साक्षिणः पुरतो भातं लिङ्गं देहेन संयुतम्।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥ १६ ॥

साक्षिण इति ॥ चितिच्छायासमावेशादनुप्रविष्टचैतन्यस्य बलात्साक्षिणः प्रत्यगात्मनः पुरतोऽग्रतः कर्मत्वेनेति यावत्। भातं भासमानं, देहेन संयुतं स्थूलशरीरेणैक्यं प्राप्तं, लिङ्गं पूर्वोक्तलक्षणं लिङ्गशरीरं, जीवः स्याद्व्यावहारिकः, लोकद्वयेऽपि प्रमात्रादिसमस्तव्यवहारनिर्वाहकत्वाद्व्यावहारिकाख्यो जीवः स्यादस्यानिर्वचनीयमायाकार्यत्वेन प्रकृतिलक्षणविकारित्वात्सकलसंसारनिर्वाहकत्वात्सच्चिदानन्दब्रह्मात्मैक्यस्वरूपावस्थानलक्षणमोक्षदशायामभावाच्च व्यावहारिक जीव इत्युक्तम् ॥ १६ ॥

ननु व्यावहारिकजीवस्य सकलसंसारनिर्वाहकत्वेऽपि मिथ्याभूतत्वान्नित्यमुक्तस्य साक्षिणः संसाराभावाच्चोभयोरपि मोक्षानधिकारादन्यस्य कस्याचिदधिकारिणोऽभावाच्च मोक्षशास्त्रवैयर्थ्यं स्यादित्यत आह।

अस्य जीवत्वमारोपात् साक्षिण्यप्यवभासते।
आवृतौ तु विनष्टायां भेदे भातेऽपयाति तत् ॥ १७ ॥

अस्येति। अस्य व्यावहारिकजीवस्य जीवत्वं जीवभावः आरोपादावरणशक्तिकृतादन्योन्याध्यासात्साक्षिण्यपि दृग्रूपे प्रत्यगात्मन्यपि, जीवत्वं साक्षिणि प्रत्यगात्मनि परमार्थतो जीवत्वासम्भवं द्योतयत्यपिशब्दः, अवभासते प्रकाशते स्वरूपचैतन्यावगतित्वेन भासते इति भावः। तुशब्दोऽवधारणे। आवृतावसत्त्वावृतिरूपेणाभानावृतिरूपेण च द्विप्रकारमायावरणशक्तौ अहं ब्रह्मास्मीत्यखण्डैकरसब्रह्मात्मसाक्षात्कारेण विनष्टायां विशेषेण नष्टायां सत्यां पुनर्भ्रान्त्यनुदयो नाश-

विशेषः आत्यान्तिकनाशं प्राप्तायामित्यर्थः । भेदे भाते व्यावहारिकजीवस्वरूपस्य लिङ्गशरीरस्य घटादिवद्दृश्यत्वं प्रत्यग्बोधस्वरूपस्य साक्ष्याख्यस्य स्वस्य द्रष्टृत्वञ्च भेदस्तस्मिन् सम्यक् प्रकाशिते सति साक्षिण्यारोपितं तज्जीवत्वमपयात्यपगच्छत्येवेत्यत्र तु शब्दः सम्बध्यते यस्मादेवं तस्माच्छास्त्रवैयर्थ्यं न स्यादित्यभिप्रायः ॥ १७ ॥

यथा व्यावहारिकजीवगतं जीवत्वमारोपात्साक्षिण्यप्यवभासते तथा नामरूपात्मकः सर्गगतो विकारः आरोपाद्ब्रह्मण्यप्यवभासते इत्याह ॥

**तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ।**
**या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ १८ ॥**

तथेति ॥ यथान्तर्दृग्दृश्ययोर्भेदमाच्छादयति तथा सर्गब्रह्मणोर्भेदं चावृत्य या आवरणशक्तिस्तिष्ठति तद्वशात्तदावरणशक्तिकृतादन्योन्याध्यासवशाद् ब्रह्म सच्चिदानन्दलक्षणः परमात्मा विकृतत्वेन भासते स्वयं कूटस्थमपि षड्भावविकारशून्यमपि तद्वत्त्वेन भासते इत्यर्थः ॥ १८ ॥

बाह्ये ऽप्यावृतिनाशेन सर्गब्रह्मभेदस्फुरणात् ब्रह्मण्यारोपितो विकारो निवर्त्तते इत्याह ।

**अत्राप्यावृतिनाशेन विभाति ब्रह्मसर्गयोः ।**
**भेदस्तयोर्विकारः स्यात्सर्गे न ब्रह्मणि क्वचित् ॥ १९ ॥**

अत्रेति । अत्रापि यथान्तस्तथा बाह्येऽप्यावृतिनाशेनान्वयव्यतिरेकाभ्यामन्तर्बहिश्च पदार्थद्वयपरिशोधनपूर्वकेणाहं ब्रह्मास्मीत्यभिव्यक्तेन सच्चिदानन्दलक्षणब्रह्मात्मबोधेन उक्तलक्षणायामावरणशक्तौ वासनया सह विनष्टायां सत्यां तेनावृतिनाशेन ब्रह्मसर्गयोर्भेदो विभाति घटपटयोरिव भेदः सम्यक् प्रकाशते एवं भेदे भाते सति तयोर्ब्रह्मसर्गयोर्मध्ये नामरूपात्मके सर्गे एव जन्मादिविकारः स्यान्न ब्रह्मणि क्वचिदानन्दलक्षणे ब्रह्मण्येकदेशेऽपि विकारो न स्यादित्यर्थः ॥ १९ ॥

एवमन्तर्बहिश्चावृतिकार्य्यतादात्म्यवशात् साक्षिब्रह्मणोर्भोक्तृत्वभोग्यत्वादिरूपविकारं तदावृतिनाशेन तत्कृतविकारनिवृत्तिञ्च दर्शयित्वा इदानीं ब्रह्मणः सर्वात्मकत्वप्रदर्शनद्वारेण त्वंपदार्थमप्यर्थाद्विवेचयन् मुखतस्तत्पदार्थं विविनक्ति ।

**अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।**
**आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ २० ॥**

अस्तीति। अस्ति विद्यते भाति प्रकाशते प्रियं प्रेमास्पदं रूपं जगद्रूपं पृथुबुध्नोदरोतप्रोतादिकं नाम घटः पट इत्यादिकमेतत्सर्वं मिलित्वांशपञ्चकामिदमेकं वस्तु अस्तीदं भातीदं प्रियमिदमस्य स्वरूपमिदमस्य नामेत्येतदंशपञ्चकव्यतिरेकेण व्यवहारासम्भवाल्लोकव्यवहारगोचरभूतं भौतिकात्मकं समस्तं वस्त्वपि सच्चिदानन्दरूप-नामलक्षणांशपञ्चात्मकमेव भवतीति यावत्, अंशपञ्चकसमुच्चयार्थश्चशब्दः। एते-ष्वंशेषु मध्ये आद्यत्रयं सच्चिदानन्दात्मकमंशत्रयं ब्रह्मरूपं ब्रह्मस्वरूपं ततो द्वयं तस्मात्सच्चिदानन्दात्मकांशत्रयादुपरितनं नामरूपात्मकमंशद्वयं जगद्रूपमित्यर्थः॥२०॥

उक्तमेवार्थमन्वयव्यतिरेकाभ्यां स्पष्टयति।

**खवाय्वग्निजलोर्वीषु देवतिर्यङ्नरादिषु।**
**अभिन्नाः सच्चिदानन्दा भिद्येते रूपनामनी॥ २१॥**

खमिति। आकाशवायुतेजोऽम्बवन्नाख्येषु पञ्चभूतेषु देवतिर्यङ्नरादिभेद-भिन्नेषु शरीरलक्षणेषु भौतिकेषु वर्त्तमानाः सच्चिदानन्दास्त्रयोऽप्यंशा अभिन्ना निर्विशे-षाः स्युर्घटोऽस्ति पटोऽस्ति घटो भाति पटो भाति घटः प्रियः पटः प्रिय इति सर्व-त्रानुवृत्तस्वभावत्वाद्रूपनामनी भूतेषु भौतिकेषु च वर्त्तमानौ रूपनामात्मकौ उभावप्यंशौ भिद्येते ईदृग्रूपस्तादृग्रूपो घटः पट इत्यादिभेदभिन्नत्वेन वर्त्तेते अनिर्वचनीयमाया-कार्यत्वेन व्यावृत्तस्वभावत्वात्॥ २१॥

एवं प्राक्तनग्रन्थसन्दर्भेणान्वयव्यतिरेकाभ्यां पदार्थद्वयं परिशोध्येदानीं ना-मरूपोपेक्षापुरःसरं सच्चिदानन्दतत्परोभूत्वा वाक्यश्रवणाङ्गत्वेन वाक्यार्थज्ञानसाध-नभूतं वक्ष्यमाणभेदभिन्नं समाधिं हृदये वा बाह्ये वा निरन्तरं कुर्यादित्याह।

**उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः।**
**समाधिं सर्वदा कुर्याद्धृदये वाथवा बहिः॥ २२॥**

उपेक्ष्येति। जगद्रूपे नामरूपे द्वे उपेक्ष्यावज्ञाय उदासीनीकृत्य सच्चिदानन्दतत्परः सच्चिदानन्दरूपब्रह्मात्मन्येव तात्पर्य्यवान् तदेकचित्त इत्यर्थः। तादृशोभूत्वा समाधिं वक्ष्यमाणं चित्तसमाधानं सर्वेन्द्रियाण्यपि हृदयकमले निरुध्य तत्र तत्र वागादीन्द्रि-याणां स्वस्वगोलकावस्थानेऽपि तेषां वृत्तिमात्रं निरुध्य शरीरादन्तर्बाह्ये देशे वा व-क्ष्यमाणप्रकारेण निरन्तरं कुर्यादित्यर्थः। विधिमुखतः समाधिं विधायानेन श्लोकेन प्रतिपादितं पदं प्रति परमहंसस्यैव ब्रह्मज्ञानाधिकारो नान्यस्येत्यर्थादुच्यते एतत् श्लोकार्थानुष्ठानस्यान्यस्मिन्नसम्भवात् परमहंसस्यैव सम्भवाच्च॥ २२॥

एवं ब्रह्मजिज्ञासुं मुमुक्षुं प्रति निदिध्यासितव्य इत्येतद्वाक्यानुसारेणावश्यकर्त्तव्यत्वेन समाधिं विधायेदानीं तस्य समाधेरवान्तरभेदं दर्शयन्नेतान् समाधीन् हृदये कुर्यादित्याह।

सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि।
दृश्यशब्दानुविद्धेन सविकल्पः पुनर्द्विधा ॥ २३ ॥

सविकल्प इति। सविकल्पसमाधिर्निर्विकल्पसमाधिरिति समाधिर्द्विविधो द्विप्रकारो भवेत्। दृश्यानुविद्धः सविकल्पकः शब्दानुविद्धः सविकल्पकः इति सविकल्पसमाधिरपि द्विप्रकारो भवेत्, एवमुक्तप्रकारेण दृश्यानुविद्धः सविकल्पकसमाधिः शब्दानुविद्धः सविकल्पकसमाधिर्निर्विकल्पकश्चेति त्रिप्रकारं समाधिं क्रमेण हृदये कुर्यादितिशेषः। दृश्यमिश्रो दृश्यानुविद्धः, शब्दमिश्रः शब्दानुविद्धः ॥२३॥

सविकल्पो निर्विकल्पश्चेति सविकल्पस्य प्रथमोद्दिष्टत्वात्तत्रापि दृश्यशब्दानुविद्धेनेति दृश्यानुविद्धस्यैव प्रथमोद्दिष्टत्वादन्तर्दृग्दृश्यविवेकं दृगेकनिष्ठं दृश्यानुविद्धं सविकल्पसमाधिं तावद्दर्शयति।

कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम्।
ध्यायेद् दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥ २४ ॥

कामाद्या इति। कामाद्याः कामसङ्कल्पादयः पूर्वोक्ताश्चित्तगाः अन्तःकरणवृत्तित्वेनान्तःकरणनिष्ठाः दृश्याः कर्मभूताः युष्मत्प्रत्ययविषयाः भवन्तीति शेषः तत्साक्षित्वेन तेषां कामादिचित्तगतदृश्यानां प्रकाशकत्वेन चेतनमात्मानं प्रत्यक्चैतन्यं ध्यायेत्। एतदुक्तं भवति। तेषां कामादीनां मध्ये एकमेकं प्रतियोगिनं कृत्वा अस्य कामस्य यत्साक्षिभूतं चैतन्यन्तदेव मम यथार्थं स्वरूपमित्येवं निरन्तरं प्रत्यग्रूपं चिन्मात्रं भावयेदिति। एवमुक्तप्रकारेण चिन्मात्रे भाविते सत्ययं दृश्यानुविद्धः सविकल्पसमाधिरित्युच्यते इतिशेषः।

"नर्ते स्याद्विक्रियां दुःखी, साक्षिता का विकारिणः।
धीविक्रियासहस्राणां साक्ष्यतो ऽहमविक्रियः।"

इति नैष्कर्म्यसिद्धिकारैरुक्तत्वात् ॥ २४ ॥

एवं दृश्यप्रतियोगिकं सविकल्पसमाधिं दर्शयित्वा इदानीं क्रमप्राप्तं का-

माद्यशेषदृश्यविलापकं साक्षिनिष्ठं शब्दानुविद्धसविकल्पकसमाधिं दर्शयति ।

**असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।**
**अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २५ ॥**

असङ्ग इति । असङ्गः सङ्गरहितः "असङ्गोह्ययं पुरुषः" इति श्रुतेः, सच्चिदानन्दः सत्यज्ञानानन्दस्वरूपः "सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे" त्यादिश्रुतेः, स्वप्रभः स्वयंप्रकाशः "अदृष्टं द्रष्टृश्रुतं श्रोतृ, न दृष्टेर्द्रष्टारं पश्येदि" त्यादिश्रुतेः, द्वैतवर्जितः प्रकाश्यस्य प्रकाशाभिन्नत्वेन कामाद्यशेषरहितः स्वगतादिभेदरहित इत्यर्थः "एकमेवाद्वितीयमि"ति श्रुतेः, एवमुक्तलक्षणः प्रत्यग्रूपो यः साक्षी अयमहमस्मीति निरन्तरं भावयेत्, एवमुक्तप्रकारेण कामाद्यशेषवृत्तिविलापकोऽसङ्गादिशब्दमात्रमिश्रितो विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहलक्षणः प्रत्यक्चिन्मात्रविषयकश्चिदाभासनिष्ठो योऽनुभवः अयं शब्दानुविद्धः सविकल्पकसमाधिरित्युच्यते इति शेषः, "निरीहोऽस्मि निरंशोस्मि, स्वस्थोऽस्म्यास्मि च निस्पृहः । शान्तोऽहमर्थरूपोस्मि, चिरायाहमलं स्थितः ।" इति वसिष्ठवचनात् ॥२५॥

एवं द्विप्रकारं सविकल्पकसमाधिं दर्शयित्वा इदानीं कामादिदृश्यानामसङ्गादिशब्दानां विलापकं निवातस्थितदीपवच्चित्तनैश्चल्यात्मकं निर्विकल्पसमाधिं दर्शयति ।

**स्वानुभूतिरसावेशाद् दृश्यशब्दानुपेक्षितुः ।**
**निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् ॥ २६ ॥**

स्वानुभूतिरिति—अनुभूतिर्ज्ञानं प्रत्यक्चैतन्यं
"यानुभूतिरजाऽमेया त्वनन्तानन्दविग्रहा ।
महदादिजगन्मायाचित्रभित्तिं नमामि ताम् ॥"

इति इष्टसिद्धिकारैरुक्तत्वात्, रसं आनन्दस्वरूपः परमात्मा "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतेः प्रत्यगात्मापि रसाभिन्नत्वेन परप्रेमास्पदत्वाद्रसस्वरूपभूता अनुभूतिः स्वानुभूतिरेव रसस्तस्यावेशः स्वानुभूतिरसावेशः पूर्वोक्तसमाधिद्वयाभ्यासपाटवादन्तःकरणे स्वरूपभूतज्ञानानन्दाविर्भावः स्वानुभूतिरसावेश इत्युच्यते । यद्वा आवेशोऽभिनिवेशो मग्नत्वं स्वानुभूतिरसावेशः, यद्वा आसमन्तात्प्रवेश आवेशः स्वरूपज्ञानानन्दपूर्णत्वं, यद्वा देवताद्यावेशवत्

स्वानुभूतिरसस्यावेशस्तस्मात्स्वानुभूतिरसावेशात्, 'स्वानुभूतिरसास्वादात्' इति पाठे चिदानन्दस्वरूपोऽहमिति स्वानुभूतिरस्यात्मत्वेन स्वीकरणं स्वानुभूतिरसास्वादस्तस्मात्, दृश्यशब्दानुपेक्षितुः, पूर्वोक्तान् कामादिदृश्यान् असङ्गादिशब्दांश्चोपेक्षितुरुदासीनकर्त्तुरुभयत्र तात्पर्य्यराहित्येन तूष्णींस्थितस्य देवताद्याविष्टवत् स्वानुभूतिरसाख्यमहाग्रहग्रस्तत्वेन स्वातन्त्र्याभावात् परतन्त्रतया स्थितस्येति तात्पर्य्यार्थः, निर्विकल्पः समाधिः स्यात्—

"प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम्।
असम्प्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥"

इत्युक्तलक्षणो निर्विकल्पः समाधिरुक्तलक्षणस्याधिकारिणः स्वयमेव स्यात् लयविक्षेपकषायादिप्रतिबन्धाभावादसम्प्रज्ञाताख्यो निर्विकल्पः समाधिः स्वयमेव भवतीत्यर्थः। तस्मिन् समाधौ चित्तनैश्चल्ये दृष्टान्तमाह निवातस्थितदीपवदिति। निवातस्थले स्थापितो दीपो यथा निश्चलो भवति तथा समप्राप्तं चित्तमपि निश्चलं भवतीत्यर्थः। "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्, तीव्रसंवेगानामासन्नः समाधिलाभः। व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणामः।" इति पतञ्जलिना सूत्रितत्वात्।

"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः।"

इत्यादिभगवद्वचनात्।

"अन्तः शून्यो बहिः शून्यः शून्यकुम्भ इवाम्बरे।
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे।
मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव।
भावनामखिलां त्यक्त्वा यदिष्टं तन्मयो भव ॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह।
दर्शनप्रथमाभ्यासमात्मानं केवलं भज ॥
प्रशान्तसर्वसङ्कल्पा या शिलावदवस्थितिः।
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥"

इति वसिष्ठवचनाच्च।

अस्य समाधेर्वाक्यश्रवणाङ्गत्वञ्च तत्त्वविवेकाख्ये ग्रन्थे श्रीमद्विद्यारण्यगुरुभिर्निरूपितम् ।

"अमुना वासनाजाले निःशेषं प्रविलापिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसञ्चये ।
वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ॥"

इति ॥ २६ ॥

एवं हृदयसम्बन्धित्वेन दर्शितं त्रिप्रकारमिमं समाधिं बाह्यसम्बन्धित्वेनापि दिदर्शयिषुर्बहिर्ब्रह्मसर्गविवेकं सच्चिदानन्दलक्षणब्रह्मनिष्ठं दृश्यानुविद्धसमाधिं तावद्दर्शयति ।

**हृदीव बाह्यदेशेऽपि यस्मिन् कस्मिँश्च वस्तुनि ।**
**समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ २७ ॥**

हृदीति—यथा हृदये साक्षिणः सकाशात् कामादीनां पृथक्करणमाद्यः समाधिः, एतदुक्तं भवति यथा हृदि कामादीनां मध्ये एकैकं प्रतियोगिनं कृत्वा स्वात्मनः सकाशात् नामरूपयोः पृथक्करणमस्य साक्षिभूतं यच्चैतन्यं तदेवाहमस्मीत्यनुचिन्तनं दृश्यानुविद्धः समाधिरित्युच्यते तथा बाह्येऽपि स्वाभीष्टमेकं वस्त्ववलम्ब्यांशपञ्चके तस्मिन् वस्तुनि वर्त्तमनात् सच्चिदानन्दलक्षणब्रह्मणः सकाशान्नामरूपे पृथक्कृत्यानयोः पृथक्कृतयोर्नामरूपयोरधिष्ठानभूतं सच्चिदानन्दलक्षणं यद्वस्तु तदेव तत्पदलक्ष्यं ब्रह्मेत्यनुचिन्तनं दृश्यानुविद्धः समाधिरित्युच्यते इति ।

"यत्र स्थितेयं विश्वश्रीः प्रतिभामात्ररूपिणी ।
रज्ज्वां भुजङ्गवद्भाति सोऽहमात्मा सदोदितः ।"

इत्यादिवसिष्ठवचनाच्च ॥ २७ ॥

एवं दृश्यानुविद्धसमाधिं निरूप्येदानीं समष्टिव्यष्ट्यात्मकसमस्तदृश्यप्रपञ्चविलापकं शब्दानुविद्धसमाधिं निरूपयति ।

**अखण्डैकरसं वस्तु सच्चिदानन्दलक्षणम् ।**
**इत्यविच्छिन्नचिन्तेयं समाधिर्मध्यमो भवेत् ॥ २८ ॥**

अखण्डैकरसमिति । अखण्डं देशकालाद्यपरिच्छिन्नं स्वगतादिभेदरहित-

मिति यावत्, "एकमेवाद्वितीयमि"ति श्रुतेः।

"न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः।
न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा॥"

इत्येत्तैरेव पञ्चकोषविवेकाख्ये ग्रन्थे उपपत्तिभिरखण्डत्वस्य समर्थितत्वाच्च। एकरसं कालत्रयेप्येकरूपं कूटस्थमित्यर्थः। "अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते" इति भगवद्वचनात्, अखण्डञ्च तेदकरसञ्चेत्यखण्डैकरसं सच्चिदानन्दलक्षणं स्पष्टोऽर्थः, एवमुक्तलक्षणं यद्वस्तु तदेव ब्रह्मेत्यविच्छिन्नाचिन्ता विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपा या चिन्तेयं मध्यमः समाधिर्भवेत् शब्दानुविद्धसविकल्पकः समाधिर्भवेदित्यर्थः।

"एवं ब्रह्म चिदाकाशं सर्वात्मकमखण्डितम्।
नीरन्ध्रभूरिवाशेषमिति भावय राघव॥
नाहं न चान्यद्ब्रह्मास्तीति ब्रह्मैवास्मि निरन्तरम्।
आनन्दपूर्णः सर्वत्राप्यनुद्वेगादुपास्यताम्॥

इति वसिष्ठवचनात्॥ २८॥

एवं ब्रह्मविषयं द्विप्रकारं सविकल्पसमाधिं निरूप्येदानीं पूर्वोक्तसमस्तदृश्यशब्दविलापकनिर्विकल्पसमाधिप्रदर्शनपूर्वकमुक्तलक्षणैरेतैः षड्भिः समाधिभिर्निरन्तरं कालं नयेदित्याह।

**स्तब्धीभावो रसास्वादात्तृतीयः पूर्ववन्मतः।**
**एतैः समाधिभिः षड्भिर्नयेत्कालं निरन्तरम्॥ २९॥**

स्तब्धीभाव इति। रसशब्दो व्याख्यातः, आन्तरस्य त्रिप्रकारस्य समाधेर्विषयभूतस्य साक्षिणः साक्षित्वासिद्ध्यर्थं ब्रह्माभिन्नत्वं बलादङ्गीकर्तव्यमन्यथा समाध्यवलम्बाभावाद्बाह्यस्य त्रिप्रकारस्य समाधेर्विषयभूतस्य ब्रह्मणोऽपि सर्वात्मकत्वसिद्ध्यर्थमात्माभिन्नत्वं बलादङ्गीकर्तव्यमेवं ब्रह्मणः सर्वात्मकत्वे सिद्धे सति स्वस्यापि रसरूपेऽस्मिन्परे ब्रह्मण्यन्तःपातित्वेन स्वस्यापि रसरूपस्वीकारो रसास्वाद इत्युच्यते–तस्माद्रसास्वादात्पूर्वोक्तान्तरनिर्विकल्पसमाधिवदत्रापि द्विप्रकारसविकल्पसमाध्यभ्यासपाटवेन भूमानन्दास्वादाद्व्यष्टिसमष्ट्यात्मकसमस्तदृश्यप्रपञ्चमखण्डैकरसादिशब्दजातं चोपेक्ष्यास्वादितभूमानन्दपरतन्त्रत्वेनावस्थितस्य चित्तस्य निवातस्थले स्थापितदी-

पस्येव यः स्तब्धीभावो निश्चलत्वं स एव तृतीयो मतो निर्विकल्पसमाधिरित्यभिप्रेतो विद्वद्भिरितिशेषः । निर्विकल्पसमाधेरान्तर्बाह्यमात्रविशिष्टविशेषभावात्पूर्वोक्तवचनान्येवात्रापि प्रमाणान्येवमुक्तलक्षणैरेतैः षड्भिः समाधिभिरेव मुमुक्षुर्निरन्तरं कालं नयेत्, कालमित्यनेन समाधीनां दीर्घकालकर्त्तव्यत्वं द्योत्यते तत्रापि नैरन्तर्येण कर्त्तव्यत्वं निरन्तरशब्देनोच्यते, कालनिरन्तरशब्दौ सत्कारस्याप्युपलक्षकौ, "दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमि" रितिपञ्जलिना सूत्रित्वात् ॥ २९ ॥

एवमन्तर्बहिश्च मिलित्वा षड्विधान् समाधीन् दीर्घकालनैरन्तर्यसत्कारपूर्वकं मुमुक्षोरवश्यङ्कर्त्तव्यत्वेन विधायेदानीं पूर्वोक्तप्रकारेणान्वयव्यतिरेकाभ्यामन्तर्बहिश्च पदार्थद्वयपरिशोधनेन देहाभिमाने गलिते परमात्मनि च विज्ञाते सत्युक्तलक्षणाः षड्विधाः समाधयश्च अन्तर्बहिर्वा यत्र यत्र मनो गच्छति तत्र तत्र स्वयमेव प्रवर्त्तन्ते इत्याह ।

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ३० ॥

देहाभिमानेति । रूपं दृश्यमित्यारभ्यास्य जीवत्वमारोपादित्यन्तेन ग्रन्थेन प्रदर्शितन्यायमनुसृत्य सम्यक् कृतेनान्तर्दृग्दृश्यविवेकेनास्मदर्थे साक्ष्यात्मत्वाभिमानादहङ्कारादिदेहान्तेषु युष्मदर्थेष्वहं कर्त्ताऽहं मनुष्य इत्याद्यात्मत्वाभिमाने गलिते शिथिलीभूते "अस्ति भाति प्रियं रूपं नाम च" इत्यत्र दर्शितप्रकारेण सम्यक् कृतेन बहिर्ब्रह्मसर्गविवेकेन नामरूपात्मकं समस्तमिदं जगन्मिथ्या तदधिष्ठानभूतं सच्चिदानन्दलक्षणं ब्रह्मैव सत्यमित्येवं परमात्मनि च विज्ञाते सत्येवमुक्तप्रकारेण गलितदेहाभिमानस्य विज्ञातपरमात्मतत्त्वस्य मुमुक्षोरन्तर्बहिर्वा यत्र यत्र मनो गच्छति तत्र तत्रोक्तलक्षणाः षडपि समाधयः स्वयमेव भवन्तीति शेषः । तीव्रवैराग्यबलात्परमहंसाश्रमस्वीकारपूर्वकं ब्रह्मसाक्षात्कारपर्यन्तं सद्गुरुसन्निधौ श्रीमच्छारीरकशास्त्रमवलम्ब्य निरन्तरं पौनःपुन्येन क्रियमाणेन तत्त्वंपदार्थविवेकेन गलितदेहाभिमानस्य विज्ञातपरमात्मतत्त्वस्य मुमुक्षोरुक्तलक्षणाः षड्विधाः समाधयः स्वयमेवानायासेन प्रवर्त्तन्त इत्ययमेव तात्पर्यार्थः । "आवृत्तिरसकृदुपदेशा" दिति वैयासिकसूत्रानुसारेण,

"अहं ब्रह्मेति वाक्यार्थबोधो यावद् दृढीभवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥"

इत्याचार्यैरुक्तत्वात् ॥ ३० ॥

वैराग्यसन्यासादिश्रवणसाधने दीर्घकालनैरन्तर्यसत्कारसहकृतश्रवणादिज्ञानसाधने च प्रयासं दृष्ट्वा ब्रह्मात्मैक्यलक्षणस्य ज्ञानफलस्याग्निहोत्रकार्यवत्सद्यः प्राप्त्यभावं च स्वबुद्ध्या कल्पयित्वा साधनानुष्ठानादुपरतं शिष्यं प्रति फलप्रदर्शनद्वारेण साधनानुष्ठाने तं प्रवर्तयितुं तस्य विश्वासार्थं परावरदर्शनफलप्रदर्शिनीं श्रुतिमेव पठति।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ३१ ॥

भिद्यते इति। देहाद्बहिः सकलनामरूपात्मकेषु वस्तुषु सर्पाधाररज्जुरिव व्याप्तः सच्चिदानन्दलक्षणो यः परमात्मा स एव परशब्देनोच्यते, अन्तरहमादिदृश्यविलक्षणोऽस्मत्प्रत्ययालम्बनभूतः प्रत्यक्चिन्मात्ररूपः साक्ष्याख्यो यो जीवात्मा स एवावरशब्देनोच्यते, परश्चासाववरश्चेति परावरः प्रत्यगभिन्नः परमात्मा तस्मिन् परावरस्यैव स्वयंप्रकाशत्वेनावाङ्मनसगोचरत्वमुच्यते, तच्छब्देनावाङ्मनसगोचरे ब्रह्मात्मनीत्यर्थः। यद्वा परावरविभागाधिष्ठानभूतं शुद्धचैतन्यं तच्छब्देनोच्यते, तस्मिन् पक्षे पररूपेण वा अवररूपेण वाऽवस्थिते परमार्थतः परापरविभागरहिते स्वगतादिभेदरहिते कूटस्थे शुद्धचैतन्ये इत्यर्थः। तस्मिन्परावरे तस्मिन्निति पक्षद्वयेऽप्येक एव फलितोऽर्थः। परावरस्यैव शुद्धचैतन्यत्वाच्छुद्धचैतन्यस्यैवावाङ्मनसगोचरत्वाच्च। तस्मादुक्तलक्षणे तस्मिन्परावरे दृष्टे सति "त्वं वाहमस्मि भगवो देवते अहं वा त्वमसी"–ति।

"तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं शिवात्मने।
नमो देवाधिदेवाय पराय परमात्मने॥"

इत्यादिश्रुतिस्मृत्यनुसारेणाहं ब्रह्मास्मि ब्रह्मैवाहमस्मीति व्यतिहारेणाखण्डैकरसत्वेन करतलामलकवत् साक्षात्कृते सति अस्यैव साक्षात् कृतवतोधिकारिणो हृदयग्रन्थिर्भिद्यते हृदित्यहङ्कारोयमित्यपरोक्षरूपः साक्षी अन्योन्यतादात्म्येन तयोरुभयोरपि स्वरूपं मिलित्वा हृदयग्रन्थिरित्युच्यते "अहङ्कारस्य कर्तृत्वं चित्यध्यस्य तथा चितः। स्फूर्तिश्चाहङ्कृतौ ग्रन्थिं कुर्यान्माया तयोर्ध्रुवम्॥" इति वचनात् हृदयशब्दवाच्यं तादात्म्यमेव ग्रन्थिरिवग्रन्थिः। यद्वा हृदित्यहङ्कारोऽयमिति साक्षी तयोस्तादात्म्यं हृदयग्रन्थिरुच्यते, एवमुक्तलक्षण आवृत्तिरूपमायाकार्योऽयं हृदयग्रन्थिर्भिद्यते मुच्यते। चशब्देदंशब्दौ सर्वत्रानुवर्त्तेते, एवं हृदयग्रन्थौ भिन्ने सत्यस्य सर्वसंशयाश्छिद्यन्ते च "परमार्थतो ममैव ब्रह्मत्वमस्ति वा न वा, ब्रह्म·

त्वेऽपि तादृग्रूपत्वं मम साक्षात्कृतं वा न वा, साक्षात्कृतेऽपीतः परं ममापि कर्त्तव्यमस्ति वा न वा, कर्त्तव्याभावेऽपीदानीं मम जीवन्मुक्तत्वमस्ति वा न वा, जीवन्मुक्तत्वेऽपि वर्त्तमानदेहपातानन्तरभाविनी विदेहमुक्तिर्भविष्यति वा न वा, विदेहमुक्तिप्राप्तावपि कालान्तरे पुनर्जन्म भविष्यति वा न वा" इत्यादिसंशयाश्छिद्यन्ते, च संशयरूपाः पाशाश्च परावरदर्शनशस्त्रेण खण्ड्यन्त इत्यर्थः । एवं सर्वसंशयेषु भिन्नेषु सत्सु अस्य कर्माणि च क्षियन्ते, परावरदर्शनस्य देहारम्भनिरोधकत्वेऽपि वर्त्तमानदेहारम्भसमये तस्याविद्यमानत्वेन तन्निरोधकत्वासम्भवात् "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतेश्च प्रारब्धकर्मणां भोगादेव क्षयादागामिकर्मणाञ्च परावरसाक्षात्कारसमये अविद्यमानत्वात् पश्चात्सर्वेषामपि तेषामसंश्लेषाच्च जन्मकोटिसहस्रोपादानभूतानि सञ्चितान्यनारब्धशब्दवाच्यानि पुण्यापुण्यमिश्ररूपाणि कर्माण्येवात्र कर्मशब्देन विवक्ष्यन्ते तानि सर्वाणि च क्षीयन्ते परावरदर्शनाग्निना दग्धानि भवन्तीत्यर्थः । अन्यदृष्टिमाश्रित्यैव कर्मशब्दो व्याख्यातः । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इत्यादिश्रुतिसहस्रेष्वस्याशरीरत्वश्रवणादशरीरस्य परावरदर्शनानन्तरमप्यागामिकर्मण एवासम्भवात् प्रारब्धकर्मणा फलभोगोऽप्यस्याशरीरस्याभिमानाभावादारब्धानारब्धरूपाणि सर्वकर्माणि क्षीयन्त इति स्वदृष्ट्यनुसारोऽयमर्थो भिद्यते इत्यादिवर्त्तमानप्रयोगेण ज्ञानसमकालमुक्तत्वं द्योत्यते, अत्र प्रमाणं "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति । ब्रह्मविद्ब्रह्मैव भवति । ब्रह्मविदाप्नोति परम् । तरति शोकमात्मवित् । अभयं वै जनक प्राप्तोऽसि । एतावदरे खल्वमृतत्वमिति । तमेव विदित्वातिमृत्युमेति । तमेवं विद्वानमृत इह भवति । यत्र नान्यत्पश्यति नान्यच्छृणोति । यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिश्रुतयः ।

"तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥"

इति शेषवचनम् ।

"दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्म ब्रह्मन् न ब्रह्मवित्स्वयम् ।"

इति वसिष्ठवचनम् ।

"यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् ।
तस्मात्कालात्समारभ्य जीवन्मुक्तो भवेत्सदा" इति पुराणवचनम् ॥ ३१ ॥

एवमवरशब्दवाच्यस्य जीवस्य ब्रह्मत्वे दर्शिते सति रूपं दृश्यमित्यारभ्यास्य जीवत्वमारोपादित्येतच्छ्लोकपर्यन्तेन ग्रन्थेन दर्शितमर्थं विस्मृत्यास्य साक्षिणो ब्रह्मत्वमेव स्वरूपं चेत्तर्हि जीवत्वं नोपपद्यते जीवत्वमेव स्वरूपं चेत्तदा ब्रह्मत्वं नैवोपपद्यते उभयथापि शास्त्रनैरर्थक्यं स्यादित्याशङ्कमानं शिष्यं प्रत्यस्य साक्षिण एव उपाधिवशाज्जीवत्वं स्वभावतो ब्रह्मत्वं चोपपद्यते तस्माच्छास्त्रनैरर्थक्यमपि न स्यादिति प्रकरणपरिसमाप्तिपर्यन्तेन ग्रन्थसन्दर्भेण कृपया पुनर्विविच्य प्रदर्शयिष्यन्नवरशब्दवाच्यजीवस्यावान्तरभेदं तावद् दर्शयति ।

अवच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पितः ।
विज्ञेयस्त्रिविधो जीवस्तत्राद्यः पारमार्थिकः ॥ ३२ ॥

अवच्छिन्न इति । अवच्छिन्नः परिच्छिन्नः परिपूर्णे परब्रह्मण्यविद्याहङ्काराभ्यामवच्छेद्यं यत्साक्षिचैतन्यं स एवावच्छिन्नाख्यः प्रथमो जीवः स्यात्, चिदाभासः चिल्लक्षणरहितस्तद्वदवभासमानश्चिदाभासोऽन्तःकरणाख्ये अहङ्कारादिशब्दवाच्ये लिङ्गशरीरे प्रतिबिम्बितं यच्चैतन्यं स एव चिदाभासाख्यो द्वितीयो जीवः स्यात्, स्वप्नावस्थायां नरपशुपक्ष्याद्यनेकशरीरलक्षणं परिगृह्य सर्वा दिशो यः परिभ्रमति स एव स्वप्नकल्पितस्तृतीयो जीवः स्यादेवं जीवस्त्रिप्रकारो ज्ञातव्यः, तेषु जीवेषु मध्ये आद्योऽवच्छिन्नाख्यः साक्षी पारमार्थिकः परमार्थभूतो ब्रह्मभूत इत्यर्थः ॥ ३२ ॥

नन्ववच्छिन्नजीवस्यानवच्छिन्नब्रह्मभूतत्वं कथं सम्भवतीत्याशङ्क्य तस्य स्वरूपनिरूपणद्वारेणारोपवशाज्जीवत्वं स्वभावतो ब्रह्मत्वं च तस्मिन्सम्भवतीत्याह ।

अवच्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवम् ।
तस्मिन्जीवत्वमारोपाद्ब्रह्मत्वं तु स्वभावतः ॥ ३३ ॥

अवच्छेद इति—अवच्छेदावच्छेद्ययोर्जीवत्वब्रह्मत्वयोश्च परस्परवैलक्षण्यद्योतकावुभावपि तुशब्दौ अवधारणवाचकौ वा, ब्रह्मभूते साक्षिण्यविद्याहङ्कारकृतो योऽवच्छेदः परिच्छेदः स आकाशे तलमलिनताद्यध्यासवदहङ्कारेणाध्यस्त एव स्यात् सत्यविद्यावच्छिन्नोऽहमहङ्कारावच्छिन्नोऽहमित्युभयविधस्यावसुषुप्तावहङ्कारलये

च्छिन्नत्वस्याप्यभिमानाभावादविद्याहङ्काराभ्यां परिच्छेद्यं यत्साक्षिचैतन्यं तत्कालत्रयेऽप्येकरूपत्वाद्वास्तवमेव सत्यमेव स्यादेवं यस्मात्तस्मादुक्तलक्षणे तास्मिन् साक्षिणि चिदाभासद्वारेणाहङ्कारसाक्षिणोरन्योन्याध्यासादेव जीवत्वं स्यात् ।

"कर्तृत्वादीन् बुद्धिधर्मान् स्फूर्त्याख्यामात्मरूपताम् । दधद्विभाति पुरत आभासो ऽतो भ्रमो भवेत् ।" इति वचनात् प्रकृते साक्षिणि ब्रह्मत्वं स्वभावत एव स्वतःसिद्धमेव स्यान्नतु चतुर्विधक्रियासाध्यमित्यर्थः ॥ ३३ ॥

एवमस्य साक्षिणश्चिदाभासाहङ्काराख्योपाधिवशाज्जीवत्वं स्वभावतो ब्रह्मत्वं चोपपत्तितो दर्शयित्वा इदानीमस्य साक्षिण एव ब्रह्मणा सहैक्यं वाक्यानि बोधयन्ति नेतरयोश्चिदाभासस्वप्नकल्पितयोरित्याह ।

**अवच्छिन्नस्य जीवस्य पूर्णेन ब्रह्मणैकताम् ।**
**तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः ॥ ३४ ॥**

अवाच्छिन्नस्येति—अविद्याहङ्काराभ्यामवच्छिन्नस्यात एव सद्वितीयवत्प्रतीयमानस्य पारमार्थिकजीवस्यैवाविद्याश्रयभूतत्वेन देशकालवस्तुभिरनभिप्लुतेन परमात्मना "तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, प्रज्ञानं ब्रह्म" इत्येवमादिवाक्यानि ऐक्यं जगुरारोपितषष्ठयादिकमवलम्ब्य लक्षणावृत्या तात्पर्येणैक्यं बोधयन्तीत्यर्थः । चिदाभासस्वप्नकल्पितयोर्ब्रह्मणा सहैक्यं वाक्यानि न बोधयन्ति तयोर्मायाकार्यत्वेनावस्तुभूतत्वादित्याभिप्रायः । ननु प्रमाणफलस्य प्रमातृगामित्वादहं ब्रह्मास्मीति चिदाभासेनैव प्रतिपन्नत्वेन तस्यैव प्रमातृत्वात्कूटस्थस्य साक्षिणः प्रमातृत्वासम्भवेन प्रमाणफलाश्रयत्वानुपपत्तेः काकस्य कार्ष्ण्यं धवलप्रासाद इतिवदन्यस्य फलमन्यस्य स्यादित्याचार्यैरसम्बद्धमेवोच्यते इति चेन्नैष दोषः, चिदाभासस्य साक्षिप्रतिबिम्बत्वेन तदर्थत्वादानिर्वचनीयमायाकल्पितत्वेनावस्तुत्वाच्चास्य प्रमाणफलाश्रयत्वानुपपत्तेः साक्षिणश्चिदाभासाधिष्ठानत्वेन तदात्मत्वात्परमार्थरूपत्वाच्च प्रमाणफलाश्रयोपपत्तेः ।

"प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता ।
तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ॥
कूटस्थेपि फलं योग्यं राजनीव जयादिकम् ।
तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च ॥"

इत्याचार्यैः कूटस्थस्य साक्षिणोपि प्रमाणफलाश्रयत्वमस्तीति समर्थितत्वाच्च ।

"ज्ञानिताज्ञानिते त्वात्माभासस्यैव न चात्मनः।
तथा च कथमाभासः कूटस्थोऽस्मीति बुध्यताम् ॥
नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान्।
आभासस्य च मिथ्यात्वात्कूटस्थत्वावशेषणात्।"
इति तृप्तिदीपाख्ये ग्रन्थे तैरेवाचार्य्यैराशङ्क्य परिहृतत्वाच्च ॥ ३४ ॥

एवं पारमार्थिकजीवस्य साक्षिण एव परिपूर्णानन्दपरमात्मनैक्ये सिद्धे सत्यन्तर्बहिर्व्यष्टिसमष्टिभावेन जीवपररूपस्याविद्यावच्छिन्नस्य तत्त्वतोऽनवच्छिन्नब्रह्मरूपस्यास्य साक्षिण एव भोक्तृभोग्यात्मकसमस्तप्रपञ्चाधिष्ठानत्वमन्तर्बहिश्चोपाधिभूतयोश्चिदाभासजगतोर्मायाकार्य्यत्वेन मिथ्यात्वं साक्ष्यनन्यत्वं तन्मात्रेणावशेषत्वं चोत्तरग्रन्थसन्दर्भेण दर्शयितुं साक्षिणो जीवजगदधिष्ठानत्वं जीवजगतोर्मायाकार्य्यत्वं च दर्शयति।

**ब्रह्मण्यवस्थिता माया विक्षेपावृतिरूपिणी।**
**आवृत्याखण्डतां तस्मिन् जगज्जीवौ प्रकल्पयेत्॥ ३५ ॥**

ब्रह्मणीति—अत्रापि छन्दोभङ्गभयादेव पूर्वापरनिपातव्यत्यासः कृतः। शब्दसम्भार्थतश्च न पौनरुक्त्याख्यो दोषोऽत्र शङ्कनीयः, ब्रह्मात्मस्वरूपस्यालौकिकस्यातिसूक्ष्मत्वेन झटिति ज्ञातुमशक्यत्वात् अभ्यासेनैव प्रतिपत्तव्यत्वाच्छ्रुत्यैव नवकृत्व उपदिष्टत्वाच्च। सत्यादिलक्षणे ब्रह्मण्यवस्थिता आवृतिविक्षेपलक्षणशक्तिद्वयात्मिका अनिर्वचनीया माया स्वाश्रयभूतस्य ब्रह्मणोऽखण्डतामाच्छाद्य तस्मिन्नवच्छेद्यसाक्षिस्वरूपे ब्रह्मणि जगज्जीवौ प्रकल्पयेत् पूर्वोक्तप्रकारेण सृजेदित्यर्थः ॥ ३५ ॥

भोक्तृभोग्ययोर्मध्ये भोक्तृरूपस्य जीवस्यैव प्राधान्येपि पद्यानुसारेण जगज्जीवावित्युक्तमर्थक्रमानुसारेण इदानीं तयोर्जीवजगतोः स्वरूपं विविच्य दर्शयति।

**जीवो धीस्थश्चिदाभासो भवेद्भोक्ता हि कर्मकृत्।**
**भोग्यरूपमिदं सर्वं जगत्स्याद्भूतभौतिकम् ॥ ३६ ॥**

जीव इति—कृष्यादिकं यज्ञादिकं श्रवणादिकं च कर्म करोतीति कर्मकृत् स्वार्जितमैहिकामुष्मिकफललक्षणं भोगं भुङ्क्ते इति भोक्ता एवमुक्तलक्षणो यो धीस्थश्चिदाभासः स एव ब्रह्माश्रितमायाकल्पितो जीव इत्युच्यते, हिशब्दो यस्मा-

दर्थे, धीस्थश्चिदाभासः कर्मकृद्भोक्ता च यस्मात्तस्माज्जीवो भवेदित्यक्षरयोजना। भूतं पृथिव्यादि, भौतिकं देवतिर्यगादिशरीरजातं, भूतं च भौतिकं च भूतभौतिकं भोक्तॄणां भोगाधिष्ठानभूतं तत्तच्छरीरानुरूपेण भोग्यरूपमिदं परिदृश्यमानंसर्वं भूतभौतिकं जगत्स्याज्जगदित्युच्यते ॥ ३६ ॥

एवं जीवजगतोः स्वरूपं दर्शयित्वा इदानीमनयोरनिर्वचनीयमायाकार्यत्वेन मोक्षदशायामभावाद्व्यवहारमात्रे स्थितत्वाच्चैतदुभयं व्यावहारिकमित्याह—

**अनादिकालमारभ्य मोक्षात्पूर्वमिदं द्वयम्।**
**व्यवहारे स्थितं तस्मादुभयं व्यावहारिकम् ॥ ३७ ॥**

अनादिकालमिति। अस्मिन् काले आरब्धे एते जीवगती इति विचार्य केनापि निर्णेतुमशक्यत्वात् "प्रकृतिं पुरुषं चैव विध्यनादी उभावपीति भगवद्वचनाच्च अनयोर्जीवजगतोरादिर्नास्त्येव "गताः कलाः पञ्चदश प्रतिष्ठाः, यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति, तस्य तावदेव चिरम्, भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिश्रुतेः।

"ततः स्तिमितगम्भीरं न तेजो न तमस्ततम्।
अनाख्यमनभिव्यक्तं यत्किञ्चिदवशिष्यते ॥"

इति वसिष्ठवचनाच्च अनयोर्जीवजगतोर्वर्त्तमानदेहराहित्यलक्षणविदेहकैवल्यदशायामभावादन्तोऽस्त्येव यस्मादेवं तस्मादनादिकालमारभ्य वर्त्तमानदेहराहित्यलक्षणविदेहकैवल्यप्राप्तेः पूर्वं प्रमातृप्रमाणप्रमेयाद्यनेकावान्तरभेदभिन्नत्रिपुट्यात्मके व्यवहारे जीवजगदाख्यमिदं वस्तुद्वयं स्थितमुक्तलक्षणं व्यवहारमाश्रित्य वर्त्तते तस्मादेतदुभयं व्यावहारिकं न तु पारमार्थिकं प्रातिभासिकं च, एवं जीवजगतोर्मायिकत्वं साक्षिणो जीवजगदधिष्ठानत्वं मुखत एव ब्रह्मण्यवस्थिता मायेत्यस्मिन् श्लोके दर्शितम्, अस्मिन् श्लोके तयोर्मुखतो व्यावहारिकत्वकथनद्वारा मिथ्यात्वं दर्शितमधिष्ठानानन्यत्वमधिष्ठानावशेषत्वं चार्थात्सूचितम् ॥ ३७ ॥

एवं ब्रह्मण्यवस्थितेत्यादिभिस्त्रिभिः श्लोकैः प्रदर्शितमर्थं स्वप्नजीवजगदवलम्बनेन दृढीकरिष्यामीत्यभिप्रायेण स्वप्नजीवजगतोर्निद्राकार्यत्वं दर्शयति।

**चिदाभासस्थिता निद्रा विक्षेपावृतिरूपिणी।**
**आवृत्य जीवजगती पूर्वे नूत्ने तु कल्पयेत् ॥ ३८ ॥**

चिदाभासस्थितेति—व्यावहारिकजीवाख्यचिदाभासाश्रयाऽऽवृतिविक्षेपात्मिका तमोरूपा प्रसिद्धा निद्रा आवरणशक्त्याकारेण पूर्वे व्यावहारिकजीवजगती आवृत्य ततो निद्राश्रयत्वेन निद्रावच्छिन्नचिदाभासस्वरूपं जाग्रत्समस्तप्रपञ्च-संस्कारसहिते देहस्थान्तर्नाडीमध्ये स्थितेऽस्मिन् निद्रावच्छिन्नचिदाभासाकारे विक्षेपशक्त्याकारेण नूत्ने नूतने जीवजगती कल्पयेत् पूर्वनूतनजीवजगतो-र्व्यावहारिकप्रातिभासिकत्ववैलक्षण्यद्योतनार्थस्तुशब्दः, यथा निद्रा चिदाभासाश्रया तथा मायापि ब्रह्माश्रया यथा निद्राऽऽवृतिविक्षेपाख्यशक्तिद्वयात्मिका तथा मायापि शक्तिद्वयात्मिका, यथा स्वप्नजीवजगतोर्निद्राकार्यत्वं तथा व्यावहारिकजीवजगतोरपि मायाकार्यत्वं, यथा निद्रावच्छिन्नचिदाभासाकारस्य स्वप्नजीवजगदधिष्ठानत्वं तथा मायावच्छिन्नसाक्ष्याख्यब्रह्माकारस्यापि व्यावहारिकजीवजगदधिष्ठानत्वं स्यात्तस्माद्ब्रह्मण्यवस्थिता मायेत्यनेन श्लोकेन प्रदर्शितेऽर्थे विप्रतिपत्तिहेतुः कोऽपि नास्तीत्यभिप्रायः ॥ ३८ ॥

तुशब्देन द्योतितं वैलक्षण्यं स्पष्टयति—

**प्रतीतिकाल एवैते स्थितत्वात्प्रातिभासिके ।**
**नहि स्वप्नप्रबुद्धस्य पुनः स्वप्ने स्थितिस्तयोः ॥ ३९ ॥**

प्रतीतिकाल इति—प्रतीत्यनन्तरकालस्थितिं निषेधयत्येवकारः प्रतीतिकाल एव वर्तमानत्वादेते स्वप्नजीवजगती प्रातिभासिके इत्युच्येते, इममेवार्थं व्यतिरेकमुखेनापि द्रढयति नहीति, एकस्मिन् दिने स्वप्नं दृष्ट्वा तस्मात्प्रबुद्धस्य दिनान्तरे दृश्यमाने स्वप्ने पूर्वदिनस्वप्नसम्बन्धिनोर्जीवजगतोरवस्थितिर्नास्ति यस्मात्तस्मात्ते प्रातिभासिके एव न तु व्यावहारिके, पारमार्थिकत्वशङ्कैव नास्त्यनयोरनेन प्रातिभासिकत्वकथनेन स्वप्नजीवजगतोः प्रतीतिकाल एव स्थितत्वात् पुनः स्वप्ने स्थित्यभावाच्च मिथ्यात्वं, तथा व्यावहारिकजीवजगतोरपि अनादिकालमारभ्य मोक्षात्पूर्वं स्थितत्वात्ततः परमभावाच्च मिथ्यात्वं यस्मात्तस्मादनादिकालमारभ्येत्यनेन श्लोकेन प्रदर्शितेऽर्थे विप्रतिपत्त्यवकाशो नास्तीत्यभिप्रायः ॥ ३९ ॥

एवं स्वाप्नजीवजगद्दृष्टान्तेन संक्षेपेण प्रदर्शितं व्यावहारिकजीवजगतोर्मिथ्यात्वं पुनः स्वप्नदृष्टान्तमवलम्ब्य श्लोकत्रयेण द्रढयितुं दृष्टान्तभूतयोः स्वप्नजीवजगतोर्मिथ्यात्वं तावद्दर्शयति—

**प्रातिभासिकजीवो यस्तज्जगत्प्रातिभासिकम् ।**
**वास्तवं मन्यतेऽन्यस्तु मिथ्येति व्यावहारिकः ॥ ४० ॥**

प्रातिभासिकेति—स्वप्नकल्पितप्रातिभासिकाख्यो यो जीवः स स्वप्नकल्पितं प्रातिभासिकाख्यं तज्जगद्वास्तवं मन्यते सत्यमित्यवगच्छति न तु मिथ्येति स्वस्य यावदवस्थानं तावत्तस्याप्यवस्थितत्वादन्योन्यपक्षव्यावृत्त्यर्थस्तुशब्दः प्रातिभासिकादन्यो व्यावहारिकाख्यो जीवस्तत्प्रातिभासिकं जगच्च तद्द्रष्टारं प्रातिभासिकं जीवं च मिथ्येति मन्यते न तु वास्तवमिति स्वप्नात्पूर्वं स्वप्नानन्तरं प्रबोधे च तयोरुभयोरप्यवस्थानाभावादिति भावः ॥ ४० ॥

दृष्टान्तेन प्रदर्शितं न्यायं दार्ष्टान्तिके योजयति—

**व्यावहारिकजीवो यस्तज्जगद्व्यावहारिकम् ।**
**सत्यं प्रत्येति मिथ्येति मन्यते पारमार्थिकः ॥ ४१ ॥**

व्यावहारिकेति । उक्तलक्षणो यो व्यावहारिकजीवः स मायाकल्पितं तद्व्यावहारिकं जगत्सत्यं प्रत्येति वास्तवमित्यवगच्छति न तु मिथ्येति स्वस्य यावदवस्थानं तावत्तस्याप्यवस्थित्वात्तस्मादन्यः पारमार्थिकजीवस्तद्व्यावहारिकं जगच्च तद्द्रष्टारं चिदाभासं च मिथ्येति मन्यते एतदुभयमसत्यमित्यवगच्छति न तु सत्यमिति नित्यप्रलयाख्यसुषुप्तौ तयोरनवस्थानस्यानुभवसिद्धत्वात्, "नासदासीन्नो सदासी"दित्यादिश्रुत्यनुसारेणानादित्वेपि "गताः कला"इत्यादिश्रुत्यनुसारेण वर्त्तमानदेहराहित्यलक्षणविदेहकैवल्यदशायां तयोः प्रतीतेरप्यात्यन्तिकनाशस्य निश्चितत्वात्, श्रुत्याचार्य्यानुभववशात् स्वभावसिद्धे ब्रह्मात्मत्वे साक्षात्कृते संति भाविदेहराहित्यलक्षणजीवन्मुक्तिदशायां तयोर्व्यावहारिकजीवजगतोः कादाचित्कप्रतीतिसद्भावेऽपि तयोः सत्तात्यन्तिकनाशस्य श्रुतियुक्त्यनुभवसिद्धत्वाच्च तस्मात्प्रातिभासिकजीवजगती यथा मिथ्याभूते तथा व्यावहारिकजीवजगती च मिथ्यास्वरूपे इति भावः ॥ ४१ ॥

मिथ्येति मन्यते पारमार्थिक इत्येतावता ग्रन्थेन प्रतिपादितमर्थं पुनर्द्रढयति।

**पारमार्थिकजीवस्तु ब्रह्मैक्यं पारमार्थिकम् ।**
**प्रत्येति वीक्षते नान्यद्वीक्षते त्वनृतात्मना ॥ ४२ ॥**

पारमार्थिकेति—अवधारणवाचकौ तुशब्दौ, पारमार्थिको जीवः साक्षात्परमा-

त्मस्वरूपो वर्त्तमानदेहराहित्यलक्षणविदेहकैवल्यप्राप्तिपर्यन्तं ब्रह्म चिच्छब्दलक्ष्यं साक्षिस्वगतादिभेदरहितं बन्धमोक्षादिव्यवहारातीतं सच्चिदानन्दलक्षणं स्वस्वरूपं ब्रह्मैक्यमेव पारमार्थिकमित्यवगच्छति, नान्यद्वीक्षते "यत्र नान्यत्पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिश्रुतेः, वीक्षते त्वनृतात्मना, प्रबलप्रारब्धवशात्स्वरूपावस्थानाच्चिदाभासाकारेण व्युत्थितः सन् कदाचिज्जीवजगदादिकं यद्यपि वीक्षते तथापि मिथ्यात्वेनैव पश्यति न तु सत्यत्वेनेत्ययमेव तात्पर्यार्थः॥ ४२॥

एवं प्रातिभासिकजीवजगद्दृष्टान्तेन व्यावहारिकजीवजगतोर्मायाकार्यत्वमत एव मिथ्यात्वं च दृढीकृत्येदानीं दृष्टान्तभूतयोर्जीवजगतोरधिष्ठानचिदाभासानन्यत्वं तन्मात्रेणावशेषत्वं च प्रसिद्धमपि पुनरपि बाह्यदृष्टान्तेन दृढीकृत्य तेन बाह्याभ्यन्तरदृष्टान्तद्वयेनापि व्यावहारिकजीवजगतोरधिष्ठानभूतसाक्ष्यनन्यत्वं तन्मात्रेणाविशेषत्वञ्च द्रढयितुमारोपिताकारस्याधिष्ठानानन्यत्वे बाह्यदृष्टान्तं तावद्दर्शयति।

माधुर्यद्रव्यशैत्यानि नीरधर्मास्तरङ्गके।
अनुगम्याथ तन्निष्ठे फेनेऽप्यनुगता यथा॥ ४३॥

माधुर्यमिति। यथा दृष्टान्ते माधुर्यं च द्रवत्वं च शैत्यं च माधुर्यद्रवशैत्यानि नीरधर्मा जलगुणाः जलस्योपरि वातवशात्तरङ्गे उत्पन्ने सति जलविवर्त्तत्वेन जलनिष्ठे तस्मिन्तरङ्गे अनुगम्याथ तरङ्गोत्पत्त्यनन्तरं तत्तरङ्गविवर्त्तत्वेन तरङ्गनिष्ठे फेनेऽप्यनुगता जलतरङ्गाः फेन इति भेदव्यवहारे विद्यमानेपि जलादीनां माधुर्यद्रवशैत्यव्यतिरेकेण स्वरूपाभावतया तेषां माधुर्य्यद्रवशैत्यात्मकत्वात्पूर्वपूर्वाधिष्ठानस्यैवोत्तरोत्तरव्यावृत्ताकारेण विवर्त्तमानत्वादुत्तरोत्तरकार्यस्य पूर्वपूर्वाधिष्ठानानन्यत्वं प्रदर्शितमनेन श्लोकेन॥ ४३॥

एवमारोपिताकारस्याधिष्ठानानन्यत्वं बाह्यदृष्टान्तेन दर्शयित्वा तमेव न्यायं दार्ष्टान्तिके योजयति।

साक्षिस्थाः सच्चिदानन्दाः सम्बन्धाद्व्यावहारिके।
तद्द्वारेणानुगच्छन्ति तथैव प्रातिभासिके॥ ४४॥

साक्षिस्था इति। यथा दृष्टान्ते तथा दार्ष्टान्तिकेऽपि ब्रह्मस्वरूपे साक्षिणि स्थिताः स्वरूपलक्षणशब्दवाच्याः सत्यज्ञानानन्दाः साक्षिगुणास्तरङ्गे जलगुणानां सम्बन्धवद्व्यावहारिकजीवजगतोः सम्बन्धाद्व्यावहारिकजीवजगद्व्यवधानेन प्रातिभासिकजीवजगतोरप्यनुवृत्ता भवन्ति। व्यावहारिकः प्रातिभासिक इत्येतौ व्यावहारि-

कप्रातिभासिकजगतोरप्युपलक्षणे । जीवयोस्तज्जगदन्तःपातित्वेन जगद्व्यतिरेकेणाभावात् । साक्षिस्था इत्याधाराधेयभावो गुणगुणिभावश्च राहोःशिर इतिवदौपचारिकः, प्रातिभासिकजीवजगतोश्चिदाभासविवर्त्तकत्वे स्वभावतः प्रसिद्धेऽपि तरङ्गस्थानीयचिदाभासस्थाः सच्चिदानन्दा एव फेनस्थानीयप्रातिभासिकजीवजगतोरप्यनुगता-इति पुनरप्येवं निश्चिते सति यथा तयोः प्रातिभासिकयोर्जीवजगतोश्चिदाभासानन्यत्वं यथा वा जलस्थमाधुर्यादीनामेव तरङ्गेप्यनुगतत्वेन तरङ्गस्थजलानन्यत्वं यथा जलस्थानीये साक्षिणि स्थितानां माधुर्य्यादिस्थानीयानां सच्चिदानन्दानामेव तरङ्गस्थानीययोश्चिदाभासजगतोरप्यनुगतत्वेन तयोः ब्रह्मभूतसाक्ष्यनन्यत्वं सिद्धमिति भावः।

"एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥"

इत्यादिश्रुतेः ॥ ४४ ॥

एवं व्यावहारिकजीवजगतोरधिष्ठानभूतसाक्ष्यनन्यत्वं दृष्टान्तमुखेन दर्शयित्वा तदेव पुनरधिष्ठानावशेषत्वेन द्रढयितुं पूर्वोक्तमेव दृष्टान्तं दर्शयति ।

**लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरङ्गके ।**
**तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥ ४५ ॥**

लये इति । तरङ्गविवर्त्तस्य फेनस्य नाशे सति तत्फेनधर्माः द्रवमाधुर्यशैत्याख्याः फेनाधिष्ठाने तरङ्गे भवन्ति, जलविवर्त्तस्य तरङ्गस्यापि नाशे सत्येते द्रवाद्यास्तरङ्गफेनाद्युत्पत्तेः पूर्वं यथा सर्वाधिष्ठाने नीरे तिष्ठन्ति तथा तिष्ठन्त्येव कालत्रयेऽपि नीरस्य विद्यमानत्वात् तरङ्गफेनयोरविद्यमानत्वान्नीरजत्वान्नीरस्थत्वान्नीरलयत्वाच्च नीरव्यतिरेकेण तरङ्गफेनौ न स्त इत्यर्थः ॥ ४५ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति ।

**प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ।**
**तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणि ॥ ४६ ॥**

प्रातिभासिकेति । अत्रापि प्रातिभासिकजीवजगतोर्लये सति तत्र स्थिताः सच्चिदानन्दाः जाग्रत्प्रपञ्चसंस्कारसहिते चिदाभासे भवन्त्यत्रापि तल्लये तज्जगतोऽप्युपलक्षणं नित्यनैमित्तिकप्राकृतात्यन्तिकाख्येषु प्रलयेषु व्यावहारिकजीवजगतोर्लये सति तत्र स्थिताः सच्चिदानन्दाः सर्वाधिष्ठानभूते साक्षिण्येव पर्यवस्य-

न्ति निष्ठां प्राप्नुवन्ति, तस्याप्यधिष्ठानभूतस्य कस्यचिद्वस्तुनो ऽभावादेवं साक्षिणः कालत्रयेऽपि सद्रूपत्वात् व्यावहारिकजीवजगदादेः सृष्टेः पूर्वं प्रलयानन्तरञ्चाविद्यमानत्वात्तज्जत्वात्तत्रस्थत्वात्तल्लयत्वाच्च तल्लक्ष्यब्रह्माभिन्नसाक्षिव्यतिरेकेण व्यावहारिकजीवजगदादिर्नास्त्येवेत्यर्थः । चौरव्याघ्रादीनामाभिमुख्यागमनेन प्रातिभासिकजीवकर्तृकेण तद्दर्शनेन निद्रावच्छिन्नचिदाभासस्यैव निद्राश्रयभूतेन चिदाभासेनैक्यविषये जागरणाख्ये प्रबोधे जाते सति दिनान्तरे विद्यमानप्रातिभासिकजीवदृष्ट्या स्वरूपभूतचिदाभासाज्ञानपूर्वकसमस्तसंसारे विद्यमानेऽपि वर्त्तमानदिने चोरव्याघ्रादिदर्शनेन प्रबुद्धः प्रातिभासिकजीवः स्वदृष्ट्या शक्तिद्वयात्मकनिद्रात्यन्तिकनाशान्निद्राश्रयावच्छिन्नादिविभागरहिते एकरूपे चिदाभासे भृगुपतनादिकर्त्तेव स्वनाशेन चिदाभासपदं प्राप्तुमिच्छया प्रातिभासिकभोग्यरूपसमस्तप्रपञ्चेन सहात्यन्तिकनाशं यथा प्राप्नोति तथा व्यावहारिकजीवोऽपि व्यावहारिकान्तरदृष्ट्या स्वरूपभूतप्रत्यगभिन्नसच्चिदानन्दलक्षणब्रह्मताज्ञानमूलसमस्तसंसारे विद्यमानेऽपि चोरव्याघ्राद्याभिमुख्यागमनस्थानीयेन श्रुत्याचार्यानुग्रहेण प्रातिभासिकजीवकर्तृकतद्दर्शनस्थानीयेन स्वकर्तृकश्रवणाद्यनुष्ठानेन निद्रावच्छिन्नचिदाभासस्थानीयस्य मायावच्छिन्नस्य स्वभावतोऽनवच्छिन्नस्य ब्रह्मरूपस्य साक्षिण एव निद्राश्रयभूतचिदाभासस्थानीयेन पूर्णेन ब्रह्मणैक्यविषये ब्रह्मविद्याख्ये प्रबोधे जाते सति स्वदृष्ट्या शक्तिद्वयात्मकमायात्यन्तिकनाशान्मायाश्रयावच्छिन्नादिभागरहिते अत एव स्वगतादिभेदवर्जिते सच्चिदानन्दलक्षणे ब्रह्मात्मनि देवत्वकामनया अग्निप्रवेष्टेव साक्षित्वमात्रावशेषवाञ्छया ब्रह्मसाक्षात्कारकालमारभ्य वर्त्तमानदेहराहित्यलक्षणविदेहकैवल्यप्राप्तिपर्य्यन्तं व्यावहारिकभोग्यरूपसमस्तप्रपञ्चेन सह शनैः शनैर्नाशं यात्यात्यन्तिकलयं प्राप्नोति।

"देवत्वकामा अग्न्यादौ प्रविशन्ति यथा तथा ।
साक्षित्वेनावशेषाय स्वविनाशं स वाञ्छति ॥
यावत्स्वदेहदाहः स्यान्नरत्वं नैव मुञ्चति ।
यावदारब्धदेहः स्यान्नाभासत्वविमोचनम् ॥"

इत्येतैरेव तृप्तिदीपाख्ये ग्रन्थे उपपत्त्या सह प्रदर्शितत्वात्तस्मादस्य चिदाभासस्य भ्रान्तिविवेकौ नित्यमुक्ते साक्षिण्यध्यस्तौ न वास्तवावित्येतत्तैरेव भारतीतीर्थगुरुभिरुपनिषत्संक्षेपवार्त्तिके सम्यक् निरूपितम् ।

"बोधात्पुरा तु चिद्भ्रान्त्या मग्ना भोक्तरि शोचति ।
सा भ्रान्तिर्भोक्तृनिष्ठैव तद्विवेकोपि भोक्तृगः ॥

भोगावान्तरभेदो हि भ्रान्तितद्बोधकावुभौ ।
इतरारोपितत्वाच्च चित्यध्यस्तौ न वास्तवौ ॥"

इत्यस्य साक्षिणः साक्षित्वं साक्ष्यापेक्ष्यं न तु वास्तवमित्येदप्यद्वैतमकरन्दकारैर्निरूपितम् ।

"चेत्योपरागरूपा मे साक्षितापि न तात्त्विकी ।
उपलक्षणमेवेयं निस्तरङ्गचिदम्बुधेः ॥

इति । चेत्यं जडपदार्थः, यस्मादेवं तस्माद् व्यावहारिकदृष्ट्यनुसारेण मायाश्रयत्वं मायाहङ्काराभ्यामवच्छिन्नत्वं नामरूपतादात्म्येन भोग्यत्वं अन्तःकरणे प्रतिबिम्बितचिदाभासाकारेण कर्तृत्वभोक्तृत्वादिरूपसंसारित्वं "ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मी"ति श्रुत्यनुसारेण ब्रह्मसाक्षात्कर्तृत्वं जीवन्मुक्तत्वं च विदेहमुक्तत्वं च,

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥"

इत्यादिश्रुतिप्रामाण्यात् परमार्थदृष्ट्यनुसारेण मायाश्रयत्वादिविदेहमुक्तित्वपर्य्यन्तसमस्तव्यवहारातीतत्वञ्च प्रत्यगभिन्नस्य सच्चिदानन्दलक्षणस्याद्वितीयस्यावाङ्मनसगोचरस्य ब्रह्मण एवोपपद्यते, अत एव मोक्षशास्त्रस्यापि साफल्यं स्यादित्ययमेवास्य प्रकरणस्य समस्तवेदान्तशास्त्रस्य महातात्पर्यत्वेन पिण्डीकृतोऽर्थः,तस्मात्सर्वमनवद्यमिति ॥ ४६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दभारती-
तीर्थमुनिवर्यशिष्यब्रह्मानन्दभारतीप्रक्लृप्ता
वाक्यसुधाटीका सम्पूर्णा ॥

❀ शुभं भवतु ❀

* श्रीर्जयति *



